

पण्डितकुलपतिः

श्रीजीवानन्दविद्यासागर वि, ए,

*PANDIT JIBANANDA VIDYASAGARA B, A.*

*Superintendent Free Sanskrit College, Calcutta.*

# स्मृतितत्त्वद्वितीयभागस्य सूचीपत्रम् ।

# एकादशीतत्त्वम्।

प्रणम्य सच्चिदानन्दं परमात्मानमीश्वरम्। मुनीन्द्राणां स्मृतेस्तत्त्वं वक्ति श्रीरघुनन्दनः। अज्ञानतिमिरध्वंसिहरिपाद-नखत्विषम्। नत्वा वच्मि तत्र तत्त्वमेकादशीव्रतादिषु। एका-दशीव्रतं तत्र कलञ्जन्यायनिर्णयः। पुण्यकाले तु संक्रान्ते-र्विधिवत्प्रतिषेधनम्। व्रतस्य लक्षणं तत्र गृहसम्मार्जनं तथा। वैदिके कर्ममात्रे च नारायणनतिस्मृती। विष्णुनामादिसाङ्गार्थं तथाच्छिद्रावधारणम्। ओं तत्सदितिनिर्देशः कर्मणां प्राग्भवेत् व्रतम्। कङ्कल्पविषयो नित्यं काम्यश्चैकादशीव्रतम्। वृद्धि-श्राद्धस्य विषय उपवाससमन्वयः। दयादिलक्षणान्यत्र व्रते गन्धादिवर्जनम्। ऋतौ व्रते स्त्रीगामित्वं श्राद्धाहे न च तद्भ-वेत्। चतुर्थाह्नपरित्यागः प्रशस्तसुतकाङ्क्षिणः। एकादशी-भोजने तु निन्दानित्यत्वसाधकम्। नित्यं सदादिविश्वजिद्-यावज्जीवनयो तथा। अशक्तौ मनसा कर्मनित्यात् पापक्षया-दिकम्। एकादशीव्रतफलं रात्रिसत्रनयस्तथा। न्यायः संयोग-पार्थक्यं वृद्धिश्राद्धस्य नित्यता। एकस्य नित्यकाम्यत्वे योषित्-श्राद्धविवेचनम्। अपिण्डकमघाश्राद्धात् पक्षश्राद्धान्तरं न च। पार्वणासनदानादौ ये चात्रत्वेति निर्णयः। पर्य्युदासस्तथा सायमुषाद्यघटिकास्तथा। उपवासाधिकारी च कृष्णाया-मधिकारिता। वैष्णवानां सपुत्राणां तत्र वैष्णवलक्षणम्। नित्योपवासे रव्यादिदोषाभाव उपोषणम्। सप्तवारेष्वथाग्नेयः पिहशेष उपोषणे। पूर्णतिथिस्वरूपञ्च पूर्णैकादशिका तथा।

त्रिस्पृशैकादशी चैव दशम्या संयुता सदा। नोपोष्या तासु संक्षेपोदशमी नियमास्तथा। एकादश्याञ्च सङ्कल्पः श्रीशपूजा-विवेचनम्। षट्त्रिंशदुपचारादिजपपर्वनिरूपणम्। द्वादशी-नियमस्तद्वदुपवाससमर्पणम्। पारणायास्तथा कालः सङ्कटे जलपारणम्। तुलसीमहिमा तत्र तथा रुद्राक्षधारणम्। स्वदत्तदेवनैवेद्याद्युपयोगः स्त्रिया स्तथा। श्राद्धपिण्डादनन्तत्र कूपादित्यागयागता। त्यक्तुस्ततोपयोगश्च रजः सुतकिनीव्रतम्। उपवासानुकल्पश्च तथैवोह्यव्यवस्थितिः। एकभक्तं तथा नक्तं हविष्यद्रव्यनिर्णयः। खिन्नधान्यस्य भक्षत्वं प्रातिनिध्यविवेचनम्। चान्द्रायणादौ ग्रासानां परिसंख्याव्यवस्थितिः। पारणानियमः पानत्वपामनशनाशनम्। व्यवस्था शयनादीनां संकथ्यन्ते जगत्पतेः।

अथ एकादशीव्रतम्। तत्र वराहपुराणम्। 'एकादश्यां निराहारो यो भुङ्क्ते द्वादशीदिने। शुक्ले वा यदि वा कृष्णे तद्व्रतं वैष्णवं महत्'। महत्त्वमाह। 'यदीच्छेद्विष्णुना वासं पुत्त्रसम्पदमात्मनः। एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि'। एतद्विदन् सुघोराणि हन्ति पापानि पार्थिव। योगृहीत्वा व्रतं मोहादेकादशीदिने नरः। न समापयते तस्य गतिः पापीयसी भवेत्'। अत्र 'एकादश्यां प्रकुर्वन्ति उपवासं मनीषिणः'। इति भविष्यपुराणे उपवासपदान्निराहारपदं नैकादशीकालमात्राभोजनपरम्। किन्तु तद्युक्ताहोरात्राभोजनपरम्। तत्रैवोपवासपदव्यवहारात्। न च वैपरीत्यम्। उपवासपदस्याहाराभावमात्रपरत्वे लक्षणाप्रसङ्गात्। निराहारपदस्योपवासपरत्वे तु न लक्षणा सामान्यशास्त्रस्य विशेषतात्पर्य्यकत्वात्। तथाच कात्यायनः। 'नित्योपवासी यो मर्त्त्यः सायं प्रातर्भुजिक्रियाम्। सन्त्यजेन्मतिमान् विप्रः संप्राप्ते हरि-

वासरे'। सायं प्रातरिति रात्रिदिवोपलक्षणम्। 'मुनिभिर्द्दिरशनमुक्तं विप्राणां मर्त्त्यवासिनां नित्यम्। अहनि च तथा तमस्विन्यां सार्द्धप्रहरयामान्तः' इति छन्दोगपरिशिष्टैकवाक्यत्वात्। अतएव खण्डतिथेरप्यहोरात्रत्वकीर्त्तनम् अहोरात्रसाध्यकर्माङ्गत्वार्थम्। तथाच विष्णुधर्मोत्तरे। 'सा तिथिस्तदहोरात्रं यस्यामभ्युदितो रविः। तया कर्माणि कुर्वीत ह्रासवृद्धी न कारणम्। सा तिथिस्तदहोरात्रं यस्यामस्तमितो रविः। तया कर्माणि कुर्वीत ह्रासवृद्धी न कारणम्। शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः। कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविः'। तच्च तिथ्यान्तरसहायभावं विना प्रायो न सम्भवति अतएव गृह्यपरिशिष्टे युग्माग्नीत्यभिधाय तिथ्योर्युग्मं महाफलमित्युक्तम् अस्य प्रयोजनन्तु तिथेः खण्डविशेषनियमनम्। स्वतिथ्या कर्मानिर्वाहे सहायभावेनान्यतिथ्यनुप्रवेशेनाहोरात्रसाध्योपवासाद्याचरणञ्च। एवञ्च प्रातःकाले तत्तिथ्यलाभे तिथ्यन्तरेऽप्युपवाससङ्कल्पः अहोरात्राभोजनरूपस्य तस्य प्रातरारम्भार्हत्वात्। संवत्सरप्रदीपेऽपि 'प्रातःसन्ध्यां ततः कृत्वा सङ्कल्पं बुध आचरेत्' इत्युक्तम्। अत्र च कर्म्मण स्तावदपूर्व्वजनकत्वेन प्राधान्यम्। तिथ्यादेर्गुणत्वेन क्वचिदुपलक्षणत्वमाह गर्गः। 'तिथिनक्षत्रवारादिसाधनं पुण्यपापयोः। प्रधानगुणभावेन स्वातन्त्र्येण न ते क्षमाः' इति प्रधानस्य कर्म्मणो गुणभावेनाङ्गत्वेन। एवञ्च निराहारपदस्योपवासपरत्वेन कलञ्जाधिकरणन्यायान्नैकादशीक्षणमतिवाप्य भोजनम्। किन्त्वेकादश्यामिति विहितैकादशीयुक्ताहोरात्रपरम्।

अथ कलञ्जाधिकरणम्। तत्र श्रुतिः। 'न कलञ्जं भक्षयेत्' इति कलञ्जभक्षणाभावविषयकं कार्य्यमित्यर्थः। तत्र कालविशेषानुपादानान्निषिध्यमान क्रियायां प्रवृत्ति-

मतौ निषेधविधावधिकारादयावत्कालमेव तस्यां तस्य निवृत्तिः। न हि कलञ्जभक्षणादयतः कुतश्चित् कारणाविवृत्तस्य निषेधानुपालनं सकृद्वृत्तमिति कलञ्जभक्षणनिषेधो न पुनस्तं निवर्त्तयति किन्तु भक्षणप्रवृत्तिमत्तामात्रमधिकारिविशेषणं यदा यदा भवति तदा तदा एव निषेधविधिरपि तं निवर्त्तयति। न हि कलञ्जस्य भक्षणमुपक्रम्य यावत् कालं तद्भक्षयति। अतस्तदितरकाले निवृत्तिः सिद्धैवेति भवति विफलोविधिः। ननु नासौ निवृत्तिरप्रवृत्तस्य निवृत्त्यनुपपत्तेः। सत्यं प्रवृत्त्युपाधिना विनाशं प्राप्नुवन् प्रागभाव एव प्रवृत्तिनिराकरणात् साध्यमानोनिवृत्तिरुच्यते। न तु प्रवृत्तिरपि साध्यतयोपदिश्यते किन्तु रागप्राप्तप्रवृत्तिमतएव निषेधविधावधिकारः। यत्तु 'मनसा तु प्रवृत्तस्य भूतचेष्टावतोऽपि वा। यदनागतभावस्य वर्जनं तन्निवर्त्तनं' इति। अत्रापिशब्देन अप्रवृत्तमात्रसमुच्चयान्न विरोधः भूतचेष्टावत इति। 'भूतं क्ष्मादौ पिशाचादौ जन्तौ क्लीवं त्रिषूचिते। प्राप्ते वृत्ते समे सत्ये देवयोन्यन्तरे तुना इति मेदिन्युक्तेः। भूते प्राप्ते निषेध्ये चेष्टाव च इत्यर्थः। ततश्च प्रागभाव एव कालान्तरसम्बन्धितया साध्यत्वेनोपदिश्यते। प्रागभावश्चानादिसंसर्गाभावमात्रपरः स च अप्रवृत्तस्य भक्षणकारणमननुतिष्ठतः सिद्धत्येव। तस्मात् सकृत्क्रियापर्य्यवसायित्वे विफलोविधिः। कादाचित्काकरणस्य निषेधमन्तरेणापि प्राप्तेः। न च स्वर्गकामादिवत् साध्यतया प्रवृत्तिमत्कर्त्तृकत्वमप्यङ्गं विषयमात्राननुष्ठानाधीनसिद्धत्वान्निषेधनियोगानामिति कर्त्तव्यता काङ्क्षाविरहात् अतएव शुचित्वमपि तत्र नाङ्गम्। तस्मान्निषेधविधिषु काकवन्तोदेवदत्तस्य गृहा इत्यादिवत्तटस्थत्वे नाधिकारिविशेषणीभूताया प्रवृत्तेर्यावत्कालमनुवृत्तिस्तावत्कालमेव निवृत्तौ साफल्यं पुन-

निमित्तान्तरवन्न सकृदनुष्ठानेनैव शास्त्रार्थसिद्धिः। नैमित्तिक-श्राद्धादावमावास्यावच्छिन्नजीवनस्याधिकारिविशेषणस्यैकत्वात् सकृत्करणेनैव शास्त्रस्य सफलकत्वं नैकामावास्यायामेव पुनः पुनः क्रियया तथात्वं विधिगौरवापत्तेः। न हि तत्र सकृत्-करणमेव शास्त्रं विना सिध्यति। अतएव स्मृतिः। 'यथा-ब्देनाब्दिकं कर्म मासेनैव च मासिकम्। न्यूनाधिकं न कर्त्तव्यं नचैकत्र क्रियाद्वयम्'। एकस्याः क्रियाया एकदा वारद्वयविधानं न युक्तमिति हलायुधः। 'अमावास्याभेदे पुनस्तदवच्छिन्नजीवनभेदादधिकारावृत्त्या शास्त्रार्थोऽप्यावर्त्तते' इत्येतत् न्यायमूलमेव व्याख्यातवचनद्वयं जीमूतवाहनेन लिखितं यथा। 'निमित्तं कालमादाय वृत्तिर्विधिनिषेधयोः। तत्र पूज्ये विधेर्वृत्तिर्निषेधः कालमात्रके। तिथीनां पूज्यता नाम कर्मानुष्ठानतो मता। निषेधस्तु निवृत्त्यात्मा कालमात्र-मपेक्षते'। पूज्ये युग्मादिनेति शेषः। कालमाधवीये वृद्ध-गर्गः। 'निमित्तं कालमादाय वृत्तिर्विधिनिषेधयोः। विधिः पूज्ये तिथौ तत्र निषेधः कालमात्रके। तिथीनां पूज्यता नाम कर्मानुष्ठानतो मता। निषेधस्तु निवृत्त्यात्मा कालमात्र-मपेक्षते'। रविसंक्रान्तौ तु तदुपलक्षितपुण्यकाल एव ग्राह्यो-विधिवन्निषेधेऽपि। कालान्तरकल्पने गौरवाद्वचनाभावाच्च। संक्रान्त्युपवासस्य व्रतत्वेन भावरूपत्वात्तद्घटितत्वाद्वा उभय-थापि तत्र पूज्ये विधेर्वृत्तिरित्यनेन पुण्यकालयुक्ताहोरात्र-कर्त्तव्यता एवमेव गुरुचरणाः। प्रत्युत एकस्मिन् काले विधेय-प्रतिषेध्ययोः पुण्यपापयोः प्रतिपादकं कामधेनुनैयतकालिकक-ल्पतरुकृत्य-चिन्तामणिहेमाद्रिवाचस्पतिमिश्रधृतदेवीपुराणम्। 'अतीतानागतो भोगो नाड्यः पञ्चदश स्मृताः। सान्निध्यन्तु भवे-त्तत्र ग्रहाणां संक्रमे रवेः। व्यवहारो भवेल्लोके चन्द्रसूर्योप-

लक्षितः। काले विकल्पते सर्वं ब्रह्माण्डं सचराचरम्। पुण्यपापविभागेन फलं देवी प्रयच्छति। एकधापि कृतं तस्मिन् कोटि कोटिगुणं भवेत्। धर्मादिवर्द्धते ह्यायूराज्यं पुत्रसुखादि च। अधर्माद्व्याधिशोकादिविषुवायनसन्निधौ। विषुवेषु च यद्दत्तं जप्तं भवति चाक्षयम्। एवं विष्णुपदे चैव षड़शीतिमुखेषु च'। भोगोव्याप्तिः सूक्ष्मसंक्रमणकालसन्निधाने पुण्यतमत्वमिति यावदिति कल्पतरुः। वस्तुतस्तु भुज्यत इति भोगोभोग्यः रविसंक्रमणे। अतीतानागतः कालोभोग्यस्तन्निमित्तपुण्यपापजननयोग्य इति यावत्। अत एव 'पुण्यपापविभागेन फलमित्युपसंहृतम्'। यत्तु 'अर्द्धरात्र व्यतीते तु संक्रान्तिर्यदहर्भवेत्। पूर्वं व्रतादिकं कुर्य्यात् परेद्युः स्नानदानयोः' इति तत् 'उपोष्यैव च संक्रान्त्यां स्नात्वा योऽभ्यर्चयेद्रविम्। स्नातः पञ्चोपचारेण सकामफलमाप्नुयात्। इति भीमपराक्रमीयैकवाक्यतया परदिवसीयस्नानदाननिमित्तकं प्राग्दिनोपवाससंयमरूपव्रतादिपरम्। अन्यथा प्रागुक्तविरोधापत्तेः। स कालः कियानित्याह। नाद्यः पञ्चदशेति उभयतः पञ्चदशदण्डपुण्यत्वं दिवा विष्णुपदीविपर्य्यासमिति तिथितत्त्वे वक्ष्यते। सान्निध्यमित्यादिना तस्यैव कालस्य स्तुतिः। विकल्पते स्वभावात् प्रच्यवते। देवी संक्रान्तिकालस्वरूप संक्रान्त्युपक्रमे देवीपुराण एव। 'समायनमृतुर्मासः पक्षोहश्च क्रमेण तु। स्थूलसूक्ष्मविभागेन देवी सर्वगता विभो' इत्यभिधानात्। 'कलाकाष्ठादिरूपेण परिणामप्रदायिनी' इति मार्कण्डेयपुराणाच्च। तस्मादमावास्यायां हरितमपि न छिन्द्यादित्यादेर्निषेधविधित्वेन कलञ्जभक्षणन्याया यावत् कालभावित्वं निराहारस्य तु वैधोपवासरूपत्वात् व्र रूपत्वाच्च न तदवसरः तयोर्भावघटितत्वात्।

अथ व्रतलक्षणम्। दीर्घकालानुपालनीयः सङ्कल्पोव्रतमिति नारायणोपाध्यायानां स्वरसः। स्वकर्त्तव्य विषयोनियतः सङ्कल्पोव्रतमिति श्रीदत्तहरिनाथवर्द्धमानप्रभृतयः। सङ्कल्पश्च भावे मयैतत् कर्त्तव्यमेव निषेधे न कर्त्तव्यमिति ज्ञानविशेषः अतएव सङ्कल्पः कर्ममानसमित्याभिधानिकाः। वस्तुतस्तु पूर्वोक्तवराहपुराणवचनेनैकादश्युपवासस्य व्रतत्वाभिधानात्। 'एकभक्तेन नक्तेन तथैवायाचितेन च। उपवासेन चैकेन पादकृच्छ्र उदाहृतः'। इत्यादि याज्ञवल्क्याद्युक्तेषु, एकभक्तनक्तायाचितभोजनोपवासादिषु पादकृच्छ्रादित्वाभिधानाच्च न सङ्कल्पोव्रतं किन्तु सङ्कल्पविषयतत्तत्कर्मैव व्रतमिति। अतएव व्रतानां सङ्कल्पसम्भवत्वमाह मनुः। 'सङ्कल्पमूलः कामो वै यज्ञाः सङ्कल्पसम्भवाः। व्रतानियमधर्माश्च सर्वे सङ्कल्पजाः स्मृताः'। अनेन कर्मणा इदमिष्टं फलं साध्यते इत्येवं विषया बुद्धिः सङ्कल्पस्तदनन्तरमिष्टसाधनतया ऽवगते तस्मिन् इच्छा जायते ततस्तदर्थं प्रयत्नं कुर्वीत इत्येवं यज्ञाः सङ्कल्पसम्भवाः। व्रता नियमरूपा धर्माश्चतुर्थाध्याये वक्ष्यमाणाः। सर्वे इत्यनेन अन्येऽपि शास्त्रार्थाः सङ्कल्पादेव जायन्त इति कुल्लूकभट्टः। सङ्कल्पमाह वराहपुराणम्। 'प्रातःसङ्कल्पयेद्विद्वानुपवासव्रतादिकम्। नापराह्णे न मध्याह्ने पित्र्यकालौ हि तौ स्मृतौ' सङ्कल्पो व्रतस्यारम्भ इत्युक्तं राघवभट्टधृतोविष्णुः। 'व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्चने जपे। आरब्धे सूतकं न स्यादनारब्धे तु सूतकम्। आरम्भोवरणं यज्ञे सङ्कल्पोव्रतजापयोः। नान्दीश्राद्धं विवाहादौ श्राद्धे पाकपरिष्क्रिया। निमन्त्रणन्तु वा श्राद्धे प्रारम्भः स्यादिति स्मृतिः'। पाकपरिष्क्रियेति साग्नेर्दर्शश्राद्धविषयं तत्रैव तस्यान्वष्टकाणविधानेन तदग्निपाकस्यासाधारणत्वात्। सङ्कल्प-

विधानन्तु संवत्सरप्रदीपे। 'प्रातःसन्ध्यां ततः कृत्वा सङ्कल्पं बुध आचरेत्'। शान्तिपर्वणि 'गृहीत्वौडुम्बरं पात्रं वारिपूर्णमुदङ्मुखः। उपवासन्तु गृह्णीयाद्यद्वा सङ्कल्पयेद्बुधः। देवतास्तस्य तुष्यन्ति कामिकं तस्य सिध्यति। अन्यथा तु वृथा मर्त्याः क्लिश्यन्ति स्वल्पबुद्धयः'। यद्वेति पक्षान्तरम्। तेन ताम्रपात्राभावे सङ्कल्पमात्रं कल्पतरौ तु यद्वेति नक्तादिव्रतपरम्। तदयुक्तं तत्पदाध्याहारापत्तेः। यत्सङ्कल्पयेत्तद्गृह्णीयादित्यनेनैवोपपत्तौ वाकारोपवासपदवैयर्थ्यापत्तेश्च। तथाच कालमाधवीये वराहपुराणं गृहीत्वौडुम्बरं पात्रं वारिपूर्णमुदङ्मुखः। उपवासन्तु गृह्णीयात् यद्वा वार्य्येव धारयेत्'। यद्यपि व्रतं शास्त्रविहितोनियम इति यथा अश्राद्धभोजी अर्थित्वात् प्रवृत्तौ नियम इति सति भोजने अश्राद्धमेव भुङ्क्ते इति वैयाकरणाः 'तथा नियमो व्रतमस्त्री तच्चोपवासादिपुण्यकम्' इत्याभिधानिकाः। शास्त्रविहितोनियमोव्रतमिति तच्च उपवासादिलक्षणमित्यर्थः। तथापि तन्मात्रं व्रतमिति न वाच्यम् ऋतुकालाभिगामी स्यादित्यादावतिव्याप्तेः। गृहीतव्रताकरणे दोषमाह छागलेयः। 'पूर्वं व्रतं गृहीत्वा यो नाचरेत् काममोहितः। जीवन् भवति चाण्डालो मृतः श्वा चैव जायते। द्वादशीव्रतमादाय व्रतभङ्गं करोति यः। द्वादशाब्दं व्रतं चीर्णं निष्फलं तस्य जायते' इति नारदीयवचनात् द्वादश्यां विशेषोऽपि। प्रायश्चित्तमाह पद्मपुराणं 'लोभान्मोहात् प्रमादाद्वा व्रतभङ्गो यदा भवेत्। उपवासत्रयं कुर्य्यात् कुर्य्याद्वा केशमुण्डनम्। प्रायश्चित्तमिदं कृत्वा पुनरेव व्रती भवेत्। वा शब्दः समुच्चये तेन मुण्डनस्य कर्त्तव्यमिति प्रायश्चित्तविवेकः। प्रमादस्य सकृत्कृतत्वे प्रतिप्रसूते देवलः। 'सर्वभूतभयं व्याधिः प्रमादोगुरुशासनम्।

अव्रतघ्नानि कथ्यन्ते सकृदेतानि शास्त्रतः'। इति कर्त्तव्यतायां स एव। 'अभुक्त्वा प्रातराहारं स्नात्वाचम्य समाहितः। सूर्य्यादिदेवताभ्यश्च निवेद्य व्रतमाचरेत्। ब्रह्मचर्य्यं तथा सत्यं शौच मामिषवर्जनम्। व्रतेष्वेतानि चत्वारि वरिष्ठानीति निश्चयः। प्रातः व्रतमाचरेदित्यन्वयः। प्रधानपदार्थान्वयस्याभ्यर्हितत्वात्। प्रातःसङ्कल्पयेदिति वचनैकवाक्यत्वाच्च। अभुक्त्वा आहारमित्यर्थात् पूर्वदिने एकभक्तत्वमायाति। नन्वाहारस्य रागप्राप्तत्वात् अनुपादेयतया उद्देश्यस्य एकत्वसंख्यायाः सम्मार्जनन्यायेनाविवक्षितत्वं युक्तमिति। स च न्यायस्तृतीयाध्याये निरूपितः। यथा ज्योतिष्टोमे। कुशपवित्रेण ग्रहं संमार्ष्टीति श्रूयते तत्र संशयः किमेकग्रहस्य सम्मार्जनमुत ग्रहैर्जुहोतीति वाक्येन प्राप्तानां दशग्रहाणां तदर्थं किमुद्देश्यगता संख्या विवक्षिता नवेति। यथा पशुना यजेतेत्यत्र एकवचनश्रुतिबलादुपादेयपशुगता संख्या विवक्षिता तथैव ग्रहमित्येकवचनश्रुतिबलादुद्देश्यगतापि संख्या विवक्षिता भवितुमर्हतीति। तस्मादेकस्यैव ग्रहस्य सम्मार्जने प्राप्ते सिद्धान्तयति पशोर्वाक्यान्तरेणाप्राप्तत्वादनेनैव वाक्येन यागसम्बन्धावगमाद्यागं प्रति पशोर्गुणीभावात् यावद्गुणं प्रधानस्य प्रवृत्त्यभावात् कियता पशुनेत्यवच्छेदकाकाङ्क्षायां तदवच्छेदकत्वेनैकत्वसंख्या संवध्यत इत्युपादेयगतायाः संख्याया विवक्षितत्वं युक्तं ग्रहाणान्तु वाक्यान्तरेण यागसम्बन्धावगमात् सम्मार्जनवाक्ये द्वितीयाश्रुत्या सम्मार्जनं प्रतिग्रहस्य प्राधान्यावगमात् यावत् प्रधानं गुणस्य सम्मार्जनस्यावर्त्तनीयत्वात् कियन्तोग्रहाः सम्मार्जनीया इत्याकाङ्क्षायामनुपादेयग्रहगता संख्या न विवक्षितेति माधवाचार्य्यः। उत्तरमीमांसायां कल्पतरुस्तु किञ्चिद्विधातुं सिद्धवन्निर्देश्यत्वम् उद्देश्यत्वम् अनुष्ठेयत्वेन निर्देश्यत्वमुपा-

देयत्वम् उद्देश्यगतसंख्याया अविवक्षायां ग्रहं सम्मार्ष्टीत्यत्र उद्देश्यग्रहस्याविवक्षा स्यात् साम्यात्। तथाच चमसादेरपि सम्मार्जनप्रसङ्गः सचायुक्तः चमसाधिकरणे हि प्रकृतयागसम्बन्धिसोमपात्रत्वाविशेषेण ग्रहपदस्य चोपलक्षणार्थत्वेन चमसानामपि सम्मार्जनमाशङ्क्य सिद्धान्तितं 'अनुवाद्यमनुक्त्वा तु न विधेयमुदीरयेत्। नह्यलब्धास्पदं किञ्चित् कुत्रचित् प्रतिष्ठति' इति न्यायेन केवल सम्मार्गविध्ययोग्यत्वादुद्देश्येन भाव्यम्। तच्च ग्रहशब्देन समर्पितं न च चमसलक्षणार्थो ग्रहशब्दः। ग्रहयागावान्तरापूर्वसाधनस्यान्तरङ्गस्य तेन लक्ष्यमाणत्वात्। अन्यथा तदसाधनस्यापि ग्रहस्य सम्मार्गः प्रसज्येत व्रीहियवयोस्त्ववान्तरापूर्वभेदाभावात् व्रीहीन् प्रोक्षतीत्यत्र व्रीहिशब्दो यवोपलक्षणार्थ इति उक्तं ततश्च ग्रहेषु एव सम्मार्ग इति। ननु यदि ग्रह उद्देश्यत्वेन विधिपरिगृहीतस्तर्हि तदेकत्वमपि पश्वेकत्ववाद्‌[illegible]क्तं स्यात्। मैवं ग्रहगतन्त्वेकत्वं ग्रहान् प्रत्यवच्छेदकत्वेन रूपेण न विवक्षितं युक्ताहि पशुना यजेत इत्यत्र उपादेयविशेषणत्वादेकत्वविवक्षा एकप्रसवतयैकपशुविशिष्टयागविधिसम्भवात्। अत्र तु ग्रहत्वैकत्वयोः सम्मार्गविधावुद्देश्यमानयोर्गुणानाञ्च पदार्थत्वादसम्बन्धः समत्वात् स्यादिति न्यायेन परसम्बन्धादेकग्रहस्यैव उद्देश्यत्वेन पर्य्यवसानात् प्रत्युद्देश्यं वाक्यसमाप्तिः स्यात्। ग्रहमेकं सम्मार्ष्टीति ततश्च वाक्यभेदः स्यात् अतोग्रहत्वेन सर्वान् प्रकृताननूद्य सम्मार्गमात्रं विधेयम् एवं यश्चोभयं हविरार्त्तिमार्च्छेत् स ऐन्द्रं पञ्चशरावं चरुं निर्वपेत् इत्यत्र उभयत्वमविवक्षितं तदुक्तं प्रकृत्यर्थोऽपि खल्वेतदुद्देश्यस्य विशेषणम्। संख्यया तुल्यनीतित्वादविवक्षां प्रपद्यते। एवं स्वर्गकाम इत्यत्र पुंस्त्वमविवक्षितम्। अतएवोक्तं 'प्राप्ते

कर्मणि नानेकोविधातुं शक्यते गुणः। अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः'। इति किन्तु सर्वेषामेकसंस्काराकाङ्क्षित-त्वेन एकत्वाविवक्षा युक्ता तस्मात् सर्वे ग्रहाः सम्मार्जनीया इति एवमभुक्त्वा प्रातराहारमित्यत्राप्येकत्वाविवक्षा अस्तु सत्यम् अविशेषिताहार-निवृत्तिपरत्वासम्भवाद्विशेषापेक्षायामेक-वचनं नियामकमन्यथानध्यावसायापत्तेः। आक्रियते इत्याहार-मन्नादि ततश्च पूर्वाह्णे एकाहारं भुक्त्वा पराह्णे प्रातःकाले कृतस्नानाचमनः। 'सूर्य्यः सोमो यमः कालः सन्ध्ये भूता-न्यहः क्षपा। पवनोदिक्पतिर्भूमिराकाशं खचरामराः। ब्राह्मं शासनमास्थाय कल्पध्वमिह सन्निधिम्' इत्यनेन सूर्य्या-दीन् निवेद्य व्रतं सङ्कल्पयेत्। मैथिलास्तु अद्य भगवन् सूर्य्य भगवत्योदेवता एतद्व्रतमाचरिष्यामीत्यनेन सूर्य्याय देवता-भ्यश्च निवेद्य सङ्कल्पं कुर्य्यात् अनेकाहसाध्ये तु अद्यारभ्येति-विशेष इत्याह। हारीतः पतितपाषण्डनास्तिकसम्भाषणा-नृताश्लीलादिकमुपवासदिने विवर्जयेत्। कूर्म्मपुराणे 'बहि-र्ग्रामान्त्यजान् सूतीं पतितञ्च रजस्वलाम्। न स्पृशेन्नाभि-भाषेत नेक्षेत व्रतवासरे'। वौधायन उद्योगपर्व च। 'अष्टौ तान्यव्रतघ्नानि आपोमूलं फलं पयः। हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम्'। अतएव फलाहारादावपि मूलजलाद्य-विरुद्धम्। ब्राह्मणकाम्यादिषु न न्यूनत्वनियमः। धर्म्मार्थि-रब्धव्रतस्यासमाप्तौ मरणेऽपि तत्फलप्राप्तिमाहाङ्गिराः। 'यो यदर्थं चरेद्धर्ममसमाप्य मृतो यदि। स तत्पुण्यफलं प्रेत्य प्राप्नुयान्मनुरब्रवीत्'। प्रेत्य परलोके। प्रायश्चित्तविवे-कोऽप्येवं वैदिके कर्म्ममात्रे नारायणस्मरणनमस्कारौ आह योगि याज्ञवल्क्यः 'ध्यायेन्नारायणं नित्यं स्नानादिषु च कर्म्मसु। प्रायश्चित्त्यपि सर्वस्मात् दुष्कृतान्मुच्यते पुमान्। प्रमा-

दात् कुर्वतां कर्म प्रच्यवेताध्वरेषु यत्। स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः। तद्विष्णोरिति मन्त्रेण मज्जेदप्सु पुनः पुनः। गायत्री वैष्णवी ह्येषा विष्णोः संस्मरणाय वै' मन्त्रश्च 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः। दिवीव चक्षुराततम्'। वामनपुराणे। 'सर्वमङ्गलमङ्गल्यं वरेण्यं सर्वतोमुखम्। नारायणं नमस्कृत्य सर्वकर्माणि कारयेत्'। शातातपपराशरौ। 'अच्छिद्रमिति यद्वाक्यं वदन्ति क्षितिदेवताः। प्रणम्य शिरसा ग्राह्यमग्निष्टोमफलैः समम्'। क्षितिदेवता विप्राः। अग्निष्टोमफलैरिति स्तुतिः। विष्णुः 'ब्राह्मणानां प्रसादेन दिवि तिष्ठन्ति देवताः। ब्राह्मणाभिहितं वाक्यं न मिथ्या जायते क्वचित्। यत् ब्राह्मणास्तुष्टतमा वदन्ति तद्देवताः कर्मभिराचरन्ति। तुष्टेषु तुष्टाः सततं भवन्ति प्रत्यक्षदेवेषु परोक्षदेवाः'। तदपि ब्राह्मणाय दक्षिणारूपं किञ्चिद्दत्त्वा ग्राह्यम्। तथाच गोविन्दमानसोल्लासे नारदीयम्। 'सर्वेषामप्यलाभेषु यथोक्तकरणं विना। विप्रवाक्यं तथा सुभ्रु व्रतस्योद्यापलक्षणम्। वृथा विप्रवचो यस्तु गृह्णाति मनुजः शुभे। अदत्त्वा दक्षिणां वापि स याति नरकं ध्रुवम्'। उद्यापः प्रतिष्ठा। ब्राह्मणलक्षणमाह पैठीनसिः 'क्षमा दया दमो दानं धर्मः सत्यं श्रुतं घृणा। विद्याविज्ञानमास्तिक्यमेतद् ब्राह्मणलक्षणम्'। श्रुतमर्थाववोधः। अतएव मनुः 'चतुर्भिरपि चैवैतैर्नित्यमाश्रमिभिर्द्विजैः। दशलक्षणकोधर्मः सेवितव्यः प्रयत्नतः। धृतिः क्षमा दया स्तेयं शौचमिन्द्रियनिग्रहः। धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्। धृतिरिष्टवियोगानिष्टप्राप्तौ चित्तस्य यथा पूर्वमवस्थानम्। इन्द्रियनिग्रहः अप्रतिषिद्धेऽपि विषयेऽनतिप्रसङ्गः। धीर्हिताहितविवेचकशास्त्रार्थज्ञानं विद्या आत्म-

तत्त्वस्थानम्। सत्ये विशेषमाह गोतमः। 'नानृतवचने दोषो जीवनश्चेत्तदधीनं न तु पापीयसां जीवनमिति'। काशीखण्डञ्च 'सर्पिर्लवणतैलादिक्षये चापि पतिव्रता। पतिं नास्तीति न ब्रूयादायासार्थं न योजयेत्'। क्षयेऽपि घृतं वर्त्ततमित्यादिप्रयोज्यम्। शपथेऽपि मनुः 'कामिनीषु विवाहेषु गवां भक्ष्ये तथेन्धने। ब्राह्मणाभ्युपपत्तौ च शपथे नास्ति पातकम्। इन्धने होमार्थमपहृते ब्राह्मणाभ्युपपत्तौ ब्राह्मणरक्षार्थमङ्गीकृतधनादौ मिथ्याशपथे पापं नास्तीति कुल्लूकभट्टः। यमः 'न नर्मयुक्तं वचनं हिनस्ति न स्त्रैरवाच्य न च मैथुनार्थे। प्राणात्यये सर्वधनापहारे पञ्चानृतान्याहुरपातकानि'। नर्म क्रीड़ापरिहास इति यावत्। अतएव मिताक्षरायां स्मृतिः। 'गुरुणापि समं हास्यं कर्त्तव्यं कुटिलं विना' स्त्रैरवाच्यं स्वानर्थपरीहारार्थं कपटेनान्याभिलापः। अतएव शङ्खः। 'यस्य यस्य तु वर्णस्य वृत्तिच्छेदं समाचरेत्। तस्य तस्य बधः प्रोक्तं प्रायश्चित्तं समाचरेत्'। वायुपुराणे। 'यदेतद्द्रविणं नाम प्राणान्ते तु वहिश्चराः। स तस्य हरते प्राणान् यो यस्य हरते धनम्। आदित्यपुराणेऽपि। 'षष्टिं वर्षसहस्राणि स्वर्गे वसति भूमिदः। उच्छेत्ता चानुमन्ता च तान्येव नरके वसेत्'। महाभारते 'सत्यं भूतहितं प्रोक्तं मनसोदमनं दमः। तपः स्वधर्मवर्त्तित्वं शौचं सङ्करवर्जनम्। सन्तोषो विषयत्यागो क्रोरकार्य्यनिवर्त्तनम्। क्षमाद्वन्द्वसहिष्णुत्वमार्जवं समचित्तता। ज्ञानं तत्त्वार्थ सम्बोधः शमश्चित्तप्रशान्तता। दया भूतहितैषित्वं ध्यानं निर्विषयं मनः'। द्वन्द्वं शीतोष्णादि। वैदिके कर्मणि प्रथमतः ओं तत्सदिति निर्देशोऽपि। तथाच भगवद्गीता। 'ओं तत्सदितिनिर्देशो ब्रह्मणस्त्रिविधः स्मृतः। ब्राह्मणास्तेन वेदाश्च यज्ञाश्च

विहिताः पुरा'। ओँ तत्सदिति त्रिविधो ब्रह्मणो जगदीश्वरस्य निर्देशोऽभिधानं ब्रह्मविद्भिर्विज्ञतम्। तत्र तावदोमिति ब्रह्मेत्यादि श्रुतिप्रसिद्धेः ओमिति ब्रह्मणो नाम। पातञ्जलिरप्याह अस्यैव वाचकः प्रणव इति। अस्य ब्रह्मणः। ओँकारो भगवान् विष्णुरित्यादि तु वाच्यवाचकयोरभेदेन। तथाच जगत्कारणत्वेन प्रसिद्धत्वादविदूषां परोक्षत्वाच्च। तच्छब्दोऽपि ब्रह्मणो नाम। एवं परमार्थसत्त्वसाधुत्वप्रशस्तत्वादिभिः सच्छब्दोऽपि। अतस्तेन त्रिविधनिर्देशेन यद्वा यस्यायं त्रिविधो निर्देशस्तेन परमात्मना ब्राह्मणादयो निर्मिताः। तथाच 'तस्मात् ओमित्युदाहृत्य यज्ञदानतपःक्रियाः। प्रवर्त्तन्ते विधानोक्ताः सततं ब्रह्मवादिनां यस्मादेवं ब्रह्मणो निर्देशस्तस्मात् ओमित्युदाहृत्य उच्चार्य्य कृता वेदवादिनां यज्ञाद्याः शास्त्रोक्ताः क्रियाः सततमङ्गवैकल्येऽपि प्रकर्षेण वर्त्तन्ते सगुणा भवन्तीति भगवच्छङ्कराचार्य्यचरणाः। अत्रमाह योगियाज्ञवल्क्यः। 'यन्यूनञ्चातिरिक्तञ्च यच्छिद्रं यदयज्ञियम्। यदमेध्यमशुद्धञ्च यातयामञ्च यद्भवेत्। तदोङ्कारप्रयुक्तेन सर्व्वञ्चाविकलं भवेत्'। भगवद्गीतायाम्। 'तदित्यनभिसन्धाय यज्ञदानतपःक्रियाः। दानक्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः'। तदिति ब्रह्मणाभिधानमुदाहृत्येत्यनुषङ्गः अनभिसन्धाय कर्म्मणः फलमिति शेषः। तस्मात् फलाभिसन्धानं विना मुमुक्षुणा कर्म्म कर्त्तव्यमित्यपि बोध्यम्। 'सद्भावे साधुभावे च सदित्येतत् प्रयुज्यते। प्रशस्ते कर्म्मणि तथा सच्छब्दः पार्थ युज्यते। यतो विद्यमानजन्मनि उत्तमचरिते च सदित्येतत् प्रयुज्यते। अतो यज्ञादौ कर्म्मणि प्रथमं सच्छब्दः प्रयुज्यत इति। तेनैतादृशेतिकर्त्तव्यताकः सङ्कल्पविषयो व्रतमिति व्रतलक्षणम्। सङ्कल्पविषयत्वं व्रतत्वं व

अतिमिश्रोऽप्याह यथाकर्त्तव्यतया सङ्कल्पितं व्रतमिति। अमरसिंहोऽपि उपवासादौ व्रतशब्दसङ्केतमाह 'नियमो व्रतमस्त्रीतच्चोपवासादिपुण्यकं तच्च व्रतमुपवासादिलक्षणं पुण्यकं पुण्यजनकमित्यर्थः। अत्र च नियमशब्दः कर्मणि व्युत्पन्नः। यत्तु व्रतपदं नियतसङ्कल्पविशेषवाचकमिति प्रायश्चित्तविवेककृन्निबन्धं तदपि नियतः सङ्कल्पविशेषो यत्र द्वादशवार्षिकव्रतादौ तस्य वाचकमित्येतत्परम्। अन्यथा व्रतपदं मरणेऽपि मनुना प्रयुक्तं 'यैर्यैर्व्रतैरपोहेतेत्युक्त्वा मरणस्यापि तेनोक्तत्वादिति व्रतपदं द्वादशवार्षिकादिपरमेवेत्याभ्यां स्ववाक्याभ्यां विरुद्धं स्यात्। न च नागृहीतविशेषणा बुद्धिर्विशेष्य उपजायत इति न्यायात् सङ्कल्पवाचित्वमिति वाच्यं श्रीदत्तादीनां मतेऽपि स्वकर्त्तव्यविषयो नियतः सङ्कल्पो व्रतमिति लक्षणे स्वकर्त्तव्यविषयस्य तथात्वात् विनिगमकन्तु प्रागुक्तवराहपुराणयाज्ञवल्क्यादिवचनम्। एवञ्च सङ्कल्पविषयस्य अनन्तं पूजयेद्धरिमित्यादौ भावत्वं नेक्षेतोद्यन्तमादित्यमित्यादौ चाभावरूपत्वम्। ननु तर्हि व्रतस्य क्वचिदप्यभावरूपत्वान्निषेधः कालमात्रके इत्यस्यैव विषयत्वं स्यादिति चेन्न तस्य केवलनिषेधविषयकत्वात् अस्य तु सङ्कल्पादीतिकर्त्तव्यतायोगित्वेन भावघटितत्वात् तत्र पूज्ये विधेर्वृत्तिरित्यस्यैव विषयत्वमिति। जीमूतवाहनेनापि एकादश्यां भोजने दोषं दर्शयन्नुपवासं नियमयति। न चायं निषेध इतिकर्त्तव्यताविधानात् निषेधे चेतिकर्त्तव्यताविरहाद्व्रतपदाप्रयोगाच्चेत्युक्तम्। यत्तु निषेधप्रकरणस्थदेवलवचने। 'न शङ्खेन पिबेत्तोयं न खादेत् कूर्म्मशूकरौ। एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि' इत्यत्र नञो निषेधे मुख्यत्वाद्भोजनाभावः प्रतीयते न त्वभोजनसङ्कल्परूपं व्रतं लक्षणाप्रसङ्गात्। एकेनैव मत्स्यपुराणकृता 'दशम्यां

नियताहारी मांसमैथुनवर्जितः। एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि'। इति दशमीनियमपूर्व्वकं व्रतमभिधाय 'रटन्तीह पुराणानि भूयोभूयो वरानने। न भोक्तव्यं न भोक्तव्यं सम्प्राप्ते हरिवासरे' इत्यादिविधेरनन्यगतिकतया निषेधकत्वमवश्यं वाच्यम्। तथाच निषिद्धे भोजने दोष-श्रवणं निषेधातिक्रमजन्यतयैवोपपद्यमानं न फलश्रुत्या काम्य-तया निरूढ़स्य व्रतस्य नित्यत्वे प्रमाणमिति तच्चिन्त्यं न खलु न शङ्खेन पिबेत्तोयमित्यादिभिः प्रतिपक्षनिषेधभावैः साहचर्य्येण नैकादशीभोजननिषेधकमात्रमुत्तराद्धं किन्तु 'एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि। वनस्थयतिधर्मोऽयं शुक्लामेव सदा गृही' इति गोभिलवचने धर्मशब्दसमभि-व्याहारेणैकादश्यामुपवसेदित्यनेनैकवाक्यतया चोपवास-विधायकमपि न हि निषिद्धानां ब्रह्महत्यादीनां त्यागे कश्चिद्धर्मो जायते किन्तु भावरूपाज्ञानगर्ह्यतो निषिद्धो धर्मो भवेदिति वैधोपवासे च 'उपावृत्तस्य पापेभ्यो यस्तु वासो गुणैः सह। उपवासः स विज्ञेयः सर्व्वभोगविवर्जितः'। इति भविष्यपुराणवचनेन भोगमात्रस्यैव वर्जने प्राप्ते वचनान्तरा-दहोरात्रभोजनस्यैव पापनिवृत्तिगुणवासयुक्तस्य प्राधान्य-मन्यभोगवर्जनस्याङ्गत्वम्। तथाच 'सूतके मृतके चैव प्रणमेन्मनसा हरिम्। एकादश्यां न भुञ्जीत व्रतमेतद्धि वैष्णवम्' अत्र एकादश्यामुपवासमात्रस्य व्रतत्वमुक्तम् एकादश्यां न भुञ्जीतेत्यस्य व्रतपरत्वेन नाभोजनपरता तन्न्याय पूर्व्वं दर्शित-त्वात्। ततश्च यथा एकादश्यां न भुञ्जीत इत्यत्र वचनान्तरादुपवासरूपव्रतपरत्वं तथा न भोक्तव्यमित्यत्रापि। वस्तुतस्तु वराहपुराणे एकादशीव्रतमन्तर्गमध्ये न शङ्खे न पिबेत्तोय-मिति न भोक्तव्यं न भोक्तव्यमिति वचनद्वयमभिधाय व

करणे प्रत्यवाय उक्तः। न च पौनरुक्त्यभिया तस्य निषेधकत्वमिति वाच्यम्। तथात्वे एतद्वचन एव न भोक्तव्यमिति पुनरुपादानं व्यर्थं स्यात् किन्तु वीप्सया तस्यैव व्रतस्य नित्यत्वख्यापनमिति। अन्यथा निषेधः कालमात्रक इत्यनेनैव एकादशीक्षण एव भोजननिषेधः स्यात्। न खादेत् कूर्मशूकरावित्यस्य विशेषो बोध्यः। 'चक्राङ्कितस्तु यः कूर्मो रोहितः कनकप्रभः। वराहः श्वेतवर्णस्तु त्रयमेतन्न भक्षयेत्' इति समुद्रकरधृतकूर्मपुराणवचनात्। वाल्यावस्थायां चक्राङ्कितत्वेन तदानीं कूर्मस्याभक्ष्यत्वम्। अशनन्तीत्यनुवृत्तौ हारीतः। महारण्यवासिनश्च वराहांस्तथेति। एवञ्च विवृतन्ते अग्राम्यशूकरांश्चेति वशिष्ठोक्तं श्वेताश्वेतया व्यवस्थितम्। कल्पतरुस्तु। श्राद्धे नियुक्ताथियुक्ततयेति। विष्णूपासकस्य सर्वथा निषेधः। यथा वाराहे भगवद्वाक्यम्। 'भुक्त्वा वराहमांसन्तु यस्तु मामुपसर्पति। वराहो दशवर्षाणि भूत्वा वै चरते वने'। यदपि हरिवासरपदादहोरात्राभोजनप्रतीतेर्निषेधः कालमात्रक इत्यनेनैकादशीक्षणमतिवाह्य भोजनमिति तदपि न किञ्चित्। यतो हरिवासरपदाद्धरितिथेरेकादश्येव प्रतीयते। तथाच स्कन्दपुराणे 'प्रतिपत्प्रभृतयः प्रोक्ता उदयादोदयाद्रवेः। संपूर्णा इति विख्याता हरिवासरवर्जिताः'। भविष्योत्तरे 'हिताय सर्वलोकानां तिथिमेकादशीं स्वयम्। निर्ममे स्वशरीरात्तु सेयं वै वैष्णवी तिथिः'। अथवा हरिवासरो द्वादश्याः प्रथमः पादस्तत्र पारणं न कुर्यात्। तथाच विष्णुधर्मोत्तरे। 'द्वादश्याः प्रथमः पादो हरिवासरसंज्ञितः। तमतिक्रम्य कुर्वीत पारणं विष्णुतत्परः'।

अथैकादशीव्रतम्। नित्यं काम्यञ्च गोविन्दमानसोल्लासमहार्णवयोर्भविष्योत्तरे। 'एकादशीव्रतं नाम नित्यं वा

काम्यमेव वा। कथं वा क्रियते तत्तु नियमो वात्र कीदृशः'। इत्यादि युधिष्ठिरप्रश्नमभिधाय 'सत्यं ते कथयिष्यामि शृणु पाण्डुकुलोद्भव। नित्यमेतद्व्रतं नाम कर्त्तव्यं सार्ववर्णिकम्। वाञ्छद्भिः सर्वदा सद्भिः पुरुषार्थचतुष्टयम्। न भोक्तव्यं न भोक्तव्यं सम्प्राप्ते हरिवासरे' इति श्रीकृष्णवचनमभिहितम्। अत्र नित्यमिति श्रवणात् नित्यत्वं पुरुषार्थचतुष्टयमिति श्रवणात् काम्यत्वञ्च। कालमाधवीये ब्रह्मवैवर्त्तः। 'इति विज्ञाय कुर्वीतावश्यमेकादशीव्रतम्। विशेषनियमाशक्तोऽहोरात्रं भुक्तिवर्जितः। निगृहीतेन्द्रियः शुद्धोऽसहायो विष्णुतत्परः। उपोष्यैकादशीं पापान्मुच्यते नात्र संशयः'। इदं तु नित्यम् अतएव 'अष्टाङ्गकद्वयं नित्ये काम्ये भक्तचतुष्टयम्' इत्युक्तम्। एतच्च नित्ये भक्तद्वयवर्जनशक्तावश्यकत्वार्थं नित्ये किञ्चिदङ्गहानावपि सिद्धिरिति न्यायात् काम्ये तु सर्वाङ्गोपसंहाराधिकरणन्यायात् सर्वाङ्गोपेतस्यैव सम्पूर्णफलत्वेन भक्तचतुष्टयवर्जनमभिहितम्। शक्तौ तु कात्यायनः। 'शक्तिमांस्तु नरः कुर्य्यान्नियमं सविशेषणम्'। कृत्यकल्पलतायां भविष्यपुराणम्। युधिष्ठिर उवाच। 'एकादशीव्रतं देव नित्यं वा काम्यमेव वा। तन्मे कथय गोविन्द श्रोतुं कौतूहलं मम'। श्रीभगवानुवाच। 'नित्यमेतद्व्रतं नाम कर्त्तव्यं सार्ववर्णिकम्। सर्वाश्रमाणां सामान्यं सर्वधर्मेष्वनुत्तमम्। एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि' एवञ्चैकादशीव्रतस्य नित्यत्वेऽपि शक्तेन तदङ्गतया संयमपारणनियमोऽवश्यमनुष्ठेयः।

अथ वृद्धिश्राद्धविषयः। ननु व्रतस्य वैदिकत्वेन 'नानिष्ट्वा तु पितॄन् श्राद्धैः कर्मवैदिकमारभेत्' इति। शातातपवचनादारम्भे कथं न वृद्धिश्राद्धम्। उच्यते। नेदं श्राद्धविधायकं गौरवात् किन्तु यत्र कर्मणि वचनान्तरप्राप्तं श्राद्धं तत्र पौर्वा-

पर्य्युदासमात्रविधायकमिति। अथैवं 'नाष्टकासु भवेत् श्राद्धं न श्राद्धे श्राद्धमिष्यते। न सोष्यन्तौ जातकर्म्म प्रोषितागमकर्म्मसु' इत्यादिना छन्दोगपरिशिष्टोक्तनिषेधस्यानुपपत्तिः तत्तत्कर्म्मणि श्राद्धविधायकाभावात्। सोष्यन्तौ सोष्यन्ती होमः। स च शूलायन्तीमासन्नप्रसवां ज्ञात्वा होमः। सुप्रसवे इत्यस्माद्धातोरिति भट्टभाष्यदर्शनाद्दन्त्यादिरयं शब्दः। मैवं तेष्वपि गोभिलेन स्वोक्तगृह्यकर्म्मत्वेन श्राद्धविधानात् यथा सर्व्वाण्येवान्वाहार्य्यवन्तीति। अस्यार्थः सर्व्वाण्येव वक्ष्यमाणानि अन्वाहार्य्यवन्ति अन्वाहार्य्यं नान्दीमुखश्राद्धं दक्षिणा च तदुभययुक्तानि। तथाच गृह्यान्तरम्। 'यत् श्राद्धं कर्म्मणामादौ या चान्ते दक्षिणा भवेत्। आमावस्यं द्वितीय यदन्वाहार्य्यं तदुच्यते'। अतएव छन्दोगपरिशिष्टकृता यानि पर्य्युदस्तानि तानि सर्व्वाणि गोभिलोक्तानि। अत्र जातकर्म्मणि श्राद्धनिषेधात्तत्र तद्विधायकं वचनं शाख्यन्तरीयम्। न चैवं सन्ध्यावन्दनादेर्गोभिलोक्तत्वात् तत्र कथं न वृद्धिश्राद्धमिति वाच्यम्। यस्मादथातो गृह्यकर्म्माण्युपदेक्ष्याम इत्यादि पुनर्यज्ञविवाहयोरित्यन्तसूत्ररूपगृह्याद्भिन्न एव अथातः सन्ध्योपासनविधिं वक्ष्याम इत्याद्यमावास्यायां सर्व्वमित्यन्तग्रन्थः सन्ध्यातर्पणविधायकः। उभयत्रैव शेषसूत्रे द्विवचनं ग्रन्थसमाप्त्यर्थमिति तद्भाष्यव्याख्यानम्। एवञ्च गोभिलानुक्तेष्वन्नप्राशनादिषु यद्वृद्धिश्राद्धं तन्मलमासतत्त्वे मत्स्यपुराणादिवचनाद्दर्श्यते। तर्हि न श्राद्धे श्राद्धमिष्यत इति पर्य्युदासानुपपत्तिरिति चेत् सत्यं गोभिलगृह्येऽप्यन्वष्टकादिश्राद्धविधानात्। तस्मादेकादश्यादिव्रते गोभिलगृह्यानुक्तत्वाद्विशेषवचनाभावाच्च न वृद्धिश्राद्धमिति। एवमन्यत्रापि सुधीभिर्भाव्यमिति।

अथोपवाससमन्वयः। भविष्ये। 'उपावृत्तस्य पापेभ्यो

यस्तु वासो गुणैः सह। उपवासः स विज्ञेयः सर्वभोगविव- र्जितः'। उपावृत्तस्य निवृत्तस्य पापेभ्यः पापकर्मभ्यः। मैथि- लास्तु। दोषेभ्य इति पठित्वा दोषेभ्यो रागद्वेषमात्सर्य्यादि- निषिद्धात्मधर्मेभ्य इत्यर्थमाहुः। गुणानाह गोतमः। 'दया सर्वभूतेषु क्षान्तिरनसूया शौचमनायासो मङ्गलमकार्पण्यम- स्पृहा चेति'। दयादिलक्षणान्याह बृहस्पतिः। 'परे वा बन्धुवर्गे वा मित्रे द्वेष्टरि वा सदा। आत्मवद्वर्त्तितव्यं हि दयै- वैषा प्रकीर्त्तिता'। परे उदासीने। आपत्सु रक्षितव्यमिति कल्पतरौ पाठः आत्मवदिति व्यक्तमाह दक्षः। 'यथैवात्मा परस्तद्वद्द्रष्टव्यः सुखमिच्छता। सुखदुःखानि तुल्यानि यथा- त्मनि तथापरे'। बृहस्पतिः। बाह्ये चाध्यात्मिके चैव दुःखे चोत्पादिते क्वचित्। न कुप्यति न वा हन्ति सा क्षमा परि- कीर्त्तिता। न गुणान् गुणिनो हन्ति स्तौति मन्दगुणानपि। नान्यदोषेषु रमते सानसूया प्रकीर्त्तिता। अभक्ष्यपरिहारस्तु संसर्गश्चाप्यनिन्दितैः। स्वधर्मे च व्यवस्थानं शौचमेतत् प्रकी- र्त्तितम्। शरीरं पीड्यते येन सुशुभेनापि कर्मणा। अत्यन्तं तन्न कुर्वीत अनायासः स उच्यते। प्रशस्ताचरणं नित्यम- प्रशस्तविवर्जनम्। एतद्धि मङ्गलं प्रोक्तमृषिभिस्तत्वदर्शिभिः। स्तोकादपि च दातव्यमदीनेनैव चात्मना। अहन्यहनि यत् किञ्चिदकार्पण्यं हि तत् स्मृतम्। यथोत्पन्नेन सन्तोषः कर्त्तव्योऽप्यल्पवस्तुना। परस्या चिन्तयित्वार्थं सास्पृहा परि- कीर्त्तिता'। देवीपुराणम्। 'तद्ध्यानं तज्जपः स्नानं तत् कथा- श्रवणादिकम्। उपवासकृतो ह्येते गुणा प्रोक्ता मनीषिभिः' सर्वभोगविवर्जितः ताम्बूलानुमतनृत्यगीतादिसुखरहितः। अत्र मैथिलाः बृहच्छातातपो भोगविशेषान् प्रतिप्रसूते। 'गन्धा- लङ्कारवस्तूनि पुष्पमाल्यानुलेपनम्। उपवासेन दुष्येत दन्त-

धावनमञ्जनम्। गौड़ीयस्मृतिः। 'उपवासे तथा श्राद्धे न खादेद्दन्तधावनम्। दन्तानां काष्ठसंयोगो दहत्या सप्तमं कुलम्'। तत्र योगीश्वरः। 'तस्मात् सर्वप्रयत्नेन भक्षयेद्दन्तधावनम्' इत्यभिधाय दन्तकाष्ठसंयोगो निषिद्धः तर्पणादिना दन्तधावनमिति विरोधं परिजहारेति वदन्तो नञर्थं व्याचक्रुः तत्र वृद्धशातातपेन 'मुखे पर्य्युषिते नित्यं भवत्यप्रयतो नरः। तस्मात् सर्वप्रयत्नेन भक्षयेद्दन्तधावनम्' इत्यभिधाय तद्वचनाभिधानेन दन्तधावने दोष एवोक्तः। अन्यथा पौनरुक्त्यापत्तेः। 'अञ्जनं रोचनञ्चापि गन्धान् सुमनसस्तथा। पुण्यके चोपवासे च नित्यमेव विवर्जयेत्' इति हरिवंशात्। मिताक्षरायां 'गात्राभ्यङ्गं शिरोभ्यङ्गं ताम्बूलं चानुलेपनम्। व्रतस्थो वर्जयेत् सर्वं यच्चान्यद्बलरागकृत्' इत्यनेनानुलेपनरागकृन्निषेधाच्च। अतएव प्रायश्चित्तविवेककृद्भिः सुष्ठूक्तमुपवासे न हेतुनेति। जीमूतवाहनेनापि उपवासे चेति पठित्वा चकारादनुक्तादिष्वपीति व्याख्यातम्। तस्माद्गन्धेत्यादि सर्वभोगस्यैव प्रदर्शकं तेन विलासार्थं गन्धादिवर्जनं कार्य्यम्। देवलः 'उपवासः प्रणश्येत दिवास्वापाच्च मैथुनैः। अत्यये चाम्बुपाने च नोपवासः प्रणश्यति'। उपवासोऽपि नश्येतेति कल्पतरुपाठे अपि नान्यद्व्रतं समुच्चीयत इति विशेषः। अत्यये इति। अत्यये नाशे सम्भाव्यमाने। मैथुने विशेषमाह देवलः। 'उपवासे तथा यौनं हन्ति सप्तकुलानि वै। स्त्रीणां संप्रेक्षणात् स्पर्शात्ताभिः संकथनादपि। ब्रह्मचर्य्यं विपद्येत न दारेषु तु सङ्गमात्' संप्रेक्षणात् संकथनादित्यत्र स रागत्वं संशब्दस्यार्थः माहचर्य्यात् स्पर्शोऽपि तथेति प्रायश्चित्तविवेकः। कात्यायनोऽपि। 'रेतःसेकात्मकं भोगमृतेऽप्यत्र क्षयः स्मृतः'। तथाच दक्षः। 'स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्यभाषणम्। सङ्कल्पो-

ऽध्यवसायश्च क्रिया निष्पत्तिरेव च। एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः। अनुरागात् ज्ञानतश्चैव ब्रह्मचर्य्यविरोधकम्'। याज्ञवल्क्यः। 'षोड़शर्त्तुर्निशास्त्रीणां तासु युग्मासु संविशेत्। ब्रह्मचार्य्येव पर्व्वाण्याद्याश्चतस्रश्च वर्जयेत्'। स्त्रीणां गर्भधारणयोग्यावस्थोपलक्षितः कालः ऋतुः। स च रजोदर्शनमारभ्य षोड़शाहोरात्रात्मकः तस्मिन् ऋतौ युग्मासु समासु रात्रिग्रहणाद्दिवसप्रतिषेधः। संविशेत् गच्छेत् पुत्त्रार्थमेवं गच्छन् ब्रह्मचारी भवति अतो यत् ब्रह्मचर्य्यं श्राद्धादिषु चोदितं तत्र गच्छतोऽपि ब्रह्मचर्य्यस्खलनदोषो नास्ति। किन्तु पर्व्वाण्याद्याश्चतस्रश्च वर्जयेदिति मिताक्षरा। अत्र श्राद्धवासरे यदभिगमनमुक्तं तदयुक्तं कल्पतरुधृतवचनविरोधात्। यथा श्राद्धानन्तरं शङ्खलिखितौ। 'ऋतुस्नातां तदहोरात्रं परिहरेत्। नार्त्तवे दिवामैथुनं व्रजेत् क्लीवाल्पवीर्य्याश्च दिवा प्रसूयन्ते अल्पायुषस्तस्मादेतत् विवर्जयेत् प्रजाकामः। पितॄणां नोद्दवे तन्तुं विच्छिन्द्यात् प्रयतेताच्छेदाय येनाप्रतिष्ठस्तस्मात् प्रतिष्ठाकामः प्रजया प्रतिष्ठेतेति'। नो निषेधे। तन्तुं सन्तानम् अच्छेदाय अविच्छेदाय सन्तानस्य। येन यस्मादप्रतिष्ठः प्रजानुत्पत्त्या अप्रतिष्ठः स न पतति तस्मादुत्पत्त्यर्थं यतितव्यम्। विष्णुपुराणम्। 'श्राद्धे नियुक्तो भुक्त्वा वा भोजयित्वा नियोज्य च। व्यवायी रेतसो गर्त्ते मज्जयत्यात्मनः पितॄन्'। शूलपाणिस्तु। ब्रह्मचार्य्येव भवति ब्रह्मचर्य्यफलं प्राप्नोति। पर्व्वणि अमावास्यादौ वर्जयेत्। तेन ऋतौ सकृद्गमनात् व्रतादिषु न दोषः स्यात् एतच्च पुत्त्रोत्पत्तिपर्य्यन्तम्। तथाच आचारमाधवीये कूर्मपुराणम्। 'ऋतुकालाभिगामी स्याद्यावत् पुत्त्रोऽभिजायते। ऋणापकरणार्थं हि पुत्त्रस्योत्पादनस्मृतिः। चतुर्थ्यादिवर्जनं प्रथमस्त्रपुत्त्रार्थं चतुर्थीप्रभृत्युत्तर-

रराप्रजानिःश्रेयसार्थमित्यापस्तम्बवचनात् । तदनर्थिनस्तु
शामारते । 'स्नातां चतुर्थदिवसे रात्रौ गच्छेद्विचक्षणः' ।
हः । 'शुचा भर्त्तुश्चतुर्थेऽह्नि' इति ।

अथैकादशीभोजननिन्दा । विष्णुधर्म्मोत्तरे । 'एकादश्यां
भुञ्जीत पक्षयोरुभयोरपि । एकादश्यां हि भुञ्जानो विष्णु-
लोकाच्चुरतो भवेत्' । तथा 'प्रतिग्रासं स भुङ्क्ते तु किल्बिषं
ानविट्समम् । एकादश्यां द्विजश्रेष्ठ यो भुङ्क्तेऽन्नं द्विजो
नाक्' । भविष्ये । 'यानि कानि च पापानि ब्रह्महत्यादि-
ानि च । अन्नमाश्रित्य तिष्ठन्ति संप्राप्ते हरिवासरे । अघं
केवलं भुङ्क्ते योभुङ्क्ते हरिवासरे । तद्दिने सर्वपापानि
वन्त्यन्नाश्रितानि च' । सनत्कुमारः । 'मद्यपानान्मुनिश्रेष्ठ
ातैव नरकं व्रजेत् । एकादश्यन्नकामस्तु पितृभिः सह
ज्जति' । अत्र दोषश्रुतेर्नित्यत्वम् । अतएव यदकरणे प्रत्य-
ायस्तन्नित्यमित्युक्तम् । तथाच 'नित्यं सदा यावदायुर्न कदा-
ददतिक्रमेत् । उपेत्यातिक्रमे दोषः श्रुतेरत्याग चोदनात् ।
लाश्रुतेर्वीप्सया च तन्नित्यमिति कीर्त्तितम्' इत्यष्टधानित्य-
साधकम् । अतएव माधवाचार्य्येणात्रैवोपवासे सर्वमुदा-
तम् । ग्रन्थगौरवभयान्न लिखितम् । यत्तु फलाश्रुतेर्नित्यत्व-
भिहितम् । तत् फलाश्रुतौ विश्वजिन्न्यायात् स्वर्गः कल्प्यत
त्यनेन विरुद्धमिति । स च न्यायो यथा । विश्वजिता यजेत
त्यादिश्रूयते । अत्राश्रुताधिकारं लिङ्गप्रकरणालब्धाधिकार-
ोदाहरणम् । निषेधे हि सामर्थ्यात् प्रवृत्तक्रियोऽधिकारी
भ्यते । अङ्गविधिषु प्रकरणादिति । न चिन्ताधिकारः ।
ं सतीह सन्देहः किं नियोज्याध्या क्रियते नवेति । अत्र च
के द्वारमित्यादौ क्रियया विना कारकाकाङ्क्षायामविरता-
धानापर्य्यवसानात् युक्तोऽध्याहारः । इह तु विषये कार्य्य-

स्वान्विताभिधानपर्य्यवसानादनध्याहारप्राप्ते। उच्यते। यथा-
प्यभिधेयापर्य्यवसानं द्वाराभिधानापर्य्यवसानमिव कार्य्यं हि
साध्यत्वेन कृतिनिरूप्यं नरव्यापाररूपाकृतिः। सा यथा
स्वसाध्यधात्वर्थनिरूप्या तथा स्वाश्रयनरनिरूप्या च। तदेवं
कृतेः कर्त्तापि कार्य्यस्य कृतिद्वारा स्वसम्बन्धित्वेन निरूपक इति
तमन्तर्भाव्येव नियोगधीः एवञ्च रथोगच्छतीत्यादावाख्याते
व्यापारलक्षणा। तदुक्तं भट्टपादैः 'स्त्रीत्वाभावेऽपि अश्वादौ
टावादिप्रत्ययो यथा। प्रयुज्यते तथाख्यातो यत्नाभावेऽप्य-
चेतने। वोढृत्वादिगतो यत्नो रथादावुपचर्य्यते। उपपाद्य-
प्रयोगोऽत्र मुख्यार्थानुपपत्तितः' न ह्यबोद्धात्मनः कार्य्येण
सम्बन्धः स्वतस्तेन सम्बध्यते। स्वसम्बन्धिकार्य्यबोद्धा च
नियोज्य इति सोऽध्याहार्य्य इति स्थिते चिन्ता किं सर्व्वेषा-
मधिकार उत एकस्येति तत्राविशेषात् सर्व्वेषामिति प्राप्ते
उच्यते। एकेनाकाङ्क्षाशान्तेरेकस्येत्येवं स्थिते विचारः किं यस्य
कस्यचिन्नियोज्यस्याध्याहार उत स्वर्गकामस्येति तत्राविशेषा-
दनियमे प्राप्ते। उच्यते। स स्वर्गः स्यात् सर्व्वान् प्रत्यविशिष्ट-
त्वादिति जैमिनिसूत्रात्। स्वर्गकाम एवाध्याहार्य्यः विशेषो
हि न गम्यते पुरुषाणां सुखाभिलाषित्वात्। दुःखनिवृत्तेरपि
तत्रैवान्तर्भावात् दुःखनिवृत्तिस्तु न सुखं विना भूता सुषुप्तौ
सत्त्वामपि तस्यां सुखजन्मादर्शनात् अनवच्छिन्नसुखस्य स्वर्ग-
त्वात् तस्य सर्व्वसुखविशेषान् प्रत्यविशिष्टत्वात् विशेषे माना-
भावात् स्वर्ग एव नियोज्य विशेषणं स्यादित्युत्तरमीमांसायां
कल्पतरुः। यदुक्तं 'यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्।
अभिलाषोपनीतं यत्तत् सुखं स्वःपदास्पदम्' इति। ननु
फलाश्रुतिमात्रात् कथं नित्यत्वमिति चेदुच्यते। फलाश्रुतौ
नित्यप्रकरणे नित्यत्वं काम्यप्रकरणे काम्यत्वमिति। एवञ्चैका-

[illegible]नित्यत्वात् किञ्चिदङ्गवैकल्येऽपि प्रधानोपवासादे-
रावश्यकं यावज्जीवाधिकरणन्यायात्। स च न्यायो यथा।
यावज्जीवमग्निहोत्रं जुहुयादिति श्रूयते तत्र किं सर्वाङ्गोप-
संहारेणैवाधिकारः उत यावज्जीवपदेन यावन्ति शक्नोतीत्युप-
संहर्तुं यदा तदा तावद्भिरङ्गैरुपेतं प्रधानं कुर्वन्नधिकरोति
इति संशयः। तत्राद्ये सर्वाङ्गोपेतस्य प्रधानस्य फलसाधन-
त्वादङ्गवैकल्ये फलानुदयात् सर्वाङ्गोपसंहार इति पूर्वपक्षः
तत्र सिद्धान्तः सायंप्रातर्जुहोतीति श्रुतेः सायंप्रातःकाला-
वच्छिन्नं जीवनमग्निहोत्रस्य निमित्ततया श्रूयते नत्वङ्गानां
इति निमित्ते नैमित्तिकमवश्यमेव अन्यथा निमित्तत्वासम्भ-
वात्। अतोऽशक्याङ्गपरित्यागेन प्रधानं कर्त्तव्यम्। तावतैव
शास्त्रार्थात् फलसिद्धिरिति अतएव नित्यनैमित्तिकाधिकारि-
काधिकारे श्रीधरस्वामिधृता स्मृतिः यथा शक्नुयात्तथा कुर्य्या-
दिति। बौधायनोऽपि स्मरति। 'यथाकथञ्चिन्नित्यानि यस्य-
स्तु निरूपितः। येन केनापि कार्य्याणि नैव नित्यानि लोपयेत्'
यस्य वस्तु निरूपितं येन स तथा अत्र प्रथमा न लोपयेदित्य-
न्वया प्रधानशक्त्यभिधाने गुणशक्तिरनभिहितवत् प्रकाशते
इति न्यायात् अतएवाशक्तावाशक्तौ गोतमः। 'मनसा चैवं सन्ध्या-
चारमनुपालयेदापत् काले' इति तस्मात् सायंप्रातःकालाव-
च्छिन्नजीवनमात्रेऽग्निहोत्रहोमो विधीयते। योगियाज्ञ-
वल्क्योऽपि। 'सर्वावस्थोऽपि यो विप्रः सन्ध्योपासनतत्परः।
ब्राह्मण्यात्तु न हीयेत अन्यजन्मगतोऽपि वा'। सर्वावस्थोऽपि
[illegible]न्वितसेवादिकरः। सन्ध्याशौचाद्यसमर्थ इति कल्पतरुः।
[illegible] शूद्रो भवति ब्राह्मणः चौरविक्रयी इति
[illegible]:। एवञ्च सन्ध्याद्यसमर्थानामन्यादीनामपि
[illegible] सन्ध्यादावधिकारः। अतएव केनापि स्मृतिना

न तेषामनधिकार उक्तः किन्तु क्वचित् काम्ये सर्वप्रत्यवेक्षि- करणन्यायात्तेषामनधिकारः। अतएव तिथिविवेके स्वर्गकाम- श्रुतेः सामान्यप्रवृत्ताया अपि समर्थनरगोचरोपसंहारे चन्द्रादिपक्षे दर्शपौर्णमासादेर्बाध इत्युक्तमित्यनेन काम्य एव दर्शादौ विशेषोऽभिहितः। एवञ्च नित्ये वाक्यान्तरश्रुतस्य स्वर्गादेर्न भाव्यत्वम्। सर्वदा तस्येष्टत्वासम्भवात्। तथा हि अविवेकिनामेव तदिच्छा विवेकिनां पुनः स्वर्गेऽपि पातभीरु- त्वात् क्षयिष्णोर्नास्ति निष्कृतिरिति न्यायाद्धेयबुद्धिस्ततः सर्वावस्था साधारणेच्छागोचरतया उपात्तदुरितक्षय एव भाव्यः। यद्यपि 'विहितस्याननुष्ठानान्निन्दितस्य च सेवनात्। अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति'। इति याज्ञवल्क्य- वचनादकरणभाव्यनिष्टपरिहारार्थत्वं सम्भवति तथापि तत्त- द्विधिवाक्येषु भावना एव विधेयत्वात्तस्याः किन्तेन कथमित्यपे- क्षितांशत्रयवत्त्वाद्भाव्यं विना विधिरूपत्वासिद्धेस्तत्कालीना- करणप्रत्यवायपरिहारस्य तत्प्रतियोगिनः कदाचिदनुत्पत्त्या तदत्यन्ताभावरूपस्य नित्यतया भाव्यत्वायोगाद्विधिप्रत्ययेन चेष्टस्यैव भाव्यत्वप्राप्तेर्धात्वर्थादेर्भाव्यत्वायोगादश्रुतफलेषु विश्व- जिदादिषु दुरितक्षयस्य दुरितानिष्टत्वोपाधिकेच्छाविषयत्वात् तत्त्यागेन निरुपधीच्छाविषयस्वर्गस्यैव भाव्यत्वावधारणेऽपि नात्र तथेति कर्त्तॄणां कदाचिद्भगवदनुग्रहादेराप्योत्पत्तौ स्वर्गे- ऽपीच्छानिवृत्तेर्यावज्जीवानुष्ठेयकर्मसु स्वर्गस्य भाव्यत्वानुप- पत्त्या सर्वस्य सर्वदेच्छागोचर उपात्तदुरितक्षय एव भाव्यः कल्प्यते। धात्वर्थरूपाणि भावनायां केनेत्यपेक्षितकरणत्वे- नान्वीयन्ते। 'विधाने चानुवादे च यागः करणमिष्यते' इति न्यायात् करणस्य कर्त्तृव्यापारलक्षणस्येति कर्त्तव्यता- ख्योपकारकव्यापारं विनासम्भवात्। कथमित्यपेक्षितस्तुत्यादि-

समर्पिताङ्गजातान्येव भाव्यं भावयन्तीति। तत्र पूर्वजन्मार्जितानामिष्टापि जन्मनि। 'जनषोड़शवर्षेण बाल्ये यत् किल्विषं कृतम्। पश्चाद्धर्मप्रवृत्तेन तत्सर्वमुपशाम्यति' इति वचनादिप्राप्तानां दुरितानां क्षयः। तथाच तैत्तिरीयश्रुतिः। 'धर्मो विश्वस्य जगतः प्रतिष्ठा लोके धर्मिष्ठं प्रजा उपसर्पन्ति धर्मेण पापमपनुदति धर्मेण सर्वं प्रतिष्ठितं तस्माद्धर्मं परमं वदन्ति' इति। जाबालभविष्यपुराणे 'क्षयं केचिदुपात्तस्य दुरितस्य प्रचक्षते। अनुत्पत्तिं तथा चान्ये प्रत्यवायस्य मन्वते। नित्यक्रियां तथा चान्ये अनुसङ्गफलां श्रुतिम्'। नित्यक्रियां नित्या क्रिया यस्याः तां प्राप्नोति शेषः। फलमिति पाठे छान्दसत्वम्। ततश्च फलस्य कर्मनिष्पत्तेस्तेषां लोकवत् परिमाणतः फलविशेषः स्यादिति न्यायेन नित्यकर्माणि कृष्यादिषु दृष्टसाधनवत् साधनकर्मानुरूपेण किञ्चित् किञ्चित् कृत्वा दुरितानि नाशयन्ति अकरणभाविप्रत्ययानुत्पादनाय भवन्ति च। तथाच आपस्तम्बः। प्रयोजयिता चानुमन्ता कर्त्ता चेति सर्वे स्वर्गनरकफलभोक्तारो योभूयं आरभते तस्मिन् फले विशेष इति। 'एवं फलं विनाप्यनुष्ठानं नित्यानामिष्यते स्फुटम्' इति भविष्यपुराणीयम्। पापक्षयानुषङ्गिकफलातिरिक्तफलपरम्। तथाच यमः। 'सन्ध्यामुपासते ये तु सततं शंसितव्रताः। विधूतपापास्ते यान्ति ब्रह्मलोकमनामयम्'। शंसितव्रताः दृढव्रताः। एतेन सङ्गिनामानुषङ्गिकं फलं मुमुक्षूणां मोक्ष एव। अन्यथा तेषामनर्थापत्तेः। अन्येषास्त्वन्यथापि। शारीरकभाष्ये आपस्तम्बः। 'आम्रे फलार्थे निर्मिते छायागन्धः' अनुत्पद्यते। एवं धर्मं चर्य्यमाणं अर्था अनुत्पद्यन्त इति। अयसम्पादनेषु अपि यदङ्गं विस्मृतं तस्याप्यशक्यान्तर्भावात् तदभावेऽपि फलं भवत्येव किन्त्वत्र साङ्गार्थमच्युतस्मरणादिकं

विधेयम्। 'यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु। न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम्' इति स्कन्दपुराणात्। तत्त्वसागरः। 'प्रसन्नाश्वाथ दत्वाद्य सोमाद्य त्रिदशाधिप। एकादश्यां मनःक्रत्वा सर्वदुःखाद्विमुच्यते'। नारदीयम्। 'व्याजेनापि क्रता राजन् नो दर्शयति भास्करम्'। सा एकादशी। भास्करं यमम्। कात्यायनः। 'संसारसागरोत्तारमिच्छन् विष्णुपरायणः। ऐश्वर्य्यं सन्ततिं स्वर्गं मुक्तिं वा यद्‌ यदिच्छति। एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि'। यत्तु याज्ञवल्क्यटीकायाम्। 'एकादशी द्वादशी च तत्रोपोष्य क्रतोः फलम्। अहोरात्रेण चैकेन ब्रह्महत्यां व्यपोहति' इति भविष्यपुराणादिफलमर्थवादमात्रं वर्णितं तन्न। अधिकारिविशेषणापेक्षया आर्थवादिकफलस्वीकारस्य रात्रिसत्राधिकरणन्यायेन कर्त्तुमुचितत्वात् ब्रह्महत्यादिव्यपोहनस्यापि फलत्वात् ब्रह्महा द्वादशीयुक्तैकादश्यामुपवसेदिति विहितम्। हीनतमब्रह्मवधविषये स्वल्पः प्रायश्चित्तं सम्भवतीति अमीमांसकवचनं हेयमिति जीमूतवाहनः। स च न्यायश्चतुर्थाध्याये चिन्तितः यथा। प्रतितिष्ठन्ति ह वाय एता रात्रीरुपयजन्तीति श्रूयते। तत्र रात्रिशब्देन अथैष आयुरथैष ज्योतिरित्यादिवाक्यविहितास्तत्तन्नामका सोमयागविशेषा उच्यन्ते। अत्र संशयः किमत्र स्वर्ग एवाधिकारिविशेषणमुत प्रतिष्ठेति अत्रैवं काम इत्यश्रवणात् विधिशक्तिलभ्यः स्वर्ग एव विशेषणं सन्देहे हि वाक्यशेषस्वीकारो न निश्चये निश्चितश्चेह सर्व्वाभिलषितः स्वर्गो विधिसामर्थ्याविरोध्य विशेषणम्। या तु प्रतिष्ठाविषया श्रुतिः सा चापि लक्षणया स्वर्गपरैवकल्प्यते। इहैव जैमिनिसूत्रम्। 'क्रतौ फलार्थवादमङ्गवत्कार्ष्णाजिनिरिति'। यथा प्रजायायङ्गे

फलश्रुतिरर्थवादरूपा तथा श्रुतौ रात्रिसत्रादौ प्रतिष्ठादि-श्रुतिम्। फलार्थवादमाह कार्ष्णाजिनिरित्येवं प्राप्ते सिद्धान्त-सूत्रं फलमात्रेयो निर्देशादश्रुतौ ह्यनुमानं स्यादिति। प्रतिष्ठा-फलस्य निर्देशात्तदेवाधिकारिविशेषणम्। यत्तु विधिशक्त्या स्वर्गं इति तत्र मुख्यार्थस्तुतिवादोक्तफलात् विधिशक्तौ पर्य्यवसि-तायामानुमानिकस्वर्गफलकल्पनानवकाशात्। सर्वथा फला-श्रुतेरेव स्वर्गानुमानम्। तस्मादाक्यशेषस्थमेव फलमिति आत्रेयो मुनिराह। ततश्च प्रतिष्ठाकामो वायुना यजेत प्रतिष्ठाकामो ज्योतिषा यजेत इत्यादिविषयः कल्पतरौ महा-भारते 'सायमाद्यन्तयोरह्नोः सायंप्रातश्च मध्यमे। उपवास-फलं प्रेप्सोर्वर्ज्यं भक्तचतुष्टयम्' इत्यत्र सायमित्यविवक्षितम्। विद्धभक्षत्ववत् भक्तचतुष्टयवर्जनस्यैव विवक्षितत्वात्। अतएव वाराहे सायमिति नोक्तं यथा। 'अह्नोराद्यन्तयोर्भक्तमेकैकं मध्यतो द्वयम्। चतुर्भक्तनिषेधोऽयमुपवासविधिः स्मृतः' इत्यात्मनिर्णयधृते स्मृतिः। 'नाद्याद्भक्तद्वयं नित्ये काम्ये भक्तचतुष्टयम्'। भक्तद्वयवर्जनमशक्तस्य। शक्तस्य तु नित्येऽपि भक्तचतुष्टयवर्जनम्। 'शक्तिमांस्तु प्रकुर्वीत नियमं सविशे-षणम्' इत्युक्तौ नित्यकाम्यत्वेन विशेषाभावात्। पूर्णैकादशी-व्यवस्थायाम्। 'पूर्णामुपवसेत् कामी निष्कामस्तूत्तरां सदा' इत्यादिपुराणवचनेन विधानभेदात् कालभेदाच्च। नित्यत्व-काम्यत्वप्रतिपादक तत्तद्वचनैरेकादश्युपवासस्य नित्यत्वं काम्यत्वञ्च तत्र कालाभेदस्थले काम्यकरणे नित्यसिद्धिरित्यु-क्तम्। ननु काम्यत्वमनित्यत्वम् असति कामे परित्यक्तुं शक्य-त्वात् तथा सत्येकस्य कर्मणो नित्यत्वकाम्यत्वाभ्यां द्वैरूप्याङ्गी-कारे नित्यानित्यसंयोगविरोधः नैवं संयोगपृथक्त्वन्यायात् स च न्यायः खादिरे पशुं बध्नाति खादिरं वीर्य्यकामस्य

यूर्यं कुर्वीतेति श्रूयते। अत्र संशयः किं काम्यस्येव खादिरता नित्येऽपि स्यात्। उत नेति। तत्र फलार्थत्वेनानित्यतया नित्यप्रयोगाङ्गता न युक्ता। यत्तु नित्येऽपि खादिरत्वश्रवणं तत् काम्यस्येव पशुबन्धनाश्रयज्ञानार्थम् अतो न नित्ये खादिरतेति प्राप्तेरावाम्नाय चतुर्थाध्यायसूत्रम् एकस्य तु उभयत्वे संयोगपृथक्त्वमिति। अत्र संयोगः सम्बन्धमात्रम् एकस्य खादिरस्य क्रत्वर्थत्वपुरुषार्थत्वरूपोभयात्मकत्ववाक्य-द्वयेन क्रतुशेषत्वफलशेषत्वलक्षणसंयोगभेदावगमात् नित्या-नित्यसंयोगविरोधः। न च आश्रयज्ञानार्थं नित्यवाक्यं सन्नि-धानादेवाश्रयलाभात् अत उभयार्था खादिरतेति। एवं दध्ना जुहोति दध्नेन्द्रियकामस्य इत्यादावुभयार्थतैव दधित्वस्य द्वेधा श्रवणात्। ननु विषमो दृष्टान्तः नित्यः खादिरः क्रत्वर्थः उपवासस्तु नित्योऽपि पुरुषार्थः। न हि स क्रत्वर्थः क्रत्वङ्गत्वे प्रमाणाभावात् सत्यम्। प्रमाणद्वयस्य द्वैरूप्यप्रयोजकस्य केवलपुरुषार्थोपवासेऽपि सत्त्वादवैषम्यम्। यदि च तुल्या-रोहसदृशो दृष्टान्तोऽपेक्षितस्तदा अग्निहोत्रादिदृष्टान्तः। न हि स क्रत्वर्थः किन्तु स्वयमेव क्रतुः पुरुषार्थोऽपि। तथाच यावज्जीवमग्निहोत्रं जुहोति इति नित्यत्वबोधकम् अग्निहोत्रं जुहुयात् स्वर्गकाम इति काम्यत्वबोधकं यस्य पर्णमयी जुहू-रित्यत्र नोभयार्थत्वं द्वेधाश्रवणाभावात्। अतएव नारायणो-पाध्यायेन दधिखादिरन्यायेन शिखाबन्धोपवीतधारणयोरुभ-यार्थत्वमुक्तम्। कल्पतरुकृतापि ब्रह्मचारिकाण्डे पञ्चमादिषु येषु वर्षेषु नित्योपबन्धः काम्योपबन्धनञ्च श्रूयते ते संयोग-पृथक्त्वन्यायेन नित्याः काम्याश्च। यथा पैठीनसिः। गर्भ-पञ्चमेऽब्दे ब्राह्मणमुपनयेत्'। उपनीय इत्यनुवृत्तौ आप-स्तम्बोऽपि। 'अथ काम्यानि सप्तमे ब्रह्मवर्चसकामम् अष्टमे

आयुष्कामं दशमे अर्थाढ्यकामम् एकादशे इन्द्रियकामं द्वादशे पशुकामम्' इति मनुः। 'ब्रह्मवर्चसकामस्य कार्य्यं विप्रस्य पञ्चमे' इति ब्रह्मवर्चसं वेदाध्ययन तदर्थज्ञानप्रकर्षकृतं तेजः। येषां तु राज्ञो धर्मार्थिनः षष्ठे इत्यादीनां कामनोपनिबन्धेनैव स्मरणं तेषां काम्यत्वं किन्तु स्वरूपसिद्धेस्तस्मादेवोपनयनरूपः संस्कारो नित्यः सिद्धः। गोदोहेन प्रणयनसिद्धेर्यथा न क्रतूपकारार्थं चमसेन पुनः प्रणयनं नापि त्रिवर्षस्योपनयनमाशङ्कनीयं पञ्चमादौ तु विशेषोल्लेखेनानुष्ठानाक्षेपस्य सत्त्वात् शरावादिना यथा न प्रणयनमित्युक्तम् अथैवमाभ्युदयिकं श्राद्धं नित्यं काम्यञ्च। यथा देवीपुराणम्। 'अष्टकामाघ्वभ्युदयातीर्थयात्रोपपत्तयः। पितॄणामतिरेकोऽयं मासिकान्नाध्रुवः स्मृतः'। मासिकान्नादमावास्याश्राद्धात् अयमतिरेकोऽष्टकादिश्राद्धकालो ध्रुव आवश्यकः। विष्णुः। 'आदित्यसंक्रमणं विषुवद्दयं विशेषेनायनं द्वयं व्यतीपातो जन्मर्क्षमभ्युदयश्च।' एतांस्तु श्राद्धकालान् वै नित्यानाह प्रजापतिः। श्राद्धमेतेषु दत्तं तदानन्त्याय कल्पते'। अभ्युदयो विवाहादिः। तत्र विवाहान्तसंस्काराङ्गनान्दीमुखश्राद्धे पितुरधिकारमाह छन्दोगपरिशिष्टम्। 'स्वपितृभ्यः पिता दद्यात् सुतसंस्कारकर्मसु। पिण्डानोद्वहनात्तेषां तदभावेऽपि तत्क्रमात्'। सुतसंस्कारकर्मसु सुतसंस्कारजनककर्मसु संस्कारकरणात् पुत्रस्य विवाहान्तरे पित्रा नाभ्युदयिकं कार्य्यम्। प्रथमेन संस्कारसिद्धौ द्वितीयादेस्तदजनकत्वात्। तथाच आश्वलायनगृह्यपरिशिष्टं सीमन्तोन्नयनं प्रथमे गर्भे। सीमन्तोन्नयनसंस्कार इति श्रुतिः। गर्भपात्रयोरयं गार्भपात्रः तस्य उदरस्थस्य पात्रस्य तदाधारस्य स्त्रियाः इति तत्त्वम्। हारीतोऽपि। 'सकृत्तु कृतसंस्काराः सीम-

त्तेन, द्विजस्त्रियः। यं यं गर्भं प्रसूयन्ते स गर्भः संस्कृतो भवेत्। अत्र सकृत् संस्कृतपात्रजातानां सर्वेषां संस्काराभिधानेन प्रत्येककृतजातकर्मादिसंस्काराणां सुतरां सकृत्त्वं सकृत् कृते कृतः शास्त्रार्थ इति न्यायाच्च। पित्र्यानिति श्राद्धपरं कन्यापुत्रविवाहेषु इति श्राद्धविधायकविष्णुपुराणैकवाक्यत्वात्। तदेकवाक्यतया च सुतपदं कन्यापुत्रपरम्। उद्वहनादित्यत्र अभिविधावाङ्। तदभावेऽपि संस्कार्य्यक्रमबाधकस्य पितुरभावेऽपि पुनरन्यः संस्कार्य्यः सपिण्डादिर्वा तत्क्रमात्। 'चित्रकर्म यथानेकैरङ्गैरुन्मील्यते शनैः। ब्राह्मण्यमपि तद्वत् स्यात् संस्कारैर्विधिपूर्वकैः'। इत्याङ्गिरसोक्तफलभागितया प्रधानस्य संस्कार्य्यस्य क्रमात्तेषां पितॄणां दद्यात्। ततश्च संस्कार्य्य पित्रादित्रयमातामहादित्रयेभ्यः श्राद्धं कुर्य्यात्। न तु संस्कार्य्यपितरमादाय तेषां पितुः सम्प्रदानभूतानां पित्रनुप्रवेशात् वृद्धप्रपितामहेतरपञ्चानामिति नारायणोपाध्यायमतं युक्तमिति वाच्यम्। पित्रनुप्रवेशेन संस्कार्य्यस्य पितृपितामहप्रपितामहानां श्राद्धे तन्मातामहपक्षस्यैव 'पितरो यत्र पूज्यन्ते तत्र मातामहा ध्रुवम्' इत्यनेन युक्तत्वात्। न वा तेषां संस्कर्त्तृपितॄणां संस्कार्य्यपितुः पितृमण्मातामहगणानां वा ग्रहणं तत्क्रमादित्यनुपपत्तेः। आद्ये संस्कर्त्तुरनुपात्तत्वात् तच्छब्देनानुपस्थितेः द्वितीये तेषामित्यनेनैव तेषां प्राप्तिस्तत् क्रमादित्यनुवादकतापत्तेः। एवञ्च अभ्युदयमात्रस्य नित्यत्वात् द्वितीयविवाहेऽपि इतराङ्गवत् वोढुराभ्युदयिकश्राद्धमावश्यकम्। सर्वाण्येवान्वाहार्य्यवन्ती त्यत्र मत्वर्थोद्देशाविशेषादङ्गत्वप्राप्तेः। न च 'असकृत् यानि कर्माणि क्रियेरन् कर्मकारिणा। प्रतिप्रयोगं नैव स्युर्मातरः श्राद्धमेव च' इति छन्दोगपरिशिष्टाच्च तत्र वृद्धिश्राद्धमिति

पाचम्। तस्यासन्नत्वेन येषां नियतकरणमुक्तम् तत्परत्वाबत्व- नियतपुनःकरणकर्मपरम्। अतएव यानि कर्माणि पुनः पुनः प्रतिदिनं प्रतिमासं प्रतिवत्सरं क्रियन्ते वैश्वदेवबलिकर्म- दर्शपौर्णमासश्रावण्याग्रहायण्यादीनि तेषु प्रथमप्रयोग एव श्राद्धं मातृपूजा चेति परिशिष्टप्रकाशप्रभृतिभिर्नियत पुनः पुनः कर्मस्येव विषयो दर्शितः। विष्णुपुराणेऽपि। 'नाम- कर्मणि बालानां चूड़ाकर्मादिके तथा। इत्यत्र बालानामिति बहुत्वेन निर्दिष्टम्। अतएव ब्रह्मपुराणम्। विवाहस्य प्रत्वे श्राद्धं हेतुरित्याह। यथा 'नान्दीमुखेभ्यः श्राद्धन्तु पितृभ्यः कार्य्यमहृये। ततो विवाहः कर्त्तव्यः शुद्धः शुभफल- दः'। अतएव मुखदर्शनावृत्तौ श्राद्धावृत्तिप्रसङ्गः स्यात् विवाहवदिति श्राद्धविवेकः। एतेन पुत्रविवाहादौ वृद्धि- श्राद्धं नैमित्तिकमित्युक्तमिति निरस्तम्। 'सपितुः पितृ- कृत्येषु अधिकारो न विद्यते' इति छन्दोगपरिशिष्टेन जीवत्- पितृकस्यावश्यकश्राद्धनिषेधेऽपि अङ्गत्वादेव च निषेकादौ जीवत्पितृकेणापि जीवत्समतिदद्यादित्यनेन पितामहा- दीनां वृद्धिश्राद्धमावश्यकं क्रियते। जीवत्पितृकादिना क्रिय- माणे श्राद्धे पित्रादिस्थाने पितामहाद्यूहमाह विष्णुधर्मो- त्तरम्। 'येषां श्राद्धं पिता दद्यात् तेषामेव स कारयेत्। ...ोद्देशेन कर्त्तव्यं तेन श्राद्धं नराधिप'। स जीवत्- पितृकः प्रतिनिधिना तु अमुकस्य पितुरित्यभिलापे योज्यं ...न्ये तु न तथेति वक्ष्यते। एवञ्च वृद्धिश्राद्धं यदर्थं कृतं तत् ...र्म चेत् तद्दिने विघ्नाच्च क्रियते तदा दिनान्तरे तत् कर्मणि ...वृद्धिश्राद्धं कारणीयं 'प्रधानस्याक्रिया यत्र साङ्गं तत् क्रियते पुनः। तदङ्गस्याक्रियायान्तु नावृत्तिर्न च तत् क्रिया' ...ति छन्दोगपरिशिष्टेन साङ्गकरणाभिधानात्। नान्दीमुखे

छन्दोगैर्योषितां श्राद्धं न कर्त्तव्यम्। 'न योषिद्भ्यः पृथक् दद्यात् अवसानदिनादृते। स्वभर्तृपिण्डमात्राभ्यस्तृप्तिरासां यतः स्मृता' इति छन्दोगपरिशिष्टनिषेधात्। न च अत्र योषिद्भ्योऽपृथग्दद्यादिति वाच्यम्। तथात्वे अवसानदिनादृते इति व्यर्थं स्यात्। तथाहि परिप्राप्ते योषितां श्राद्धेऽपृथक्त्वं विधीयते किंवाऽपृथक्त्वविशिष्टं श्राद्धं विधीयते। नाद्यः अमावास्यादौ योषिद्दानाप्राप्तौ कथं तदनूद्यापृथक्त्वमात्रविधानम्। नान्त्यः तथापि अवसानदिनादृते इत्यस्य वैयर्थ्यापत्तेः। अवसानदिने तु 'स्त्रीणामप्येवमेवैतदेकोद्दिष्टमुदाहृतम्। मृताहनि यथान्यायं नृणां यद्यदिहोदितम्' इति मार्कण्डेयपुराणीयेन पृथक्श्राद्धप्राप्त्या विशिष्टविधित्वानुपपत्तेः तस्मादवसानदिनादृते इति वाक्यस्य सार्थकत्वाय पृथक्पदमेवानुवादः। न च वैपरीत्यं तथात्वे वाक्यानुवादः स्यात्। अव्ययपदानुवादे तु विभक्तेर्नानुवादकतेति। एवमेवेशानाचार्य्याः। 'यस्मात्मातृश्राद्धन्तु पूर्वं स्यात् पितृणां तदनन्तरम्। ततो मातामहादीनां वृद्धौ श्राद्धत्रयं स्मृतम्' इति शातातपवचनात्। 'अन्वष्टकास्वष्टकावदग्नौ हुत्वा देवपूर्वं मात्रे पितामह्यै पूर्ववत् ब्राह्मणान् भोजयित्वा' इति विष्णुसूत्रात् 'मृताहनि तु कर्त्तव्या स्त्रीणामप्युत्तरा क्रिया'। इति विष्णुपुराणात्। वृद्ध्यन्वष्टकावसानदिननिमित्तकश्राद्धेषु छन्दोगोऽवसानदिनव्यतिरेकेण योषिदितरेभ्यो दद्यात् ततश्च योषिदितरेभ्य इति विशेषणसार्थकत्वाय तासां दानाभावे तत्र तद्योषितं कथं तृप्तिरित्यपेक्षायामाह स्वभर्त्रिति। ननु अमावास्यादिसामान्यनिमित्तकश्राद्धे कथं तासां तृप्तिरिति चेत् 'सपिण्डीकरणादूर्द्ध्वं यत् पितृभ्यः प्रदीयते। सर्वेष्वंशहरा माता इति धर्मेषु निश्चयः' इति शातातपवचनात्।

[illegible] छन्दोगेतरो योषिन्नरः पृथक् श्राद्धं दद्यादिति वाच्यं
विधेयप्रागर्थापोषकत्वेन स्वभर्तृपिण्डमात्राभ्यो यतस्तृप्ति-
रित्यस्यान्वयानुपपत्तेः किन्तु न योषिन्नर इत्यस्य योषिदितरेभ्य
इत्यर्थे वृद्धप्रादौ योषित्संप्रदानकविधीनां छन्दोगेतरपरत्वं
प्रतीयते यजमानावेक्षितं हविर्जुहोतीत्यनुरोधेन स्वर्गकाम-
पदस्याश्वेतरपरत्ववत् । अथवा न योषिन्नर इत्यस्य छन्दोगे-
तरो वृद्धप्रादौ योषिन्नरः पृथक् श्राद्धं दद्यादित्येवार्थः । ततश्च
वृद्धप्रादौ छन्दोगयोषितां कथं तृप्तिरित्याकाङ्क्षामुत्थाप्य
परार्थान्वय इति अन्वष्टकायान्तु साग्नीनामेवाधिकारः ।
[illegible]वचने होमत्वादेवाग्निप्राप्तेरग्निग्रहणं तन्नियमार्थम् ।
[illegible] चानग्नीनामग्नौकरणहोमे विप्रपाण्यादेर्विधानादत्रापि
[illegible]थेति वाच्यं प्रकृतीभूत श्राद्धविध्युक्ताधारस्य विकृतीभूत-
[illegible]विहिताधारेण बाधात् । शरमयबर्हिषा कुशमयबर्हि-
[illegible]धवत् । न वा लौकिकाग्नौ होमः । 'न पैत्रयज्ञियो होमो
[illegible]किकाग्नौ विधीयते' । इति मनुना निषेधात् वाचस्पति-
[illegible]श्रोऽप्येवम् ।

अथैकादश्युपवासाधिकारिणः । 'यावन्नोपवसेज्जन्तुः पद्म-
[illegible]दिनं शुभम्' इत्यत्र जन्तुपदश्रवणात् 'अष्टाब्दादधिको
[illegible]र्त्यो ह्यपूर्णाशीतिवत्सरः । भुङ्क्ते यो मानवो मोहादेकादश्यां
[illegible]पापकृत्' इति कालमाधवीयधृतनारदवचने मर्त्यमानव-
[illegible]योः श्रवणात् मनुष्यमात्रस्याधिकारो न जात्याश्रमविचारः ।
[illegible] 'नित्योपवासी यो मर्त्यः सायं प्रातर्भुजिक्रियाम् ।
[illegible]जेन्मतिमान् विप्रः संप्राप्ते हरिवासरे' इति कात्यायन-
[illegible]ने मर्त्य इत्यभिधानानन्तरं यद्विप्रपदं तत्तस्याधिक-
[illegible]र्थम् । अन्यथा मर्त्यपदवैयर्थ्यापत्तेः । न च 'अनड्वान्
[illegible]चारी च आहिताग्निस्तथैव च । अश्नन्त एव सिध्यन्ति

मैथां सिषिरनम्रताम्'। इति स्मरणात् साग्निब्रह्मचारिणो-रनानधिकार इति वाच्यं हेमाद्रिधृताग्निपुराणवचनेन तयो-रप्यधिकारावगमात् यथा 'गृहस्थो ब्रह्मचारी च आहिताग्नि-स्तथैव च। एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि'॥ सभर्तृकायास्तु व्रतोपवासादिः पृथङ्निषिद्धो मनुना यथा 'नास्ति स्त्रीणां पृथक्यज्ञो न व्रतं नाप्युपोषणम्। पतिं शुश्रूयते यत्तु तेन स्वर्गे महीयते। विष्णुनापि 'भर्त्तुः समान-व्रतचारित्वमुक्तं समानव्रतचारित्वं भर्तृव्रताचरणे तदानु-कूल्यकारित्वम्। यत्र तु सावित्रीव्रतादौ विशेषविधिस्तत्र भर्त्रनुज्ञया पृथगपि। यथा शङ्खः। 'कामं भर्त्रनुज्ञया व्रतोपवासनियमेज्यादीनामभ्यासः'। स्त्रीधर्म इति। यत्तु 'पत्यौ जीवति या नारी उपोष्य व्रतमाचरेत्। आयुः संहरते पत्युः सा नारी नरकं व्रजेत्' इति विष्णूक्तं तदननुज्ञातविष-यम्। कात्यायनः 'विधवा या भवेन्नारी भुञ्जीतैकादशी-दिने। तस्यास्तु सुकृतं नश्येत् भ्रूणहत्या दिने दिने'। जीमूतवाहनः। 'एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि। वनस्थयतिधर्मोऽयं शुक्लामेव सदा गृही' इति गोभिलवचनात् गृहिणः शुक्लैकादश्यामेवाधिकारः। न च गृहीतरपरत्वे कृष्णैकादश्याः कथं 'दशम्यां नियताहारो मांसमैथुनवर्जितः। एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि' इति विष्णुधर्मोत्तर-वचने उभयपक्षीयदशम्यां मांसमैथुनवर्जनमिति वाच्यं वान-प्रस्थस्यापि ऋतौ मैथुनसम्भवात् अत एव पुराणे ऋषिकुमाराः श्रूयन्ते 'पुत्रेषु भार्यां निक्षिप्य वनं गच्छेत् सहैव वा'। इति मनुवचनाच्च। तस्य मांसभोजनमप्याह कात्यायनः। 'अथ वानप्रस्थद्वैविध्यं पचमानका अपचमानकाश्च इत्युपक्रम्य ग्रामाद्दूरे स्थिती वसितग्राममासं व्याघ्रहतमांसेन वृतमित्येव-

मादिभिरन्यैर्वा हृतमानीय अपयित्वा सायंप्रातरग्निहोत्रं हुत्वा अयत्यतिथिव्रतिभ्यश्च दत्त्वा अथेतरवच्छेषभक्ष इति। मधुमांसवर्जनन्तु वनस्थानाममांसवृत्तीनामित्यादि। तस्मात् कथं दशम्यां नियताहार इत्यादिवचनादपुत्त्रस्य गृहिणोऽप्युभयैकादश्युपवासव्रतमिति। तथा 'इन्दुक्षयेऽर्कसंक्राम्त्यामेकादश्यां सितेतरे। उपवासं न कुर्वीत पुत्त्रबन्धुधनक्षयात्' इति वायुपुराणवचने बन्धुपदश्रवणाच्च। न हि बन्धुशून्यः कश्चिद्गृही पितृभ्रात्रादिषु बन्धुपददर्शनात्। बन्धुपदस्थाने दारेति क्वचित् पाठः। तत्रापि तथैवेति। यत्तु न कुर्य्यात् पुत्त्रवान् गृहीत्यत्र पुत्त्रवानिति पदं तत्पुत्त्रवतामपि वानप्रस्थादीनामपि निषेधार्थमित्याह। हेमाद्रिरपि 'शुक्लामेव सदा गृही' इति वचनपर्य्यालोचनया सकलकृष्णैकादशीषु उपवासाभावप्राप्तौ 'शयनीबोधनीमध्ये या कृष्णैकादशी भवेत् सैवोपोष्या गृहस्थेन नान्या कृष्णा कदाचन' इति ब्रह्मवैवर्त्तवचने शयनबोधनमध्यवर्त्तिकृष्णैकादशीषु उपवासविधानात् तासु एव गृहिणोऽधिकारः नान्यत्र प्राप्त्यभावात् सामान्यविशेषयोर्विकल्पासम्भवात् पर्य्युदास एव तेन शयनबोधनमध्यवर्त्तिकृष्णैकादशीष्वपि गृहस्थस्याधिकारमित्याह। अत्रोच्यते। 'गृहस्थो ब्रह्मचारी च आहिताग्निस्तथैव च। एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि' इति हलायुधहेमाद्रिधृताग्निपुराणवचने गृहस्थमात्रस्य कृष्णैकादश्युपवासप्राप्तौ शुक्लामेव सदा गृहीति पुत्त्रवद्गृहिविषयम्। तस्यैव कृष्णायां निषेध श्रुतेः। तथाच उपवासमधिकृत्य ब्रह्मपुराणम्। 'एकादशीषु कृष्णासु रविसंक्रमणे यथा। चन्द्रसूर्य्योपरागे च न कुर्य्यात् पुत्त्रवान् गृही' इति। न च बन्धुमत्त्ववत् पुत्त्रवत्त्वमपि अप्रयोजकम्। बन्धुपदं दोषकथनानु-

वाहंमात्रं न तु कर्त्तृविशेषणार्थं न कुर्य्यात् पुत्त्रवान् गृहीति निषिद्वाक्ये पुत्त्रवानिति तु कर्त्तृविशेषणमिति विशेषः। अतएव मीमांसायाम्। आम्नायस्य क्रियार्थत्वादानर्थक्य-मतदर्थानामिति सूत्रेण आम्नायस्य वेदस्य क्रियार्थत्वात् कार्य्यार्थत्वात् अतदर्थानां कार्य्याप्रतिपादकानामानर्थक्यम-प्रामाण्यमिति पूर्व्वपक्षयित्वा सिद्धान्तसूत्राभ्यां विधिना तु एकवाक्यत्वात् स्तुत्यर्थत्वेन विधीनां स्युरिति तद्भूतार्थानाञ्च क्रियार्थत्वेन समाम्नायादित्येताभ्यां क्वचिद्विधिर्शक्तिरेवावसी-दन्ती स्तुत्यादिभिरुत्तभ्यते इति न्यायात्। क्वचिद्भूतार्थानां सिद्धार्थानां क्रियार्थत्वेन सहैकवाक्यत्वाच्च प्रामाण्यमप्युक्तम्। न कुर्य्यात् पुत्त्रवान् गृहीति निषेधविधौ पुत्त्रवत्त्वेनैवाधि-कारित्वम्। अत्रैव पुत्त्रवत्त्वुधनत्वयानुवादः अतः पुत्त्रवत एव गृहस्थस्य कृष्णायामनधिकारः। अत्रैव शयनबोधनमध्ये प्रतिप्रसवः। जीमूतवाहनस्य। 'यदीच्छेद्विष्णुना वासं पुत्त्र-सम्पदमात्मनः। एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि'। इति गृहिणो न निषिद्धं काम्यत्वात्। अत्र पुत्त्रार्थिनः सकृद्विधानम्। विष्णुसहवासार्थिनस्तु यावज्जीवाचरणम्। काम्ये रत्यादिदोषो नास्ति नित्ये स इत्याह। हेमाद्रिरपि। केचित्तु। वैष्णवस्य गृहिणः पुत्त्रिणो रुक्माङ्गदादेः कृष्णैका-दश्युपवासश्रवणात् सर्व्वेषामुभयैकादश्यां नित्यव्रतोपवासे-ऽधिकारः। कृष्णानिषेधस्तु गृहिविषयः काम्य एवेत्याहुः। तत्र 'पुत्त्रवांश्चैव भार्य्यावान् धर्म्मयुक्तस्तथैव च। उभयोः पक्षयोः काम्यं कुर्य्याच्च वैष्णवं व्रतम्' इति वचनेन काम्य एवाधिकारो न नित्ये इत्याह। वस्तुतस्तु वैष्णवानां सपुत्त्राणां गृहस्थानामपि सर्व्वाः कृष्णाः नित्या हलायुधहेमाद्रिधृततत्त्व-सागरवचनात्। तद्यथा। 'यथा शुक्ला तथा कृष्णा यथा

कृष्णा तथेतरा। तुल्ये ते मन्यते यस्तु स वैष्णव उच्यते’ काल-माधवीये नारदः। ‘नित्यं भक्तिसमायुक्तैर्नरैर्विष्णुपरायणैः। पक्षे पक्षे च कर्त्तव्यमेकादश्यामुपोषणम्’। अत्र विष्णुपरा-यणानां पक्षे पक्षे चेति वीप्सया यावत् पक्षैकादश्युपवासस्य नित्यताप्रतीतेः। श्रीपतिव्यवहारनिर्णये। ‘शुक्ले वा यदि वा कृष्णे विष्णुपूजनतत्परः। एकादश्यां न भुञ्जीत पक्षयो-रुभयोरपि’ इति वचनाच्च। नित्यं भक्तिसमायुक्तैरित्यन्तरम्। ‘सपुत्रश्च सभार्य्यश्च सजनैर्भक्तिसंयुतैः। एकादश्यामुपवसेत् पक्षयोरुभयोरपि। ब्रह्महा च सुरापश्च कृतघ्नो गुरुतल्पगः। विवेचयति यो मोहादेकादश्यौ सितेतरे। गृहस्थो ब्रह्मचारी च आहिताग्निर्यतिस्तथा। एकादश्यां न भुञ्जीत पक्षयो-रुभयोरपि’। इत्येतैर्हलायुधेन तथा व्यवस्थापितत्वात्। वैष्णवानां तथा व्यवहाराच्च। मुमुक्षुत्वेन सुतरामेव। तथा भविष्ये ‘शुक्लागृहस्थैः कर्त्तव्या भोगसन्तानवर्द्धिनी। मुमु-क्षुभिस्तथा कृष्णा तेन तेनोपदर्शिता’। वाराहेऽपि। यथा शुक्ला तथा कृष्णा उपोष्या च प्रयत्नतः। शुक्ला भक्तिप्रदा नित्यं कृष्णा मुक्तिं प्रयच्छति’। द्विजन्मनो विशेषतोऽपि गोविन्दमानसोल्लासकृत्यमहार्णवयोर्भविष्यपुराणम्। ‘उभयोः पक्षयो राजन्नेकादश्यां द्विजन्मवान्। योभुङ्क्ते नीरुजः सोऽपि प्रेत्य चाण्डालतां व्रजेत्’। एतद्वचनं भविष्यपुराणीय-मिति कृत्यकल्पलता। सोऽपीत्यत्र सोऽयेति विशेषः। अथ कश्चित्। ‘आदित्येऽहनि संक्रान्त्यामसितैकादशीदिने। व्यती-पाते कृते श्राद्धे पुत्री नोपवसेद्गृही’ इति ब्रह्मपुराणवचना-देकादश्यां रविवारादावुपवासनिषेधमाह। ‘उपवासनिषेधे तु किञ्चिद्भक्ष्यं प्रकल्पयेत्। उपवासो न दुष्येत उपवासफलं लभेत्’ इति वराहपुराणादनोदनादिकमप्याह। तत्र विष्णु-

धर्मोत्तरे। 'एकादश्यां यदा राम आदित्यस्य दिनं भवेत्। उपोष्या सा महापुण्या पुत्रपौत्रविवर्द्धिनी। भृगुभानुदिनोपेता सूर्य्यसंक्रान्तिसंयुता। एकादशी सदोपोष्या पुत्रपौत्रविवर्द्धिनी'। इत्यादिवचनेषु एकादश्यां रविवारादौ प्रत्युत आनुषङ्गिकफलश्रुतेः। न च नित्ये निषेधः काम्ये फलमिति जीमूतवाहनोक्तं युक्तम् इति वाच्यं सदा पदश्रुतेः। कामित्वाकामित्वरूपविशेषाभावात् किन्तु संक्रान्त्यादिषु उपवासनिषेधस्तु तत्तन्निमित्तोपवासपरः। 'तन्निमित्तोपवासस्य निषेधोऽयमुदाहृतः। नानुसङ्गकृतो ग्राह्यो यतो नित्यमुपोषणम्' इति जैमिनिस्मृतेः। संक्रान्त्यादिनिमित्तकोपवासः संवर्त्तोक्तः। 'अमावास्या द्वादशी च संक्रान्तिश्च विशेषतः। एताः प्रशस्तास्तिथयो भानुवारस्तथैव च। अत्र स्नानं जपो होमो देवतानाञ्च पूजनम्। उपवासस्तथादानमेकैकं पावनं स्मृतम्'। तथा 'उपवासञ्च ये कुर्य्युरादित्यस्य दिने तथा। जपन्ति च महाश्वेतां ते लभन्ते यथेप्सितम्'। महाश्वेतामन्त्रस्त्वागमे। 'कामित्युक्ता ततो ह्रीन्तु सकारश्च विसर्गवान्। महाश्वेताख्यमन्त्रोऽयं भानोरष्टाक्षर ईरितः'। संवत्सरप्रदीपे। 'सप्तवारानुपोष्यैव सप्तधा संयतेन्द्रियः। सप्तजन्मकृतं पापं तत्क्षणादेव नश्यति'। कृते श्राद्धे इति काम्ये। नित्ये तु वराहपुराणविष्णुधर्मोत्तरकात्यायनाः। 'उपवासो यदा नित्यः श्राद्धं नैमित्तिकं भवेत्। उपवासं तदा कुर्य्यादाघ्राय पितृसेवितम्'। यत्तु 'रविवारेऽर्कसंक्रान्त्यामेकादश्यां सितेतरे। पारणञ्चोपवासञ्च न कुर्य्यात् पुत्रवान् गृही' इति पारणनिषेधो रविवारसंक्रान्तिप्राप्तोपवासनिषेधवत् रविवारसंक्रान्तिमात्रप्राप्तपारणपरः। तयोरेव पारणन्तु प्रागुक्तशनिवारोपवासानन्तरं रविवारे। 'नित्यं हयोरयनयो·

निम्न' विषुवतोर्द्वयोः। चन्द्रार्कयोर्ग्रहणयोर्व्यतीपातेषु पर्वसु। अहोरात्रोषितः स्नानं दानं होमं तथा जपम्। यः करोति प्रसन्नात्मा तस्मादप्यक्षयश्च तत्'। इति ब्रह्मपुराणोक्तपूर्वदिनोपवासानन्तरं संक्रान्त्यां प्राप्तमिति।

अथ पूर्णतिथिलक्षणम्। स्कन्दपुराणे। 'प्रतिपत्प्रभृतयः सर्वा उदयादोदयाद्रवेः। संपूर्णा इति विख्याता हरिवासरवर्जिताः'। हरिवासर एकादशी। अतएव सौरधर्मे। 'आदित्योदयवेलायाः प्राङ्मुहूर्त्तद्वयान्विता। सैकादशीति संपूर्णा विद्धाख्या परिकीर्त्तिता'। अत्र तिथेरुदयानन्तरावस्थितावपि यदुदयात् प्राक् संपूर्णत्वकीर्त्तनं तदुदयानन्तरं तत्तिथेः सत्त्वेऽपि अशुद्धत्वेन कर्मानर्हत्वादसत्त्वख्यापनाय। तथाच कालमाधवीये नारदीयम् 'आदित्योदयवेलाया आरभ्य षष्टिनाड़िका। तिथिस्तु सा हि शुद्धा स्यात् सार्वतिथ्यो ह्ययं विधिः'। सूर्यसिद्धान्तेऽपि। 'सर्वा ह्येतस्य तिथय उदयादोदयस्थिता। शुद्धा इति विनिर्ज्ञेयाः षष्टिर्नाड्यो हि वै तिथिः'। एतस्य रवेः। कालविवेके। षष्टिदण्डात्मिकायाश्च तिथेर्निष्क्रमणे परे। अकर्मण्यं तिथिमलं विद्यादेकादशीं विना'।

अथ पूर्णैकादश्युपवासः। प्रचेताः। 'पूर्णाप्येकादशी त्याज्या वर्द्धते द्वितयं यदि। द्वादश्यां पारणालाभे पूर्णैव परिगृह्यते'। द्वितयमेकादशीद्वादश्यौ। भृगुः। 'संपूर्णैकादशी यत्र प्रभाते पुनरेव सा। अत्रोपोष्या द्वितीया तु परतो द्वादशी यदि'। विष्णुधर्मोत्तरे वृद्धवशिष्ठसंहितायाञ्च। 'संपूर्णैकादशी यत्र प्रभाते पुनरेव सा। लुप्यते द्वादशी तस्मिन् उपवासः कथं भवेत्। उपोष्ये द्वे तिथी तत्र विष्णुप्रीणनतत्परैः'। एवमेव गारुड़े। मत्स्यार्द्धेमेवम्। 'त्रयोदशी

उषःकाले उपोष्या तत्र का भवेत्' इति। अत्र द्वैतनिर्णयः।
एकादश्यां द्वादश्यामुभयत्र सर्वेषामुपवासविधानं तत्पक्षद्वय-
स्याजड़विषयम्। एकेनैवोपवासेन फलसिद्धावपर्य्यवसाया-
दिति। तत्र एकेनैवोपवासेनेत्यादिप्रोक्तहेतोरेकैकपुरुषस्य
उभयत्राकाङ्क्षाविरहादयुक्तो विकल्पः तथाच भविष्ये। 'स्मृति-
शास्त्रे विकल्पस्तु साकाङ्क्षापूरणे सति'। एतेन साकाङ्क्षत्व
एव स्मृतीनां परस्परान्वयः सूचितः तत्र नेच्छाविकल्पोऽष्ट-
दोषप्रसङ्गात् तथाच प्रमाणत्वाप्रमाणत्वपरित्यागप्रकल्पनात्।
तदुज्जीवनहानां प्रत्येकमष्टदोषता व्रीहिभिर्यजेत यवैर्यजेत
इति श्रूयते। तत्र व्रीहिप्रयोगे प्रतीतयवप्रमाण्यपरित्यागः
अप्रतीतयवाप्रामाण्यकल्पनम् इदं तु पूर्वस्मात् पृथक् अन्यथा-
समुच्चयेऽपि यागसिद्धिः स्यात्। अतएव विकल्पेनाभयः
शास्त्रार्थः इत्युक्तम्। तथा प्रयोगान्तरे यवे उपादीयमाने
परित्यक्तयवाप्रामाण्योज्जीवनं स्वीकृतयवाप्रामाण्यहानिरिति
चत्वारो दोषाः। एवं व्रीहावपि चत्वारः। इत्यष्टौ दोषा
इच्छाविकल्पे। तथाचोक्तम्। 'एवमिष्टोऽष्टदोषोऽपि यद्
व्रीहियववाक्ययोः। विकल्प आश्रितस्तत्र गतिरन्या न
विद्यते'। इति। ननु पुरोडाशाय व्रीहियवौ विहितौ तत्राग्नि-
हेयादिवत् समुच्चयरूपा गतिरस्त्विति चेन्न। प्रकृतक्रतु-
साधनीभूतपुरोडाशद्रव्यप्रकृतितया हि परस्परानपेक्षौ व्रीहि-
यवौ विहितौ शक्तश्चैतौ प्रत्येकं पुरोडाशं सम्पादयितुम्।
तत्र यदि मिश्राभ्यां पुरोडाशः सम्पद्येत तदा परस्परानपेक्षे
व्रीहियवविधायिनी उभे शास्त्रे बाध्येतामिति। ननु माभू-
द्वाक्यद्वयसामर्थ्यात् समुच्चयः। अङ्गसहितप्रधानानुष्ठापेक्ष-
प्रयोगविधिर्व्रीहियवौ समुच्चेतुमर्हतीति चेन्न। स हि यथा-
भिहिताङ्गानि समीक्ष्य प्रवर्त्तमानो न तानि अन्यथयति

मिश्रणे चान्यथात्वं तेषामिति। ननु मामिश्रेतां व्रीहियवौ उभयविध्यनुरोधादेकस्मिन्नेव प्रयोगे व्रीहिभिरेकं वारं यवै-रप्यपरवारमिज्यतामिति चेन्न। अङ्गानुरोधेनाश्रुतप्रधाना-भ्यासस्यायुक्तत्वात् एवञ्च न केवलं व्रीहियवसमुच्चये प्रमाणा-भावः किन्तु प्रमाणविरोधोऽपि तथाहि पुरोडाशविधाना एव ओषधिद्रव्ये यस्मिन् कस्मिंश्चित् प्राप्ते व्रीह्योऽपि पक्षे प्राप्ताः तत्राप्राप्तांशे प्रापणार्थानिरपेक्षव्रीहिश्रुतिर्व्रीहिभिरेवेति निय-मनं गमयेत्। एवञ्च तथाच तत्र यवसमुच्चये निरपेक्षव्रीहि-श्रुतिबाधः स्यात्। एवं यवश्रुतेरपि नियमार्थत्वाद्व्रीहिसमुच्चये तद्बाधः स्यादिति। अतएवोक्तं गतिरन्या न विद्यते। एकार्थं-तया विविधं कल्प्यत इति विकल्पः। तस्मादष्टदोषभिया उपोष्ये द्वे तिथी इत्यत्र न इच्छाविकल्पः। किन्तु व्यवस्थित-विकल्पः। अतएव द्वैतनिर्णये स्कन्दपुराणे। 'सम्पूर्णैका-दशी यत्र प्रभाते पुनरेव सा। उत्तरान्तु यतिः कुर्य्यात् पूर्वामुपवसेद्गृही'। कूर्मपुराणेऽपि। 'एकादशीप्रवृद्धा चेच्छुक्ले कृष्णे विशेषतः। तत्रोत्तरां यतिः कुर्य्यात् पूर्वामुप-वसेद्गृही'। एकादश्येव प्रकर्षेण वृद्धा परदिने निर्गता न दशमी नापि द्वादशी चेत्यर्थः। 'पुनः प्रभातसमये घटिकैका-यदा भवेत्। तत्रोपवासो विहितो वनस्थस्य यतेस्तथा। विधवायाश्च तत्रैव परतो द्वादशी न चेत्'। एतेन पारणदिने द्वादशीलाभे सर्व एव पूर्णां त्यक्त्वा खण्डामुपवसेत् इति। तदलाभे गृही पूर्वामपरस्तूत्तरां विधवापीति लभ्यते।

अथ त्रिस्पृशैकादशी। यदा पूर्वदिने दशमी परदिने एकादशी स्वल्पा ततो द्वादशीरात्रिशेषे त्रयोदशी तदा सैव सर्वैरुपोष्या। 'एकादशी द्वादशी च रात्रिशेषे त्रयोदशी। तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणम्'। इति हलायुध-

भूतवचनात्। हेमाद्रिस्तु परिशेषखण्डे स्कान्दम् 'एकादशी कला यत्र द्वादशी च क्षयङ्गता। नक्तं तत्र प्रकुर्वीत नोपवासो गृहाश्रमे'। अत्र चोपवासविधायकसामान्यशास्त्रस्य नक्तं विधायकविशेषशास्त्रेण बाधः। एकादशी कलाप्येका द्वादशी यत्र लुप्यते। तत्रोपवासं कुर्वीत निष्कामो विष्णुतत्परः' इत्याह। परवचनपर्य्यालोचनया नक्तं विधानं कामिनः काम्य व्रतविषयम्। निष्कामस्य नित्योपवासार्थिनो विष्णु-परायणस्य गृहस्थस्याप्युपवास इति तत्त्वम्। अतएव विष्णुं भक्तिसमायुक्तैरित्यनेन पक्षे पक्षे नित्यमुपोषणमित्युक्तम्। अतएवात्र द्वादशीहानियुक्ता विद्धाधिकेति विद्धायाः सप्तमे प्रकारे पूर्वोक्तरूपे सप्तम्यां तु व्यवस्थितिरित्यनेन स्ववाक्येन विद्धरूपेणाप्यं पैव व्यवस्थोक्ता। न चात्र 'निष्कामस्तु गृही कुर्य्यात् उत्तरैकादशीं तथा। सकामस्तु तदा पूर्वां कुर्य्या-द्बौधायनो मुनिः'। इति विष्णुरहस्यवाक्यात् सकामेन दशमी-विद्धा कार्य्या निष्कामेन द्वादशीयुक्तैकादशीति वाचस्पति-मिश्रोक्ता व्यवस्था युक्ता। पूर्वोपदर्शितानन्तं बोधकवचनमाद-दशमीविद्धा निन्दावचनविरोधात्। विष्णुरहस्यानार्षत्वस्य दानसागरे अनिरुद्धभट्टेनाभिहितत्वाच्च। यथा लोकप्रसिद्ध-मेतद्विष्णुरहस्यं शिवरहस्यञ्च। द्वयमिह न परिगृहीतं संग्रहरूपञ्च यततोऽवधार्य्येति। यत्तु शिवरहस्यमिति कृत्वा तिथिविवेकेऽभिहितं तन्मुनिवचनस्वव्याख्यानसंवादाय। अत्रापि विष्णुरहस्यं वक्ष्यमाणशक्लपक्षीयारुणोदयवेधे वैष्णवा-वैष्णवगृहिविधिसंवादायेति। समयप्रदीपोऽपि यत्र पूर्व-दिने दशमीविद्धा परदिने द्वादशीमिश्रा दिनान्तरे च द्वादशी न वर्त्तते तदा द्वादशीमिश्रैवोपोष्या प्रधानकालानु-रोधात्। पारणादौ तु द्वादशीबाध एव तन्मूलकमेव गौड़ीय-

वचन 'द्वादश्येकादशीमिश्रा परतोऽपि न वर्द्धते । श्रद्धिभि-र्यतिभिश्चैव सैवोपोष्या सदा तिथिः' । एतद्द्विस्पृशि त्रिस्पृशि च सम्भवत्यविशेषात् ।

अथ दशमीविद्धैकादशी । सा च द्वेधा । पूर्वाह्णे दशम्या उत्तराह्णे द्वादश्या च युता दशम्यनिर्मुक्ता चेति तत्रोभयों पूर्वत्र दशमीयुतामनुपोष्य द्वादशीयुतामेकादशीं उत्तरत्र शुद्धां द्वादशीमुपवसेत् । 'एकादशीमुपवसेद्द्वादशीमथवा पुनः । विमिश्रां वापि कुर्वीत न दशम्यायुतां क्वचित्' इति वचना-त्समाणवचनजाताच्च । उत्तरपक्षे विशेषोऽपि वक्ष्यते । यत्तु [illegible]ानि दशमीविद्धा निन्दाबोधकवचनजातानि तानि उभयतो [illegible]धे द्रष्टव्यानि । दशमीमात्रवेधे तु सैवोपोष्या । 'एकादशी [illegible] लभ्येत सकला द्वादशी भवेत् । उपोष्या दशमीविद्धा [illegible]षिरुद्दालकोऽब्रवीत्' इति ऋष्यशृङ्गस्मृतेः । अये पूर्वान्तु [illegible]ारयेदिति विश्वरूपनिबन्धाच्च । न द्वादश्युपवासः प्रमाणा-[illegible]ावात् । 'एकादशीमुपवसेद्द्वादशीमथवा पुनः' । इत्यस्य [illegible]ोजराजाद्यलिखितत्वेनामूलकत्वादिति वर्द्धमानोपाध्याय-[illegible]ाचस्पतिमिश्रमतं तन्न । तदुपजीव्यहरिनाथोपाध्यायेन महा-[illegible]नपरिगृहीतत्वेन तद्वचनस्याभिधानात् । न हि भोज-[illegible]जाद्यलिखितमेवाप्रमाणं रामायणादेस्तथात्वापत्तेः । न हि [illegible]शमीविद्धेति वचनं भोजराजलिखितम् । तस्मान्नानादेशीय-[illegible]न्थकारलिखितवचनसंवादादेव प्रामाण्यपरिग्रहः । इति [illegible]पोष्या दशमीविद्धेत्यस्य विषय उदयपूर्ववेधो वक्ष्यते न वा [illegible]नासंग्रहधृतनानावचनान्यनाद्दृत्य संग्रहकर्त्तुर्विश्वरूपस्य [illegible]क्याद्दरवश्यायुक्ता । तथाच समयप्रदीपे श्रीदत्तोपाध्यायाः [illegible]दि तु 'एकादशीमुपवसेद्द्वादशीमथवा पुनः । विमिश्रां वा [illegible]कुर्वीत न दशम्या युतां क्वचित्' इति गौड़ीयवचनं प्रमाणं

तदा अनेनैव द्वैधे एकादशीकार्य्ये द्वादशीविधेयुक्त एव द्वादश्युपवासः। न चेदं प्रतान्तरमेव एकादशीसंदंशपाठात्। अथवैतन्नेन पूर्वापेक्षितविधेय। 'पञ्चद्वानौ स्थिते सोमे लङ्घयेद्दशमीयुतां' इति वाच्यम्। उदयपूर्वकालीनदशमी-योगविषयम्। वचनान्तरबलादिति प्रपञ्चितं जितामित्रा-दिभिरित्याहुः। तथाच कालविवेकधृतमत्स्यार्णवयोर्भविष्य-पुराणम्। 'एकादशीं दशायुक्तां वर्द्धमाने विवर्ज्जयेत्। पञ्चद्वानौ स्थिते सोमे लङ्घयेद्दशमीयुताम्' इति। वर्द्धमाने सोमे शुक्लपक्षे। पञ्चद्वानौ स्थिते सोमे कृष्णपक्षे। लङ्घयेत् उपवसेत्। 'पञ्चमार्गस्थिते सोमे कुर्वीत दशमीयुतां' इति कालमाधवीयपाठे व्यक्त एवार्थः। केचित्तु। 'विद्धाप्येका-दशी ग्राह्या परतो द्वादशी न चेत्' इति 'मुहूर्त्तं द्वादशी न स्यात् त्रयोदश्यां यदा मुने। उपोष्या दशमीविद्धा सर्वैरेका-दशी तदा' इति। 'त्रयोदश्यां यदा न स्यात् द्वादशीघटिका-द्वयम्। दशम्येकादशी विद्धा सैवोपोष्या सदा तिथिः' इति मत्स्यकूर्मनारदीयवचनैः एवम्भूता दशमीविद्धैवोपोष्या त्रयो-दश्यां द्वादशीनिर्गमे तु मुमुक्षुभिर्द्वादश्युपोष्या सकामैस्तु अत्रापि दशमीविद्धैव। 'शुद्धैव द्वादशी राजन्नुपोष्या मोक्ष-काङ्क्षिभिः'। तथा 'निष्कामस्तु गृही कुर्य्यादुत्तरैकादशी सदा। सकामस्तु सदा पूर्वामिति बौधायनोऽब्रवीत्' इति विष्णुरहस्यवचनादिति वदन्ति। अत्र विद्धाप्येका-दशीत्यादिवचनानां नानादेशीयसंग्रहकारधृतमानावचनैतत्त्व-व्याख्यानात् अनुपदं विषयः स्फुटीभविष्यति। अनार्षविष्णु-रहस्यवाक्यमपि उत्तरैकादशीमित्यभिधानाभोक्षविषयं किन्तु वक्ष्यमाणारुणोदयवेधविषयम्। यदपि 'कुर्य्यादलाभे संयुक्त-नाशामिऽपि प्रवेशिनीम्। उपोष्या द्वादशी तत्र त्रयोदश्यान्

शेषम्। उदयात् प्राग्दशम्यान्तु शेषः संयोग इष्यते। उपरिष्टात् प्रवेशस्तु तस्मात्तां परिवर्जयेत्' इति। अनयोः समूलत्वेऽपि अलाभे त्रयोदश्यां द्वादश्यलाभे। संयुक्तां सूर्य्योदयात् प्राक् वक्ष्यावलोकनसमये दशम्यायुतां षष्टिदण्डात्मकामेकादशीं कुर्य्यादित्यर्थः। 'द्वादश्यां पारणालाभे पूर्वैव परिगृह्यते' इति प्रचेतो वचनैकवाक्यत्वात् लाभे तु संयुक्ता न ग्राह्या अलाभे इति वचनस्वरसात्। पूर्णाप्येकादशी त्याज्या त्युनैकश्रुतिमूलकत्वाच्च। नालाभेऽपि प्रवेशिनीमिति द्वादश्यास्त्रयोदश्यामनिर्गमेऽपीत्यर्थः। यत्र दशमी सूर्य्योदयात्परतः परदिने चैकादशी द्वादशी रात्रिशेषे त्रयोदशी ति विस्पष्टा तत्र दशमीविद्धैकादशीनिषेधकमिदम्। यमाशयः। 'एकादश्यां प्रकुर्वन्ति उपवासं मनीषिणः। पोषणाय द्वादश्यां विष्णोर्यद्वदियं तथा' इति भविष्यपुराणवचनात् परदिने द्वादश्यां विष्णूपासनार्थत्वमेकादश्युपवासस्यातम्। तस्योक्तविषये दशमीविद्धैकादश्युपवासमन्तरेण न भवति सोऽप्यस्त्वित्याशङ्क्येत्युक्तमुपोष्या द्वादशी तत्रेति। एकादशी द्वादशी च रात्रिशेषे त्रयोदशी। तत्र क्रतुशतं यां त्रयोदश्यान्तु पारणं' इति वचनात् त्रयोदश्यामिति न तु द्वादश्यां विष्णुपूजां कृत्वा। न च एकादश्याः परदिने दशमीसम्बन्धे द्वादश्युपोष्या इत्यसङ्गतम्। एकादशीयुक्ता दश्या अपि द्वादशीत्वाच्चतेरित्याहुः। तदप्यश्रेयम्। यतो मूतवाहनशूलायुधप्रभृतिभिस्तद्वचनमभिहितं यथाश्रुतं ख्यातञ्च। हेमाद्रिमाधवाचार्य्यप्रभृतिकृतवचनान्तरसंवादिआचारपरिगृहीतञ्च। ततश्च तद्वचनस्यार्थान्तरकल्पनं कल्पक-। तथाहि 'एकादशीमुपवसेत् द्वादशीमथवा पुनः। मिश्रां वापि कुर्वीत न दशम्या युतां क्वचित्' इत्यभिधाय

कुर्य्यादलाभ इत्यादिवचनद्दयं कौर्म्म एवाभिहितम्। तत्र प्रक्रान्तत्वाच्च दशम्या युतामित्यस्यैवापवादकं विधायकञ्च कुर्य्यादलाभ इत्यादि। एवञ्च संयुक्तैकादशीकरणविधानादलाभ इत्यत्राप्येकादश्या एव परदिनेऽलाभ इति प्रतीयते न तु त्रयोदश्यां द्वादश्यामलाभे अनुपस्थितेः। यदुक्तं पूर्व्वेत्येकवाक्यत्वं तदपि न भवदुक्तविषये पूर्णत्वायोगात्। तथाच सौरधर्म्मे। 'आदित्योदयवेलाया प्राङ्मुहूर्त्तद्वयान्विता। सैकादशीति संपूर्णा विद्धान्या परिकीर्त्तिता' इत्यनेनैकादशी पूर्णत्वस्य सूर्य्योदयप्राक्कालीनमुहूर्त्तद्वयान्वितत्वेन विशिष्याभिधानात्। स्कान्देऽपि 'प्रतिपत्प्रभृतयः सर्वा उदयादोदयाद्रवेः। संपूर्णा इति विख्याता हरिवासरवर्जिताः'। अतस्तदुक्तपूर्णाविषये पूर्वाया विद्धत्वात् परैकादश्युपोष्या। कुर्य्यादलाभे संयुक्तामित्यनेन द्वादश्यामेकादश्यलाभे संयुक्तां प्रातरर्कानवलोकनसमयविद्धां कुर्य्यात् अर्थाद्द्वादश्यामेकादशीलाभे तादृशविद्धां न कुर्य्यादित्यवगतेस्तत्र परोपोष्येति गम्यते। एतद्विषये 'षष्टिदण्डात्मिकायाश्च तिथेर्निष्क्रमणे परे। अकर्मण्यं तिथिमलं विद्यादेकादशीं विना' इति सङ्गच्छते। तथा कालमाधवीये गारुड़म्। 'आदित्योदयवेलाया आरभ्य षष्टिनाड़िकाः। संपूर्णैकादशी नाम त्याज्या धर्मफलेप्सुभिः'। अत्रापि त्रयोदश्यां द्वादश्यलाभे एव परोपोष्येत्यवधेयं न चेत्तत्र पूर्वामुपोष्य परदिने एकादशीं द्वादश्याद्यपादमुत्तार्य्य पारणं कुर्य्यादिति 'विद्धाप्येकादशी ग्राह्या परतो द्वादशी न चेत्' इत्यादि प्रागुक्तवचनेभ्यः। अथैवं विद्धापूर्णयोर्व्यवस्थायामविशेष इति चेत् 'द्वादश्यां पारणालाभे पूर्व्वैव परिगृह्यते' इत्यविशेषाद्वैष्णवेनापि पूर्व्वोपोष्या। अरुणोदयविद्धा तु द्वादशी पारणस्या-

लाभेऽपि वैष्णवैर्नोपोष्या। किन्तु खण्डैकादश्युपोष्येति विशेषः। 'दशमीशेषसंयुक्तो यदि स्यादरुणोदयः। नैवो-पोष्य वैष्णवेन तद्दिनैकादशीव्रतम्' इति गारुडे वैष्णवेत्य-भिधानात्। तत्रापि कृष्णपक्षेऽरुणोदयविद्धैवोपोष्या। शुक्ल-पक्षे तु न तथेति विशेषः। 'एकादशीं दशायुक्तां वर्द्धमाने विवर्जयेत्। पक्षहानौ स्थिते सोमे लङ्घयेद्दशमीयुताम्' इत्येकवाक्यत्वात् एतच्छुक्लपक्षैकादशीसंवादाय 'निष्कामस्तु गृही कुर्य्यादुत्तरैकादशीं सदा। सकामस्तु तदा पूर्वामिति बौधायनोऽब्रवीत्' इति विष्णुरहस्यवाक्यमिति। अथारुणो-दयविद्धोत्तरैकादशी पूर्णोत्तरैकादशी च द्वादश्यास्त्रयोदश्या-मनिर्गमे सर्वैरेव कथं नोपोष्यते। 'एकादशी द्वादशी च परतो द्वादशी न च। तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणम्' इति वचनादिति चेन्न। अरुणोदयोपरि विद्धैकादशी परदिने विषयसम्भवात् नारुणोदयविद्धा पूर्णाविषयकविशेष-वचनबाधकत्वमिति। अस्मन्मते तु नालाभेऽपि प्रवेशिनी-मित्यनेन मलाभेऽपि परदिने एकादश्यलाभेऽपि सूर्य्योदयाग्र-न्तरवेधमात्रनिषेधः। भवतां मते तु परदिने एकादशी-लाभ एवेति सङ्कोचः स्यात्। उपोष्या द्वादशीत्यत्र द्वादशी-पदस्य एकादशीयुक्तद्वादशीपरत्वे प्रमाणं नास्ति लक्षणा च स्यात्। किन्तु द्वादशीमथवा पुनरित्यस्य प्रवेशिन्यन्तरित-केवलद्वादशीपरत्वप्रदर्शनार्थम्। नालाभेऽपि प्रवेशिनीमिति। तथा च कालविवेके जीमूतवाहनः। 'एकादशी दशाविद्धा परतोऽपि न वर्द्धते। गृहिभिर्यतिभिश्चैव सैवोपोष्या सदा तिथिः' इति भविष्यपुराणीयात्। दशा दशमी। तत्र द्वादशीदिने एकादशीकलार्द्धमात्रस्याप्यनिर्गमे दशम्या विद्धैका-दशी उपोष्येति प्रचरति शास्त्रार्थः स तु सौरधर्मोत्तरकूर्म-

पुराणादिविरुद्धः। तथाच सौरधर्मोत्तरे। 'एकादशीमुपवसेत् द्वादशीमथवा पुनः। विमिश्रां वा प्रकुर्वीत न दशम्या युतां क्वचित्'। कौर्मे। 'एकादश्यामुपवसेत् द्वादशीमथवा पुनः। विमिश्रां वा प्रकुर्वीत न दशम्या युतां क्वचित्। कुर्य्यादलाभे संयुक्तां नालाभेऽपि प्रवेशिनीम्। उपोष्या द्वादशी तत्र त्रयोदश्यान्तु पारणम्। उदयात् प्राग्दशम्यास्तु शेषः संयोग इष्यते। उपरिष्टात् प्रवेशस्तु तस्मात्तां परिवर्जयेत्'। अस्यार्थः। द्वादश्यां कलाईमात्रमप्येकादश्यामनिर्गमे यदि दशमी उदयं न स्पृशति तदा संयुक्ता उच्यते सैवोपोष्या। अथोदयं स्पृशति तदा सैव प्रवेशिनीपदवाच्या तां विहाय द्वादशीमेवोपवसेत्। तदिदमुक्तं नालाभेऽपि प्रवेशिनीमिति। सौरधर्मोत्तरे सूत उवाच। 'कीदृशस्तु भवेद्वेधो योगो विप्रेन्द्र कीदृशः। योगवेधौ समाचक्ष्व याभ्यां दुष्टमुपोषणम्'। व्यास उवाच। 'या तिथिः स्पृशते राजन् प्रातर्वक्त्रावलोकिनी। स वेध इति विज्ञेयो योगः सूर्य्योदयो मतः'। सूर्य्योदयात् प्राक् अन्योन्यमुखावलोकनयोग्यं प्रातःकालं यदि दशमी स्पृशति न तु उदयं स वेध इति परिभाषितम्। यस्य कूर्मपुराणवचने शेषः संयुक्त इत्युक्तम्। यस्य तु उपरिष्टात् प्रवेशस्त्वित्युक्तम्। सोऽनेन योगः सूर्य्योदयोमत इत्युक्तम्। परिभाषितत्वादेव अस्य परस्परविरोधो न वाच्यः। तेन सूर्य्योदयकाले दशमीस्पृष्टैकादशी न कदाचित् उपोष्या किन्तु एकादशी निःसरतु न निःसरतु वा द्वादश्येवोपोष्या। यदा तु वक्त्रावलोकनमात्रं स्पृशति दशमी नोदयम्। परदिने चैकादशी न निःसरति तदा एकादशीं वेधवतीमुपवसेत्। एकादशी दशायुक्ता इत्यादि दशमीयुक्तामिति दशम्याढ्यैत्यादिकमप्यस्मिन् विषये बोद्धव्यमित्याह स्मृति-

मत्स्यार्णवे भोजदेवोऽप्येवमेवं स वचनमाह एवमेव कालकौमुदी तस्मात् पूर्वोक्तमात्स्यकौर्मनारदीयवचनानां दिग्भेदे समायुक्ते चर्येऽहनि तथापरे। उपवासस्तु पूर्वस्मिन्नोपवासः परेऽहनि' इति विष्णुधर्मोत्तरीयस्यापि अरुणोदयविद्धायामेषा व्यवस्था न तु व्यवस्थान्तरम्। जीमूतवाहनादिलिखितकूर्मपुराणसौरधर्मोत्तरविरोधात् एवमन्यान्यपि वचनानि व्याख्येयानि संवत्सरप्रदीपे हलायुधोऽप्येतन्मतानुसारी सविदमुक्तवान्। यथा 'अरुणोदयवेलायां दशमी सङ्गता यदि। उपोष्या द्वादशी शुद्धा त्रयोदश्यान्तु पारणम्। दशमीशेषसंयुक्तो यदि स्यादरुणोदयः। वैष्णवेन न कर्त्तव्यं तद्दिनैकादशीव्रतम्' इत्यादिवचनेषु अरुणशब्द आदित्यवाचको बोद्धव्यः। अरुणो भास्करेऽपि स्यादित्यभिधानात्। तस्मादेकादशी त्याज्या दशमीपलमिश्रिता। उपोष्या द्वादशी शुद्धा त्रयोदश्यान्तु पारणम्' इति। यत्तु 'द्वादशद्वादशीर्हन्ति त्रयोदश्यान्तु पारणम्' इति तत्परदिने द्वादशीलाभे तां त्यक्त्वा पारणे बोध्यम्। हेमाद्रिरपि दशमीविद्धायामुपवासानुवासविधायकानि वचनानि यथाक्रमं सकाममुमुक्षुविषयकाणि। यथा कौर्मे। 'द्विस्पृश्यैकादशी यत्र तत्र सन्निहितो हरिः। तामेवोपवसेन्मर्त्यः सकामो विष्णुतत्परः'। दशमीं द्वादशीञ्च या स्पृशति सैकादशी द्विस्पृक् सुमन्तुसत्यव्रतौ। 'दिनक्षये तु शुद्धा च द्वादशी मोक्षकाङ्क्षिभिः। उपोष्या दशमी विद्धा नोपोष्यैकादशी सदा'। पुत्रवद्गृहिमात्रेण दशमीविद्धा नोपोष्या शुद्धा द्वादश्युपोष्या। यथा पितामहः। 'एकादशीदिनक्षये उपवासं करोति यः। तस्य पुत्रा विनश्यन्ति मघायां पिण्डदो यथा। दिनक्षये तु संप्राप्ते नोपोष्या दशमीयुता। यदीच्छेत् पुत्रपौत्राणामृद्धिं सम्पदमात्मनः। एका-

दश्यां यदा वत्स दिनक्षयतिथिर्भवेत् तत्रोपोष्या द्वादशी स्यात्त्रयोदश्यान्तु पारणम्'। व्यासः। 'दशमीमिश्रिता पूर्वा द्वादशी यदि लुप्यते। एकादश्यां महाप्राज्ञ उपवासः कथं भवेत्। शुद्धैकाद्वादशी राजन्नुपोष्या मोक्षकाङ्क्षिभिः। पारणन्तु त्रयोदश्यां पूजयित्वा जनार्दनम्'। भविष्ये। 'दशमीशेषसंयुक्तो यदि स्यादरुणोदयः। वैष्णवेन न कर्त्तव्यं तद्दिनैकादशीव्रतम्'। ब्रह्मवैवर्त्तः। 'चतस्रो घटिका प्रातररुणोदय उच्यते। यतीनां स्नानकालोऽयं गङ्गाम्भःसदृशः स्मृतः। त्रियामां रजनीं प्राहुस्त्यक्त्वाद्यन्तचतुष्टयम्। नाड़ीनां तदुभे सन्ध्ये दिवाद्यन्तसंज्ञिते'। तथा 'नन्दा शरीरं देवस्य भद्रा स्यात्माश्रयो मतः। तस्मात् सरोगं त्यक्त्वाङ्गमात्मानमुपवासयेत्'। नन्दा एकादशी भद्रा द्वादशी तथा 'वरमेकादशी त्याज्या न कार्य्या दशमी युता' इत्यरुणोदयवेधनिषेध वाक्यम्। यदा द्वादश्यां क्रियमाणाप्येकादशी दृश्यते तदा पूर्वा त्याज्या कार्य्यैकादशीव्रतविषयम्। 'अरुणोदय काले तु दशमी यदि दृश्यते। न तत्रैकादशी त्याज्या धर्म कामार्थदायिनी' इति श्रवणादित्याह। पाश्चात्यनिर्णयामृतं भविष्योत्तरीयम्। 'अरुणोदयकाले तु दशमी यदि दृश्यते सा विद्धैकादशी तत्र पापमूलमुपोषणम्'। भविष्यपुराणीय मेतदिति माधवाचार्य्यः तत्रारुणोदयवेधे तु भागवतैरुप वासः कार्य्यः। सकालः स्कान्दे उक्तः। यथा 'उदयात् प्राक् चतस्रस्तु नाड़िका अरुणोदयः। तत्र स्नानं प्रशस्तं स्यात्ति पुण्यतमं स्मृतम्' इति कविकान्तसरस्वती विद्यादर्शे वेध सूदये निषिद्धः 'दशम्याः प्रान्तमादाय यदोदेति दिवाकरः तेन दुष्टं हरिदिनं तद्दत्तमसुराय हि' इति स्मृतेः। अत्र द जम्भासुराय तु इति माधवाचार्य्यः पठति। कालमाधवी

माधवाचार्य्योऽपि ब्रह्मवैवर्त्तः। 'कीदृशस्तु भवेद्वेधो योगो विप्रेन्द्र कीदृशः। योगवेधौ समाचच्च याभ्यां दुष्टमुपोषणम्। चतस्रो घटिका प्रातररुणोदयनिश्चयः। चतुष्टयविभागोऽत्र वेधादीनां किलोदितः। अरुणोदयवेधः स्यात् सार्द्धन्तु घटिकाद्वयम्। अतिवेधो द्विघटिका प्रभासन्दर्शनाद्रवेः। महावेधोऽपि तत्रैव दृश्यतेऽर्को न दृश्यते। तुरीयस्तत्र विहितो योगः सूर्य्योदये बुधैः'। तथा 'यातुधानव्रतं योगे महावेधे तु राक्षसम्। अश्वासुरस्यातिवेधे मोहिते वै प्रवेशिनी' इति अनेन तत्तदेकादशीफलं तत्तदसुरः प्राप्नोतीति विशेषः। घटिका दण्डः। 'उदयात् प्राक् चतस्रस्तु नाड़िका अरुणोदयः' इति स्कान्दे नारदवचनैकवाक्यत्वात् कश्चः। उदयोपरिविद्धा तु दशम्येकादशी यदि। दानवेभ्यः प्रीणनार्थं दत्तवान् पाकशासनः'। मार्कण्डे। 'दशमीशेषसंयुक्तो यदि स्यादरुणोदयः। नैवोपोष्यं वैष्णवेन तद्दिनैकादशीव्रतम्। उदयात् प्राग्यदा विप्र मुहूर्त्तद्वयसंयुता। संपूर्णैकादशी ज्ञेया तत्रैवोपवसेद् गृही'। इत्यादिवचनजातात् सूर्य्योदयानन्तरविद्धा सर्वैरेव नोपोष्या। अरुणोदयविद्धा तु विष्णुवैर्नोपोष्या इत्याह। तेन जीमूतवाहनप्रभृतीनां मते सूर्य्योदयानन्तरदशमीविद्धैकादशीं परित्यज्य शुद्धां द्वादशीमुपोष्य त्रयोदश्यां पारणमिति वक्तुलार्थः। तथाच काल-निर्णये स्मरति। अतिवेधा महावेधा ये वेधास्तिथिषु स्मृताः। सर्वेऽप्यवेधा विज्ञेया वेधः सूर्य्योदये सति'। एवञ्च सूर्य्योदयकालीनवेधः सर्वथा त्याज्यः। अरुणोदयवेधे तु प्रतिप्रसवसत्त्वात् क्वचिद्ग्राह्यत्वमिति। अत्र गौड़ीयानां विशेषतो देशाचारात्। उदयोपरिविद्धा तु सर्वथा नोपोष्या तथाच मरीचिः। येषु स्थानेषु यच्छौचं धर्माचारश्च यादृशः।

तत्र तत्रावमेच्येत धर्मस्तत्रैव तादृशः। येषु देशेषु ये देवा येषु स्थानेषु ये द्विजाः। येषु स्थानेषु यत्तोयं या तु यत्रैव मृत्तिका। सैव तत्र प्रपूज्या स्यात्तेषु कृत्यं विधीयते'। अत एव न्यायागमयोर्न निर्णायकता। तत्रायोगिनोऽसर्वज्ञस्य धर्मतत्त्वसाक्षात्कारासम्भवात्। शिष्टाचारप्रामाण्यमाह हेमाद्रिप्रबन्धे व्यासः। 'तर्कोऽप्रतिष्ठः श्रुतयो विभिन्ना नासौ मुनिर्यस्य मतं न भिन्नम्। धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्थाः'। स्कान्दे। 'येषां विश्वेश्वरे विष्णौ शिवे भक्तिर्न विद्यते। न तेषां वचनं ग्राह्यं धर्मनिर्णयसिद्धये'। कालमाधवीये 'यस्मिन् देशे यस्मिन् काले येषु शिष्टेषु नीरागद्वेषस्य स्वस्य प्रामाण्यातिशयबुद्धिस्तदा तादृशस्याचारस्य मुख्यत्वमिति। एतदभिप्रेत्य गुरोः शिष्यानुशासने तैत्तिरीयाः समामनन्ति अथ ते यदि धर्मविचिकित्सावृत्तिचिकित्सा वा स्यात्। ते तत्र ब्राह्मणाः सम्यगदर्शिनो युक्ता आयुक्ता अरूक्षा धर्मकामाः स्युः यथा ते तत्र वर्त्तेरन् तथा तत्र वर्त्तेथा इति। सम्यगदर्शिनः शास्त्रतत्पराः युक्तायुक्तिकुशलाः आयुक्तास्तदर्थानुष्ठाननिरताः अरूक्षाः क्रोधादिवर्जिताः धर्मकामाः जीवन्मुक्तवत् कर्मण्यौदासिन्यमकुर्वाणा इत्यर्थः अतो दशमीविद्धानिन्दाबोधकवचनानि अविशेषादरुणोदयनिर्मुक्तायामपि। यथा स्कन्दपुराणम्। दशम्येकादशी विद्धा गान्धारी तामुपोषिता। तस्याः पुत्रशतं नष्टं तस्मात्तां परिवर्जयेत्'। तथा 'सुराया विन्दुना स्पृष्टं यथा गाङ्गं जलं त्यजेत्। तथा चैकादशीं रम्यां दशम्या दूषितां त्यजेत्। ये कारयन्ति कुर्वन्ति दशम्येकादशी युताम् आलोक्य तन्मुखं मनुज सूर्यदर्शनमाचरेत्। यैः कृता दशमी विद्धा अङ्कवाक्यात्तु मानवैः। ते गता नरकं घोरं युगानामेक-

विंशतिम्'। ब्रह्मवैवर्त्ते। 'दशमी शेषसंयुक्तां यः करोति विमूढधीः। एकादशीफलं तस्य नश्येद्द्वादशवार्षिकम्'।

तत्र संक्षेपः पारणदिने द्वादशीलाभे सर्व एव पूर्वां त्यक्त्वा खण्डामुपवसेत्। गृही पूर्वां तदन्यः परां विधवापि। यदा तु पूर्वदिने दशम्या उत्तरदिने द्वादश्यायुतैकादशी तदोत्तरामुपोष्य द्वादश्यां पारणं कुर्य्यात् परदिने द्वादश्यनिर्गमे त्रयोदश्यामपीति यदा तु सूर्य्योदयानन्तरं दशमीयुतैकादशी अथैव परदिने न निःसरति तदा तां विहाय द्वादशीमुपवसेत्। यदा तु सूर्य्योदयात् प्राक्कालीनदशमीविद्धैकादशी परदिने न निःसरति तदा तामुपवसेत्। यदा तु तथाविधा सति परदिनेऽपि निःसरति तत्परदिने च द्वादशी तदा तां विहाय खण्डामुपोष्य द्वादश्यां पारयेत्। यदा तु उभयदिने तद्विधैकादशी परदिने च न द्वादशी तदा षष्टिदण्डात्मिकां विद्धामुपोष्य परदिने द्वादश्याः प्रथमपादमुत्तार्य्य पारयेत्। वैष्णवस्तु तत्रापि शुक्लपक्षे परामुपोष्य त्रयोदश्यां पारयेदिति। सर्वस्यां कृष्णैकादश्यां वैष्णवानां सपुत्राणां गृहस्थानामप्युपवासो नित्यः। ब्राह्मणस्य तु विशेषतो नित्यः। वैष्णवेतरेषान्तु तादृशानां हरिशयनमध्यवर्त्तिनीषु कृष्णैकादशीषु उपवासो नित्यः। अपुत्रवतां गृहिणान्तु सर्वास्वेव नित्याधिकारः। काम्योपवासे तु अविशेषेणैव सर्वेषामधिकारः। नित्योपवासे

...[illegible]...लादिदोषो नास्ति अष्टाब्दादधिको मर्त्यो ह्यपूर्णाशीतवत्सरो नित्याधिकारी विधवायास्तु सर्वास्वेव नित्याधिकारः। अत्र मलमासादिदोषो नास्ति। यथा ज्योतिःपराशरः। अनादिदेवतार्च्चासु कालदोषो न विद्यते। नित्यास्वपवासीन तथैवैकादशीव्रते'।

अथ दशमीनियमाः। सूरिसन्तोषे। 'कांस्य मांस

मसूरञ्च चनकं कोरदूषकम्। शाकं मधुपरान्नञ्च त्यजेदुपवसन् स्त्रियम्'। अत्रोपवसन्निति तद्दिने भोजनासम्भवात् सामीप्यात् पूर्वापरदिनयोर्ग्रहणं स्मृतिः। 'शाकं माषं मसूरञ्च पुनर्भोजनमैथुने। द्यूतमत्यम्बुपानञ्च दशम्यां वैष्णवस्त्यजेत्। कांस्यं मांसं सुरां क्षौद्रं लोभं वितथभाषणम्। व्यायामञ्च व्यवायञ्च दिवास्वप्नं तथाञ्जनम्। तिलपिष्टं मसूरञ्च दशम्यां वर्जयेत् पुमान्। दशम्यामेकभक्तञ्च कुर्वीत नियतेन्द्रियः। आचम्य दन्तकाष्ठञ्च खादेत तदनन्तरम्। 'पूर्वं हरिदिनाल्लोकाः सेवध्वं चैकभोजनम्। अवनीपृष्ठशयनाः स्त्रियाः सङ्गविवर्जिताः। सेवध्वं देवदेवेशं पुराणं पुरुषोत्तमम्। सकृद्भोजनसंयुक्ता द्वादश्याञ्च भविष्यथ' अत्रैकभोजनपदम्। 'मुनिभिर्द्दिरशनमुक्तं विप्राणां मर्त्यवासिनां नित्यम्। अहनि च तमस्विन्यां सार्द्धप्रहरयामान्तः' इति छन्दोगपरिशिष्टोक्तभोजनद्वयस्यैकमात्राचरणार्थं न तु सकृदेव द्रव्यस्य गलाधःकरणं विवृतमेतत् प्रायश्चित्ततत्त्वे। अत्र वैष्णवग्रहणं तस्यातिशयदोषार्थम्।

अथैकादशीनियमाः। प्रातरुत्थायैकादश्यां बाह्याभ्यन्तरशौचं कुर्य्यात्। तत्प्रकारस्तु। 'उपविष्टो जपन् स्नातः क्षुतप्रस्खलितादिषु। पूजायां नाम कृष्णस्य सप्तवारान् प्रकीर्त्तयेत्। पाषण्डिनो विकर्मस्थानालपेच्चैव नास्तिकान्। सम्भाष्य तान् शुचिपदं चिन्तयेदच्युतं बुधः। इदञ्चोदाहरेत् सम्यक् कृत्वा तत्प्रवणं मनः। शरीरमन्तःकरणोपजातं बाह्यञ्च विष्णुर्भगवानशेषः। शमं नयत्वत्र ममेह शर्म्मयोगादनन्ते हृदि सन्निविष्टे। अन्तःशुचिं बहिः शुचिं सर्वो धर्म्ममयोऽच्युतः। स करोतु ममैतस्मिन् शुचिरेवास्मि सर्वदा। बाह्योपजातनिरयानौद्रांश्च भगवानजः। शमं नयत्वनन्तात्मा विष्णुश्चेतो

संक्षित:। एतत् सम्भाष्य जप्तव्यं पाषण्डादीनुपोषितैः'। उपोषितैर्नियमस्थितैः। एते च मन्त्राः धर्मफलकामनारहितेनापि मुमुक्षुणा जप्तव्याः। अविशेषणविधानात् यथा योऽस्मान् द्वेष्टि यञ्च वयं द्विष्म इति मन्त्रो द्वेषाभावेऽपि स्यादिति निर्णीतम्। तथाहि मन्त्रस्य धर्मसाधनता प्रकाशसामर्थ्यलक्षणलिङ्गेनेतत्साधनकर्मणस्तत्साधनता सिद्धिर्वक्तव्या। लिङ्गन्तु न तत्र साक्षात् प्रमाणं किन्त्वेतत् काम इदं कुर्य्यादिति श्रुत्यनुमापकतयैव तत्र तु इष्टसाधनतापरेण विधिप्रत्ययेनेष्टमेवधर्मं एतद्भाव्यमितिपादनात् अनिष्टस्य कुतो भाव्यता। यथा स्वर्गादिसाधनस्याप्यग्निहोत्रादेर्मुमुक्षुं प्रति न तज्जनकतेति। ततश्च प्रातः मङ्गल्यं कुर्य्यात्। तद्विधानं वराहपुराणे। 'गृह्णीत्वौडुम्बरं पात्रं वारिपूर्णमुदङ्मुखः। उपवासन्तु गृह्णीयात् यद्वा वार्य्येव धारयेत्। एकादश्यां निराहारो भूत्वा चैवापरेऽहनि। भोक्ष्येऽहं पुण्डरीकाक्ष शरणं मे भवाच्युत। इत्युच्चार्य्य ततो विद्वान् पुष्पाञ्जलिमथार्पयेत्' इत्युत्तरार्द्धमधिकं विष्णुनोक्तम्। ततस्तत्पात्रस्थजलं किञ्चित् पिबेदाचमनजलपानवन्नात्र दूषणम्। यथा स्कान्दे। 'रात्रिं नयेत्ततः पश्चात् प्रातःस्नायी समाहितः। उपवासन्तु सङ्कल्प्य मन्त्रपूतं जलं पिबेत्'। मन्त्रस्तु कात्यायनेनोक्तः कालमाधवीये। 'अष्टाक्षरेण मन्त्रेण त्रिर्जप्तेनाभिमन्त्रितम्। उपवासफलं प्रेप्सुः पिबेत् पात्रगतं जलम्'। अष्टाक्षरेण नारायणमन्त्रेण। ततःप्रार्थयेत्। 'इदं व्रतं मया देव गृहीतं पुरतस्तव। निर्विघ्नां सिद्धिमाप्नोतु त्वत्प्रसादाज्जनार्दन'। ततो विष्णुपूजनम्। तथाच ब्रह्मपुराणम्। 'एकादश्यांशुभे पक्षे निराहारः समाहितः। स्नात्वा सम्यग्विधानेन धौतवासा जितेन्द्रियः। संपूज्य विधिवद्विष्णुं श्रद्धया सुसमाहितः। पुष्पैर्गन्धैस्तथाधूपैर्दीपै-

नैवेद्यकैः परैः। उपचारैर्बहुविधैर्जपहोमप्रदक्षिणैः। स्तोत्रै-र्नानाविधैर्दिव्यैर्गीतवाद्यमनोहरैः। दण्डवत्प्रणिपातैश्च जय-शब्दैस्तथोत्तमैः। संपूज्य विधिवद्रात्रौ कृत्वा चैव प्रजागरम्। कथाश्च गीतिका विष्णोर्गायन् विष्णुपरायणः। याति विष्णोः परं स्थानं नरो नास्त्यत्र संशयः'। उपचारैर्बहुविधैः षट्त्रिंश-दुपचारादिभिः।

अथ विष्णुपूजनविधिः। जमदग्निः। 'चिन्मयस्याप्रमेयस्य निष्कलस्याशरीरिणः। उपासकानां कार्य्यार्थं ब्रह्मणो रूप-कल्पना'। रूपस्थानां देवतानां पुंस्त्र्यंशादिककल्पना। तथाचाधिकारिमाह विष्णुपुराणम्। 'वर्णाश्रमाचारवता पुरु-षेण परः पुमान्। विष्णुराराध्यते पन्था नान्यत् तत्तोषकार-णम्'। मत्स्यपुराणम्। 'आरोग्यं भास्करादिच्छेद्धनमिच्छे-द्धुताशनात्। ज्ञानञ्च शङ्करादिच्छेत् मुक्तिमिच्छेज्जना-र्द्दनात्। अपि स्यात् सकुलेऽस्माकं सर्व्वभावेन यो हरिम्। प्रपद्यौ शरणं विष्णुं प्रजेशं मधुसूदनम्'। आह्निकचिन्ता-मणौ। 'आसनाभ्यञ्जने तद्वदुद्वर्त्तननिरूक्षणे। सम्मार्जनं सर्पिरादिस्नपनावाहने तथा। पाद्यार्घ्याचमनीयञ्च स्नानीयं मधुपर्ककौ। पुनराचमनीयञ्च वस्त्रयज्ञोपवीतके। अल-ङ्कारो गन्धपुष्पधूपदीपौ तथैव च। ताम्बूलादिकनैवेद्यं पुष्पमाला तथैव च। अनुलेपश्च शय्या च चामरं व्यजनं तथा। आदर्शं दर्शनञ्चैव नमस्कारोऽथ नर्त्तनम्। गीतवाद्ये च दानानि स्तुतिहोमप्रदक्षिणम्। दन्तकाष्ठप्रदानञ्च ततो देवविसर्जनम्। उपचारा इमे ज्ञेयाः षट्त्रिंशत्सुरपूजने'। वाद्यं विशेषयति योगिनीतन्त्रे। 'पूजाकाले सदा विष्णो-र्झल्लिमं न प्रवादयेत्'। देवस्य सन्तोषमुत्पादनात् दानपदं नीर्णं पूजादक्षिणादितत्कर्मप्राप्त्यर्थम्। षोडशोपचारादीनाह

प्रपञ्चसारे। 'आसनं स्वागतं पाद्यमर्घ्यमाचमनीयकम्। मधुपर्काचमनस्नानवसना भरणानि च। सुगन्धिसुमनोधूपदीपनैवेद्यवन्दनम्। प्रयोजयेदर्चनायामुपचारांश्च षोड़श। अर्घ्यं पाद्याचमनकमधुपर्काचमनान्यपि। गन्धादयो निवेद्यान्ता उपचारा दश क्रमात्। गन्धादयो निवेद्यान्ताः' पूजाः पञ्चोपचारिकाः। उपचारैर्यथाशक्ति देवतामन्वहं यजेत्'। ब्रह्मपुराणे। 'ओङ्कारादिसमायुक्तं नमस्कारान्तकीर्त्तितम्। स्वनाम सर्वसत्वानां मन्त्र इत्यभिधीयते। अनेनैव विधानेन गन्धपुष्पे निवेदयेत्'। गन्धपुष्पमात्रं पञ्चोपचारासम्भवे। मन्त्रनिर्णये। 'मन्त्रपाशेन देवेशि देवता नीयते ध्रुवम्। साधकस्य विना कार्य्यसिद्धिं कृत्वा न गच्छति'। ब्रह्मपुराणम्। 'देवानां प्रतिमा यत्र तैलाभ्यङ्गक्षमा भवेत्। पलानि तस्यै देयानि अथवा पञ्चविंशतिः। अष्टोत्तरशतपलं स्नाने देयञ्च सर्वदा'। अत्र 'पञ्चकृष्णलकोमासस्ते सुवर्णस्तु षोड़श। पलं सुवर्णाश्चत्वारः' इति मनूक्तमष्टरत्तिकाधिकलौकिकमाषकद्वयाधिकतोलकत्रयेण पलं भवति। तत्पञ्चविंशत्या अष्टरत्तिकाधिकलौकिकमाषद्वयाधिकत्र्यशीतितोलकानि भवन्ति। एवं तथाविधाष्टोत्तरपलशतेन लौकिकषड्भ्यधिकशतत्रये तोलकानि भवन्ति। उद्वर्त्तनविषये आह नरसिंहपुराणम्। 'यवगोधूमजैश्चूर्णैरुद्वर्त्त्योष्णेन वारिणा। प्रक्षाल्य देवदेवेशं वारुणं लोकमाप्नुयात्। पादपीठन्तु यो दद्यात् बिल्वपत्रैर्निघर्षयेत्। उष्णाम्बुना च प्रक्षाल्य सर्वपापैः प्रमुच्यते'। शारदायाम्। 'गन्धपुष्पाक्षतयवकुशाग्रफलसर्षपैः। सदूर्वैः सर्वदेवानामर्घ्यमेतदुदीरितम्'। आहरन्तीत्युपक्रम्य कात्यायनः। 'मधुपर्कं दधिमधुघृतमपि हितं कांस्ये कांस्येनेति'। अपिहितमाच्छादितम्। होमसंख्यामाह देवीपुराणे। 'होमो महादि-

पूजायां शतमष्टोत्तरं भवेत्। अष्टाविंशतिरष्टौ वा यथाशक्ति विधीयते'। द्रव्यमाह कात्यायनः। 'आज्यं द्रव्यमनादेशे जुहोतिषु विधीयते'। नरसिंहपुराणम्। 'दन्तकाष्ठस्य वक्ष्यामि समासेन प्रशस्तताम्। सर्वे कण्टकिनः पुण्याः क्षीरिणश्च यशस्विनः। अष्टाङ्गुलेन मानेन तत्प्रमाणमिहो- च्यते'। कालिकापुराणम्। 'यद्दीयते च देवेभ्यो गन्धपुष्पा- दिकं तथा। अर्घ्यपात्रस्थितैस्तोयैरभिषिच्य तदुत्सृजेत्'। शारदायाम्। 'तत्र तत्र जलं दद्यात् उपचारान्तरान्तरे'। नरसिंहपुराणम्। 'स्नाने वस्त्रे च नैवेद्ये दद्यादाचमनीय- कम्'। भविष्यदेवीपुराणयोः। 'शुचिः सुवस्त्रधृक् प्राज्ञो- मौनी ध्यानपरायणः। गतकामभयद्वन्द्वोरागमात्सर्य्यवर्जितः। आत्मानं पूजयित्वा च सुगन्धसितवाससा। सुमुहूर्त्ते यजे- द्देवान् स्वकीयासनसंस्थितान्'। सुमुहूर्त्ते पूर्वाह्नादि- काले। स्मृतिः। 'मृत्कुम्भात्ताम्रकुम्भेन स्नानं दशगुणं स्मृतम्। रूप्यैः शतगुणं प्रोक्तं हैमैः कोटिगुणं स्मृतम्। एव- मर्घ्येषु नैवेद्य बलिपूजादिषु क्रमात्। पात्रान्तरविशेषेण फलञ्चैवोत्तरोत्तरम्। विभवे सति यो मोहान्न कुर्य्यात् विधिविस्तरम्। नैतत् फलमवाप्नोति देवद्रोहः स उच्यते'। भविष्ये। 'वस्त्राङ्गुलविहीनन्तु न पात्रं कारयेत् क्वचित्'। स्मृतिः। 'देवानां दर्शनं पुण्यं दर्शनात् स्पर्शनं वरम्। स्पर्शना- दर्चनं श्रेष्ठं घृतस्नानमतःपरम्। अष्टकल्वो मन्त्रजपैः सुप्रसूनैः सुगन्धिभिः। प्राक्पुर्गङ्गाजलैः स्नानं घृतस्नानसमं बुधाः'। हयशीर्षे। 'चित्रस्थं पुण्डरीकाक्षं सविलासं सविभ्रमम्। दृष्ट्वा प्रमुच्यते पापैर्जन्मकोटिसमर्जितैः'। तथा। 'अर्चकस्य तपोयोगादर्चनस्यातिशायनात्। आभिरूप्याच्च बिम्बानां देवः सान्निध्यमृच्छति'। स्वप्नेऽपि दर्शनं पुण्यवतामेव। तथाच

ब्रह्मपुराणे इन्द्रद्युम्नं प्रति भगवद्वाक्यम्। 'मद्दर्शनमपुण्यानां स्वप्नेऽपि न हि विद्यते। त्वं पुनर्दृढभक्तित्वात् प्रत्यक्षं दृष्टवानसि'। संवत्सरप्रदीपे। 'केशवार्चा गृहे यस्य न तिष्ठति महीपते। तस्यान्नं नैव भोक्तव्यमभक्ष्येण समं स्मृतम्'। अर्चा शालग्रामशिलादिका। नरसिंहपुराणम्। 'तस्मादेकमना भूत्वा यावज्जीवप्रतिज्ञया। पूजनान्नरसिंहस्य संप्राप्नोत्यभिवाञ्छितम्'। ब्रह्मपुराणम्। 'ये पूजयन्ति तं देवं शङ्खचक्रगदाधरम्। वाङ्मनःकर्मभिः सम्यक् ते यान्ति परमं पदम्'। विद्याकरधृतम्। 'तर्जनी रूप्यसंयुक्ता हेमयुक्ता त्वनामिका। सैव युक्ता तु दर्भेण कार्य्या विप्रेण सर्वदा'। विष्णुः। 'स्नात्वा सुप्रक्षालितपाणिपादवदनः शुचिर्बद्धशिखः। दर्भपाणिराचान्तः प्राङ्मुख उदङ्मुखो वा उपविष्टो ध्यानी देवताः पूजयेत्'। मत्स्यसूक्ते। 'शस्ताः समूला दर्भाश्च गुच्छेन चाधिकं फलम्'। हारीतः। 'मार्जनार्चनवलिकर्मभोजनानि दैवेन' इति। अत्र तीर्थेनेति शेषः। वायुपुराणम्। 'दानं प्रतिग्रहो होमो भोजनं वलिरेव च। साङ्गुष्ठेन सदा कार्य्यमसुरेभ्योऽन्यथा भवेत्। एतान्येव च कर्माणि दानानि च विशेषतः। अन्तर्जानुविशेषेण तद्वदाचमनं नृप'। साङ्गुष्ठेनेति अङ्गुष्ठसहितेन करेणेत्यर्थः। अन्तर्जानु जानुनोर्मध्ये यथा बाहुर्भवति तथा कार्य्यमित्यर्थः। अतएव आचमने गोभिलः। 'दक्षिणं बाहुं जान्वन्तरा कृत्वेति'। यमः। 'इष्टं निवेदितं यद् यद्दत्तं जप्तं श्रुतं तपः। यातुधानाः प्रलुम्पन्ति शौचभ्रष्टद्विजन्मनः'। स्मृतिः। 'वृषार्त्ताः पशवो वत्साः कन्यका च रजस्वला। देवता च सनिर्माल्या घ्नन्ति पुण्यं पुराकृतम्'। गोतमः 'रात्रावुदङ्मुखः कुर्य्याद्देवकार्य्यं सदैव हि। शिवार्चनं सदाप्येवं शुचिः कुर्य्यादुदङ्मुखः'। दानः

धर्मे विष्णुं प्रति नारदवाक्यम्। 'प्रभुत्वा देव कार्य्याणि कुर्वते येऽविकत्थनाः। सन्तुष्टास्ते भवन्त्येव समायुक्तास्तावमस्तास्थयं विभो'। अविकत्थना अनात्मश्लाघाकारिणः। स्कन्दपुराणे। 'सर्ववाद्यमयी घण्टा केशवस्य सदा प्रिया। वादनाल्लभते पुण्यं यज्ञकोटिसमुद्भवम्'। संवत्सरप्रदीपे। 'यस्य घण्टा गृहे नास्ति शङ्खो वा पुरतो हरेः। कथं भागवतो नाम गीयते तस्य देहिनः'। तथा। सर्वे दोषाः प्रलीयन्ते घण्टानादे कृते हरौ'। तथा 'नदीतड़ागसम्भूतं वापीकूपह्रदोद्भवम्। गङ्गोदकं भवेत् सर्वं शङ्खेनैव समुद्धृतम्'। वराहपुराणे। 'अर्घ्यं कृत्वा तु शङ्खेन यः करोति प्रदक्षिणम्। प्रदक्षिणीकृता तेन सप्तद्वीपा वसुन्धरा'। कल्पतरौ तु दक्षिणावर्त्ते विशेषमाह। 'दक्षिणावर्त्तशङ्खेन पात्रे चौड़म्बरे स्थितम्। उदकं यः प्रतीच्छेत्तु शिरसा हृष्टमानसः। सप्तजन्मकृतं पापं तत्क्षणादेव नश्यति'। औडुम्बरे ताम्रमये। स्कान्दे 'दक्षिणावर्त्तशङ्खस्य तोयेन योऽर्चयेद्धरिम्। सप्तजन्मकृतं पापं तत्क्षणादेव नश्यति'। पूजाधारमाह गौतमीयतन्त्रम्। 'शालग्रामे मणौ यन्त्रे मण्डले प्रतिमासु च। नित्यं पूजा हरेः कार्य्या न तु केवलभूतले'। हरिरित्युपलक्षणम्। तथाच पद्मपुराणे 'शालग्रामशिलारूपी यत्र तिष्ठति केशवः। तत्र देवासुरा यक्षा भुवनानि चतुर्दश'। तत्र ब्रह्मादयो देवा इति क्वचित् पाठः अतएवास्य दाने भूचक्रदानमप्याह तत्रैव। 'शालग्रामशिलाचक्रं यो दद्याद्दानमुत्तमम्। भूचक्रं तेन दत्तं स्यात् सशैलवनकाननम्'। पूजाप्रदीपे। 'अनुलकल्पे मन्त्रं तल्लिखेत् पद्मं दलाष्टकम्। षट्कोणकर्णिकं तत्र वेदद्वारोपशोभितम्'। राघवभट्टधृतम्। 'शालग्रामे स्थावरे वा नावाहनविसर्जने। शालग्रामशिलादौ यन्नित्यं सन्निहितो

हरि:। गृहे लिङ्गद्वयं नार्च्यं गणेशद्वयमेव च। शक्तित्रयं तथा शङ्ख मत्स्यादिदशकाङ्कितम्। द्वौ शङ्खौ नार्चयेन्नैव शालग्रामशिलाद्वयम्। द्वे चक्रे द्वारकायान्तु तथा सूर्य्यद्वयं बुधः। एतेषामर्चनान्नित्यमुद्वेगं प्राप्नुयाद्गृही'। एकादश-स्कन्धेऽपि। 'उद्वासावाहने नस्त: स्थिरायामुद्धवार्चने। अस्थिरायां विकल्प: स्यात् स्थण्डिले तु भवेद्द्वयम्'। विष्णो-रर्चनमुपक्रम्य बौधायन:। 'प्रतिमास्थानेष्वप्स्वग्नौ आवा-हनविसर्जनवर्जम्'। इति रत्नाकरे। 'स्निग्धा तु श्रीकरी नित्यं रुक्षा दारिद्र्यदायिका। कृष्णा भोगवती नित्यं स्थूला एकान्तदायदा। कपिला दहते पापं ब्रह्मचर्य्येण पूजिता'। दायदा धनदा। तथा 'व्यात्ताननां तथा भग्नां विषमां बद्ध-चक्रिकां। नैकचक्रं न भग्नारं दद्यात् दुःखकालिमम्। नृसिंह-मूर्त्तिनचक्रं नार्चयेच्च सदा गृही। शायिता न प्रचलते यस्मिन् देशे च संस्थिता। तस्यास्तदासनं विद्धि ततो मूर्त्तिं प्रकल्पयेत्'। तथा 'संवत्सरन्तु यः कुर्य्यात् पूजां स्पर्शन-दर्शने। विना साङ्ख्येन योगेन मुच्यते नात्र संशय:। भक्त्या वा यदि वा भक्त्या चक्रं पूजयते नर:। अपि चेत् सुदुरा-चारो मुच्यते नात्र संशय:'। लिङ्गपुराणम्। 'कामासक्तोऽपि नैवेद्य भक्तिभावविवर्जित:। शालग्रामशिलां पुत्र योऽर्चयेत् सोऽच्युतो भवेत्। शालग्रामशिला यत्र तत्तीर्थं योजनद्वयम्। तत्र दानञ्च होमञ्च सर्वं कोटिगुणं भवेत्'। भक्तिरूपाद्यत्वेन निर्णय:। भाव: श्रद्धा शास्त्रार्थे दृढ़प्रत्ययरूपा। अन्या भक्तिरावश्यकी। तथाच भागवते। 'नालं द्विजत्वं देवत्व-मृषित्वं वा सुरात्मजा:। प्रीणनाय मुकुन्दस्य न वृत्तं न बहुज्ञता। न दानं न तपो नेज्या न शौचं न व्रतानि च। प्रीयतेऽमलया भक्त्या हरिरन्यद्विडम्बनम्'। वृत्तं यथा 'गुरु-

पूजा घृणा शौचं सत्यमिन्द्रियनिग्रहः। प्रवर्त्तनं हितानाञ्च तत्सर्वं वृत्तमुच्यते'। भक्तिश्च नवधा 'श्रवणं कीर्त्तनं विष्णोः स्मरणं पादसेवनम्। अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्। इति पुंसार्पिता विष्णौ भक्तिश्चेन्नवलक्षणा'। तथा 'कथं विना लोमहर्षं द्रवता चेतसा विना। विनानन्दाश्रुकलया शुध्येद्भक्त्या विना शमः। वाग्गद्गदा द्रवते यस्य यस्य चित्तं रोदित्यभीक्ष्णं हसति क्वचिच्च विलज्ज उद्गायति नृत्यते च मद्भक्तियुक्तो भुवनं पुनाति'। वराहपुराणे। 'संस्मृतः कीर्त्तितो वापि दृष्टः स्पृष्टोऽथवा प्रिये। पुनाति भगवद्भक्तश्चाण्डालोऽपि यदृच्छया। एतत् ज्ञात्वा तु विद्वद्भिः पूजनीयो जनार्दनः। वेदोक्तविधिना भद्रे आगमोक्तेन वा सुधीः'। सुधीरिति पृथिवीसम्बोधनम्। तथा 'यावत् सर्वेषु भूतेषु मद्भावो नोपजायते। तावदेवमुपासीत वाङ्मनःकायकर्मभिः'। हरिवंशे वलिं प्रति भगवद्वाक्यं 'पुरुषं मन्द्वेषिणां यच्च मद्भक्तद्वेषिणस्तथा। तत्सर्वं तव दैत्येन्द्र मत्प्रसादाद्भविष्यति'। अत्राङ्गिरसो। सर्वपापप्रसक्तोऽपि ध्यायन्निमिषमच्युतम्। पुनस्तपस्वी भवति पंक्तिपावनपावनः'। गारुड़े 'यद्दुर्लभं यदप्राप्यं मनसो यन्न गोचरम्। तदप्यप्रार्थितं ध्यातो ददाति मधुसूदनः'। विष्णुपुराणम्। 'ध्यायन् कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्चयन्। यदाप्नोति तदाप्नोति कलौ संकीर्त्त्य केशवम्'। योगियाज्ञवल्क्यः। 'ध्यात्वा प्रणवपूर्वन्तु दैवतन्तु समाहितः। नमस्कारेण पुष्पादि विन्यसेत्तु पृथक् पृथक्'। आग्नेये। 'तल्लिङ्गैः पूजयेन्मन्त्रैः सर्वं देवान् समाहितः। ध्यात्वा प्रणवपूर्वन्तु तन्नाम्ना सुसमाहितः। नमस्कारेण पुष्पादि विन्यसेत्तु पृथक् पृथक्'। मन्त्रतन्त्रप्रकाशे मन्त्रमधिकृत्य। नमोऽन्ते न नमो दद्यात् स्वाहान्ते द्विठ

मेव च। पूजायामाहुतौ चैव सर्वत्रायं विधिः स्मृतः'।' इति स्वाहा। स्मृतिः। पत्रत्रयान्विता दूर्वा प्रशस्ता चार्घ्य-कर्मणि'। कालिकापुराणम्। 'यद्दीयते च देवेभ्यो गन्ध-पुष्पादिकं तथा। अर्घ्यपात्रस्थतोयेन चाभिषिच्य तदुत्सृजेत्'। विष्णुधर्मोत्तरे। 'चन्दनागुरुकर्पूरं मृगसारस्तथैव च। जाती-फलं तथा दद्यादनुलेपनकारणात्। अतोऽन्यन्नैव दातव्यं किञ्चिद्देवानुलेपनम्'। विष्णुधर्मोत्तराग्निपुराणयोः। 'कुङ्कुमेन मुरामांसी कर्पूरागुरुचन्दनैः। तथान्यैश्च शुभैर्द्रव्यैरर्च-येज्जगतीपतिम्'। कालिकापुराणे। यद्यपि देव्या इत्युप-क्रम्य नैवेद्यादौ दिङ्नियम उक्तस्तथापि आकाङ्क्षया सर्वत्राप्यन्वेति। यथा 'नैवेद्यं दक्षिणे वामे पुरतोऽपि न पृष्ठतः। दीपं दक्षिणतो दद्यात् पुरतोऽपि न वामतः। वामतस्तु तथा धूपमग्रे वा न तु दक्षिणे। निवेदयेत् पुरो-भागे गन्धं पुष्पञ्च भूषणम्। दीपञ्च तथा स्थापयेच्च यथा छायां न चाश्रयेत्। विभीतकार्ककारञ्जस्नुहीच्छायां न चाश्रयेत्। स्तम्भदीपमनुष्याणामन्येषां प्राणिनां तथा' इति प्रयोगसारात्। संवत्सरप्रदीपे। 'यो हि भागवतो भूत्वा कलौ तुलसिचन्दनम्। न चार्पयति वै विष्णो न स भागवतो नरः'। आग्नेये। 'चन्दनागुरुकर्पूरकुङ्कुमोशीरपद्मकैः। अनुलिप्तो हरिर्भक्त्या वरान् भोगान् प्रयच्छति। कालेयकं सुवर्णाख्यं रक्तचन्दनमेव च। नृणां भवन्ति दत्तानि पुण्यानि पुरुषोत्तमे'। विष्णुधर्मोत्तरे। 'अनुलिप्तं जगन्नाथं ताल-वृन्तेन वीजयेत्। वायुलोकमवाप्नोति पुरुषस्तेन कर्मणा। चामरैर्वीजयेद् यस्तु देवदेवं जनार्दनम्। तिलप्रस्थप्रदानस्य फलं प्राप्नोत्यसंशयः'। राघवभट्टधृतं 'अङ्गुष्ठानामिकाभ्यां तु गन्धं मुक्तं दद्यात् कनिष्ठया। कनिष्ठाङ्गुष्ठसंयुक्ता गन्धमुद्रा प्रभोः

र्जिता' नारसिंहे। 'अपर्य्युषितनिश्छिद्रैः प्रोक्षितैर्जन्तुवर्जितैः। आत्मारामोद्भवैर्वापि पुष्पैः संपूजयेद्धरिम्' देवीपुराणम्। 'स्वयं पतितपुष्पाणि त्यजेदुपहृतानि च'। शातातपः 'शिवे विवर्जयेत् कुन्दमुन्मत्तञ्च हरौ तथा। देवीनामर्कमन्दारौ सूर्य्यस्य तगरन्तथा'। विष्णुधर्मोत्तरे 'धर्मार्जितधनक्रीतैः यः कुर्य्यात् केशवार्चनम्। उद्धरिष्यत्यसन्दिग्धं दशपूर्वान् दशापरान्'। नारसिंहे 'मल्लिकामालती जाती केतकाशोक-चम्पकैः। पुन्नागनागवकुलैः पद्मैरुत्पलजातिभिः। तुलसी-करवीरैश्च पलाशावल्लिकच्छकैः। एतैरन्यैश्च कुसुमैः प्रशस्तै-रच्युतं नरः। अर्चन् दशसुवर्णस्य प्रत्येकं फलमाप्नुयात्'। पुन्नागः पुनाङ्ग मिथिलायां प्रसिद्धः। नागो नागकेशरः। 'शारदीमल्लसाहस्रैर्मालतीवकुलाशोकशेफाली नवमालिका। अम्लानतगराङ्कोच मल्लिका मधुपिण्डिका। यूथिका अष्टपदं कुन्दं कदम्बं मधुपिङ्गलम्। पाटला चम्पकं कृष्णां लवङ्गमति-मुक्तकम्। केतकं कुरुवकं विल्वं कह्लारं वारकं द्विज। पञ्च-विंशतिपुष्पाणि लक्ष्मीतुल्यप्रियाणि मे'। कुरुवकं रक्तझिण्टि-कम्। यत्तु 'सुरभीणि तथान्यानि वर्जयित्वा च केतकीम्' इति वामनपुराणवाक्यं तन्नरसिंहेतरावतारविषयम्। 'केतकी-पत्रपुष्पञ्च भृङ्गराजस्य पत्रकम्। तुलसी कृष्णतुलसी सद्य-स्तुष्टिकरं हरेः' इति नरसिंहपुराणात्। वामनपुराणे 'पारि-भद्रं पाटला च वकुलं गिरिशालिनी। तिलकं जम्बुवनजं पीतकं तगरञ्चपि। एतानि हि प्रशस्तानि कुसुमान्यच्युता-र्चने'। गिरिशालिनी अपराजिता। जम्बुवनजं श्वेतजवा-पुष्पम्। विष्णुधर्मोत्तरे। 'रक्ताशोकस्य कुसुममतसीकुसुमं तथा'। अतसी शणः तत्रैव 'चम्पकस्य च देयानि तथा भूचम्पकस्य च'। आग्नेये। 'पद्मान्यम्बुसमुत्थानि रक्तानीव

तथोत्पले। सितोत्पलञ्च ब्रह्मस्य दयितानि सदा नृप'। तथा 'पाटला करवीरञ्च जवा जयन्तिरेव च। कुब्जकस्तगर-चम्पः कर्णिकारः कुरुण्टकः'। चम्पश्चम्पककुसुमम्। अत्र विशेषो मत्स्यतन्त्रे। 'गोपाले वर्जयेज्झिण्टीं वकचम्पकवासकं चम्पकं कनकचम्पकम्। तथाच स्कन्दपुराणे। 'जवाकुरु-ण्टकं वन्ध्यं वकं कनकचम्पकम्। विवर्णं कृमिसन्दष्टं न देयं भजताच्युतम्'। जवा रक्तजवा कुरुण्टकं पीतझिण्टि-कम्। भविष्ये। 'पद्मानि सितरक्तानि कुमुदान्युत्पलानि च। एषां पर्य्युषिता ग्राह्या कार्य्या पञ्चदिनोत्तरे। तुलस्यगस्त्य-विल्वानां नास्ति पर्य्युषितात्मता'। अगस्त्यं वकम्। योगिनीतन्त्रे। 'विल्वपत्रञ्च माघ्यञ्च तमालामलकीदलम्। कह्लारं तुलसी चैव पद्मञ्च मुनिपुष्पकम्। एतत् पर्य्युषितं न स्याद् यच्चान्यत् कलिकात्मकम्'। राघवभट्टधृतम्। 'कलि-काभिस्तथा नित्यं विना चम्पकपङ्कजैः। शुष्कैर्न पूजयेद्विष्णुं पत्रैः पुष्पैः फलैरपि'। विष्णुधर्मोत्तरे। 'उग्रगन्धीन्यगन्धीनि कुसुमानि न दापयेत्। अन्यायतनजातानि कण्टकीनि तथैव च। रक्तानि यानि धर्मज्ञ चैत्यवृक्षोद्भवानि च। यानि श्मशानजातानि यानि चाकालजानि च'। तथा 'कुटजं शाल्मलीपुष्पं शिरीषञ्च जनार्दने। निवेदितं भयं रोगं निःस्वत्वञ्च प्रयच्छति। बन्धुजीवकपुष्पाणि रक्तान्यपि च दापयेत्। अनुलक्षकुसुमदानाद्दौर्भाग्यमाप्नुयात्'। आगस्त्ये। परारोपितवृक्षेभ्यः पुष्पमानीय योऽर्चयेत्। अननुज्ञाप्य च तस्यैव निष्फलं तस्य पूजनम्'। एतत् द्विजेतरपरं 'द्विज-स्तृणैः पुष्पाणि सर्वतः स्वयमाहरेत्' इति याज्ञवल्क्यात्। देवतार्थन्तु कुसुममस्तेयं मनुरब्रवीत्' इति वचनात्। गोऽश्वमहिषमेषाणि वीवधनसतीनां पुष्पाणि स्ववदाचरेत्'

इति याज्ञवल्क्यात्। 'देवतार्थन्तु कुसुममस्तेयं मनुरब्रवीत्' इति वचनानि 'स्ववदाददीत फलानि चापरिवृतानाम्' इति गोतमवचनाच्च। अत्र विशेषो ज्ञेयः। तृणं वा यदि वा काष्ठं पुष्पं वा यदि वा फलम्। अप्रयच्छन्हि गृह्णानो हस्तच्छेदनमर्हति' इति स्मृतेः। 'देवोपरिधृतं मस्तकोपरिधृतम् अधोवस्त्रधृतमन्तर्जलप्रक्षालितञ्च पुष्पं दुष्टम्' इति हरिभक्तिनामके ग्रन्थे। अभिवाद्याभिवादककरस्थपुष्पादिप्रोक्षणात् कर्मत्वमिति केचित्। अतएव तयोरभिवादननिषेधमाह बौधायनः। 'समिदाद्युदकुम्भपुष्पान्नहस्तो नाभिवादयेत् यच्चाप्येवं युक्तमिति'। एवं युक्तं समिदादियुक्तम्। लघुहारीतः। 'जपयज्ञजलस्थांश्च समित्पुष्पकुशानलान्। दन्तकाष्ठञ्च भैक्षञ्च वहन्तं नाभिवादयेत्'। अभिवादयेदित्यनुवृत्तौ शङ्खलिखितौ। 'न पुष्पाक्षतपाणिर्नाशुचिर्नाजपन्नदेवपित्र्यं कार्य्यं कुर्वन्निति। अक्षतास्तु यवाः प्रोक्ता भृष्टाधाना भवन्ति ते' इति भट्टनारायणधृतात्। अतएव अमरसिंहः। धाना भृष्टयवे स्त्रियः। ब्राह्मणागमने तु वशिष्ठः। 'जपकाले न भाषेत व्रतहोमादिकेषु च। एतेषु चैवासक्तस्तु यद्यागच्छेद्विजोत्तमः। अभिवाद्य ततो विप्रं योगक्षेमञ्च कीर्त्तयेत्'। अत्र द्विजोत्तमपदं निषादस्थपतिवत् कर्मधारयसमासस्यैव युक्तत्वात् अपतितत्रैवर्णिकपरमिति विद्याकरः। वस्तुतस्तु विप्रपदश्रवणात्तन्मात्रपरम्। 'याचितं निष्फलं पुष्पं क्रयक्रीतञ्च निष्फलम्' इति वदन्ति। तथा 'न पुष्पच्छेदनं कुर्य्यात् देवार्थं वामहस्ततः। न दद्यात्तानि देवेभ्यः संस्थाप्य वामहस्ततः'। हारीतशातातपौ। 'समित्पुष्पकुशादीनि ब्राह्मणः स्वयमाहरेत्। शूद्रानीतैः क्रयक्रीतैः कर्म कुर्वन् पतत्यधः'। क्रये प्रतिप्रसूते ब्रह्मपुराणे 'पुष्पैर्धूपैश्च नैवेद्यैर्विविधैः

क्रयक्रिया स्मृतेः'। वीरवत् याच्ञाशून्येन विक्रेतुरुपन्यस्त-मूल्येन क्रयः। विष्णुधर्म्मोत्तरे 'भृङ्गराजस्य बिल्वस्य वकपुष्पस्य च द्विजाः। जम्ब्वाम्रवीजपूराणां पत्राणि विनिवेदयेत्'। तथा 'पुष्पाणि यदि ते न स्युः प्रशस्तैरपि पल्लवैः। दूर्वाङ्कुरैरपि ब्रह्मंस्तद्भावेनार्च्चयाच्युतम्'। वामनपुराणे। 'बिल्वपत्रं शमीपत्रं भृङ्गराजस्य पत्रकम्। तमालामलकीपत्रं शस्तं केशवपूजने'। ज्ञानमालायाम्। 'पुष्पं वा यदि वा पत्रं फलं नेष्टमधोमुखम्। पुष्पाञ्जलिविधिं हित्वा यथोत्पन्नं तथार्पणम्'। लघुहारीतः। 'स्नानं कृत्वा च ये केचित् पुष्पं गृह्णन्ति वै द्विजाः। देवतास्तन्न गृह्णन्ति भस्मीभवति काष्ठवत्'। एतत्तु द्वितीयस्नानाभिप्रायकमिति रत्नाकरः। व्यक्तं मत्स्यसूक्ते। 'स्नात्वा मध्याह्नसमये न छिन्द्यात् कुसुमं नरः। तत्पुष्पस्यार्च्चने देवि! रौरवे परिपच्यते'। स्कान्दे। 'न धात्री सफला यत्र न विष्णोस्तुलसीवनम्। तन्म्लेच्छ-सदृशं स्थानं यत्र नायान्ति वैष्णवाः। यत्र मातृपरो मर्त्त्यो यत्र द्वादशिकन्नरः। तुलसी मालती धात्री तत्र विष्णुः श्रिया सह। दूर्वा दहन्ति दुःखानि धात्री हरति पातकम्। हरीतकी हरेद्रोगं तुलसी हरते त्रयम्। तुलसीं प्राप्य यो नित्यं न करोति ममार्च्चनम्। तस्याहं प्रतिगृह्णामि न पूजां दशवार्षिकीम्'। अतएव 'गृह्णाति तुलसीं शुष्कामपि पर्य्युषितां हरिः'। तथा 'वर्ज्यं पर्य्युषितं तोयं वर्ज्यं पर्य्युषितं जलम्। न वर्ज्यं जाह्नवीतोयं न वर्ज्यं तुलसीदलम्। तुलसी-पत्रमादाय यः करोति ममार्च्चनम्। न पुनर्योनिमाप्नोति मुक्तिभागी भवेद्धि सः'। तथा 'समञ्जरिदलैर्युक्तं तुलसी-सम्भवैः क्षितौ। कुर्वन्ति पूजनं विष्णोस्ते कृतार्थाः कलौ युगे। स्नाने दाने तथा ध्याने प्राशने केशवार्च्चने। तुलसी

दहते पापं कीर्त्तने रोपणे कलौ। तुलस्यमृतनामासि सदा त्वं केशवप्रिये!। केशवार्थं चिनोमि त्वां वरदा भव शोभने। त्वदङ्गसम्भवैः पत्रैः पूजयामि यथा हरिम्। तथा कुरु पवित्राङ्गि कलौ मलविनाशिनि। मन्त्रेणानेन यः कुर्य्यात् गृहीत्वा तुलसीदलम्। पूजनं वासुदेवस्य लक्षकोटिफलं लभेत्'। राघवभट्टधृतम्। 'सद्यः पर्य्युषितं वापि निर्माल्यं नैव दुष्यति। तथान्यैर्न्न हरेस्तुष्टिस्तुलस्या तुष्यते यथा'। गरुड़पुराणे। 'गवामयुतदानेन यत् फलं लभते खग। तुलसीपत्रकेकेन तत् फलं कार्त्तिके स्मृतम्'। तथा 'तुलसीं विना या क्रियते न पूजा स्नानं न तद् यत्तुलसीं विना कृतम्। भुक्तं न तद् यत्तुलसीविवर्जितं पीतं न तद् यत्तुलसीविवर्जितम्'। अन्यत्रापि 'तुलसीदलसंमिश्रं यत्तोयं शिरसा वहेत्। सर्वतीर्थाभिषिकस्य तेन प्राप्तं फलं ध्रुवम्'। वैष्णवामृते व्यासः। 'जलक्लिन्ना भवेद् यावत्तुलसीमूलमृत्तिका। तावत्प्रीणाति भगवान् विश्वात्मा पितृभिः सह। मनःप्रसादजननी सुखसौभाग्यवर्द्धिनी। आधिव्याधिहरे नित्यं तुलसि त्वं नमोऽस्तु ते'। इति नमस्कारमन्त्रः। 'श्रियः प्रिये श्रियावासे नित्यं श्रीधरसत्कृते। भक्त्या दत्तं मया देवि गृहाणार्घ्यं नमोऽस्तु ते। श्रियं देहि यशो देहि कीर्त्तिमायुस्तथा सुखम्। बलं पुष्टिं तथा धर्मं तुलसि त्वं प्रयच्छ मे'। इत्यनेन पूजा। विष्णुधर्मोत्तरे। 'पुष्पाभावेऽपि देयानि पत्राणि च जनार्द्दने। पत्राभावे जलं देयं तेन पुण्यमवाप्यते। न रत्नैर्न सुवर्णैश्च न च वित्तेन भूरिणा। तथा प्रसादमायाति यथा पुष्पैर्जनार्द्दनः'। ज्ञानमालायाम्। 'नाक्षतैरर्च्चयेद्विष्णुं न तुलस्या विनायकम्। न दूर्व्वया यजेद्दुर्गां नास्नातश्चैर्दिवाकरम्'। विष्णुधर्मोत्तरे। 'धूपदः सर्वमाप्नोति दीपदः सर्वमश्नुते'।

वामनपुराणे। 'वृहिकाख्यं कणं दारु सिह्लकं सागुरु' सितम्।
शङ्खं जातीफलं श्रीशे धूपानि स्युः प्रियाणि वै'। वृहिका
मांसीकणं मणिद्याख्यगुग्गुलुः। सितं कर्पूरम्। सितेति-
पाठे सिता शर्करा। शङ्खो नखी श्रीशे विष्णौ। कालिका-
पुराणे। 'गन्धं पुष्पं धूपदीपौ उपचारांस्तथा परान्।
ज्ञाताविवेद्य देवेभ्यो नरो नरकमाप्नुयात्। न भूमौ वितरेद्दूपं
नासने न घटे तथा। यथातथा धारगतं कृत्वा तं विनि-
वेदयेत्'। तथा 'सर्वं सहा वसुमती सहते न त्विदं द्वयम्।
अकार्य्यपादघातञ्च दीपतापं तथैव च'। तथा 'नैव निर्वा-
पयेद्दीपं देवार्थमुपकल्पितम्। दीपहर्त्ता भवेदन्धः काणो
निर्वापको भवेत्'। विष्णुधर्मोत्तरे। 'यावदक्षिनिमेषाणि
दीपो देवालये ज्वलेत्। तावद्वर्षसहस्राणि स्वर्गलोके महो-
यते'। तथा 'यः कुर्य्यात्तेन कर्माणि स्यादसौ पुष्पितेक्षणः'।
तेन देवदत्तदीपेन। विष्णुसंहितायाम्। 'घृतं तिलतैलं
विना न किञ्चिद्दीपार्थं' इति। दद्यादित्यनुवीयते। नरसिंह-
पुराणे। 'मोचकं पनसं जम्बूं तथान्यत्कदलीफलम्। प्राची-
नामलकं श्रेष्ठं मधुकोडुम्बरं तथा। यत्नपक्कमपि ग्राह्यं
कदलीफलमुत्तमम्'। प्राचीनामलकं करमर्दकम्। वराह-
पुराणम्। 'अपर्य्युषितपक्वानि दातव्यानि प्रयत्नतः। खण्डा-
ज्यादिकृतं पक्वं नैव पर्य्युषितं भवेत्' ब्रह्माण्डपुराणे'।
'ताम्बूलमुज्ज्वलं दद्यात् यो विप्रेभ्यः समाहितः। शिवाय
केशवायाथ नाकलोके स पूज्यते'। श्रीभागवते। 'यद्यदिष्ट-
तमं लोके यच्चापि प्रियमात्मनः। तत्तन्निवेदयेन्मह्यं तदान-
न्त्याय कल्पते'। मह्यं वासुदेवाय। विष्णुसंहितायाम्।
नाभक्ष्यं नैवेद्यार्थे भक्ष्येष्वप्यजामहिषीक्षीरे वर्जयेत्। पञ्चनख-
मत्स्यवराहमांसानि चेति'। नाभक्ष्यमिति यद्वर्णस्य यदभक्ष्यं

स्वरूपतो लशुनादि तत्तेन न देयम्। न तु रात्रौ दध्याद्यपि।
पद्मनखस्य शशातिरिक्तः। 'मार्गं मांसं तथा छागं शाशं
समनुयुज्यते। एतानि हि प्रियाणि स्युः प्रयोज्यानि वसु-
न्धरे'। इति वराहपुराणे भगवद्वाक्यात्। तथा 'माहिषञ्चा-
विकं छागमयाज्ञिकमुदाहृतम्। माहिषं वर्जयेन्मांसं क्षीरं
दधि घृतं तथा'। देवलः। 'चाण्डालेन शुना वापि दृष्टं
हविरयाज्ञिकम्। विडालादिभिरुच्छिष्टं दुष्टमन्नं विवर्जयेत्।
अन्यत्र हिरण्योदकस्पर्शात्' इति। कालिकापुराणे। 'यद्यत्
गृह्यते वस्त्रमलङ्कारादि किञ्चन। तेषां दैवतमुद्दिश्य कृत्वा
प्रोक्षणपूजने। उत्सृज्य मूलमन्त्रेण प्रतिनाम्ना निवेदयेत्'।
प्रोक्षणादिलक्षणन्तु। 'उत्तानेन तु हस्तेन प्रोक्षणं समुदा-
हृतम्। न्यञ्चताभ्युक्षणं प्रोक्तं तिरश्चावोक्षणं स्मृतं' विष्णु-
धर्मोत्तरे। द्रव्याणां तत्तद्दैवतमभिधाय। 'यत्त्वन्तु सर्व-
दैवत्यं यदनुक्तं द्विजोत्तमाः। तज्ज्ञेयं विष्णुदैवत्यं सर्वं वा
विष्णुदैवतम्'। गोतमः। 'अन्तर्जानु करं कृत्वा सकुशन्तु
तिलोदकम्। फलांशमभिसन्धाय प्रदद्यात् श्रद्धयान्वितः'।
योगियाज्ञवल्क्यः। 'अदृष्टविग्रहो देवो भावग्राह्यो मनोमयः।
तस्योङ्कारः स्मृतो नाम तेनाहूतः प्रसीदति'। विष्णुपुराणे।
'ओङ्कारो भगवान् विष्णुस्त्रिधामा वचसाम्पतिः। तदुच्चारण-
तस्ते तु विनाशं यान्ति राक्षसाः। त्रिधामा ओङ्कारो-
कारमकाररूपाणि सामान्युत्पत्तिस्थानानि यस्य स तथा।
तथा 'गत्वा गत्वा निवर्त्तन्ते चन्द्रसूर्य्यादयो ग्रहाः। अद्यापि
न निवर्त्तन्ते द्वादशाक्षरचिन्तकाः'। नारसिंहे। 'सर्ववेदान्त-
सारार्थसंसारार्णवतारकः। गतिरष्टाक्षरो नृणामपुनर्भवकाङ्क्षि-
णाम्। यस्य यावांस्तु विश्वासस्तस्य सिद्धिस्तु तावती।
एतावानिति नैतस्य प्रभावः परिमीयते'। तथा 'कृत्वा

पीताम्बरमव्ययं शङ्खचक्रगदाधरम्। एकाग्रमानसो ध्यात्वा विष्णुं कुर्य्याज्जपं द्विजः'। तथा 'अष्टाक्षरस्य मन्त्रस्य ऋषिर्नारायणः स्वयम्। छन्दश्च देवी गायत्री परमात्मा च देवता। नमो नारायणायेति मन्त्रः सर्वार्थसाधकः। भक्तानां भजतां तात स्वर्गमोक्षप्रदायकः'। जपमानसे चेति गणपाठात् व्यक्तवचने मानसे च जपशब्दार्थसिद्धिः। देवतां ध्यायन् जपं कुर्यात् इत्यादिना ध्यानमत्राङ्गमुक्तम्। यत्तु। 'मन्त्रार्थं चिन्तनाभ्यासः स उक्तो मानसो जपः'। इत्यनेन शब्दार्थयोश्चिन्तनमुक्तम्। तत्रापि जपशब्दबलात् शब्दचिन्तनं प्रधानम् अर्थचिन्तनन्त्वङ्गम्। तथाच योगियाज्ञवल्क्यः। 'वाच्यः स ईश्वरः प्रोक्तो वाचकः प्रणवः स्मृतः। वाचकेऽपि च विज्ञाते वाच्य एव प्रसीदति'। अतएव 'मनसा धारयन् मन्त्रं जिह्वोष्ठौ नैव चालयेत्। अभावे त्वक्षमालायाः कुशग्रन्थ्या च पर्वणा'। हारीतः। 'मन्त्रार्थज्ञो जपन् जुह्वत्तथैवाध्यापयन् द्विजः। स्वर्गलोकमवाप्नोति नरकन्तु विपर्य्यये'। नरकश्रुतिः निन्दा मन्त्रार्थज्ञानप्रशंसापरा मन्त्रैकवाक्यत्वात्। न तु सर्वथा निषेधपरा। अन्यथा 'वेदार्थोपनिबन्धृत्वात् प्राधान्यं हि मनोः स्मृतम्। मन्वर्थ-विपरीता या सा स्मृतिर्न प्रशस्यते' इति बृहस्पत्युक्तविरुद्धा स्यात्। मनुस्तु क्रमाच्छ्रैष्ठ्यमाह। 'अज्ञेभ्यो ग्रन्थिनः श्रेष्ठा-ग्रन्थिभ्यो धारिणो वराः। धारिभ्यो ज्ञानिनः श्रेष्ठा ज्ञानिभ्यो व्यवसायिनः'। ग्रन्थिनो ग्रन्थसापेक्षपाठिनः। धारिणस्तद-नपेक्षपाठिनः। ज्ञानिनोऽधीतशास्त्रार्थज्ञाः। एवं 'वेदस्या-ध्ययनं सर्वं धर्मशास्त्रस्य चापि यत्। अज्ञानतोऽर्थं तत्सर्वं तुषाणां कण्डनं यथा' इति व्यासवचनं तथैव व्याख्येयम्। व्यवसायिनः शास्त्रार्थानुष्ठायिनः। जपविधिमाह पुरश्चरण-

चन्द्रिकायाम्। 'कनिष्ठानामिका मध्या चतुर्थी तर्जनी मता। तिस्रोऽङ्गुल्यस्त्रिपर्वाणो मध्यमा चैकपर्विका। पर्वद्वयं मध्यमाया जपकाले विवर्जयेत्। एवं मेरुं विजानीयात् दूषितं ब्रह्मणा स्वयम्। आरभ्यानामिकामध्यात् प्रदक्षिणक्रमेण तु। तर्जनीमूलपर्यन्तं जपेद्दशसु पर्वसु। अङ्गुलिर्न वियुञ्जीत किञ्चित् सङ्कोचयेत्तलम्। अङ्गुलीनां वियोगे तु छिद्रेषु स्रवते जपः। अङ्गुल्यग्रेषु यज्जप्तं तज्जप्तं मेरुलङ्घने। पर्वसन्धिषु यज्जप्तं तत्सर्वं निष्फलं भवेत्'। मन्त्रतन्त्रप्रकाशे 'तत्राङ्गुलिजपं कुर्वन् साङ्गुष्ठाङ्गुलिभिर्जपेत्। अङ्गुष्ठेन कृतं कर्म विना तदफलं भवेत्'। मन्त्रकोषे। 'हृदये हस्तमादाय तिर्य्यक् कृत्वा कराङ्गुलीः। आच्छाद्य वाससा हस्तौ दक्षिणेन सदा जपेत्'। कल्पान्तरमाह 'अनुलोमविलोमस्थैर्विन्दुयुक्ताष्टकाक्षरैः। अमेरुकैः साष्टवर्गैः कृतया वर्णमालया। प्रत्येकं वर्णयुङ्मन्त्राज्जप्ताः स्युः क्षिप्रसिद्धिदा'। तामाहुः 'अकारादिलकारान्तं पञ्चाशद्वर्णसूत्रकम्। क्षकारं मेरुसंस्थाने लकारादिविलोमतः। वर्गाष्टकविभेदेन शतमष्टोत्तरं भवेत्। वैरिमन्त्रा अपि नृणामन्ये मन्त्राश्च किं पुनः'। अकारादिलकारान्तता अनुलोमता लकाराद्यकारान्तता विलोमता क्षकारस्तु मेरुतया न संख्याघटकः। साष्टवर्गैः अकचटतपयशवर्गयुतैः। 'एकैकान्तरितं मन्त्रं जपेदेवं फलप्रदम्'। अन्यत्र च। 'मूलनाडीगतानादिक्षान्तवर्णान् विभाव्य च। अर्णं विन्दुयुतं कृत्वा श्रेष्ठं मन्त्रं जपेत् पुनः अकारादिषु संयोज्य तथाकादिषु च क्रमात्। तदा लिपिर्भवेद्वर्णमालाष्टशतसंख्यया। अनया सर्वमन्त्राणां जपः सर्वार्थसाधकः। ग्रथिता शक्तिसूत्रेण' इति तन्त्रान्तरदर्शनात्। कुण्डलिनी सूत्रत्वेन भावनीया। जपसमर्पणमाह 'गुह्यातिः

गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत् कृतं जपम्। सिद्धिर्भवतु मे देव त्वत्प्रसादात् त्वयि स्थिते। मन्त्री श्लोकं पठित्वा तु दक्षहस्तेन वैष्णवे। मूलानुनार्घ्यतोयेन दक्षहस्ते निवेदयेत्'। अनु-
रेवमः। विद्याकरधृतम्। 'सहस्रं वा शतं वापि दश वानु-
दिनं जपेत्। कुर्य्यादष्टाधिकं तेषामिति जप्ये विधिः स्मृतः'।
तन्त्रान्तरे। 'विक्षेपादथबालस्याज्जपहोमार्च्चनान्तरा। उत्ति-
ष्ठति तदा न्यासं षडङ्गं विन्यसेत् पुनः'। पञ्चरात्रे 'अपवित्र-
करो नग्नः शिरसि प्रावृतोऽपि वा। प्रलपन् वा जपेद् याव-
त्तावन्निष्फलमुच्यते'। विष्णुपुराणे। 'सर्ववेदेषु यत् पुण्यं
सर्वतीर्थेषु यत् फलम्। तत् फलं नर आप्नोति स्तुत्वा देवं
जनार्दनम्'। स्कान्दे। 'अहन्यहनि यो मर्त्यो गीताध्यायन्तु
संपठेत्। द्वात्रिंशदपराधैश्च अहन्यहनि मुच्यते'। ते च अप-
राधा वराहपुराणे दर्शिताः। श्रीभागवते 'नानातन्त्रविधानेन
कलावपि तथा शृणु। ध्येयं सदा परिभवघ्नमभीष्टदोहं तीर्था-
स्पदं शिवविरिञ्चिनुतं शरण्यम्। भृत्यार्त्तिहं प्रणतपाल-
भवाब्धिपोतं वन्दे महापुरुष ते चरणारविन्दम्। त्यक्त्वा सुदु-
स्त्यजसुरेप्सितराज्यलक्ष्मीं धर्मिष्ठ आर्य्यवचसा यदगादरण्यम्।
मायामृगं दयितयेप्सितमन्वधावद् वन्दे महापुरुष ते चरणार-
विन्दम्। एवं युगानुरूपाभ्यां भगवान् युगवर्त्तिभिः। मनुजै-
रिज्यते राजन् श्रेयसामीश्वरो हरिः। स्तुत्वा प्रसीद भगव-
न्निति वन्देत दण्डवत्। शिरो मत्पादयोः कृत्वा बाहुभ्याञ्च
परस्परम्। प्रपन्नं पाहि मामीश भीतं मृत्युभयार्णवात्'
इति भगवद्वाक्यम्। स्मृतिः। 'न देवं पृष्ठतः कृत्वा प्रणामं
कथिदाचरेत्। वरमुत्थाय कर्त्तव्यं न वृथा भ्रमणञ्चरेत्'।
एतद्विष्णोरिति। 'पश्चात् कृत्वा तु यो देवं भ्रमित्वा प्रणमे-
न्नरः। तस्यैहिकं फलं नास्ति न परत्र दुरात्मनः। तथा

भ्रान्त्वा चतुःपार्श्वं श्रीकृष्णं यो नमेन्नरः। साष्टाङ्गप्रणिपातेन तस्य मुक्तिः करे स्थिता'। स्मृतिः। 'अर्घ्यं कृत्वा तु शङ्खेन यः करोति प्रदक्षिणम्। प्रदक्षिणी कृता तेन सप्तद्वीपा वसुन्धरा'। वामनपुराणे। 'प्रदक्षिणं यस्त्रिः कुर्य्यात् साष्टाङ्गकप्रणामकम्। दशाश्वमेधस्य फलं प्राप्नुयान्नात्र संशयः'। नारसिंहे। 'उरसा शिरसा दृष्ट्या वचसा मनसा तथा। पद्भ्यां कराभ्यां जानुभ्यां प्रणामोऽष्टाङ्ग ईरितः'। विष्णुधर्म्मोत्तरे। 'जानुभ्याञ्चैव पाणिभ्यां शिरसा च विचक्षणः। कृत्वा प्रणामं देवेशे सर्व्वान् कामानवाप्नुयात्'। 'के धृताञ्जलिभिर्नेमुः' इति भागवतीयात्। शिरोऽञ्जलिसंयोगोऽपि नमस्कारः स्मृतिः। 'देवताप्रतिमां दृष्ट्वा यतिञ्चैव त्रिदण्डिनम्। नमस्कारं न कुर्य्याच्चेदुपवासेन शुध्यति'। ब्रह्मपुराणे। 'यत् किञ्चित् क्रियते कर्म सदा सुकृतदुष्कृतम्। तत् सर्वं त्वयि संन्यस्तं त्वत्प्रयुक्तः करोम्यहम्' इत्यनेन समर्पयेत्। भागवते। 'मन्त्रहीनं क्रियाहीनं भक्तिहीनं जनार्दन!। यत् पूजितं मया देव! परिपूर्णं तदस्तु मे'। पूजानन्तरं शङ्खपूजामाह मन्त्रतन्त्रप्रकाशे। 'पूजयेद्गन्धपुष्पाद्यैः शङ्खं वै देववद् बुधः'। नारसिंहे 'अतःप्रभृति निर्माल्यं मा लङ्घय महामते! नरसिंहस्य देवस्य तथान्येषां दिवौकसाम्। भविष्ये 'यश्च पूजयते देवान् ब्राह्मणो द्रव्यलोभतः। भृत्या भरतशार्दूल स याति नरकं ध्रुवम्'। भृत्या वेतनेन। देवलः 'इष्टं दत्तमधीतञ्च तपं वाप्यात्मनातपः। प्रयच्छत्यपरेभ्यश्च धनार्थं धर्मविक्रयी'। सेवत्सरप्रदीपे। 'विष्णालयसमीपस्थान् विष्णुसेवा समागतान्। चाण्डालान् पतितान् वापि न स्पृष्ट्वा स्नानमाचरेत्। उत्सवे वासुदेवस्य स्नायाद् योऽशुचिशङ्कया। तादृशं कश्मलं दृष्ट्वा सवासा जलमाविशेत्'।

अथ द्वादशीनियमाः। द्वादश्यामपि विष्णुपूजनम्। एकादश्यां प्रकुर्वन्ति उपवासं मनीषिणः। उपासनाय द्वादश्यां विष्णोर्यद्वदियन्तथा'। इति भविष्यपुराणात्। यद्वत् यथा द्वादश्यां विष्णूपासनाय एकादश्यामुपवासं प्रकुर्वन्ति तथा इयमपि षष्ठीयुक्ता सप्तमी उपोष्या सप्तम्यां सूर्य्योपासनाया इत्यर्थः। तत्र ब्रह्माण्डपुराणम्। 'कांस्यं मांसं सुरां क्षौद्रं लोभं वितथभाषणम्। व्यायामञ्च व्यवायञ्च दिवास्वप्नं तथाञ्जनम्। शिला पिष्टं मसूरांश्च द्वादशैतानि वैष्णवः। द्वादश्यां वर्जयेन्नित्यं सर्वपापैः प्रमुच्यते। पुनर्भोजनमध्वानं यानमायासमैथुनै। उपवासफलं हन्युर्दिवा निद्रा च पञ्चमी'। हद्धशातातपः। 'उपवासं द्विजः कृत्वा ततो ब्राह्मणभोजनम्। कुर्य्यात्तथास्य सगुण उपवासो हि जायते'। सगुणः साङ्गः। नारायणमन्त्रजपश्च पाश्चात्यनिर्णयामृते कात्यायनः। 'मिथ्यावादं दिवास्वप्नं बहुशो जलसेवने। अष्टाक्षरं व्रती जप्त्वा शतमष्टोत्तरं शुचिः'। तथा 'मन्त्रं निवेद्य हरये निवेद्योपोषणं व्रती। द्वादश्यां पारणं कुर्य्याद्वर्जयित्वाप्युपोदकीम्'। उपोदकी पूतिकाशाकम्। कूर्मपुराणे। 'कांस्यं मांसं सुरां क्षौद्रं हिंसां तैलमसत्यताम्। द्यूतक्रीड़ां दिवानिद्रां व्यायामं क्रोधमैथुनम्। द्वादश्यां द्वादशैतानि वैष्णवः परिवर्जयेत्'। संवत्सरप्रदीपे। 'अभ्यङ्गञ्च परान्नञ्च तैलं निर्माल्यलङ्घनम्। तुलसी चयनं द्यूतं पुनर्भोजनमेव च। वस्त्रपीड़ां तथाक्षारं द्वादश्यां वर्जयेद्बुधः। अभ्यङ्गो येन केनापि तैलं तिलतैलं साष्टांवपि निषिद्धम्। स्मृतिः। 'घृतञ्च सार्षपं तैलं यत्तैलं पुष्पवासितम्। अदुष्टम् पक्वतैलञ्च स्नानाभ्यङ्गेषु नित्यशः'। अभ्यङ्गे द्वादशीतरपरं नित्यश इति पर्ववारादावपि। वारे द्रव्यदानेनापि प्रतिप्रसवमाह स्मृतिः। 'रवौ पुष्पं गुरौ दूर्वां

भूमिं भूमिजवासरे। भार्गवे गोमयं दद्यात्तैलदोषोपशान्तये'। दद्यात्तैले इति शेषः। सुरिसम्भोषे। 'कांस्यं मांसं मसूरञ्च चणकं कोरदूषकम्। शाकं मधु परान्नञ्च त्यजेदुपवसन् स्त्रियम्'। निर्माल्य लङ्घनमन्यत्रापि निषिद्धमत्राधिकदोषकरं व्रतहानिकरं वा। चारं वस्त्रस्य। 'मन्दमङ्गलषष्ठीषु द्वादश्यां श्राद्धवासरे। वस्त्राणां चारसंयोगो दहत्या सप्तमं कुलम्'। इति यमवचनात्। 'गुर्वन्नं मातुलान्नञ्च श्वशुरान्नं तथैव च। पितुः पुत्रस्य चैवान्नं न परान्नमिति स्मृतम्। केशवार्चा गृहे यस्य नातिष्ठति महीपते!। तस्यान्नं नैव भोक्तव्यमभक्ष्येण समं मतम्'। अर्चा शालग्रामादिप्रतिमा। यद्यपि यमेन 'परपाकेन भक्तेन पुष्टस्य गृहमेधिनः। इष्टं दत्तं तपोऽधीतं यस्यान्नं तस्य तद्भवेत्। इत्यान्नेन तु भुक्तेन भार्य्यां समधिगच्छति। यस्यान्नं तस्य ते पुत्रा अन्नाद्रेतः प्रवर्त्तते'। हारीतजमदग्निभ्याम्। 'ब्राह्मणान्नेन दारिद्र्यं चत्रियान्नेन प्रेष्यताम्। वैश्यान्नेन तु शूद्रत्वं शूद्रान्नेनरकं व्रजेत्' इति परान्नं सामान्यतो निषिद्धम्। तथापि अधिकदोषकरं व्रतहानिकरं वा। वराहपुराणम्। 'अष्टम्याञ्च चतुर्दश्यां षष्ठ्याञ्च द्वादशीन्तथा। अमावास्यां चतुर्थ्याञ्च मैथुनं योऽधिगच्छति। तिर्य्यग् योनौ समागच्छेन्मम लोकं न गच्छति'। मम विष्णोः। द्वादशीमधिकृत्य कात्यायनः। प्रातःस्नात्वा हरिं पूज्य उपवासं समर्पयेत्। अज्ञानतिमिरान्धस्य व्रतेनानेन केशव!। प्रसीद सुमुखो नाथ! ज्ञानदृष्टिप्रदो भव। कृष्ण कृष्णकृपालुस्त्वमगतीनां गतिर्भव। संसारार्णवमग्नानां प्रसीद मधुसूदन'!। विष्णुधर्म्मोत्तरे। 'द्वादश्याः प्रथमः पादो हरिवासरसंज्ञकः। तमतिक्रम्य कुर्वीत पारणं विष्णुतत्परः'। पारणकालः। स्वल्पापि द्वादशी। ननु 'त्रयोदश्यां यदा न स्याद्

दशी घटिकाद्वयम्। उपोष्या दशमीविद्धा सर्वैरेकादशी तदा' इति नारदीयवाक्यात् घटिकाद्वयमेव पारणकालः। घटिकादण्डः। यथा ब्रह्मसिद्धान्ते। 'घटी षष्ट्या दिवानिशम्'। इति अत्र केचित् घटिकाद्वयमिति पारणकालोपलक्षणम् अन्यथा तदधिकेऽपि द्वादशीनिर्गमे प्रातर्वक्ष्यावलोकनविद्धाप्येकादश्युपोष्या स्यात् न च घटिकात्रयादिषु अपि द्वित्वमस्तीति तत्रापि तद्वाक्यादर इति वाच्यं पूर्वसंख्यानाशेनैवोत्तरसंख्योत्पादनात्। अन्यथा पशुना यजेत इत्यत्र एकत्वसंख्याविवक्षायामपि उपात्तपश्ववयवविनाशे पश्वन्तरावयवेन सहानुष्ठानं प्रतिपद्येत। तस्माद् यथा काकेभ्यो दधि रक्षतामित्यनेन उपघातकमात्रं लक्ष्यते तेन श्वादिभ्योऽपि रक्षत एव। तथाच भट्टपादाः। 'काकेभ्यो रक्षतामन्नमिति बालोपदेशतः। उपघातप्रधानत्वात् श्वादिभ्यो न हि, रक्षते'। तथाच घटिकाद्वयमित्यनेनापि पारणयोग्यकालोऽपि लक्ष्यत इत्याहुः तन्न। प्रत्यक्ष एव पूर्वसंख्याप्रत्ययनाशादुत्तरसंख्याप्रत्ययोत्पादनियमः शाब्दबोधे तु न तथा नियम इति सिद्धान्तः। पशुना यजेतेत्यत्र विधेयविशेषणत्वेन एकत्वस्य विवक्षितत्त्वाद्द्वित्वव्यवच्छेदः। अत्र तु कालद्वयं त्रयं वापीत्यनात्ययोक्तेः स्वल्पेति श्रवणात् जलेन पारणाश्रवणाच्च। घटिकाद्वयं न नियमः किन्तूपलक्षणम्। तथाच नारदीये। 'एकादश्याः कला ह्येका द्वादश्याश्च कलाद्वयम्। द्वादश द्वादशीर्हन्ति त्रयोदश्यान्तु पारणम्। कलाद्वयं त्रयं वापि द्वादशी च यदा भवेत्। पारणे मरणे वापि तिथिस्तात्कालिकी स्मृता'। तात्कालिकी न तु उपवासादिवत्तिथ्यन्तरसहायतापि। तथा 'स्वल्पायामपि राजेन्द्र! द्वादश्यामरुणोदये। स्नानार्चनक्रियाः कार्य्या दानहोमादिसंयुताः'। गारुड़े। 'यदा त्वल्पा

द्वादशी स्यादपकर्षस्ततो भवेत्'। अपकर्षः कर्मण इति शेषः। भागवतटीकायाम्। 'कलार्द्धां द्वादशीं दृष्ट्वा निशीथा-दूर्द्धमेव हि। आमध्याह्नाः क्रियाः सर्वाः कर्त्तव्याः शम्भु-शासनात्'। निशीथात् महानिशायाः। 'विशेषतो निशीथे च शुभं कर्म न शर्मणे। अतो विवर्जयेत् प्राज्ञो दानादिषु महानिशाम्' इत्यनेन निशीथमहानिशयोरेकत्वश्रुतिः पूर्ववच-नेऽरुणोदय इति श्रुतेश्च। स कालश्च स्कान्दनारदीययोः। 'उदयात् प्राक् चतस्रस्तु नाड़िका अरुणोदयः'। तथा हला-युधधृता स्मृतिः। 'प्रदोषे घटिकायुग्मं प्रभाते घटिकाद्वयम्। दिनवत् सर्वकर्माणि कारयेन्न विचारयेत्'। अत्रापि सामर्थ्यं कात्यायनः। 'सन्ध्यादिकं भवेन्नित्यं पारणन्तु निमित्ततः। अद्भिस्तु पारयित्वा तु नैत्यिकान्ते भुजिक्रिया'। देवलः। 'सङ्कटेऽरित्रये प्राप्ते द्वादश्यां पारयेत् कथम्। अद्भिस्तु पारणं कृत्वा पुनर्नक्तं न दोषभाक्'। नक्तं नक्तव्रतम्। एतदप्युपलक्षणं सङ्कल्पविषये इत्युपक्रमात्। अद्भिः पारण-विधानात्तन्नियमः। द्वादश्यनिगमे तु नारदीयं 'त्रयोदश्यान्तु शुद्धायां पारणं पृथिवीजलम्। शतयज्ञाधिकं वापि नरः प्राप्नोत्यसंशयम्'। पारणं तुलसीमिश्रितनैवेद्येन कुर्य्यात्। तथाच स्कान्दपुराणम्। 'कृत्वा चैवोपवासन्तु भोक्तव्यं द्वादशी-दिने। नैवेद्यं तुलसीमिश्रं हत्याकोटिविनाशनम्'। अस्य व्रतस्य न व्रतिनां व्रते इति विष्णुवचनादशौचेऽपि कर्त्तव्यता अत्र व्रतिनामारब्ध व्रतिनामित्यर्थतया अशौचे आरम्भो न कार्य्यः। विष्णुधर्मोत्तरे। 'असम्भाष्यान् हि सम्भाष्य तुलस्याः शालिकादलम्। आमलक्याः फलं वापि पारणे प्राश्य शुध्यति'। संवत्सरप्रदीपे। 'यस्य नाभौ स्थितं पद्मं मुखे शिरसि कर्णयोः। तुलसीसम्भवं नित्यं तीर्थैस्तस्य मखैश्च

क्षिम्। युक्तो यदि महापापैः सुकृतं नार्जितं यदि। तथापि गीयते मोक्षस्तुलसी भक्षिता यदि'। विद्याकरधृतानि। 'यः कश्चिद्वैष्णवो लोके मिथ्याचारोऽप्यनाश्रमी। पुनाति सकलान् लोकान् शिरसा तुलसीं वहन्। विष्णोःशिरःपरिभ्रष्टां भक्त्या यस्तुलसीं वहेत्। सिद्ध्यन्ति तस्य कार्य्याणि मनसा चिन्तितान्यपि। न धारयन्ति ये मालां तुलसीकाष्ठसम्भवाम्। नरकान्न निवर्त्तन्ते दग्धाः कोपाग्निना हरेः। अरुद्राक्षधरो भूत्वा यत् यत् कर्म च वैदिकम्। करोति जपहोमादि तत् सर्वं निष्फलं भवेत्'। स्कान्दे। 'ध्यानधारणहीनोऽपि रुद्राक्षं धारयेत्तु यः। सर्वपापविनिर्मुक्तः स याति परमां गतिम्'। तथा 'कृत्वा चैवोपवासन्तु भोक्तव्यं द्वादशीदिने। नैवेद्यं तुलसीमिश्रं हत्याकोटिविनाशनम्'।

अथ स्वदत्तनैवेद्यभक्षणम्। ननु दत्तस्याविनियोज्यत्वात् स्वदत्तनैवेद्यं कथं भुञ्जीतेति चेत्। वचनात्तथा यथा स्वदत्तेऽपि तस्मात् क्रयणात् स्वोपयोगः। तथाच आश्वमेधिके पर्व्वणि युधिष्ठिरं प्रति व्यासवचनम्। 'दत्तैषा भवता मह्यं तां ते प्रति ददाम्यहम्। हिरण्यं दीयतामिभ्यो ब्राह्मणेभ्यो धरास्तु ते'। यथा वा मध्यमपिण्डभोजनं पत्न्याः। तथाच यमः। 'स्नाता वै मध्यमं पिण्डं पत्नी प्राश्नाति वाग्यता'। शङ्खलिखितौ। 'पत्नी वा मध्यमं पिण्डमश्नीयादार्त्तवस्नाता'। वायुपुराणे। 'पत्नैर प्रजार्थं दद्याच्च मध्यमं मन्त्रपूर्व्वकम्'। सामगानां मन्त्रस्तु। 'आधत्त पितरो गर्भं कुमारं पुष्करस्रजम्'। यथेह पुरुषः स्यात् इति। मत्स्यपुराणे। 'पत्नीन्तु मध्यमं पिण्डमाशयेद्विनयान्विताम्। आधत्त पितरोगर्भं मन्त्रः सन्तानवर्द्धनम्'। एष मन्त्रः पौराणिकत्वात् साधारणः। प्रकृते तु विष्णुधर्म्मोत्तरम्। 'पत्रं पुष्पं फलं तोयमन्नपानाद्य-

नीषधम्। अनिवेद्य न भुञ्जीत यदाहाराय कल्पितम्
अनिवेद्य हरेर्भुञ्जन् सप्तजन्मानि नारकी'। स्मृतिः 'भक्ता
वत्सःपत्नी विष्णोः स्मृतिः सैवा स्ववेश्मनि। स्वभोज्यस्यार्पणं
दानं फलमिन्द्रादिदुर्लभम्'। स्वभोज्यस्य मनूक्तवैश्वदेवाद्य-
वशिष्टरूपस्य। यथा 'अघं स केवलं भुङ्क्ते यः पचत्यात्म-
कारणात्। यज्ञशिष्टाशनं ह्येतत् सतामन्नं विधीयते।
भुक्तवत्सु च विप्रेषु स्वेषु भृत्येषु चैव हि। भुञ्जीयातां ततः
पश्चादवशिष्टन्तु दम्पती'। अतएव स्मृतिः। 'यस्य चाग्नौ
न हूयेत यस्य चाग्रं न दीयते। न तद्भोज्यं द्विजातीनां
भुक्त्वा तूपवसेदहः'। शङ्खलिखितौ। 'न तदश्नीयाद्यदन्नं
देवपितृमनुष्यार्थं न कुर्य्यादिति'। अत्र पित्रर्थमित्यनेन
पितृवलिनित्यश्राद्धावशिष्टं प्रतीयते। अन्यत्र मार्कण्डेय-
पुराणे। 'देवतातिथिभृत्येषु भूतेष्वभ्यागतेषु च। अभुक्तवत्सु
येऽश्नन्ति तद्दत्यिवग्निपच्चिषु। दुष्टान्नपूयनिर्यासभुजः सूची-
मुखास्तु ते। जायन्ते गिरिवर्ष्माणः पश्यैते यादृशा नराः'।
नरा इत्यत्र कर्मकर्त्तृतोभयप्राप्तौ कर्त्तृत्वमेव। 'अपादान-
सम्प्रदानकरणाधारकर्मणाम्। कर्त्तुश्चान्योन्यसन्देहे परमेकं
प्रवर्त्तते' इति संक्षिप्तसारात्। ततश्च तदन्नं विष्णवे निवेद्य
भोक्तव्यम्। यत्तु 'पितृशेषन्तु यो दद्यात् हरये परमात्मने।
रेतोधाः पितरस्तस्य भवन्ति क्लेशभागिनः' इति भागवतोक्तं
तत् पितृदत्तप्रतिग्रहीतविषयमिति। मत्स्यसूक्तम्। 'अनि-
वेद्य न भोक्तव्यं मत्स्यमांसादिकञ्च यत्। अन्नं विष्ठा पयोमूत्रं
यद्विष्णोरनिवेदितम्'। अनेन स्वभोज्यं मत्स्यादिदेयमुक्तम्।
प्रागुक्तविष्णुपुराणवचनेनानेवंविधं निषिद्धमित्यविरोधः। अत-
एव अयोध्याकाण्डे श्रीरामवाक्यम्। 'यदन्नः पुरुषो राजं-
स्तदन्नास्तस्य देवताः' इति। भागवते 'त्वयोपभुक्तस्रग्गन्ध-

वासोऽलङ्कारचर्चिताः। उच्छिष्टभोजिनो दासास्तव मायां जये महि'। तथा 'हृदि रूपं मुखे नाम नैवेद्यमुदरे हरेः। पादोदकञ्च निर्माल्यं मस्तके यस्य सोऽच्युतः'। तत्रैव षष्ठस्कन्धीयपयोव्रते। 'उद्वास्य देवं स्वे धाम्नि तन्निवेदितमग्रतः। मद्यादात्मविशुद्धयर्थं सर्वकामसमृद्धये'। उद्वास्य विसृज्य अत्र चित्तशुद्ध्यादिफलकथनादन्यत्रापि भोजनाग्रतः स्वदत्तनैवेद्यभक्षणमवगम्यते। अन्यथा व्रताङ्गत्वे फलानुपपत्तिः। अष्टमस्कन्धेऽपि 'गन्धपुष्पादिभिश्चार्चेद्द्वादशाक्षरविद्यया। शृतं पयसि नैवेद्यं शाल्यन्नं विभवे सति। ससर्पिः सगुडं दत्त्वा जुहुयान्मूलविद्यया। निवेदितं तद्भक्ताय दद्याद्भुञ्जीत वा स्वयम्'। यत्तु 'देवद्विजद्रव्यापहर्त्ताऽप्सु निमग्नोऽघमर्षणमावर्त्तयेत्' इतिसुमन्तूक्तम्। 'अपि दीपावलोकं मे नोपयुञ्ज्यान्निवेदितम्' इति श्रीभागवतीयञ्च तद्देवोपभुज्यमानद्रव्यपरम्। अतएव योगिनीतन्त्रे। 'मणिमुक्तासुवर्णानां देवदत्तानि यानि च। न निर्माल्यं द्वादशाब्दं ताम्रपात्रं तथैव च। पटी शाटी च षण्मासं नैवेद्यं दत्तमात्रतः। मोदकं घृतपक्वञ्चैव यामार्द्धेन महेश्वरि!। पट्टवस्त्रं त्रिमासञ्च यज्ञसूत्रं त्र्यहः स्मृतम्। यावद्दुष्टं भवेदन्नं परमान्नं तथैव च'। विसर्जनीये देवे तु विसर्जनात्तदीयद्रव्यप्रतिपत्तिव्यवहारः। संवत्सरप्रदीपे ब्रह्मपुराणम्। 'अम्बरीष नवं वस्त्रं फलमन्नं रसादिकम्। कृत्वा कृष्णोपभोग्यञ्च सदा सेव्यं हि वैष्णवैः। अम्बरीष हरेर्लग्नं नीरं पुष्पं विलेपनम्। भक्त्या न धत्ते शिरसा चाण्डालादधिको हि सः'। तथा 'अग्निष्टोमसहस्रैश्च वाजपेयशतैस्तथा। तुल्यं फलं भवेद्देवि! विष्णोर्नैवेद्यभक्षणात्'। मत्स्यसूक्ते। 'एकान्तभक्तो देवस्य भोजनादौ मनोरमे। श्रुत्वा परेरितं नाम मुच्यते दिनकिल्बिषात्।

स्त्रीशूद्रोक्तं न शृणुयादभावे विजपेत् स्वयम्'। तत्र मन्त्रः। 'उच्छिष्टभोजिनस्तस्य वयमुच्छिष्टकाङ्क्षिणः। येन लीला-वराहेण हिरण्याक्षो निपातितः'। तथा 'पादोदकञ्च निर्माल्यं नैवेद्यञ्च विशेषतः। महाप्रसाद इत्युक्त्वा ग्राह्यं विष्णोः प्रयत्नतः'। पादोदकग्रहणे मन्त्रः। 'कृष्ण कृष्ण महाबाहो! भक्तानामार्त्तिनाशन। सर्वपापप्रशमनं पादोदकं प्रयच्छ मे'। तद्धारणमन्त्रः। 'अकालमृत्युहरणं सर्वव्याधिविनाशनम्। विष्णोः पादोदकं पुण्यं शिरसा धारयाम्यहम्'। तन्त्रानुष्ठानकरणत्वेन विधानात् पूर्वसिद्धमन्त्राणामस्यैव करणत्वान्मन्त्रान्ते कर्मारम्भः। तीर्थकाण्डकल्पतरौ नरसिंहपुराणम्। 'गङ्गाप्रयागगयनैमिषपुष्कराणि पुण्यानि यानि कुरुजाङ्गलयामुनानि। कालेन तीर्थसलिलानि पुनन्ति पापात् पादोदकं भगवतस्तु पुनाति सद्यः'। पद्मपुराणे। 'ये पिबन्ति नरा नित्यं शालग्रामशिलोदकम्। प्रक्षालयन्त्यसन्दिग्धं ब्रह्महत्यादिपातकम्'। वशिष्ठसंहितायाम्। 'शालग्रामशिला-तोयमपीत्वा यस्तु मस्तके। प्रक्षेपणं प्रकुर्वीत ब्रह्महा स निगद्यते'। स्मृतिः। 'नैवेद्यप्राशनात् पूर्वं देवपादोदकाहुतिः। होतव्या जठरे वह्नौ स्वेन पाणितलेन तु'। तेन पादोदकेनापोशानं कृत्वा प्राणाहुतिर्नैवेद्येन कार्य्या। वह्नि च-गरुडपरिशिष्टे। 'पवित्रं विष्णुनैवेद्यं सुरसिद्धर्षिभिः स्मृतम्। अन्यदेवस्य नैवेद्यं भुक्त्वा चान्द्रायणं चरेत्। अग्राह्यं शिवनिर्माल्यं पत्रं पुष्पं फलं जलम्। शालग्रामशिलास्पर्शात् सर्वं याति पवित्रताम्'। कालिकापुराणम्। 'यो यद्देवार्चनरतः स तन्नैवेद्यभक्षकः। केवलं सौरशैवे तु वैष्णवो नैव भक्षयेत्। समानं त्वन्यनैवेद्यं भक्षयेदन्यदैवतः'। भविष्ये। 'निर्माल्यं लोपयोक्तव्यं रुद्रस्य तपनस्य च। उपयुज्य च

मोहात् नरके पच्यते ध्रुवम्'। अतएव पुरश्चरणचन्द्रिकायाम्। 'सुषुम्ना वर्त्मना पुष्पमाघ्रायोद्वासयेत् सुधीः। निर्माल्यं शिरसा धार्य्यं सर्वाङ्गेष्वनुलेपनम्। नैवेद्यञ्चोपयुञ्जीत दत्त्वा तद्भक्तिशालिने'। नन्दिकेश्वरपुराणे। 'दत्त्वा नैवेद्यवस्त्राणि नाददीत कदाचन। त्यक्तव्यं शिवमुद्दिश्य तदा दानेन तत्फलम्' इति शिवदत्ते विशेषः। स्मृतिः। 'ब्रह्मचारिगृहस्थैश्च वनस्थयतिभिः सह। भोक्तव्यं विष्णुनैवेद्यं नात्र कार्य्या विचारणा'। 'यत्तु यद्गन्धकारं नैवेद्यं भुक्त्वा कृच्छ्रं यतिश्चरेत्' इति वचनं तद्विष्णुनैवेद्येतरपरम्।

अथ जलाशयोत्सर्गः। 'प्रदद्यात् सर्वभूतेभ्यो जलपूर्णं जलाशयम्' इति मत्स्यपुराणाज्जलाशयोत्सर्गस्य सर्वभूतसम्प्रदानकत्वेनापकृष्टचेतनोद्देश्यकत्वादुद्देश्यगतस्वामित्वाजननात् यागत्वम्। तथाच श्राद्धविवेकः। 'देवतोद्देश्यकद्रव्यत्यागो यागः। देवतात्वञ्च वेदमेयत्यागोद्देश्यत्वम्। उद्देश्यत्वञ्च अस्येदमित्यारोपविषयत्वमिति। अतएव जलाशयोत्सर्गमुपक्रम्य मत्स्यपुराणे 'प्राप्नोति तद्यागबलेन भूयः' इति यागत्वेनाभिहितम्। ततश्च तज्जलं स्वस्वत्वदूरीकरणेन नद्यादिवत् साधारणीकृतम्। 'सामान्यं सर्वभूतेभ्यो मया दत्तमिदञ्जलम्। रमन्तु सर्वभूतानि स्नानपानावगाहनैः' इति मन्त्रलिङ्गादुपादानं विना कस्यापि न स्वत्वमिति। ततश्चान्ययागवदुत्तरप्रतिपत्तेरश्रुतत्वेन साधारणजलस्य परिग्रहमात्रेण गौतमोक्तेन नात्र स्वामित्वश्रुतेर्यजमानस्यापि तथात्वेन स्वामित्वात् तत्र स्नानादावदोष इति। तथाच गौतमः। स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु। ब्राह्मणस्याधिकं लब्धं क्षत्रियस्य विजितं निर्विष्टं वैश्यशूद्रयोः' इति परिग्रहोऽनन्यपूर्वस्य जलतृणकाष्ठादेः स्वीकार इति मिता-

चरा। वृत्त्यधिकारे व्यक्तमाह आपस्तम्बः। 'दायार्थं शिलोऽञ्छौ चान्यच्चापरिगृहीतम्' इति। अपरिगृहीतमन्या-स्वीकृतमस्वामिकमिति यावत्। निर्विष्टं वेतनलब्धं निर्वेशो भृतिभोगयोरित्यमरत्रिकाण्डशेषयोः।

अथ रजःस्वलासूतकिनोर्व्रतम्। पुलस्त्यः। 'एकादश्यां न भुञ्जीत नारी दृष्टे रजस्यपि'। नारी विधवा। सधवाया निषेधात्। तथाच विष्णुः। 'पत्यौ जीवति या नारी उपोष्य व्रतमाचरेत्। आयुष्यं हरते पत्युर्नरकञ्चैव गच्छति'। 'तथाच बहुकालिकसङ्कल्पो गृहीतश्च पुरा यदि। सूतके मृतके चैव व्रतं तन्नैव दुष्यति'। एतेन काम्यव्रतारम्भोऽशौचे न कार्यः। 'सूतके मृतके चैव न त्याज्यं द्वादशीव्रतम्'। तथा 'सूतके मृतके चैव प्रणम्य मनसा हरिम्। एकादश्यां न भुञ्जीत व्रतमेतन्न लुप्यते'। मृतके च नरः स्नात्वेति प्रथम-चरणे पाठो वराहपुराणे भविष्योत्तरपद्मपुराणयोः। 'एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि। सूतके मृतके वापि अन्य-स्मिन्नप्यशौचके। सर्वथा न परित्याज्या इच्छता श्रेय आत्मनः' तत्र यदि दैवात् परित्यक्तं देवार्चनादिकं तदा सूतकान्ते कुर्य्यात्। तथा मत्स्यपुराणे। 'व्रतस्यान्ते नरः स्नात्वा पूज-यित्वा जनार्दनम्। दानं दत्त्वा विधानेन व्रतस्य फलमश्नुते'। एकादशीमुपक्रम्य वराहपुराणम्। 'तस्मात्प्रमादे दुःखे वा सूतके मृतकेऽपि वा। स्नात्वा काम्यव्रतं कुर्य्यात् दानार्चन विवर्जनम्'। मत्स्यपुराणम्। 'गर्भिणी सूतिका नक्तं कुमारी च रजस्वला। यदा शुद्धा तदान्येन कारयेत् क्रियते सदा' उपवासाचरणे गर्भादिपीडासम्भावनायाम्। नक्तं भोजन कुर्य्यात्। 'उपवासेष्वशक्तस्य तदेव फलमिच्छतः। अनभ्या सेन रोगाणां किमिष्टं व्रतमुच्यताम्' इति नारदप्रश्नानन्तर

उपवासेष्वशक्तानां नक्तं भोजनमिष्यते' इति मत्स्यपुराण एव ईश्वरवचनात्। स्वयमशक्ता शुद्रद्वारा पूजादि कारयेत्। कायिकमुपवासादि सदा शुद्राशुद्धिकाले स्वयं क्रियते। स्मृतिपरिभाषायामप्येवम्।

अथ उपवासानुकल्पः। मनुः। 'विश्वैश्च देवैः साध्यैश्च ब्राह्मणैश्च महर्षिभिः। आपत्सु मरणाद्भीतैर्विधिः प्रतिनिधिः कृतः। प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्त्तते। न साम्परायिकं तस्य दुर्मतेर्विद्यते फलम्'। अत्र आपत्प्रतिनिध्यनुकल्पानां पर्य्यायता कालविवेकधृतवराहपुराणस्वारस्यात्। 'उपवासासमर्थस्तु किञ्चिद्भक्ष्यं प्रयोजयेत्'। तथा एकादशीमधिकृत्य स्मृतिः। 'एकभक्तेन नक्तेन अन्नन् वृद्धातुरः क्षिपेत्'। नारदीये 'अनुकल्पो नृणां प्रोक्तः क्षीणानां वरवर्णिनि। मूलं फलं पयस्तोयमुपभोग्यं भवेच्छुभम्। न त्वेवं भोजनं कैश्चिदेकादश्यां प्रकीर्त्तितम्'। एवमनुकल्पातिरिक्तम्। ब्रह्मवैवर्त्तः। 'उपवासासमर्थश्चेदेकं विप्रन्तु भोजयेत्। तावद्धनानि वा दद्यात् यद्भक्ताद्विगुणं भवेत्। सहस्रसम्मितां देवीं जपेद्वा प्राणसंयमान्। कुर्य्याद्द्वादशसंख्याकान् यथाशक्ति व्रते नरः'। देवीं गायत्रीम्। वायुपुराणे 'उपवासनिषेधे तु किञ्चिद्भक्ष्यं प्रकल्पयेत्। न दुष्यत्युपवासेन उपवासफलं भवेत्। नक्तं हविष्यान्नमनोदनं वा फलं तिलाः क्षीरमथाम्बु चाज्यम्। यत् पञ्चगव्यं यदि वाथ वायुः प्रशस्तमत्रोत्तरमुत्तरञ्च'। उपवासनिषेधस्तु असामर्थ्यादपीति। तत्रापि हविष्यादिरनुकल्पः। अत्र सर्वत्र तुलसीं भक्षयेत्। 'तुलसीं विना या क्रियते न पूजा स्नानं न तद् यत्तुलसीविवर्जितम्। भुक्तं न तद् यत्तुलसीविवर्जितं पीतं न तद् यत्तुलसीविवर्जितम्' इति गारुड़ात्। अनुकल्पेऽपि द्वादश्यां विष्णूपासनं पारणं कर्त्त-

'व्यम्। एकभक्तेन नक्तेन तथैवायाचितेन च। उपवासेन दाने नैवाद्वादशिको भवेत्' इति वचनात्।

अथोहव्यवस्था। अत्रैकभक्तादीनामुपवासकार्य्ये विधानात्। सोमधर्माणां फलचमसप्राप्तिरिव एषु अपि मन्त्रादिप्राप्त्यामन्त्रस्य ऊहेन प्रयोगः कार्य्यः। अतएव एकभक्तादावपि पूर्व्वापरदिनयोरेकभक्तादिको धर्मः कार्य्यः। यद्वा द्वादशीव्रतं खल्वेतद्भगवतो वासुदेवस्यार्च्चनं जपहोमादिकं प्रधानं कर्म उपवासादिकन्तु कर्त्तृसंस्कारकं लिङ्गात्। अङ्गभूतोपवासप्रकाशकमन्त्रो नक्तादिपक्षे निवर्त्तते व्रीहिमन्त्र इव यवेऽतोऽस्यायोग एवेति जीमूतवाहन आह स्म तन्न ऊहं प्रकृत्य न प्रकृतावपूर्व्वत्वादिति कात्यायनसूत्रात् प्रकृतावूहायोगात् विकृतावेवोह इति। अपूर्व्वोत्प्रेक्षणमूह इति तल्लक्षणात्। अत एकभक्तादीनां प्रकृतावुक्तत्वान्नोह इति। यदप्युक्तमङ्गत्वान्मन्त्रबाध इति तदपि न युक्तम्। एकोद्दिष्टे पार्व्वणविकृतावेवावाहनाद्यङ्ग एवोह दर्शनात्। अतएव 'एकभक्तेन यो मर्त्य उपवासव्रतञ्चरेत्। उपोष्य नक्तेन विभो' इत्यादि स्कन्दपुराणादिवचनादेकभक्तादिषु उपवासपदप्रयोगेण तद्धर्मातिदेशान्मन्त्रपाठ इति परिशेषखण्डे हेमाद्रिणाप्युक्तम्। तथाच जैमिनिः। 'उक्तं क्रियाभिधानमन्यत्र तत् श्रुतौ विधिः प्रदेशः स्यादिति'। व्रीहिमन्त्रस्य तु यवे बाधोऽनङ्गत्वात्। किन्तु प्रकृतावेव व्रीहिभिर्यजेत यवैर्यजेतेति विकल्पेन श्रवणात् प्रकृतिविकृतिभावाभावान्नोहः। अतोऽसमवेतार्थत्वाद्बाध इति। न च हुं फडादिवत् मन्त्रस्यादृष्टार्थतास्तु कथम् असमवेतार्थत्वाद्बाध इति वाच्यम्। यस्य सर्व्वा दृष्टार्थत्वासम्भवस्तस्यैव तथा कल्पनात् तथाच जैमिनिः 'अर्थाभिधानसामर्थ्यान्मन्त्रेषु शेषभावः स्यात् तस्मात् उत्प

संयोगोऽर्थेन नित्यसंयोगात्'। अस्यार्थः। यतोऽर्थाभिधान-सामर्थ्यान्मन्त्र शेषभावोऽङ्गभावश्च तस्मादुत्पत्तिसंयोगः। औत्-पत्तिके न मुख्यार्थेन संयोगः सम्बन्धः स्यात् कुतः नित्यसंयो-गात् तेनैव अव्यभिचारितया संयोगात्। गौणप्रत्यायनेऽपि यतो मुख्यप्रत्यायने तु गौणप्रत्ययमपेक्षते अतो मुख्येन अस्य अव्यभिचारितया संयोगः। तथा गौणे सदपि सामर्थ्यं न प्रमा-णान्तरं विना। 'आविर्भवति मुख्ये तु शब्दादेवाविरस्ति तत्। तात्पर्य्यञ्च स्वतो मुख्ये गौणार्थपरता पुनः। प्रमाणा-न्तरविज्ञेया तदभावान्न सिध्यति'। तथाच 'यस्मादृष्टं न लभ्येत तस्मादृष्टप्रकल्पनम्। लभ्यतेऽर्थस्मृतिर्दृष्टा न ततो द्वारतश्चिवह। अर्थस्मृतिः प्रयोगार्था प्रयोगाच्च फलोदयः' इति दृष्टार्थसम्पत्तौ नादृष्टमिह कल्प्यते इति। अतो यस्य क्वचिद्रूपदेवतादिप्रकाशकरूपदृष्टार्थतासम्भवस्तस्य मन्त्रस्य तदसम्भवे वैकल्पिकेऽर्थे बाध एव। अतएव विद्याकरः। शास्त्रावधारणवेलायां यत्र हि प्रयोजनाभावनिश्चयस्तत्रैव तदुपादानलोपः शास्त्रार्थः। यथा कृष्णले अवघातादिलोपः। यत्र तु अनुष्ठानवेलायामेव पुरुषदोषेण प्रयोजनाभावो जायते तदा प्राक् तन्निश्चयात्। शास्त्रप्रापितः पदार्थो नियमा पूर्वमात्रार्थमनुष्ठेय एव अतएव प्रकृतावपि आलस्यादिना व्रीह्यादिस्थाने तण्डुलादिषु गृहीतेषु अवघातं समाचरन्ति याज्ञिकाः पठन्ति च। 'घाते न्यूने तथा छिन्ने सान्नाय्ये मान्त्रिके तथा। यज्ञमन्त्राः प्रयोक्तव्या मन्त्रा यज्ञार्थसाधकाः' इति। मान्त्रिके मन्त्रसाध्ये अवघातादौ तत्काले मन्त्रपाठा-भावेऽपि यज्ञकाले मन्त्राः प्रयोक्तव्याः अस्मिंस्तु पक्षे मन्त्रार्थ-ज्ञानस्य नास्त्युपयोग इति इत्थं सम्प्रति प्रयोगानुष्ठानमात्र। एवञ्च उपवासविधौ प्रकृतावेवाशक्तविषयत्वेन अनुकल्पानां

विकल्पायोगात् एकभक्तादीनां प्रतिनिधित्वमेव। तदा तु प्रतिनिधौ यथाश्रुतमन्त्रपाठः। समवेतार्थता तु गौण्या लक्षणया वेति। तथाच प्रथमाध्याये कात्यायनसूत्रम्। 'शब्दे त्वविप्रतिपत्तिरिति'। प्रतिनिहितद्रव्ये श्रुतशब्दः प्रयोज्यः। श्रुतद्रव्यबुद्ध्या प्रतिनिध्युपादानात् शब्दान्तर-प्रयोगे द्रव्यान्तरबुद्धिप्रसङ्गात्। यथा 'अग्न्यभावे तु विप्रस्य पाणावेव जलेऽपि वा' मत्स्यपुराणदर्शनात् जलावस्तहोमपक्षे अग्नौ करिष्ये इत्यनूह एव प्रयोग इति। अतएव यज्ञपार्श्वः। 'तैलं प्रतिनिधिं कुर्य्याद् यज्ञार्थं याज्ञिको यदि। प्रकृत्यैव तदा होता ब्रूयाद् घृतवतीमिति' अत्र द्रव्यपदमुपलक्षणम्। एवं सर्वप्रतिनिधावेव न ऊहो न बाधः। किन्तु अविकृत एव मन्त्रः पठनीय इति एतेन यौगिकोक्तम्। 'एकभक्तेन यो विप्र उपवासव्रतञ्चरेत्' इति। उपोष्य नक्तेन विभो इत्यादिषु उप-वासपदप्रयोगान्मासमग्निहोत्रं जुहोतीतिवन्नाम्नोऽतिदेशात्। प्राप्तस्य ऊहेन प्रयोग इति तथा समवेतार्थाय एकाहारादिपदं प्रयोज्यमिति हेमाद्रिणा उक्तमपि निरस्तम्। एवं नरं पञ्चत्व-मागतमिति न लिङ्गोहः स्त्रीपुंदाहस्य समविधाने प्रकृति-विकृतिभावाभावात्। न च वैभक्तिकार्थपुंस्त्वविशिष्टबोधात् स्त्रियां बाध इति वाच्यं प्राथमिकत्वाद्बलीयसः प्रातिपदि-कार्थस्य समवेतत्वेन स्त्रीपक्षेऽपि विनियोगात् किन्तु वैभक्ति-कलिङ्गस्य स्त्रियां प्रयोगसाधुतामात्रं पुंसि तु अर्थसाधुतापि। अतएव एकपाशिके देवे पशौ आम्नातस्य अदितिः पाशं प्रमुमोक्तु इति। निःसन्दिग्धार्थपाशप्रातिपदिकलिङ्गेन विनि-योगो न तु पशाद्भाविना बहुवचनेन बहुपाशिकायां विकृता-वुत्कर्षः। नापि प्रकृतावेव पाशपदे अवयवलक्षणा किन्तु प्रयोगसाधतयैव बहुवचनस्य इत्युक्तम् एवञ्च 'एतद्वः पितरो

वास इति जल्पन् पृथक् पृथक्' इति ब्रह्मपुराणे पित्रादिषु प्रत्येकं एतद्वो बहुवचनान्तमन्त्रप्रयोगात् तथानर्थक्यात् तद्विकृतावेकोद्दिष्टेऽपि बहुवचनान्तप्रयोगो न तु एकवचनान्त ऊह्यः। तद्वचनादूर्जं वहन्तीति मन्त्रे पितॄनित्यादिमन्त्रान् प्रकृतौ समवेतार्थान् एकोद्दिष्टे एकवचनवदूहेत पितरमित्यादि विकृतान् कुर्य्यात् एकस्मिन् पितरि बहुवचनस्य असमवेतार्थत्वात् अतएव दैवे पशौ अदितिः पाशं प्रमुमोक्तु इति अदितिः पाशान् प्रमुमोक्तु इति पाशमन्त्रौ एकवचनान्तबहुवचनान्तश्रुतौ अदितिः खण्डनरहितेति देवमातेति भाष्यव्याख्यानात् अदितिरित्येवपाठः। तैकवचनान्तस्य प्रकृतौ समवेतार्थत्वात् बहुपाशिकायां विकृतौ द्विवचनोहः कार्य्यः प्रकृतौ असमवेतार्थत्वात्। विकृतावपि तथैव युक्तत्वान्नोहः बहुवचनान्तस्यैव प्रयोग इत्युक्तः। यत्तु द्वैतनिर्णये एतद्व इति वाक्यं पृथगिति पदं वीप्साश्रवणेन पार्व्वणमात्रविषयकम् एतेन तन्मन्त्रस्थबहुवचनान्तस्य पार्व्वण एव प्रयोगसाधुतामात्रं न तु एकोद्दिष्टेऽपि तत्र वीप्सासहितावाक्यप्रवृत्तेरिति तन्न तद्वाक्यप्राप्तौ कथं तन्मात्रलाभः प्रकृतिवद्विकृतिरिति न्यायालाभः इति चेत्तदा द्विपाशिकायां बहुवचनानूह इव अत्राप्यनूह एव पितृपदस्य तु प्रकृतौ समवेतार्थत्वात् प्रेतैकोद्दिष्टे तत्र प्रेतपदोह इति प्रोक्तानृणां भक्ष्यः फलचमस इत्यादौ मन्त्रेतरस्मिन् प्रोक्तात्रे विनियोगविभक्त्यर्थान्वयव्युत्पत्तेः मन्त्रे तु व्युत्पत्तिमात्रेणार्थपरतया किन्तु प्रातिपदिकलिङ्गेनैव विनियोगः वध्यूयकारिता तु पाशात् इति मोचनकर्म्मतापरत्वेनापि अतएवोक्तं न विभक्तेर्वचनमेकैकं प्रयोजनमिति अतएव बहुपाशिकायां विकृतावपि न उत्कर्षः। तथाच भट्टवार्त्तिकम्। प्रकृत्यर्थस्य पाशस्य विभक्त्यर्थस्य कर्म्मणः। उभयोः प्रकृतौ भावा-

बोत्कर्षस्य विकल्पयते' इति अस्मात् त्वमपि जातोऽसि इति सामेर्मन्त्रस्य स्त्रियां बाधः पात्रवैधर्म्यात् तथाहि अस्मादिति इदमः सर्वनामत्वेन सन्निहितार्थपरत्वात् एतद्वाक्यरूपान्तर-सन्निधानात् स्वपदोपात्तलिङ्गसंख्याविशिष्टैव व्यक्तिरिदम-पदार्थः। पुमानेक इति यावत्। ततश्च प्रातिपदिकलिङ्गा-देव पुंसि मन्त्रविनियोग इति। नरं पञ्चत्वमागतमित्यादिस्तु असर्वनामत्वाच्च सन्निधेरपेक्षा किन्तु लिङ्गसंख्यानपेक्षस्यैव प्रातिपदिकार्थता। न चैवं तदेवं संशयापन्नमिति याज्ञ-वल्कीयमन्त्रस्य स्त्रीपरीक्षायां बाधः स्यात्। एनमित्यस्य सर्वनामत्वेन अस्मात्त्वमितिवत् सन्निहितविभक्त्युपनीतपुंस्त्व-विशिष्टस्य व्यक्तिपरत्वेन पात्रवैधर्म्यादिति वाच्यम् एनमित्यस्य मानुषः शुद्धिमिच्छतीति स्ववाक्य एव मानुषत्वेन स्त्रिया अपि सन्निधेस्तत् परत्वात् न तु पश्चाद्भाविपुंस्त्वविशिष्टोऽर्थः अतो मानुषत्वेन स्त्रिया अपि सन्निधेस्तत् परप्रातिपदिकस्य न विभक्त्या सङ्कोचः पात्रन्यायतौल्यात्।

अथैकभक्तम्। स्कान्दे 'दिनार्द्धसमयेऽतीते भुज्यते निय-मेन यत्। एकभक्तमिति प्रोक्तं रात्रौ तन्न कदाचन' इत्य-नेन अभिहितम्। नियमेन 'ब्रह्मचर्य्यं तथाशौचं सत्यमामिष-वर्जनम्' इत्यादिसामान्यव्रतधर्मेण चतुर्थचरणे तु न्यूनं ग्रास-त्रयेण तु इति देवलः। द्वात्रिंशत्तु गृहस्थस्येति पद्मपुराणोक्त-भोजनस्य ग्रासस्य ग्रासत्रयन्यूनतेति। अत्र च परदिनार्द्धा-तीतकाले तत्तिथ्यलाभेऽपि परदिन एव तत्समये एकभक्तं कुर्य्यात्। 'तिथौ यत्रोपवासः स्यादेकभक्तोऽपि सा तथा' इति सुमन्तुवचनेन उपवासार्हतिथिखण्डविशेषसम्बन्धिदिन एव प्रतिनिधितयैकभक्तविधानात्। स्वतन्त्रैकभक्त एव दिनार्द्ध-समयातीतकाले तत्तिथिनियम एवं नक्तादिष्वपि।

अथ नक्तव्रतम्। तथाच स्कन्दपुराणे। 'प्रदोषव्यापिनी ग्राह्या सदा नक्तव्रते तिथिः। उदयात्तु तदा पूज्या हरेर्नक्तव्रते तिथिः'। नियमश्च सामान्यव्रतधर्मत्वेनोक्तं 'ब्रह्मचर्य्यं तथाशौचं सत्यमामिषवर्जनम्' इत्यादि ग्राह्यः। नक्तलक्षणञ्च भविष्यदेवीपुराणयोः। 'हविष्यभोजनं स्नानं सत्यमाहारलाघवम्। अग्निकार्य्यमधःशय्यां नक्तं भोजी सदाचरेत्'। एवं नक्तव्रतस्य गुरुत्वेन प्रागुक्तवायुपुराणवचने नक्तमिति हविष्यान्नादिभोजनस्य कालपरं न तु नक्तव्रतपरं तथात्वे उत्तरोत्तरगुरुव्रतोपदेशप्रस्तावे तदनन्तरं केवलं हविष्यान्नोपदेशानुपपत्तेः।

अथ हविष्यान्नम्। स्मृतिः। 'हैमन्तिकं सितास्विन्नं धान्यं मुद्गा यवास्तिलाः। कलाय कङ्गुनीवारा वास्तूकं हिलमोचिका। यष्टिकाकालशाकञ्च मूलकं केमुकेतरत्। लवणे सैन्धवसामुद्रे गव्ये च दधिसर्पिषी। पयोऽनुद्धृतसारञ्च पनसाम्रहरीतकी। तिन्तिड़ी जीरकञ्चैव नागरङ्गञ्च पिप्पली। कदली लवली धात्री फलान्यगुड़मैक्षवम्। अतैलपक्वं मुनयो हविष्यान्नं प्रचक्षते'। अत्रास्विन्नधान्यमित्यभिधानादन्यत्र स्विन्नधान्ये न दोषः। अतएव हारीतः। 'अथ सूनां व्याख्यास्यामो जङ्गमस्थावरादीन् प्राणिनः सूनयन्तीति सूनाः। ताश्च पञ्च विधा भवन्तीति उपक्रम्य चतुर्थीपर्य्यन्तमभिधाय आदीपनतापनस्वेदनभर्जनपचनादिभिः पञ्चमी तदेवं पञ्चता निरययोनीरहरहः प्रजाः कुर्वन्ति पञ्चभिः। पञ्चभिर्यज्ञैर्हस्यधानप्रस्थं पावयन्तीति। एषामर्थः कल्पतरुकृता कृतः। सूदयन्ति प्राणैर्वियोजयन्ति। आदीपनं काष्ठादीनां तापनं तोयादेः स्वेदनं धान्यादेर्भर्जनं यवादेः पचनं तण्डुलादेः। पञ्चसूनाः पञ्चयज्ञैः सूनादोषात्पावयन्तीत्यर्थः। एतेन धान्य-

खेदनं गृहस्थवानप्रस्थाभ्यां कर्त्तव्यमिति प्रतीयते किन्तु तत्र धान्यस्याङ्कुरजननयोग्यतानाशादेव पापं भवति तच्चाग्निरपि पञ्चयज्ञेनैया अतएव। मनुनापि पञ्चसूनाविवरणे चुल्ली-त्युक्तम्। धान्यादौ खेदनविधानात् कृता कृत एव पाकप्रवि-विवेचनम्। द्विःस्विन्नतादिदोषघ्नत्वात्। तद्विवृतं कात्या-यनेन। कृतमोदनशक्त्वादितण्डुलादिकृता कृतं व्रीह्यादिचा-कृतं प्रोक्तमिति हव्यं विधानतत्त्व। अतो लाजमोदकादि यथायथा पक्वमपि श्राद्धादौ दीयते। अगस्त्यसंहितायाम् ५ 'दधिक्षीरं घृतं गव्यमैक्षवं गुडवर्जितम्। नारिकेलफलञ्चैव कदलीं लवलीं तथा। आम्रमामलकञ्चैव पनसञ्च हरी-तकीम्। व्रतान्तरप्रशस्तञ्च हविष्यं मन्वते बुधाः' हैमन्तिकं सितास्विन्नमित्यादिवचनानुसारादेव भोजनादौ व्यवहारः। 'हविष्येषु यवामुख्यास्तदनुव्रीहयः स्मृताः। माषकोद्रवगौरा-दीन् सर्वाभावेऽपि वर्जयेत्' इति कात्यायनवचनन्तु होम-करणात्तत्रैव नारायणोपाध्यायेन अप्येतद्वचनम् अथ हविष्यान्न-स्याग्नौ जुहुयादिति गोभिलोक्तं हव्यं स्पष्टयतीति व्याख्यातम्। एतेन 'कार्त्तिकं सकलं मासं प्रातःस्नायी जितेन्द्रियः। हविष्य-भुग् जपन् स्नातः सर्वपापैः प्रमुच्यते' इति विष्णुवचनं हविष्येषु यवामुख्या इत्यादिवचनविरोधितमिति कल्पतरूक्तं निरस्तम्। एवञ्च 'व्रीहयो मुष्टिमात्राः स्युर्माषमुद्गा यवा अपि' इति शारदातिलकोक्तं यत्तद्विधिश्च जपहोमे माषाविहितास्तत्परि-माणपरमिति बोध्यम्। एवञ्च स्नानस्य वैदिककर्मकर्माङ्गत्वेन सामान्यव्रतधर्मत्वे सिद्धे नक्तव्रते पुनरुपादानमादरातिशया-र्थम्। स्मृतिः। 'नक्तं निशायां कुर्वीत गृहस्थो विधिसंयुतः। यतिश्च विधवा चैव कुर्य्यात्तत् सदिवाकरम्। सदिवाकरन्तु तत्प्रोक्तमन्तिमे घटिकाद्वये। निशानक्तन्तु विज्ञेयं यामार्द्धे

प्रथमे सदा' सौरमनकालस्तु तिथितत्त्वेऽनुसन्धेयः। मार्कण्डेयः। 'एकभक्तेन नक्तेन तथैवायाचितेन च। उपवासेन दानेन नैवाद्वादशिको भवेत्'। अत्र विष्णुपूजापारणयोरङ्गान्तरापेक्षया प्राधान्यमवगम्यते। आनुकल्पिकेऽप्यावश्यकत्वात्।

अथ पुत्त्रादिप्रतिनिधिः। स्कन्दपुराणम्। 'पुत्त्रञ्च विनयोपेतं भगिनीं भ्रातरन्तथा। एषामभावे एवान्यं ब्राह्मणं विनियोजयेत्'। गरुड़पुराणं 'भार्य्याभर्त्तृव्रतं कुर्य्याद्भार्य्यायाश्च पतिस्तथा। असामर्थ्ये द्वयोस्ताभ्यां व्रतभङ्गो न जायते'। वराहपुराणे 'पितृमातृपतिभ्रातृस्वसृगुर्वादिभूभुजाम्। उद्दिष्टार्थमुपोषित्वा स्वयञ्च फलभाग्भवेत्'। अत्रैव विषये कात्यायनः। दक्षिणा नात्र कर्त्तव्या शुश्रूषा विहिता च सा'। ननु प्रतिनिधौ ममेह यमं इत्यादिं मन्त्रस्थफलं कुशान्वे तु इति चेत्प्रधान एव। तथाच शारीरकभाष्ये श्रुतिः। 'यां वै काञ्चनयज्ञ आशिषमाशासते यजमानायैव तामाशासते इति होवाच' इति। ब्राह्मण सर्वस्वे यजमानायेत्यत्र यजमानस्येति-पाठः। सरलायां सूत्रं यां वै काञ्चन-ऋत्विगाशिषमाशास्ते सा यजमानस्यैवेति। अत्र ऋत्विग्यजमानपदे प्रतिनिधि-प्रधानपरे आकाङ्क्षितत्वात्। अतएव प्रतिनिधिपुत्त्रादिना आयान्तु नः पितर इत्यादिरनूह एव पठ्यते वाक्यस्य काम्यनिकत्वान्न तथेति। कालमाधवीये। 'काम्ये प्रतिनिधि-र्नास्ति नित्यनैमित्तिके हि सः। काम्येषूपक्रमादूर्द्धमन्ये प्रतिनिधिं विदुः'। यथानित्यं नैमित्तिकञ्च प्रतिनिधिनाप्युप-क्रम्य कारयेत् काम्ये तु स्वसामर्थ्यं परीक्ष्य स्वयमेवोपक्रम्य कुर्य्यात्। असामर्थ्ये उपक्रमादूर्द्धं प्रतिनिधिनापि कारयेत्। एतच्च श्रौतकाम्यपरं स्मार्त्तकाम्यन्तु अन्य द्वारा प्युपक्रम्य कार्य्यम्। तथाच पराशरभाष्ये शातातपः 'श्रौतं कर्म स्वयं

कुर्य्यादन्योऽपि स्मार्त्तमाचरेत्। असमर्थौ श्रौतमप्यन्यः कुर्य्यादाचार मन्ततः'। अन्तत उपक्रमात् परतः एतच्च काम्येऽपि प्रतिनिधिविधायकं नैमित्तिकमात्रपरत्वे श्रौतस्मार्त्तभेदोपादानं व्यर्थं स्यात् तयोरविशेषादेव प्रतिनिधिलाभात्। अत एव भारतपाठादौ तथासमाचारः। स्मृत्यर्थसारे 'नाभावस्य प्रतिनिधिरभावान्तरमिष्यते'। सजातीयत्वेऽप्यभावान्तरमभावस्य प्रतिनिधिर्नेष्यते। भावस्तु कदाचिद् यथोपवासादौ ब्राह्मणभोजनादौति 'नापि प्रतिनिधातव्यं निषिद्धं वस्तु कुत्रचित्। श्रोत्रियाणामभोज्यं यद्द्रव्यं हि तदशेषतः। ग्राह्यं प्रतिनिधित्वेन होमकार्य्ये न कुत्रचित्। द्रव्यं वैकल्पिकं किञ्चिद् यत्र सङ्कल्पितं भवेत्। तदभावे सदृग्ग्राह्यं न तु वैकल्पिकान्तरम्। उपक्रान्ते तु प्रतिनिधौ मुख्यार्थो लभ्यते यदि। तत्र मुख्यमनादृत्य गौणेनैव समापयेत्। संस्काराणामयोग्योऽपि मुख्य एव हि लभ्यते। न तु संस्कारयोग्योऽन्यो गृह्यते प्रतिरूपकः। मुख्ये कार्य्यासमर्थे तु लब्धेऽप्ये तस्य नादरः। प्रतिरूपकमादाय यत्नमेवोपयुज्यते। कार्य्यं रूपैस्तथा पत्रैः क्षीरैः पुष्पैस्तथा फलैः। गन्धे रसैः सदृग्ग्राह्यं पूर्व्वालाभे परं परम्। ग्राम्याणान्तु भवेद्ग्राम्यमारण्यानामरण्यजम्। यवालाभे तु गोधूमास्तथा रेणु यवादयः। हविष्ये गोघृतं ग्राह्यं तदभावेऽपि माहिषम्। आजं वा तदभावे तु साक्षात्तैलं प्रयुज्यते। तैलाभावे ग्रहीतव्यं तैलजं तिलसम्भवम्'। तैलजं तैलभृष्टं तिलसम्भवं तिलपिष्टादि। 'तदभावे तु सा स्नेहं कौसुम्भं सर्षपोद्भवम्। वृक्षस्नेहस्तथा ग्राह्यः पूर्व्वाभावे परः परः। तदभावे गवादीनां क्रमात् क्षीरं विधीयते। तदभावे दधि ग्राह्यमलाभे तिल इष्यते। यत्र मुख्यं दधि क्षीरं तत्रापि तदलाभतः। अजादेः क्षीरदध्यादि

द्रभावेऽपि गोघृतम्। मुख्यासत्त्वोऽथवा यान्तौ कार्य्यकारण-धर्म्मतौ' अतएव घृताभावे पूर्वं दधि ततः पयः। तथा 'सर्वत्र गौणकालेषु कर्म चोदितमाचरेत्। प्रायश्चित्तं व्याहृतिभिर्हुत्वा कर्म्म समाचरेत्'। मत्स्यसूक्ते। 'घृतं न लभ्यते यत्र शुष्क-चीरेण होमयेत्। चीरस्य च दधि ज्ञेयं मधुनश्च गुड़ो भवेत्'। आयुर्वेदेऽपि। 'मधु यत्र न लभ्येत तत्र जीर्णो गुड़ो भवेत्'। पैठीनसिः। 'काण्डमूलपर्णपुष्पफलप्ररोहरसगन्धादीनां सादृ-श्येन प्रतिनिधिं कुर्य्यात्। सर्वाभावे यवप्रतिनिधिर्भवतीति' काण्डं नालं प्ररोहोऽङ्कुरः। सर्वालाभे यव इति कल्पतरुः यवयव इति नारायणोपाध्यायाः। शान्तिदीपिकायां नार-दीयपञ्चरात्रम्। 'अभावे चैव धातूनां हरितालं विधीयते। बीजानामप्यभावे तु यव एकः प्रशस्यते। ओषधीनामभावे तु सहदेवा प्रशस्यते। रत्नानामप्यभावे तु मुक्ताफलमनुत्तमम्। लोहानामप्यभावे तु हेमपात्रं प्रकल्पयेत्। लोहानां तैजस-पात्राणाम्। न्यायप्राप्तप्रतिनिधिमधिकृत्य जैमिनिः। 'न देव-ताग्निशब्दक्रियाणामिति। अस्यार्थः देवताया अग्नेश्च आह-वनीयादेः शब्दस्य मन्त्रस्य क्रियाया प्रयाजाद्यदृष्टार्थकर्म्मणश्च अदृष्टमात्रार्थकत्वेनारात् उपकारकत्वान्न प्रतिनिधिः व्रीह्यादी-नान्तु सन्निपत्योपकारकाणां पुरोडाशसाधनं दृष्टमेव प्रयोज-नमिति तत्र प्रतिनिधिरुचित इत्युक्तम्। परिशिष्टे 'मुख्य-काले तु मुख्यञ्चेत् साधनं नैव लभ्यते। तत्कालद्रव्ययोः कस्य गौणता मुख्यतापि वा'। तत्र भरद्वाजः। 'मुख्यकालमुपा-श्रित्य गौणमप्यस्तु साधनम्। न मुख्यद्रव्यलाभेन गौणकाल-प्रतीक्षणम्। गौणेषु तेषु कालेषु कर्म चोदितमारभेत्। प्राय-श्चित्तप्रकरणप्रोक्तां निष्कृतिमाचरेत्'। उत्तरमतं सिद्धान्तमिति केचित्। तदभिप्रायकं मीमांसाषष्ठाध्यायसूत्रम्। 'पौर्वा-

पर्य्येऽपि पूर्वदौर्बल्यं प्रकृतिवदिति'। ज्योतिष्टोमेऽन्योन्यं सन्वध्यग्रशालातो बहिर्निर्गच्छतामृत्विजां विच्छेदनिमित्तं प्रायश्चित्तं श्रूयते यद्युद्गाता विच्छिन्द्यादद्क्षिणेन यजेत यदि प्रतिहोता सर्वस्वदक्षिणेनेति। तत्र उद्गातृप्रतिहोत्रोः क्रमेण विच्छेदे विरुद्धप्रायश्चित्तयोः समुच्चयासम्भवात्। किं पूर्वं कार्य्यम् उत वा परमिति संशये हि अनुपजातविरोधात् पूर्वमिति पूर्वपक्षे राद्धान्तः। पौर्वापर्य्ये सति निमित्तयोः पूर्वस्यैव निमित्तस्य दौर्बल्यम्। उत्तरस्य पूर्वनिरपेक्षस्य तद्बाधकतया उदितत्वात् पूर्वोदयकाले उत्तरस्याप्राप्तत्वेन पूर्वेण बाध्यत्वायोगात्। उक्तं हि 'पूर्वं परमजातत्वादबाधित्वैव जायते। परस्यानन्यथोत्पादादुक्तबाधेन सम्भवः' इति प्रकृतिवदिति तथा हि प्रकृतौ क्लृप्तोपकाराः कुशाः प्रथममतिदेशेन विकृतावुपकाराकाङ्क्षिणां प्राप्ताः कल्प्योपकारतया चरमभाविभिरपि शरैर्निरपेक्षैर्बाध्यन्ते तद्वदिति अतएव शारीरकभाष्यटीकायां वाचस्पतिमिश्राः। ज्येष्ठत्वञ्च अनापेक्षितस्य बाध्यत्वे हेतुर्न बाधकत्वे रजतज्ञानस्य ज्यायसः शुक्तिज्ञानेन कनीयसा बाधदर्शनात् तदनपबाधने तदपबधात्मनस्तस्योत्पत्तेरनुत्पत्तेः तथाच 'पूर्वात् पर बलीयस्त्वं तत्र नाम प्रतीयताम्। अन्योन्यनिरपेक्षाणां यत्र जन्मधियां भवेत्' इति। यदि च पूर्ववचनस्य पूर्वपक्षत्वे वैयर्थ्यं स्यात् अत उभयवचनार्थौ विवक्षणीयौ तदा विषयभेदेन व्यवस्थापनीयौ। तथाहि यत्राष्टकाश्राद्धादौ कालान्तराभावस्तत्र तत्कालानुरोधाद्विहितद्रव्यालाभेऽपि प्रतिनिर्हितद्रव्यमादाय मुख्यकाल एव तत्करणं न तु वचनानुपात्तस्वेच्छाकल्प्यगौणकालप्रतीक्षणम्। तथाच छन्दोगपरिशिष्टम्। 'स्थालीपाकं पशुस्थाने कुर्य्याद् यद्यानुकल्पिकम्। श्रपयेत्तं सवत्सायास्तरुण्यागोः पयस्तु तु' इत्यादि। यत्राह्निक·

श्राद्धादौ कृष्णैकादश्यादिगौणकालोऽस्ति तत्र मृताहादावशौचाभावे तदनुरोधेन उपवासादिरूपं प्रायश्चित्तं कृत्वा गौणकाले तत् कर्त्तव्यम्। तथाच लघुहारीतः। 'एकोद्दिष्टन्तु कर्त्तव्यं पाकेनैव सदा स्वयम्। अभावे पाकपात्राणां तदहः समुपोषणम्'। तथाच छन्दोगपरिशिष्टम्। 'संस्कारा अतिपत्येरन् स्वकालाच्चेत् कथञ्चन। हुत्वैतदेव कुर्वीत ये तूपनयनादधः'। यत्र तु विनिगमकवचनाभावस्तत्र यद्यपि क्रियायाः प्राधान्यात् कालो द्रव्यं द्वयमपि गुणभूतमेव तथाप्युभयोपसंहारासामर्थ्ये द्रव्यादरः कालस्य सूर्य्यादिक्रियाघटितस्य कर्त्रधीनत्वाभावाद्वर्जनीयत्वसिद्धिः अमविधिकत्वान्निमित्तत्वमात्रेण वहिरङ्गत्वात्। कालस्य निमित्तत्वं व्यक्तं भविष्ये 'अतः कालं प्रवक्ष्यामि निमित्तं कर्मणामिह'। द्रव्यस्य तु यागस्वरूपनिर्वाहकत्वेन अभ्यर्हितत्वात् कर्मणः कारकत्वेनान्तरङ्गत्वाच्च। पुत्त्रादिप्रतिनिध्यभावे तु ब्रह्मवैवर्त्तः। 'उपवासासमर्थश्चेदेकं विप्रन्तु भोजयेत्। तावद्धनानि वा दद्याद् यद्भक्ताद्द्विगुणं भवेत्। सहस्रसम्मितां देवीं जपेद्वा प्राणसंयमान्। कुर्य्याद्वादशसंख्याकान् यथाशक्ति व्रते नरः'। देवीं गायत्रीम्। अत्र चान्द्रायणादौ परिसंख्या। काश्यपपञ्चरात्रे 'मच्छयने मदुत्थाने मत्पार्श्वपरिवर्त्तने। फलमूलजलाहारी हृदि शल्यं ममार्पयेत्। अत्र यो दीक्षितः कश्चिद्वैष्णवो भक्तितत्परः। निर्निमित्तमदीक्षायां न च क्षुद्व्याधिपीड़ितः। अन्नं वा यदि भुञ्जीत मूलं फलमथापि वा। अपराधमहं तस्य न क्षमामि तु काश्यप। क्षिपामि नरके घोरे कृच्छ्रत्वं मम जायते'। निमित्तं प्रारब्धचान्द्रायणादिव्रतविरोध इत्यादि दीक्षायां चतुर्येष प्राशनस्य विहितत्वाददीक्षायामित्युक्तम्। क्षुद्व्याधिना पीड़ितः सर्वमेतत् प्रदर्शनमात्रं शक्तौ निर्विरोध इत्यर्थः।

चतुरादिकमप्युपलक्षणमिति जीमूतवाहनः। अत्र निमित्तं प्रारब्धचान्द्रायणादीति यदुक्तं तन्न चान्द्रायणादौ भोजनस्य आवश्यकत्वाभावात् किन्तु निमित्तं रविवाराद्युपवासपारणं जलपानरूपं दीक्षायामपि चरुप्राशनं प्राणरूपम् अन्यथा 'पुरोडाशोऽपि सोमो वा संप्राप्ते हरिवासरे। अभक्ष्येण समः प्रोक्तः किं पुनश्चाशनक्रिया' इति नारदीयं विरुध्येत तदन्नाणस्य भोजनरूपतामाह कालादर्शे श्रुतिः 'पितृशमाशेयं तस्यैवं प्राशितं भवति' इति पितृरुपलक्षणम्। आकाङ्क्षाया अविशिष्टत्वात् तेन एकादश्यां तदुभयोर्जलपारणं चरुशेषप्राणच्च उपवासः कार्य्यः।

अथ पारणनियमः। यद्यपि अत्र चान्द्रायणादिवत् परिसंख्यासम्भवस्तथापि पारतीरकर्मसमाप्ताविव्यस्मादिाताग्तत्पन्नः पारणशब्दः। यद्यपि समाप्तिमात्रमभिधातुं समर्थस्तथापि उपवाससमापकभोजन एव लोकशास्त्रयोः प्रयोगात् पङ्कजादिपदवत् प्रयोगाधीनयौगिकस्तस्मादुपवासव्रतस्य चरमाङ्गम् भोजनमभिधत्ते पारणशब्दः। तथाच देवलः। 'उपवासेषु सर्वेषु पूर्वाह्णे पारणं भवेत्। अन्यथा तु फलस्यार्द्धं धर्ममेवोपसर्पति'। धर्मो यमः। किञ्च यदि पारणमङ्गं न स्यात्तदा प्रतिनिधिविधाने नोपपद्येत तदाह स एव। 'सङ्कटे विषमे प्राप्ते द्वादश्यां पारयेत् कथम्। अद्भिस्तु पारणं कुर्य्यात् पुनर्भक्तं न दोषकृत्'। पारणन्तु भवेत् कथमिति वर्षकृत्ये पाठः। नक्तं त्रयोदशीनक्तं भोजनव्रतमिति। अभक्षणस्य अशितानशितत्वेन श्रुतावभिधानात् तदुभयव्रतसिद्धिः यथा आपो वै सर्वमन्नसामशनेन अशितोऽनशितश्च भवतीति। एवञ्च 'जनस्यापि नरश्रेष्ठ भोजनाद्वै वजाहते। नित्यक्रिया निवर्त्तेत सह नैमित्तिकैः सदा' इति कालिकापुराणीयरागप्राप्तपरम्। अत

एव आदिपुराणे। 'पारणान्तं व्रतं ज्ञेयं व्रतान्ते द्विजभोजनम्। असमाप्ते व्रते पूर्वं नैव कुर्य्याद् व्रतान्तरम्'। इत्यत्र उपवास-व्रते पारणनियमात् जलेन पारणं विधाय तद्दिने उपवासादिः कार्य्यः।

अथ भैमी। विष्णुधर्मोत्तरे। 'मृगशीर्षे शशधरे माघे मासि प्रजायते। एकादश्यां सिते पक्षे सोपवासो जितेन्द्रियः। द्वादश्यां षट्तिलाचारं कृत्वा पापात् प्रमुच्यते। तिलस्नायी तिलोद्वर्त्ती तिलहोमी तिलोदकी। तिलस्य दाता भोक्ता च षट्तिली नावसीदति'। मत्स्यपुराणे। 'यद्यष्टम्यां चतुर्दश्यां द्वादश्यामथ भारत। अन्येष्वपि दिनर्क्षेषु न शक्तस्त्वमुपोषितुम्। ततः पुण्यामिमां भीमतिथिं पापप्रणाशिनीम्। उपोष्य विधि-नानेन गच्छेद्विष्णोः परं पदम्'। भीमतिथीं भैमीत्वेन ख्याता-मेकादशीम्। अथ पार्वतीमहोत्तरैकादश्युपवासः। आश्विन-शुक्लपक्षमधिकृत्य। कल्पतरौ ब्रह्मपुराणम्। 'उपवासश्च कर्त्तव्य एकादश्यां प्रजागरः। द्वादश्यां वासुदेवस्य पूजितव्यश्च सर्वदा'।

अथ शयनादिकालः। भविष्यनारदीययोः। 'मैत्राद्यपादे स्वपितीह विष्णोर्वैष्णव्यमध्ये परिवर्त्तते च। पौष्णावसाने च सुरारिहन्ता प्रबुध्यते मासचतुष्टयेन'। मैत्रमनुराधा वैष्णव्यं श्रवणा पौष्णं रेवती। भविष्ये। 'निशि स्वापो दिवोत्थानं सन्ध्यायां परिवर्त्तनम्। अन्यत्र पादयोगे तु द्वादश्यामेव कारयेत्'। इत्यत्र नक्षत्रयोगप्राप्तौ फलातिशयः। एतद्विधानं वामनपुराणे। 'एकादश्यां जगत्स्वामिशयनं परिकल्पयेत्। शेषाहिभोगपर्य्यङ्कं कृत्वा संपूज्य केशवम्। अनुज्ञां ब्राह्मणे-भ्यश्च द्वादश्यां प्रयतः शुचिः। लब्ध्वा पीताम्बरधरं देवं निद्रां समानयेत्'। अनुज्ञां लब्ध्वा इत्यन्वयः। एकादशीसमये

दिवाशयनीयपरिकल्पनम्। रात्रौ द्वादशीश्रवणे निद्रेति विष्णु-
धर्मोत्तरे। 'खास्तीर्णशयनं कृत्वा शोभयेच्छोभयाशिनम्।
आषाढ़शुक्लद्वादश्यां विष्णुलोके महीयते। खास्तीर्णशयनं
शोभनास्तरणयुक्तं खट्टादि। वराहपुराणे श्रीभगवानुवाच।
'अन्यत्तु संप्रवक्ष्यामि कर्म संसारमोचनम्। कटश्चकुटजश्चैव
धवकोऽर्जुनकस्तथा। एभिरभ्यर्च्चनं कुर्य्याद्विधिदृष्टेन कर्मणा।
ततः संस्थापनं कृत्वा मम मन्त्रविधिः स्मृतः। नमो नाराय-
णायेत्युक्त्वा इमं मन्त्रमुदीरयेत्। मेघाश्चपि मेघश्यामं सुपाधमं
सिच्यमानं महीमिमां निद्रां भगवान् गृह्णातु लोकनाथ वर्षा-
स्विमं पश्यतु मेघवृन्दम्। ज्ञात्वैव पश्चैव च लोकनाथ मासा-
श्चत्वारि वैकुण्ठस्य तु पश्य नाथ आषाढ़शुक्लद्वादश्यां सर्वशा-
न्तिकरं शिवम्। यत्र तेन विधानेन भूमि मे कर्म कारयेत्
सपुमान् प्रपश्येत्तु संसारेषु युगे युगे'। शयने कुटजविधानात्
विष्णुधर्मोत्तरीयनिषेधोऽन्यत्र। धवकः कपित्थः संस्थापनं
समापनम्। भूमि इति पृथिव्याः सम्बोधनम्। 'एवमुक्तेन
मन्त्रेण कृष्णं सुष्वापयेत्ततः। सुप्ते त्वयि जगन्नाथ! जगत्सुप्तं
भवेदिदम्। विबुद्धे त्वयि बुध्येत जगत् सर्वं चराचरम्' इति
मन्त्रेण पूजयेत्। 'प्राप्ते भाद्रपदे मासि एकादश्यां सितेऽहनि।
कटदानं भवेद्विष्णोर्महापूजा प्रवर्त्तते'। कटदानं पार्श्वपरि-
वर्त्तः। कामरूपीयनिबन्धे। 'एवं संपूज्य विधिवद्भाद्रस्य
द्वादशीदिने। मन्त्रेणानेन देवेशं पार्श्वेन परिवर्त्तयेत्,
वासुदेव! जगन्नाथ! प्राप्तेयं द्वादशी नव। पार्श्वेन परि-
वर्त्तस्व सुखं स्वपिहि माधव!। त्वयि सुप्ते जगन्नाथे
जगत् सुप्तं भवेदिदम्। विबुद्धे त्वयि बुध्येत जगदेत-
च्चराचरम्'। ब्रह्मपुराणे। 'एकादश्यान्तु शुक्लायां कार्त्तिके
मासि केशवम्। प्रसुप्तं बोधयेद्रात्रौ श्रद्धाभक्तिसमन्वितः'।

रात्रौ प्रसुप्तमित्यन्वयः बोधनन्तु दिवैव। वाराहे। 'कौमुदस्य तु मासस्य या सिता द्वादशी भवेत्। अर्च्चयेद् यस्तु मां तत्र तस्य पुण्यफलं शृणु। यावल्लोका हि वर्त्तन्ते यावत् त्वञ्चैव माधवि !। मद्भक्तो जायते तावदन्यभक्तो न जायते'। कौमुदस्य कार्त्तिकस्य। माधवीति पृथिव्याः सम्बोधनम्। 'कृत्वा वै मम कर्माणि द्वादश्यां मत्परोनरः। ममैव बोधनार्थाय इमं मन्त्रमुदीरयेत्। महेन्द्ररुद्रैरभिनूयमानो भवानृषिर्वन्दितवन्दनीयः। प्राप्ता तवेयं किल कौमुदाख्या जागृष्व जागृष्व च लोकनाथ !। मेघागता निर्मलपूर्णचन्द्रः शारद्यपुष्पाणि च लोकनाथ !। अहं ददानीति च पुण्यहेतोर्जागृष्व जागृष्व च लोकनाथ !। एवं कर्माणि कुर्वीरन् द्वादश्यां ये यशस्विनि। मम भक्ता नरश्रेष्ठास्ते यान्ति परमां गतिम्'। अत्र मन्त्रद्वयपाठान्तरम् 'उत्तिष्ठोत्तिष्ठ गोविन्द ! त्यज निद्रां जगत्पते !। त्वया चोत्थीयमानेन उत्थितं भुवनत्रयम्' इति सम्प्रदायागतस्तृतीयश्लोके इति वाचस्पतिमिश्राः। शयनोत्थानमन्त्रास्तु कल्पतरुप्रभृतिग्रन्थसंवादाल्लिखिताः। तदेवं द्वादश्याम एकादश्यां वा रेवत्यन्तपादयोगवशाद्दिवोत्थानं नक्षत्रयोगाभावे तु द्वादश्यामेव कारयेदिति गुरुचरणाः। जीमूतवाहनस्तु भविष्ये। 'आभाकासितपक्षेषु मैत्र श्रवणरेवती। आदिमध्यावसानेषु प्रस्वापावर्त्तबोधनम्। आभाकासितपक्षेषु आषाढ़भाद्रकार्त्तिकशुक्लपक्षेषु एषाञ्च द्वादश्यां प्राप्तौ मुख्यः कल्पः। भविष्यपुराणम्। 'निशि स्वापो दिवोत्थानं सन्ध्यायां परिवर्त्तनम्। अन्यत्र पादयोगे तु द्वादश्यामेव कारयेत्'। विष्णुधर्मोत्तरे। 'विष्णुर्दिवा न स्वपिति न च रात्रौ प्रबुध्यते। द्वादश्यामृक्षसंयोगे पादयोगो न कारणम्। अप्राप्ते द्वादशीऋक्षे उत्थानशयने हरेः। पादयोगे न कर्त्तव्ये नाहो-

रात्रं विचिन्तयेत्'। वचनान्तरम्। 'रेवत्यन्तो यदा रात्री द्वादश्या च समन्वितः। तदा विबुध्यते विष्णुर्दिनान्ते प्राप्य रेवतीम्'। दिनान्ते त्रिधा विभक्तदिनतृतीयभागे द्विवोत्थान- मित्यनुरोधात्। अतएव 'रात्री विबोधो विनिहन्ति पौरान्। स्वापो दिवा राष्ट्रकुलं नृभर्त्तुः। सन्ध्याद्वये स्वल्पफला धरित्री भवेन्नराणामपि रोगदुःखम्' इति श्रुतेः। वराहपुराणे। 'द्वादश्यां सन्धिसमये नक्षत्राणामसम्भवे। आभाकासितपक्षेषु शयनावर्त्तनादिकम्। तदेवं शयनादौ कालचतुष्टयं द्वादश्यां निशादौ नक्षत्रयोगः। तदभावेऽपि निशाद्यनादरेण तिथ्यन्तरे पादयोगः। तस्याप्यभावेऽपि सन्ध्यायां नक्षत्रमात्रयोगः तस्याप्यभावे द्वादश्यामेव सन्ध्यायामिति। विष्णुधर्मोत्तरे। 'किं तन्मैत्राद्यपादेन दशम्यंशेन यो दिवा। पौष्णशेषेण किन्तेन प्रतिपद्यथयो निशि' इति दशमीप्रतिपदोर्निषेधादेकादश्यादि- पौर्णमास्यन्तानां तिथीनामभ्यनुज्ञानम्। पद्मपुराणे सर्वदेव- शयनावर्त्तनादिकमुक्तं यथा। 'प्रतिपद्धनदस्योक्ता पवित्रा- रोहणे तिथिः। श्रिया देव्या द्वितीया तु तिथीनामुत्तमा स्मृता। तृतीया तु भवान्याश्च चतुर्थी तत् सुतस्य च। पञ्चमी सोमराजस्य षष्ठी प्रोक्ता गुहस्य च। सप्तमी भास्करस्योक्ता दुर्गायाश्चाष्टमी स्मृता। मातॄणां नवमी प्रोक्ता दशमी वासु- केस्तथा। एकादशी ऋषीणान्तु द्वादशी चक्रपाणिनः'। चक्र- पाणिन इति पदव्यवहार इत्यस्मात्। 'त्रयोदशी त्वनङ्गस्य शिवस्योक्ता चतुर्दशी। मम चैव मुनिश्रेष्ठ ! पौर्णमासी तिथिः स्मृता। यस्य यस्य तु देवस्य यद्यत्त्रं तिथिश्च या। तस्य देवस्य यस्मिंश्च शयनावर्त्तनादिकम्'। अत्र हरिशयनाद्याषाढ़ादिविधा- नात्तत्साहचर्य्यादन्येषामपि तथा। ज्योतिषेऽपि। 'व्रजति यदा मिथुनं विहाय कर्कं त्यक्ता राजविवर्जितां तिथिं सूर्य्यः। भवति

तदा नियतं हिराषाढ़: सुरशयनविधिर्द्वितीये मासि'। राशा चन्द्रेण विवर्जिताम् अमावास्याम्। पूर्वं कृष्णपक्षे मिथुने संक्रान्ते इति शेषः। हरिनाथोपाध्यायास्तु यमः। 'शौराव्यौ शेषपर्य्यङ्के आषाढ्यां संविशेद्धरिः। निद्रां त्यजति कार्त्तिक्यां तयोस्तं पूजयेत् सदा। ब्रह्महत्यासमं पापं क्षिप्रमेव व्यपोहति। हिंसात्मकैश्च किं तस्य यज्ञैः कार्य्यं महात्मनः। प्रस्वापे च प्रबोधे च पूजितो येन केशवः'। आषाढ़शुक्लैकादशीमारभ्य पौर्णमासी पर्य्यन्तं विष्णोर्निद्राग्रहणरूपशयनसमयः। अतएव एकादश्यां शयनमभिधाय तदादिदिनपञ्चके कर्म कथनं ब्रह्मपुराणे। वराहपुराणीये तु। एकादशीकालीनमन्त्रे निद्राग्रहणाभिधानम्। यमस्मृतौ पौर्णमास्यां शयनाभिधानम् आषाढ़ीपदस्यानुपाधेस्तत्रैव प्रवृत्तेः। एवञ्च ब्रह्मपुराणे। यद्यपि एकादश्यां प्रबोधनमुक्तं तथापि तदादिदिनपञ्चकमेव प्रबोधसमयः। तेन वराहपुराणे द्वादश्यां प्रबोधाभिधानम्। यमस्मृतौ कार्त्तिक्यां प्रबोधाभिधानं सर्वसमञ्जसमिति। एवमेव श्रीदत्तोपाध्यायाः। कल्पतरुस्तु एकादश्यामेव शयनं प्रबोधञ्च। यमस्मृतावाषाढ़ीकार्त्तिकीपदमेकादशीपरम् आषाढ़स्येयं कार्त्तिकस्येयमिति व्युत्पत्त्या न तत्प्रत्ययानुपपत्तिः। अपवादविषयके क्वचिदुत्सर्गप्रवृत्तेरित्याहुः श्रीभगवद्वाक्यम्। 'मच्छयने मदुत्थाने मत्पार्श्वपरिवर्त्तने। फलमूलजलाहारी हृदि शल्यं ममार्पयेत्'। फलाहारपदमशनगर्भं तेन सर्वथा अनशनपरत्वम्। अत्र मलमासादिकृतविशेषो मलिम्लुचतत्त्वेऽनुसन्धेयः। विरुद्धं गुरुवाक्यस्य यदत्र भाषितं मया। तत् क्षन्तव्यं बुधैरेव स्मृतितत्त्वबुभुत्सया।

इति वन्द्यघटीयहरिहरभट्टाचार्य्यात्मज-श्रीरघुनन्दनभट्टाचार्य्यविरचिते तितत्त्वे स्मृ एकादशीतत्त्वं समाप्तम्।




# उद्वाहतत्त्वम् ।

प्रणम्य कमलाकान्तं वागीशं जगतां प्रभुम् । उद्वाहकर्मणस्तत्त्वं वक्ति श्रीरघुनन्दनः । अथ उद्वाहनिर्णयः । मनुशातातपौ । 'असपिण्डा च या मातुरसगोत्रा च या पितुः । सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने' । दारकर्मणि भार्य्यात्वसम्पादके कर्मणि । तच्च कर्म ग्रहणरूपम् । 'सद्यस्नानाद्धरेद्दारान्' इति यमवचनात् । 'अतःपरं समावृत्तः कुर्य्याद्दारपरिग्रहम्' इति संवर्त्तवचनात् भार्य्यां विन्देतेत्यादि विष्णादिवचनाच्च । तेन भार्य्यात्वसम्पादकं ग्रहणं विवाहः । तस्य स्वीकाररूपज्ञानविशेषस्य समवायविषयतयोर्भेदात् वरकन्ययोर्विवाहकर्त्तृत्वकर्मत्वे अतएव कन्यापुत्त्रविवाहेषु इति विष्णुपुराणोक्तं संगच्छते । भार्य्या त्वस्य स्वरूपसद्विशेषणत्वेन नेतरेतराश्रयदोष इति विवाहसम्पादकदानादिभेदात् ब्राह्मादिभेदः अतएव 'ब्राह्मो विवाह आहूय दीयते शक्त्यलङ्कृता' इति याज्ञवल्क्यवचने सब्राह्माभिधानो विवाहो यस्मिन् उक्तलक्षणवराय आहूय यथाशक्त्यलङ्कृतकन्या दीयते इति मिताक्षरा यस्मिन्निति ग्रहण इत्यर्थः । एवञ्च 'आच्छाद्य चार्च्चयित्वा च श्रुतशीलवते स्वयम् । आहूय दानं कन्याया ब्राह्मो धर्मः प्रकीर्त्तितः' । इति मन्वादिवचने यद्दानपदं तद्दीयते यस्मै ग्रहणाय इति व्युत्पत्त्या कृत्यलुटौ बहुलमिति लुटासिद्धमिति । ग्रहणपरं न तु भावसाधनपरं तथात्वे दातुरेव विवाहकर्त्तृत्वापत्तेः । अत्र प्रत्ययार्थग्रहणनिमित्तीभूतप्रकृत्यर्थत्यागेनैककर्त्तृकत्वमात्रानस्य खितादीत्यध्याहाराद्वा । यत्तु 'पाणिग्रहणिका

मन्त्रा नियतं दारलक्षणम्। तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे' इति मनुवचनं तद्विवाहगतविशेषसंस्कारार्थम् अतएव निष्ठेत्युक्तं तथाच रत्नाकरः। 'पाणिग्रहणिका मन्त्रा विवाहकर्माङ्गभूता' इति व्यक्तमाह रत्नाकरधृतो लघुहारीतः। 'तत्रापि पाणिग्रहणेन जाया त्वं कृतम्' हि जायापतित्वं सप्तमे पदे' इति विवाहस्तु पाणिग्रहणात् पूर्वं वृत्त एवेति। सुव्यक्तं हरिवंशीयात्रशङ्कूपाख्याने 'पाणिग्रहणमन्त्राणां विघ्नं चक्रे स दुर्मतिः। येन भार्य्या हृता पूर्वं कृतोद्वाहा परस्य वै'। कृतोद्वाहा पाणिग्रहणात् पूर्वं हृता इत्यर्थः। 'पाणिग्रहण-संस्कारः सवर्णासूपदिश्यते। असवर्णा स्वयं ज्ञेयो विधिरुद्वाह-कर्मणि। शरः क्षत्रियया ग्राह्यः प्रतोदो वैश्यकन्यया। वसनस्य दशा ग्राह्या शूद्रयोत्कृष्टवेदने'। इति मनुवचनान्तरेऽपि उद्वा-हपाणिग्रहणयोः पृथकत्वं प्रतीयते। मैथुने मिथुनशब्दवाच्य-स्त्रीपुंससाध्ये आधानपुत्रोत्पत्त्यादौ सा प्रशस्ता अतएव भट्टभाष्ये स्मृतिः। 'न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते। तया हि सहितः सर्वान् पुरुषार्थान् समश्नुते'। याज्ञवल्क्यः। लोकानन्त्यं दिवः प्राप्तिः पुत्रपौत्रप्रपौत्रकैः। यस्मात्तस्मात् स्त्रियः सेव्या भर्त्तव्याश्च सुरक्षिताः'। सापिण्ड्यमाह मत्स्य-पुराणम्। 'लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः। पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम्'। एतत् प्रप-ञ्चितं शुद्धितत्त्वे। असपिण्डा च या मातुरिति चकारात् मातुरसगोत्रा च 'सगोत्रां मातुरप्येके नेच्छन्त्युद्वाहकर्मणि' इति व्यासोक्तेः असगोत्रा चेति चकारात् पितुरसपिण्डा च विष्णु-पुराणे। पितृपक्षे सप्तमीनिषेधात् यथा 'सप्तमीं पितृपक्षाच्च मातृपक्षाच्च पञ्चमीम्। उद्वहेत द्विजो भार्य्यां न्यायेन विधिना नृप'॥ सप्तमीं पञ्चमीं परिहृत्येति शेषः। अतएव एकपितृ-

कस्यापि पितृपेक्षया सप्तमवर्ज्जनाय मनुवचने पितुरिति सार्थकं न वरापेक्षयेति शूलपाणिमहामहोपाध्यायैस्तु क्षेत्र-मातृगोत्रस्य द्विपितृकस्य क्षेत्रजादेर्बीजिसगोत्रावर्ज्जनाय पितु-रित्युक्तम् उद्वहेत द्विजो भार्य्यामित्यादौ भाविनि भूतवदुप-चारः। विवाहानन्तरमेव भार्य्यात्वनिष्पत्तेः न सगोत्रां न समान-प्रवरां भार्य्यां विन्देत मातृतस्त्वापञ्चमात् पितृतस्त्वासप्तमादिति विष्णुसूत्रे सप्तमीनिषेधाच्च अत्र मातृपदेन मातामहो लक्ष-णीयः। अथातोऽयां स्त्रीन् पितृतस्त्रीन् मातृतः तत्पत्नीश्चेति पितृतर्पणमिति गोभिलसूत्रे त्रीनिति पुंलिङ्गनिर्द्देशेन तत्-पत्नीश्चेति पृथगुपादानेन च मातृत इति मातामहपरत्ववत्। अन्यथा 'अप्रत्तानां तथा स्त्रीणां सापिण्ड्यं साप्तपौरुषम्। प्रत्तानां भर्त्तृसापिण्ड्यं प्राह देवः पितामहः'। इति रत्नाकर-धृतकूर्म्मपुराणवचनान्मातुर्विवाहेन तत्पितृकुले सापिण्ड्य-निवृत्तेः भर्त्तृसापिण्ड्येन सापिण्ड्यसिद्धेः विवाहेन च तस्याः पितृगोत्रत्वनिवृत्तेः पितृसपिण्डापितृसगोत्रावर्ज्जनादेव तत्-सिद्धेरसपिण्डा च या मातुरित्यत्र मातुरुपादानं व्यर्थं स्यात् एवमेव विवेकक्षतः मातामहपक्षे तु 'सापिण्ड्यं पाञ्चपौरुषम्। पञ्चमात् सप्तमादूर्द्ध्वं मातृतः पितृतः क्रमात्। सपिण्डता निवर्त्तेत सर्व्ववर्णेष्वयं विधिः' इति हरिनाथोपाध्यायधृत-नारदवचनात्। 'पिण्डनिवृत्तिः सप्तमे पञ्चमे वा' इति कार-लताधृतगोतमसूत्रे पञ्चम इत्येतस्यापि मातामहपक्षविषय-त्वाच्च पिण्डनिवृत्तिरित्यत्र सापिण्ड्यनिवृत्तिरित्याचारमाध-वीये पाठः तदा व्यक्त एवार्थः एवञ्च अदत्तकन्यानां पितृपक्षे सापिण्ड्यं साप्तपौरुषं मातामहपक्षे पाञ्चपौरुषं सापिण्ड्यञ्च वैवाह्यमात्रे पूर्व्वोक्तविष्णुपुराणविष्णुसूत्राभ्यां 'असमानार्षेयीं कन्यां वरयेत् पञ्च मातृतः परिहरेत् सप्त पितृतः' चौ। हारीत

पञ्च पितृतो वा' इति पैठीनसिवचनैकवाक्यत्वात् त्रीन् पञ्चे-
त्यसुरादिविवाह एव विषयं चत्रियादिविवाहविषयं वा इति
विवेककृतः असमानजातीया विवाहे त्रीनित्यादि व्यवस्थित-
विकल्पित इति रत्नाकरादयः। असमानजातीया च मूर्द्धाभि-
षिक्तादेः। वस्तुतस्तु त्रीनित्यादि अधिकदोषार्थम् अन्यथा
'मातृस्वसृपितृस्वसृदुहितरो मातुलसुताश्च धर्मतस्ता भगिन्यो
भवन्ति ता वर्जयेत्' इति पैठीनसिवचनान्तरस्य का गतिः।
एवञ्च त्रीन् मातृत इति प्रमातामह वृद्धप्रमातामह मातृबन्धु-
पेक्षया सन्तानं बोद्धव्यम्। एवं मातामहापेक्षया मातृस्वसृ-
दुहितृमातुलदुहित्रोस्त्रितयान्तर्गतत्वेऽपि पृथक् निषेधः प्रमा-
तामहवृद्धप्रमातामहमातृबन्धुसन्तानवितयेभ्योऽपि अधिक-
दोषाय एवं पितृपक्षेऽपि। यत्तु मातृपितृसम्बन्धा आसप्तमाद-
विवाह्याः कन्या भवन्ति। आपञ्चमादन्येषां मतमिति सुमन्तु-
वचने मातृकुलेऽप्यासप्तमत्वमुक्तं तद्वचनान्तरैकवाक्यतया वरं
तन्मातरञ्च आदायैव गणनया बोध्यं सन्तानवर्जने तु न सप्तम-
त्वम्। किन्तु वचनान्तरैकवाक्यतया मातामहादिपञ्चाना-
मेव पञ्चमी ग्राह्या अन्यथा नानाश्रुतिकल्पना स्यात्। एवमा-
पञ्चमादिति पैठीनस्युक्त त्रीन् मातृत पञ्च पितृतः इत्यस्य
समानम् अत्रापि मातृपक्षे वरं तन्मातरञ्चादाय गणनाया न
विरोधः। एतेन आसप्तमादिति पितृपक्षपरम्। आपञ्चमादिति
मातृपक्षपरं 'सप्तमीं पितृपक्षाच्च मातृपक्षाच्च पञ्चमीम्' इत्या-
द्यनेकवचनैकवाक्यत्वादिति निरस्तम्। भवन्तीत्यनेन उभय-
पक्षे स्वमतमभिधाय आपञ्चमादन्येषामित्यस्य उभयपक्षे परम-
ताभिधानेनैव युक्तत्वात्। एवञ्च सुमन्तुवचने मातृकुले सप्तम-
वर्जनेन अन्यवचनोक्तपञ्चमादिवर्जने मातृपदे मातामहल-
क्षणा स्फुटैव। एतेन जनन्यपेक्षया वा अप्रत्तानां त्रिपौरुष-

मिति वशिष्ठोक्तागूढ़ाकाशौनचिपुत्त्रत्वसपिण्डापेक्षया वरापेक्षया वा पैठीनसुक्तमातृपञ्चपञ्चमत्वविवेचनं निरस्तम्। अतएव याज्ञवल्क्यटीकायां शूलपाणिमहामहोपाध्यायैर्मातामहच्चो- पर्य्यधःसपिण्डसन्ततिः पञ्चमी परिहरणीयेत्युक्तम्। एवञ्च मनुवचने चकारादुक्तव्याख्यानेन मातृपितृसगोत्रावर्जनेनैव तत् सपिण्डयोर्निषेधसिद्धेर्यदसपिण्डेति पृथगुक्तं तत् सपिण्ड- कन्यापरम्पराजाताया अपि पञ्चमीसप्तमीपर्य्यन्तायाः निषे- धार्थम् अतएव वक्ष्यमाणविगोत्रात् परतो यदीति प्रतिप्रसवः सार्थकः सपिण्डरूपकन्यामात्रवर्जने तु व्यर्थः स्यादिति। अत्र केवलपितृमातृशब्दाभ्यां पितृमातृसम्बन्धित्वेन पितृसपिण्ड- मातामहसपिण्डपितृबन्धुमातृबन्धुपरिग्रहात् तत्सन्ततीनां निषेधः। बन्धु निषेधे नारदः। 'आसप्तमात् पञ्चमाच्च बन्धुभ्यः पितृमातृतः। अविवाह्या सगोत्रा च समानप्रवरा तथा। सप्तमे पञ्चमे वापि येषां वैवाहिकी क्रिया। ते च सन्तानिनः सर्वे पतिताः शूद्रतां गताः'। मातृतः पितृतो बन्धुभ्य इति पञ्चमीविभक्तिर्विनिगमकाभावात् पूर्वापरावधिकार्था बान्ध- वाश्च 'पितुः पितुः स्वसुः पुत्राः पितुर्मातुः स्वसुः सुताः। पितु- र्मातुलपुत्राश्च विज्ञेयाः पितृबान्धवाः। मातुर्मातुः स्वसुः पुत्रा मातुः पितुः स्वसुः सुताः। मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवाः'। तेन पितामहभगिनीपुत्रः पितामहीभगि- नीपुत्रः पितामहीभ्रातृपुत्रश्चेति त्रयः पितृबान्धवाः। तथा मातामहीभगिनीपुत्रो मातामहभगिनीपुत्रो मातामहीभ्रा- तृपुत्रश्चेति त्रयो मातृबान्धवा भवन्ति। अत्र च 'जमदग्नि- र्भरद्वाजो विश्वामित्रात्रिगौतमाः। वशिष्ठकाश्यपागस्त्यामुन- यो गोत्रकारिणः एतेषां यान्यपत्यानि तानि गोत्राणि मन्वते' इति स्मृतेः। गोत्राणि तत्तन्नामकगोत्रभागीनि वंशपरम्परा-

प्रसिद्धमादिपुरुषब्राह्मणरूपं गोत्रं तेन काश्यपगोत्रं यस्य स काश्यपगोत्रः प्रवरस्तु गोत्रप्रवर्त्तकस्य मुनेर्व्यावर्त्तको मुनिगण इति माधवाचार्य्यः। एवञ्च यद्यपि राजन्यविशां प्रतिस्विक-गोत्राभावात् प्रवराभावस्तथापि पुरोहितगोत्रप्रवरौ वेदितव्यौ तथा यजमानस्यार्षेयान् गोत्रप्रवरान् प्रवृणीतेत्युक्त्वा पौरोहि-त्यान् राजन्यविशां प्रवृणीतेति आश्वलायन इति मिताक्षरा अतएवासमानार्षगोत्रजामिति ब्राह्मणादिवर्णत्रयविषयमिति सम्बन्धविवेकः तर्हि शूद्रस्य श्राद्धादावधिकारश्रुतेः कथं गोत्रो-च्चारणमिति चेत् 'गोत्रं स्वरान्तं सर्व्वत्र गोत्रस्याक्षय्यकर्म्मणि। गोत्रस्तु तर्पणे प्रोक्तः कर्त्ता एवं न मुह्यति' इति गोभिलीय-दर्शनादाकाङ्क्षितत्वेन 'शूद्राणां मासिकं कार्य्यं वपनं न्याय-वर्त्तिनाम्। वैश्यवच्छौचकल्पश्च द्विजोच्छिष्टस्य भोजनम्' इति मनुवचने चकारसमुच्चितगोत्रेऽपि वैश्यधर्म्मातिदेशात् पूर्व्वपुरोहितगोत्रभागित्वं प्रतीयते। तर्हि न समानगोत्रां समानप्रवरां भार्य्यां विन्देतेत्यनेन शूद्रस्यापि सगोत्रा कथं न निषिध्यते इति चेदत्रोपदिष्टातिदिष्टगोत्रस्यैव निषेधो न तु अतिदिष्टातिदिष्टशूद्रगोत्रादेः अन्यथातिदेशे क्षत्रियवैश्यमात्रो-पादानं व्यर्थं स्यादिति न्यायमूलं प्रागुक्तमनुशातातपवचने द्विजातिग्रहणं सगोत्रावर्ज्जने शूद्रस्याग्रहणार्थं सपिण्डसमानोद-कता तु शूद्रेऽप्यविशिष्टा अन्यथा 'पञ्चमात् सप्तमादूर्द्ध्वं मातृतः पितृतः क्रमात्। सपिण्डता निवर्त्तेत सर्व्ववर्णेष्वयं विधिः' इति। हरिनाथोपाध्यायधृतनारदवचने चातुर्व्वर्ण्यसाधारणं वैवाहिकसापिण्ड्यविवेचनं व्यर्थं स्यात्। बौधायनः 'सगोत्रा-ञ्चेदमत्वा उपयच्छेन्मातृवदेनां बिभृयादिति' सुमन्तुः 'पितृ-ष्वसृसुतां मातृष्वसृसुतां मातुलसुतां मातृसगोत्रां समानार्षेयीं विवाह्य चान्द्रायणं चरेत् परित्यज्य चैनां बिभृयात्' इति

आचारमाधवीयमदनपारिजातयोरापस्तम्बः 'समानगोत्रप्र-
वरां समुद्वाह्योपगम्य च। तस्यामुत्पाद्य चाण्डालं ब्राह्मण्या-
देव हीयते' समानप्रवरत्वं संख्यासंख्ययोरन्यूनानतिरिक्तत्वेन
भिन्नगोत्रेऽपि समानप्रवरत्वं यथा वात्स्यसावर्णिगोत्रयोरौर्व-
च्यवनभार्गवजामदग्न्याप्नुवत् प्रवराः। एकगोत्रेऽपि प्रवरान्यत्वं
यथा घृतकौशिकगोत्रस्य कुशिककौशिकघृतकौशिकाः प्रवराः।
कौशिककुशिकबन्धुलाश्चेति प्रवराः। अतो गोत्रप्रवरयोः पृथङ्-
निषेध इति सगोत्रा समानप्रवरा ग्रहणमविवाह्यस्त्रीमात्रो-
पलक्षणमिति 'प्रायश्चित्तविवेकः। अतोऽसवर्णाविवाहेऽपि
चान्द्रायणं 'चान्द्रायणेन चैकेन सर्वपापक्षयो भवेत्' इति
आपस्तम्बवचनात्। कलौ त्वसवर्णाया अविवाह्यत्वमाह
बृहन्नारदीयं 'समुद्रयात्रास्वीकारः कमण्डलुविधारणम्।
द्विजानामसवर्णासु कन्यासूपयमस्तथा। देवरेण सुतोत्पत्ति-
र्मधुपर्के पशोर्बधः। मांसादनं तथा श्राद्धे वानप्रस्थाश्रम-
स्तथा। दत्तायाश्चैव कन्यायाः पुनर्दानं परस्य च। दीर्घ-
कालं ब्रह्मचर्य्यं नरमेधाश्वमेधकौ। महाप्रस्थानगमनं गोमे-
धश्च तथा मखम्। इमान् धर्मान् कलियुगे वर्ज्यानाहुर्मनी-
षिणः'। मांसादनं गोमहिषादेः। हेमाद्रिपराशरभाष्ययो-
रादित्यपुराणम्। 'दीर्घकालं ब्रह्मचर्य्यं धारणञ्च कमण्डलोः।
देवरेण सुतोत्पत्तिर्दत्तकन्या प्रदीयते। कन्यानामसवर्णानां
विवाहश्च द्विजातिभिः। आततायिद्विजाग्र्याणां धर्मयुद्धे
निर्हिंसनम्। वानप्रस्थाश्रमस्यापि प्रवेशो विधिदेशितः।
वृत्तस्वाध्यायसापेक्षमघसङ्कोचनं तथा। प्रायश्चित्तविधानञ्च
विप्राणां मरणान्तिकम्। संसर्गदोषः पापेषु मधुपर्के पशो-
र्बधः। दत्तौरसेतरेषान्तु पुत्रत्वेन परिग्रहः। शूद्रेषु दास-
गोपालकुलमित्रार्द्धसीरिणाम्। भोज्यान्नता गृहस्थस्य तीर्थ-

सेवातिदूरतः । ब्राह्मणादिषु शूद्रस्य पक्वादिक्रियापि च । भृग्वग्निमरणञ्चैव वृद्धादिमरणं तथा' । इत्यादीनि अभिधाय 'एतानि लोकगुप्त्यर्थं कलेरादौ महात्मभिः । निवर्त्तितानि कर्म्माणि व्यवस्थापूर्वकं बुधैः । समयश्चापि साधूनां प्रमाणं वेदवद्भवेत्' इति समयः संवित् सा च प्रतिज्ञा 'समयाः शपथाचारकालसिद्धान्तसंविदः' इत्यमरोक्तेः 'संविदागूः प्रतिज्ञानं नियमाश्रवसंश्रवाः' इति तेनैवोक्तेः संसर्गदोषः पापेषु इत्यत्र विशेषयति पराशरः । 'त्यजेद्देशं कृतयुगे त्रेतायां ग्राममुत्सृजेत् । द्वापरे कुलमेकन्तु कर्त्तारन्तु कलौ युगे । कृते सम्भाषणादेव त्रेतायां स्पर्शनेन च । द्वापरे त्वर्थमादाय कलौ पतति कर्म्मणा' देशं पापियुतं एवमन्यत्रापि कर्म्मणा वधादिकर्म्मणेति माधवाचार्य्यः । वस्तुतस्तु कर्त्तारं तु इत्यनेन कर्त्तृसंसर्गनिषेधात् कर्म्मणेति सम्भाषणस्पर्शनधनग्रहणेतरगुरुसंसर्गपरम् । अतएव स्कान्दे परदाराभिगामिनमुपक्रम्य 'एतैः सह समायोगं यः करोति दिने दिने । तुल्यतां याति विप्रेन्द्र ! कलौ संवत्सरे गते' । याज्ञवल्क्यटीकायां वृहस्पतिः कलावित्यधिकृत्य 'अनेकधाकृताः पुत्रा ऋषिभिर्यैः पुरातनैः । न शक्यन्तेऽधुना कर्त्तुं शक्तिहीनैरिदन्तनैः' । दत्तकपुत्रमाह याज्ञवल्क्यः 'दद्यान्माता पिता वा यं स पुत्रो दत्तको भवेत्' । तत्प्रकारमाह वशिष्ठः 'शुक्रशोणितसम्भवः पुत्रो मातापितृनिमित्तकः । यस्य प्रदानविक्रयत्यागेषु मातापितरौ प्रभवतः नतु एकं पुत्रं दद्यात् प्रतिगृह्णीयाद्वा स हि सन्तानाय पूर्व्वेषां स्त्रीपुत्रं न दद्यात् प्रतिगृह्णीयात् वा अन्यत्रानुज्ञानाद्भर्त्तुः पुत्रं प्रतिग्रहीष्य न बन्धूनाहूय राजनि निवेद्य निवेशनस्य मध्ये व्याहृतिभिर्हुत्वा प्रतिगृह्णीयादिति' अतस्त्रिया अपि पत्यनुमत्या दानप्रतिग्रहयोः श्रुतेः प्रतिग्रहे

कुत्वेति अयथं कृतादिप्रतिष्ठावत् ब्राह्मणद्वारा होमे नावि-रुद्धम्। एवं शूद्रस्यापीति एतयोर्होमाधिकारः पश्चादुपपा-दयिष्यते। प्रपञ्चस्तु मलिम्लुचतत्त्वेऽनुसन्धेयः। 'गोत्र ऋक्थे जनयितुर्न हरेद्दत्त्रिमः सुतः। गोत्र ऋक्थानुगः पिण्डो व्यपैति ददतः स्वधा' इति मनूक्तेः अत्र स्वधाशब्दः पिण्डभक्ष्या-र्थकः तथाच गुणविष्णुधृता स्मृतिः स्वधा वै पितॄणामन्नमिति जनकगोत्र ऋक्थग्राहित्वेन तत् पिण्डश्राद्धकर्तृत्वेन च प्रति-ग्रहीतुरेव गोत्रादिभागित्वं दत्तकस्य प्रतीयते। कालिका-पुराणे 'औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च' इत्यादीनुप-क्रम्य 'पितुर्गोत्रेण यः पुत्रः संस्कृता पृथिवीपते'। आचूडान्तं न पुत्रः सपुत्रतां याति चान्यतः। चूडाद्या यदि संस्कारा निजगोत्रेण वै कृताः। दत्ताद्यास्तनयास्ते स्युरन्यथा दास उच्यते। ऊर्द्ध्वं तु पञ्चमाद्वर्षान्न दत्ताद्याः सुता नृप!। गृहीत्वा पञ्चवर्षीयं पुत्रेष्टिं प्रथमं चरेत्'। औरसमाह बौधायनः। 'सवर्णायां संस्कृतायां स्वयमुत्पादितमौरसं विद्यादिति'। अलं प्रकृतमनुसरामः व्यासः। 'सगोत्रां मातुरप्येके नेच्छन्त्युद्वाह-कर्मणि। जन्मनाम्नो रविज्ञानेऽप्युद्वहेदविशङ्कितः'। तेन मातामहसमानोदकाप्यविवाह्येत्यर्थः। एतदेकवाक्यतया मनु-वचने चकारानुषक्तं मातुरसगोत्रेतिपदं मातामहासमानो-दकापरम्। यत्तु 'मातुः सपिण्डा यत्नेन वर्जनीया द्विजातिभिः' इति व्यासवचनान्तरं तद्यत्नेनेति ग्रहणादतिशयदोषार्थं मातृसपिण्डसन्ततिकन्या परम्परायाः पञ्चमीपर्य्यन्ताया वर्ज-नार्थञ्च। कश्चित् एतद्वचनस्य असुरादिविवाहपरत्वेन तादृश-विवाहे 'समानोदकापि विवाह्येत्याह' तन्न प्रमाणाभावात्। मत्स्यसूक्तमहातन्त्रे 'मातुर्यन्नाम गुह्यं' स्यात् सुप्रसिद्धमथापि वा। तन्नाम्नी या भवेत् कन्या मातृनाम्नी प्रचक्षते।' प्रमा-

द्वादृयदि गच्छीयात् प्रायश्चित्तं समाचरेत्। ततश्चाद्भायथं ज्ञात्वा तां कन्यां परिवर्जयेत्'। यत्तु 'मातृनाम्नी यदा कन्या विवाहे कुलजा हि सा। विप्रैर्नामान्तरं कार्य्यं तस्याः पित्रो-रनुज्ञया'। इति राजमार्त्तण्डीयवचनं तद्वाग्दानोत्तरज्ञाने बोध्यम् अन्यथा पूर्वोक्तनिषेधवैयर्थ्यापत्तेः। गृहस्थरत्नाकरे। 'त्रिविवाहं कृतं येन न करोति चतुर्थकम्। कुलानि पातयेत् सप्त भ्रूणहत्याव्रतं चरेत्'। एतद्वचनं वर्त्तमानलौकिकपर-मिति वदन्ति। अत्र पितृबन्धुसप्तमीपञ्चमीपरिहारे पितृ-बन्धुमातृबन्धुविरहेऽपि तयोर्योग्यतामवलम्ब्य सप्तमीपञ्चमी-पर्य्यन्तायाः कन्यायाः परीहारः अन्यथा पितृमातामहमातृ-मातामहप्रभृतिपूर्वतनपञ्चत्रिपुरुषान्यतममादाय अधस्तनसप्त-पञ्चान्तर्गतायाः कन्यायाः पितृबन्धुमातृबन्धुसत्त्वे विवाहाभावः तदसत्त्वे विवाह इति महाजनविरोधः स्यात् एष एवार्थो याज्ञवल्क्यटीकायां शूलपाणिमहामहोपाध्यायैः एतेन पितु-र्मातुश्च मातामहोपरितनपुरुषेषु अपि पितृबन्धुमातृबन्धु-निपातोऽपि न विवाह इत्यनेन निर्दिष्ट इति एवञ्च पितु-र्मातुश्च मातामहकन्यान्तरसत्त्वे तस्याः परतः तत्सहितसप्तमी-पर्य्यन्तायाः परीहारः एवं बन्धन्तरेऽप्यूह्यम्। अत्र सप्तमगण-नप्रतियोगि-पितृपितृबन्धु-पञ्चमगणनप्रतियोगिमातामह-मातृ-बन्धुगोत्रमादायैव प्रतिप्रसवे त्रिगोत्रगणनम्। न तु वरगोत्रा-पेक्षया तस्य गणनायामप्रतियोगित्वात्। न वा तच्चतुष्टयगोत्रं परित्यज्य त्रिगोत्रगणनं तथात्वे शूलपाणिमहामहोपाध्या-योक्त पञ्चमीकन्याया विवाहाभ्यनुज्ञानं नोपपद्येत। न च तदेवायुक्तमिति वाच्यं मर्य्यादाभिविधिसन्देहे कार्य्यान्वित-त्वेनाभिविधेरेव युक्तत्वात् तद्यथा 'सन्निकर्षेऽपि कर्त्तव्यं त्रिगोत्रात् परतो यदि' इति मत्स्यपुराणवचनं सन्निकर्षेऽपि

प्रतियोगिचतुष्टयापेक्षया सप्तमपञ्चमाभ्यन्तरे दुष्टत्वमुरपि।
'असम्बन्धा भवेद् या तु पिण्डेनैवोदकेन वा। सा विवाह्या
द्विजातीनां त्रिगोत्रान्तरिता च या'। एवं प्रतियोगिचतु-
ष्टयापेक्षया सप्तमपञ्चमगणने पूर्वत्र यतो यतः सन्तानभेदः
तं तमादाय परत्र तच्चतुष्टयमादाय गणयेत् यावत् सप्तमं
यावत् पञ्चमञ्च यथा विष्णुरूपसमुच्चये 'एवमुक्तप्रकारेण पितृ-
बन्धुषु सप्तमात्। ऊर्द्धमेव विवाह्यत्वं पञ्चमात् मातृबन्धुतः।
सन्तानो भिद्यते यस्मात् पूर्वजादुभयत्र च। तमादाय गणे-
द्धीमान् वरं यावच्च कन्यकाम्'। वरं यावदिति तु मातामह-
पक्षे सुमन्तूक्तसप्तमादिगणनस्य वरापेक्षितत्वेन तत्परम्। अत्र
पूर्वजादित्युपादानात् पितृबन्ध्वपेक्षया पूर्वेषां षण्णां चतुर्णां
प्रत्येकापेक्षया सप्तमपञ्चमोर्द्धत्वं बन्धूनां परतस्तु न प्रत्येका-
पेक्षया किन्तु बन्ध्वपेक्षयैव सप्तमपञ्चमोर्द्धत्वं गणनायां बोध्यम्
एवं यस्य सापिण्ड्यं विविच्यते तस्य तद्गणनायां पूर्वेषां षण्णां
प्रत्येकापेक्षया तत्परजातसप्तान्यतमान्तर्भावः परेषां षण्णान्तु
प्रत्येकापेक्षया न गणना किन्तु स्वमात्रापेक्षयैव अन्यथा स्वापे-
क्षयाधस्तनाष्टमस्य स्वपुत्रापेक्षया सप्तान्तर्गतत्वात् सापिण्ड्यं
स्यात् अतएव स्वापेक्षया प्राक्तनाष्टमस्य स्वपित्राद्यपेक्षया
सप्तान्तर्गतत्वेऽपि न सापिण्ड्यं पिण्डतल्लेपदातृभोक्तृत्वरूप-
सम्बन्धाभावात् अतएव द्वैतनिर्णयेऽपि सापिण्ड्यगणने वीजि-
नमारभ्येत्युक्तम् एवं मातामहापेक्षया पञ्चमगणनेत्यपि बोध्यम्
अत्र च पितृबन्धुमातृबन्धु पूर्वेषां वर्जने पितृबन्धुत्वसम्बन्ध-
वीजीभूतानां पितुः पितामहादिमातामहादीनां मातृबन्धु-
त्वसम्बन्धवीजीभूतानां मातुः पितामहादिमातामहादीनाञ्च
पुरुषपरम्पराणामेव ग्रहणं न तु पितृमातुलपुत्रमातृमातुल-
पुत्रेतरपितृबन्धुमातृबन्धुपितृप्रभृतीनां ग्रहणे सम्बन्धवीजि-

त्वायोगादिति बन्ध्वपेक्षया गणनेऽपि पूर्व्वेषां तत्तत्सन्तानभेद-
कानां सप्तपञ्चान्तर्गतानां पुंसामेव ग्रहणं न तूपदिष्टमातृबन्धु-
पितृबन्धुमातृव्यतिरिक्तानां मातामहादिपितामहादिस्त्रीपर-
म्पराणां ग्रहणम् 'आसप्तमात् पञ्चमाच्च बन्धुभ्यः पितृमातृतः' ।
इति नारदवचने पुंस्त्वस्य विधेयविशेषणत्वेन विवक्षितत्वात्
एवमेव विवाहतत्त्वार्णवः अत्र यद्यपि पितामहस्वसृपुत्त्ररूप-
बन्ध्वोर्य्यं मातामहाद्यास्ते पितृसपिण्डत्वेन निषिद्धास्तथापि
तद्बन्धूपादानं तदपेक्षयाधस्तनसप्तमनिषेधाय एवं यद्यपि
मातामहस्वसृपुत्त्ररूपबन्ध्वोर्य्यं मातामहाद्यास्ते मातामहसपि-
ण्डत्वेन निषिद्धास्तथापि तद्बन्धूपादानं तदपेक्षयाधस्तनपञ्चम-
निषेधाय यद्यपि पितुर्मातृस्वसृपुत्त्ररूपबन्ध्वोर्य्यं मातामहा-
द्यास्ते पितुर्मातुलपुत्त्रस्य पितामहाद्या एवेति पूर्व्ववचने पृथ-
गुपादानं व्यर्थं तथापि पूर्व्ववदधस्तनतत्तत्सप्तमवर्ज्जनाय एवं
तद्रूपमातृबन्धुद्वयोपादानं तदपेक्षयाधस्तनतत्तत्पञ्चमवर्ज्जनाय
तथा सप्तमपञ्चममध्ये पुरुषाणां पुरुषान्तरेण विवाह्यत्वाप्रसक्तेः
तत्परम्पराजातायाश्च सप्तमपञ्चमान्तर्व्वर्त्तिन्याः कन्याया अवि-
वाह्यत्वं ज्ञेयम् अतएव मार्कण्डेयपुराणम् । 'उद्वहेत् पितृमा-
त्रोस्तु सप्तमीं पञ्चमीं तथा' इत्यत्र स्त्रीत्वेन निर्देशः । सप्तमीं
पञ्चमीं परित्यज्येत्यर्थः ।

एष संक्षेपः । पितृपितामहादीनां सप्तानां सन्ततिः सप्त-
मीपर्य्यन्ता नोद्वाह्या । एवं पितृबन्धुप्रभृतिसम्बन्धघटकानां
सप्तानां सन्ततिः सप्तमीपर्य्यन्ता नोद्वाह्या एवं मातामहप्रमा-
तामहादीनां पञ्चानां सन्ततिः पञ्चमीपर्य्यन्ता नोद्वाह्या एवं
मातृबन्धुप्रभृतिसम्बन्धघटकानां पञ्चानां सन्ततिः पञ्चमीप-
र्य्यन्ता नोद्वाह्या बन्धुतम्मात्रोरसत्त्वेऽपि पितृमातामहमातृ-
मातामहप्रभृत्युपरितनानां पञ्चानां त्रयाणां सप्तमीपञ्चमी-

पर्य्यन्ता नोद्वाह्येति एवञ्च पितुर्मातुश्च मातामहकन्यान्तरवर्त्ती तामादाय सप्तमीपञ्चमीपर्य्यन्तायाः परीहारः एवं बन्ध्वन्तरेऽप्यूह्यं बन्ध्वपेक्षया त्रिगोत्रगणनं परतः सर्व्वत्र। पूर्व्वतस्तु पितुर्मातुश्च मातुलपुत्ररूपबन्ध्वोरपि स्वापेक्षया अन्येषां बन्धूनां मातामहगोत्रापेक्षया त्रिगोत्रगणनं सर्व्वसामञ्जस्यं स्यात् अन्यथा पितुः पितामहदौहित्रीकन्यायाः पितामहभगिनीपुत्रबन्ध्वपेक्षया त्रिगोत्रात् पराया विवाहः प्रसज्येत स चायुक्तः पितृगोत्रापेक्षया तस्यास्त्रिगोत्रमध्यवर्त्तित्वात्। एवं पितुश्च प्रमातामहदौहित्रीकन्यायाः पितामहीभगिनीपुत्रबन्ध्वपेक्षया त्रिगोत्रात् पराया विवाहः प्रसज्येत स चाप्ययुक्तः पितामहीभ्रातृपुत्रबन्ध्वपेक्षया तस्यास्त्रिगोत्रमध्यवर्त्तित्वात्। एवं मातुः प्रपितामहदौहित्रीकन्यायाः मातामहभगिनीपुत्रबन्ध्वपेक्षया त्रिगोत्रात् परायाविवाहः प्रसज्येत स चायुक्तः। वरस्य मातामहापेक्षया तस्यास्त्रिगोत्रमध्यपातित्वात् एवं मातुः प्रमातामहदौहित्रीकन्याया मातामहीभगिनीपुत्रबन्ध्वपेक्षया त्रिगोत्रात् परायाविवाहः प्रसज्येत स चायुक्तः। मातामहीभ्रातृपुत्रबन्ध्वपेक्षया तस्यास्त्रिगोत्रमध्यवर्त्तित्वादिति। मातृसपत्नीभ्रातृसन्ततेरपि न विवाह्येतेत्याह सुमन्तुः 'मातृपितृसम्बन्धा आसप्तमादविवाह्याः कन्याभवन्ति आपञ्चमादन्येषां सर्व्वाः पितृपत्न्यो मातरस्तद्भ्रातरस्तु मातुलास्तद्दुहितरो भगिन्यस्तदपत्यानि भागिनेयानि ताश्च अविवाह्याः अन्यथा सङ्करकारिण्यस्तथाध्यापयितुरेतदेवेति'। यद्यपि तेषां मातुलत्वेनार्थात्तद्दुहितृतदपत्ययोर्भगिनीत्वभागिनेयत्वे तथापि तदुपादानं तयोरेव वर्ज्जनार्थम् अन्यार्थं पुनर्वचनमिति दर्शनात् अन्यार्थं तदितरार्थमधिकार्यमिति यावत् आदिपदत्वेन च मुख्यमातुलसोदरबन्धुतायुक्तेति अन्वयेता; कन्यकाः परिणीताः सङ्कराम-

त्वाऽधर्मकारिण्यो भवन्ति इति तथाऽध्यापयितुस्तद्विवाहम-
ध्यापयितुरेतदेव सङ्करकारित्वमेवेत्यर्थः इति रत्नाकरः
अन्यथैतत्र ताः परिणीताः इति पठितं व्याख्यातञ्च हरिना-
थोपाध्यायैः ताः कन्यका विवाहिता इति स्मृतिसारे। वस्तुतस्तु
अध्यापयितुर्गुरोस्तथा कन्यका उद्वाहिताः एतदेव सङ्करात्मका-
ऽधर्मकारित्वं भजन्त एवेत्यर्थः। अतएव आदिपर्वणि 'प्रस्थितं
त्रिदशावासं देवयान्यब्रवीदिदम्। गृहाण विधिवत् पाणिं
मम मन्त्रपुरस्कृतम्'। कच उवाच। 'त्वं भद्रे! धर्मतः पूज्या
गुरुपुत्री सदा मम। यथा मे सगुरुर्नित्यं मान्यः शुक्रः पिता
तव। देवयानि तथैव त्वं नैव मां वक्तुमर्हसि। गुरुपुत्रीति
कृत्वाहं प्रत्याचक्षे न दोषतः'। दोषतो दुष्टदोषतः। व्यक्तं
मत्स्यसूक्ते। 'समानप्रवरा वापि शिष्यसन्ततिरेव च। मन्त्र-
दातुर्गुरोश्चैव सन्ततिः प्रतिषिध्यते'। काश्यपः। 'सप्तपौन-
र्भवाः कन्या वर्जनीयाः कुलाधमाः। वाचा दत्ता मनोदत्ता
कृतकौतुकमङ्गला। उदकस्पर्शिता या च या च पाणिगृहीत-
तिका। अग्निं परिगता या च पुनर्भूप्रभवा च या। इत्येताः
काश्यपेनोक्ता दहन्ति कुलमग्निवत्'। कृतकौतुकमङ्गला
बद्धकङ्कणा। उदकस्पर्शिता उदकपूर्वं दत्तेति रत्नाकरः।
हारीतः। 'ज्येष्ठेऽनिर्विष्टे कनीयान् निर्विशन् परिवेत्ता
भवति परिविन्नो ज्येष्ठः परिवेदनीया कन्या परिदायी दाता
परिकर्ता याजकः ते सर्वे पतिता इति'। ज्येष्ठमाह देवलः।
'वह्निवर्णेषु चारित्र्याद् यमयोः पूर्वजन्मतः। यस्य जातस्य
यमयोः पश्यन्ति प्रथमं मुखम्। सन्तानः पितरश्चैव तस्मिन्
ज्येष्ठं प्रतिष्ठितम्'। जन्मप्राथम्यात् ज्येष्ठं यमजयोः न तु निषे-
कप्राथम्यात्जन्मप्राथम्यसन्देहे मुखदर्शनप्राथम्यात् ज्येष्ठं प्रति-
ष्ठितं तस्मिन् सन्तानः प्रतिष्ठितः पितरश्च प्रतिष्ठिताः। अनि-

विंष्टे अज्ञातविवाहे अज्ञाताग्निहोत्रे च निष्ठानिर्देशादेकदापि ज्येष्ठकनिष्ठाभ्यां विवाहो न कर्त्तव्यः अग्निहोत्रञ्च न कर्त्तव्यम्। कालादर्शे वार्हस्पत्यम् 'एकोदरप्रसूतानामेकस्मिन्नपि वासरे। विवाहो नैव कर्त्तव्यो गर्गस्य वचनं यथा'। मत्स्य-सूक्तमहातन्त्रेऽपि। 'एकस्मिन् दिवसे चैव सोदराणां तथैव च। युग्मसुद्वाहिकं वर्ज्यं कन्यादानद्वयं तथा'। पूर्ववचने वासर इत्यत्र वत्सर इति गौड़देशीयाः पठन्ति व्यवहरन्ति च। छन्दोगपरिशिष्टं 'देशान्तरस्थक्लीवैकवृषणानसहोदरान्। वेश्याभिषक्तपतितशूद्रतुल्यातिरोगिणः। जड़मूकान्धबधिर-कुब्जकुण्ठकवामनान्। अतिवृद्धानभार्य्यांश्च कृषिसक्तान् नृपस्य च। धनवृद्धिप्रसक्तांश्च कामतः कारिणस्तथा। कुलटोन्मत्त चौरांश्च परिविन्दन्न दुष्यति। धनवार्द्धुषिकं राजसेवकं कर्षकं तथा। प्रोषितञ्च प्रतीक्षेत वर्षत्रयमपि त्वरन्। प्रोषितं यद्य शृण्वानमब्दादतिसमाचरेत्। आगते च पुनस्तस्मिन् पाद तच्छुद्धये चरेत्'। देशान्तरपरिभाषायां वृहस्मनुः। 'वाचो यत्र विभिद्यन्ते गिरिर्वा व्यवधायकः। महानद्यन्तरं यत्र तद्देशान्तरमुच्यते। देशनामनदीभेदान्निकटोऽपि भवेद् यदि तत्तु देशान्तरं प्रोक्तं स्वयमेव स्वयम्भुवा। दशरात्रेण या वार्त्ता यत्र न श्रूयतेऽथवा'। वृहस्पतिः। 'देशान्तरं वदन्त्येके षष्टि-योजनमायतम्। चत्वारिंशद्वदन्त्येके त्रिंशदेके तथैव च'। मुनिद्वयवचनोक्तवागादियोजनादिभेदानां सामञ्जस्यार्थमेवं व्याख्यायते त्रितयवैशिष्ट्ये त्रिंशद्योजनाभ्यन्तरे द्वितयवैशिष्ट्ये तदुपरि चत्वारिंशद्योजनाभ्यन्तरे एकवैशिष्ट्ये चत्वारिंश योजनोपरि षष्टियोजनाभ्यन्तरे वाग्गिरि महानद्यन्तरि त्वभेदाभावेऽपि वैदेश्यमिति धर्म्मचिन्तामणिः। क्लीवमा कात्यायनः। 'न मूत्रं फेनिलं यस्य विष्ठा चाप्सु निमज्जति

पितृश्चोत्पादशक्तिभ्यां हीनं क्लीवः स उच्यते'। एकवृषण इत्याहुः पञ्चविशेष इति रत्नाकरः। शूद्रतुल्यानाह मनुः। 'गोरक्षकान् वाणिजिकान् तथा कारुकुशीलवान्। प्रेष्यान् वार्द्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत्'। जड़ो विकलान्तः-करणः हिताहितावधारणाक्षम इति यावदिति मिताक्षरा। 'कुण्ठः सर्वक्रियालसः कुण्ठो मन्दः क्रियासु यः' इति श्रम-रोक्तेः अभार्य्यान् प्राक्तनिविद्धभार्य्यासम्बन्धान् नैष्ठिकब्रह्म-चारिवानप्रस्थभिक्षुसरूपान्। नृपस्य चेति चकारेण सत्रा-मित्यनुसृष्यते। कामतः कारिणः श्रौतस्मार्त्तनिरपेक्ष्य स्वच्छन्दव्यवहारिणः। कुलटः कुलान्यटतीति परकुलाटन-शील इति नारायणमहामहोपाध्यायाः तेषामयमाशयः कुलं परकुलम् अटति गच्छति प्राप्नोति यो दत्तकः स कुलटः चौरानित्यत्र पौरानिति पाठे पुरजनप्रेष्यान् धनवार्द्धुषिकादि-त्रयं देशान्तरस्थितस्य ज्येष्ठं त्वरन्नपि वर्षत्रयं प्रतीक्षेत ततश्च पूर्ववचने एतान् परिविन्दन् दुष्यति इत्युक्तम् अत्र परेरर्थ-णार्थत्वात् द्वितीया तत्र देशान्तरस्थकृषिसक्तनृपसक्तधनवृद्धि-प्रसक्तान् प्रति वर्षत्रयादूर्द्ध्वमिति बोद्धव्यम् अत्रापि प्रोषिते यत्र त्र्यब्दप्रतीक्षणं तद्विद्याधर्मधनेतरार्थप्रोषितपरं वक्ष्यमाण-वशिष्ठगोतमवचनात् अशृण्वानं प्रत्ययव्यत्ययेन अश्रूयमाण-मिति परिशिष्टप्रकाशकारः अशृण्वान इति पाठस्तु रत्नाकरे प्रोषितस्य कस्याणवार्त्तामशृण्वन् वर्षं प्रतीक्ष्य परिनयनं करोति तत्र समागते ज्येष्ठे कनिष्ठः परिवेदन शुद्धये परि-वेदनप्रायश्चित्तस्य कृच्छ्रपादं चरेत् एवमन्यत्रापि प्रायश्चित्त-प्रकल्पनाऽन्वेष्या। वशिष्ठः 'अष्टौ दशद्वादशवर्षाणि ज्येष्ठं भ्रातरमनिर्विष्टमप्रतीक्षमाणः प्रायश्चित्तीभवतीति' तत्र शोक्तौ 'द्वादशैव तु वर्षाणि ज्यायान् धर्मार्थयोगतः। त्राम्यः

प्रतीक्षितुं भ्राता श्रूयमाणः पुनः पुनः। उन्मत्तः किल्बिषी कुष्ठी पतितः क्लीव एव वा। राजयक्ष्मामयावी च न न्याय्यः स्यात् प्रतीक्षितुम्'। गौतमश्च 'द्वादशवर्षाणि प्रतीक्षणं ब्राह्मणस्य विद्यासम्बन्धे भ्रातरि चैवं ज्यायसि जवीयान् कन्याग्न्युपयमेषु षडित्येके' इति विद्यार्थं प्रोषितस्य ब्राह्मणस्य दारा अपत्योत्पादनार्थं तदभिगमने द्वादशवर्षाणि प्रतीक्षेरन्नित्युक्त्वा भ्रातरि चैवमित्यनेन सर्वमतिदिष्टम् एतेनैतदवसीयते विद्याधनधर्मार्थं गतानां ब्राह्मणक्षत्रियवैश्यशूद्राणां क्रमशो द्वादशदशाष्टषड्वर्षाणि अपणमिति प्रायश्चित्तविवेकः। रत्नाकरकृत्तिस्तु श्रूयमाणेऽभिमुखगमनं प्रव्रजिते गमनस्य निवृत्तिप्रसङ्गादित्यधिकं गौतमीयं विलिख्य प्रोषिते भ्रातरि ज्येष्ठे विवाहाग्न्याधाने तं कारयितुमभिमुखगमनं जवीयसा कर्त्तव्यं कृतसन्न्यासे च ततो निवृत्तिरिति व्याख्यातम्। शातातपः 'क्लीवे देशान्तरगते पतिते भिक्षुकेऽपि वा। योगशास्त्राभियुक्ते च न दोषः परिवेदने'। योगशास्त्राभियुक्ते। विषयात्यन्तविरक्ते इति रत्नाकरः। अतएव दक्षः 'वृत्तिहीनं मनः कृत्वा क्षेत्रज्ञं परमात्मनि। एकीकृत्य विमुच्येत योगोऽयं मुख्य उच्यते'। तेन विषयानासक्तमनसा जीवपरमात्मनोरभेदचिन्तनविशेषो योग इति। छन्दोगपरिशिष्टं 'नाग्नयः परिविन्दन्ति न यज्ञा न तपांसि च। न च श्राद्धं कनिष्ठस्य या च कन्या विरूपिका' विकला या च कन्यकेति पाठः शातातपीये। नाग्नयः परिविन्दन्तीति ज्येष्ठानुमत्या यथा उशना 'ज्येष्ठभ्राता यदा तिष्ठेदाधानं नैव कारयेत्। अनुज्ञातस्तु कुर्वीत शङ्खस्य वचनं तथा'। वशिष्ठः। 'अग्रजोऽस्य यदा नग्निरधिकार्य्योऽनुजः कथम्। अग्रजानुमतः कुर्य्यादग्निहोत्रं यथाविधि'। एतेन विवाह

तदनुमत्यापि दोषायेति प्रायश्चित्तविवेकः। विज्ञतरूपा कन्याऽनूढा ज्येष्ठाकनिष्ठायाः सहोदराया ऊढायाः परिवेदनाय न भवति अप्रसक्तप्रतिषेधानुपपत्त्या नञः पर्य्युदासवृत्तित्वादेतदतिरिक्तायां परिवेदनदोष इति परिशिष्टप्रकाशकारः देवलस्तत्र विषयेऽग्रेदिधिषु दिधिषुत्वमाह 'ज्येष्ठायां विद्यमानायां कन्यायामुह्यतेऽनुजा। सा चाग्रे दिधिषुर्ज्ञेया पूर्वा च दिधिषुः स्मृता'। विद्यमानायामित्यत्र यद्यनूढायामिति लोकाचिः। प्रायश्चित्तमाह वशिष्ठः। 'अग्रादिधिषुपतिः कृच्छ्रं द्वादश रात्रं चरित्वा निविंशेत् तां चैवोपायच्छेत् दिधिषुपतिः कृच्छ्रातिकृच्छ्रौ चरित्वा तस्मै दत्त्वा पुनर्निर्विशेत' इति द्वादशरात्रं पराकरूपं निर्विशेत अन्यामुद्वहेत तां कनिष्ठां ज्येष्ठाया वराय उपयच्छेत् उपपादयेत् एवं ज्येष्ठामपि कनिष्ठाया वराय एतच्चानुमत्यर्थं शास्त्रेणोक्तं न तु तयोरत्राभिगमः। परिवेदनाधिकारे 'न भूयस्तेनामुपगच्छेत्' इति सुमन्तुवचनात् भवदेवभट्टधृतं 'परित्यक्ता च सा पोष्या भोजनाच्छादनेन च'। अङ्गिराः 'आवृत्ते तीर्थगमने प्रतिज्ञाते च कर्मणि। कालात्यये च कन्यायाः कालदोषो न विद्यते। अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी। दशमे कन्यकाप्रोक्ता अत ऊर्द्ध्वं रजस्वला। तस्मात् संवत्सरे प्राप्ते दशमे कन्यका बुधैः। प्रदातव्या प्रयत्नेन न दोषः कालदोषतः'। कालदोषस्य विषयो राजमार्त्तण्डीये व्यक्तीभविष्यति। यमः। 'कन्या द्वादशवर्षाणि याऽप्रदत्ता गृहे वसेत्। ब्रह्महत्या पितुस्तस्याः सा कन्या वरयेत् स्वयम्'। महाभारते। 'त्रिंशद्वर्षः षोडशवर्षां भार्य्यां विन्देत नग्निकाम्। ततोऽप्रवृत्ते रजसि कन्यां दद्यात् पिता सकृत्। महान्दोषः ऋषेदेवमन्यथैष विधिः सताम्'। नग्निकाऽजातार्त्तवा अन्यथा

प्रवृत्ते रजसि पतिव्रताऽपि 'पितुर्गेहे च या कन्या रजःपश्यत्य- संस्कृता। भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता यस्तु तां वरयेत् कन्यां ब्राह्मणो ज्ञानदुर्बलः। अश्राद्धेयमपाङ्क्तेयं तं विद्याद्वृषलीपतिम्'। यत्तु मनुवचनम्। 'काममामरणात्तिष्ठेद्गृहे कन्यर्त्तुमत्यपि। न चैवैनां प्रयच्छेत्तु गुणहीनाय कर्हिचित्'। इति मनूक्तगुणहीनसद्भावमात्रविषयम्। अत एव गुणवतेऽष्टवर्षन्यूनापि देयेत्याह मनुः। 'उत्कृष्टायाभिरूपाय वराय सदृशाय च। अप्राप्तामपि तां कन्यां तस्मै दद्याद्यथाविधि'। अप्राप्तामप्राप्तविवाहप्रशस्तकालाम्। स्मृतिः। 'सप्तसंवत्सरादूर्द्ध्वं विवाहः सार्ववर्णिकः। कन्यायाः शस्यते राजन्नन्यथा धर्मगर्हितः'। राजमार्त्तण्डीये। 'अयुग्मे दुर्भगा नारी युग्मे च विधवा भवेत्। तस्माद्गर्भान्विते युग्मे विवाहे सा पतिव्रता। मासत्रयादूर्द्ध्वमयुग्मवर्षे युग्मे च मासत्रयमेव यावत्। विवाहशुद्धिं प्रवदन्ति सर्वे व्यासादयो ज्योतिषि जन्ममासात्। आषाढ़े धनधान्यभोगरहिता नष्ट- प्रजा श्रावणे वेश्या भाद्रपदे इषे च मरणं रोगान्विता कार्त्तिके। पौषे प्रेतवती वियोगबहुला चैत्रे मदोन्मादिनी अन्येष्वेव विवाहिता सुतवती नारी समृद्धा भवेत्। राज- शस्ते तथा युद्धे पितॄणां प्राणसंशये। अतिप्रौढ़ा च या कन्या नानुकूल्यं प्रतीक्षते। अतिवृद्धा च या कन्या कुलधर्मविरोधिनी। अविशुद्धापि सा देया चन्द्रलग्नबलेन तु'। भुजबलभीमे। 'ग्रहशुद्धिमब्दशुद्धिं शुद्धिं मासायनर्त्तु दिवसानाम्। अर्वाक् दशवर्षेभ्यो मुनयः कथयन्ति कन्यकानाम्'। दशवर्षाभ्यन्तरे शुद्धौ ग्रहाब्दादीनां विशेषोपादानात् तदूर्द्ध्वं ताव- न्मात्रानियमः। अत्रैव विषये 'मङ्गल्येषु विवाहेषु कन्या- संवरणेषु च। दशमासाः प्रशस्यन्ते चैत्रपौषविवर्जिताः' इ-

राजमार्त्तण्डोक्तम् 'एतदेकवाक्यतया पूर्ववचनेऽविशुद्धेत्येताव-न्मात्रविषयं न तु मलमासशुक्रास्तादिसमयाशुद्धिप्रतिप्रसवपरं तस्याः स्त्रीपुंसाधारणत्वेन प्रतिप्रसवासम्भवात् ज्योतिश्चिन्ता-मण्यादिषु गोचराद्यशुद्धिप्रतिप्रसवसमयाशुद्धिप्रतिप्रसवयोः प्रकरणभेदेनोपादानाच्च 'कालात्ययेऽपि कन्यायाः कालदोषो न विद्यते'। इत्यङ्गिरसोक्तमपि तथैव 'उदगयने आपूर्य्यमाणे पक्षे कल्याणे नक्षत्रे चौड़कर्म्मोपनयनगोदानविवाहाविवाहः सार्वकालिकः इत्यपरे' इत्याश्वलायनवचनेऽपि सार्वकालिक इत्यनेन प्रागुक्तवचनैकवाक्यतया दशाब्दोत्तरे स्त्रीणामुदगयनादे-रनियम उक्तः अतएव गर्भशुक्रत्यादिप्रतिप्रसववन्मलमासादावति-प्रौढ़ा विवाहे प्रतिप्रसवः केनापि विशिष्य नोक्तः अङ्गिरोवचने आहूते तीर्थगमने इति तु 'मलमासेऽप्यनाहूतं तीर्थस्नानमपि त्यजेत्' इति दर्शनान्मलमासादिप्रतिप्रसवपरं स्मृत्यर्थसन्देहे स्मृत्यन्तरसंवादादेवार्थनिर्णय इति निबन्धारः 'भाविनोऽर्था भवन्त्येव हठेनानिच्छतोऽपि हि' इति मत्स्यपुराणोक्तावश्य-भाविग्रभाशुभेषु ग्रहादिदोषशान्त्यर्थं होमहिरण्यादिदानं विवाहात् प्राक्कर्त्तव्यं भगवत्या रुक्मिण्या भविष्यद्विवाहे तथा दर्शनात् यथा भागवते 'चक्रुः सामर्ग्यजुर्मन्त्रैर्बध्वा रक्षां द्विजोत्तमाः। पुरोहितोऽथर्ववित् जुहाव ग्रहशान्तये। हिरण्य-रूप्यवासांसि तिलांश्च गुड़मिश्रितान्। प्रादाद्धेनूश्च विप्रेभ्यो राजा विधिविदांवरः। अतएव दीपिकायां 'ये ग्रहारिष्ट-सूचकाः' इत्यनेन ग्रहाणां पूर्वसिद्धपापबोधकत्वमिति न तु पापजनकत्वम्। तथाच मत्स्यपुराणम्। 'पुरा कृतानि पापानि फलन्त्यस्मिंस्तपोधनाः। रोगदौर्गत्यरूपेण तथैवेष्ट-वधेन च। तद्विघाताय वक्ष्यामि सदा कल्याणकारकम्'। अतएव याज्ञवल्क्यः। 'दैवे पुरुषकारे च कर्मसिद्धिर्व्यव-

स्थिता। तत्र दैवमभिव्यक्तं पौरुषं पौर्वदैहिकम्'। कर्म-सिद्धिः शुभाशुभकर्मसिद्धिः पूर्वकालीनदेहेन पुरुषनिष्पन्नं सुकृतं दुष्कृतञ्च फलोन्मुखीभूतं सुदैवं दुर्दैवञ्चेत्युक्तं मत्स्य-पुराणञ्च 'प्रतिकूलं तदा दैवं पौरुषेण विहन्यते। मङ्गला-चारयुक्तानां नित्यमुत्थानशालिनाम्'। पौरुषेणैहिकदैहिक-यागादिना उत्थानशालिनां कर्मारम्भवतां ततश्च अमुकस्य अमुकाया वा विवाहे ग्रहादिसूचनीयदोषोपशमनकाम इति हिरण्यदानादौ प्रयोज्यं ग्रहहोमे तु आकृष्णेनेत्यादि मन्त्राः सर्ववेदसाधारणाः पुराणोक्तत्वात् तथाच मत्स्यपुराणम्। 'आकृष्णेनेति सूर्य्याय होमः कार्य्यो द्विजन्मना। आप्याय-स्वेति सोमाय मन्त्रेण जुहुयात् पुनः। अग्निर्मूर्द्धादिवोमन्त्र-मिति भौमाय कीर्त्तयेत्। अग्ने विवस्वदुषस इति सोम-सुताय च। वृहस्पते परिदीया रथेनेति गुरोर्मतः। शुक्र-मन्योऽन्यदिति चैव शुक्रस्यापि निगद्यते। शनैश्चरायेति पुनः शन्नोदेवीति होमयेत्। कयानश्चित्र आभुवदूतीराहोरुदा-हृतम्। केतुं कृण्वन्निति कुर्य्यात् केतूनामुपशान्तये'। अत-एव भवदेवभट्टेनापि तथा लिखितम्। मत्स्यसूक्ते 'भूकम्पादेर्न दोषोऽत्र वृद्धिश्राद्धे कृतेऽपि वा'।

अथ कन्यादानाधिकारः। विष्णुः 'पिता पितामहो भ्राता सकुल्यो मातामहो माता चेति कन्याप्रदः पूर्वाभावे प्रकृतिस्थः परः परः' इति प्रकृतिस्थः पातित्योन्मादादिरहितः। अप्रकृतिस्थेन पित्रादिना कृतमप्यकृतमेव तदाह नारदः। 'स्वतन्त्रोऽपि हि यत् कार्य्यं कुर्य्यादप्रकृतिं गतः। तदप्यकृत-मेव स्यादस्वातन्त्र्यस्य हेतुतः'। पितृत्वादिना स्वतन्त्रोऽपि सन् अप्रकृतिस्थत्वेन हेतुना परतन्त्रो भवति तदा तत्कृतं वाग्दानादिकमकृतमेव यदि तु विवाहो निवृत्तः तदा प्रथा-

तस्य निष्फलत्वेनाधिकारवैकल्याच्च तस्य पुनरावृत्तिरिति। मातुः पूर्वं मातुलो बोध्यः यथा नारदः। 'पिता दद्यात् स्वयं कन्यां भ्राता वानुमतः पितुः। मातामहो मातुलश्च सकुल्यो बान्धवस्तथा। माता त्वभावे सर्वेषां प्रकृतौ यदि वर्त्तते। तस्यामप्रकृतिस्थायां कन्यां दद्युः स्वजातयः'। इत्यर्द्धमधिकं पराशरभाष्ये माधवाचार्य्येण लिखितं मातुः कन्यादातृत्वे वृद्धिश्राद्धाभावो बोध्यः बान्धवः पितामहः विष्णुवचनैकवाक्यत्वात् एवमेव रत्नाकरः एवञ्च सकुल्यपितामहयोर्नारदोक्तक्रमो न ग्राह्यः किन्तु विष्णूक्तवक्ष्यमाणयाज्ञवल्क्योक्तक्रमो ग्राह्यः पाठक्रमाच्छाब्दक्रमस्य बलवत्त्वात् तस्यामित्यनेन मातुरुपस्थितत्वात् स्वजातय इत्यनेन मातामहमातुलेतरमातृपक्षसकुल्या उच्यन्ते। संस्कृतानामधिकारमाह याज्ञवल्क्यः। 'असंस्कृतास्तु संस्कार्य्या भ्रातृभिः पूर्वसंस्कृतैः। भगिन्यश्च निजादंशाद्दत्त्वांशन्तु तुरीयकम्'। असंस्कृता भ्रातरः भगिन्यश्च पूर्वसंस्कृतैरुपनीतैः। अन्यथा मन्त्रपाठानधिकारापत्तेः तुरीयकं विवाहोचितद्रव्यमिति दायतत्त्वे विवेचितम्। तत्र विवाहोचितद्रव्यदाने संस्कृतासंस्कृतभेदानुपयोगात् पूर्वसंस्कृतैरिति कन्यासंस्कार एव उपयुक्तं तथा 'पिता पितामहो भ्राता सकुल्यो जननी तथा। कन्याप्रदः पूर्वं नाशे प्रकृतिस्थः परःपरः। अप्रयच्छन् समाप्नोति भ्रूणहत्यामृतावृतौ। गम्यन्त्वभावे दातॄणां कन्या कुर्य्यात् स्वयं वरम्। सकृत् प्रदीयते कन्या हरंस्तां चौरदण्डभाक्। दत्तामपि हरेत् कन्यां श्रेयांश्चेद्वर आव्रजेत्'। तथेत्यनेन नारदोक्तमातामहाद्याः संसूचिताः। गम्यं सवर्णत्वादिना स्वप्राप्त्यर्हं वरं स्वप्रदानेन पतिं कुर्य्यादित्यर्थः। 'दत्तात्मा तु स्वयं दत्त' इति याज्ञवल्क्योक्त स्वयं दत्तपुत्रस्य स्वादनवत् दत्तां

वाग्दत्ताम् इयं कन्या अमुकाय दातव्येति प्रतिश्रुतामिति यावत् अत्र विशेषमाह नारदः। 'ब्राह्मादिषु विवाहेषु पञ्चस्वेषविधिः स्मृतः। गुणापेक्षं भवेद्दानमासुरादिषु च त्रिषु'। एष विधिः सकृद्दानविधिः। गौतमः। 'प्रतिश्रुत्याप्यधर्मसंयुक्ताय न दद्यादिति' अधर्मोऽत्र दानानर्हताप्रयोजक इति विवादरत्नाकरः। वशिष्ठः। 'कुलशीलविहीनस्य षण्ढादिपतितस्य च। अपस्मारि विधर्मस्य रोगिणां वेशधारिणाम्। दत्तामपि हरेत् कन्यां सगोत्रोढां तथैव च'। नारदः। 'प्रतिगृह्य च यः कन्यामदुष्टामुत्सृजेन्नरः। विनेयः सोऽर्थदण्डेन कन्यां तामेव चोद्वहेत्'। विनेयो दण्डनीयः। ब्राह्मादीनाह याज्ञवल्क्यः। 'ब्राह्मो विवाह आहूय दीयते शक्त्यलंकृता। तज्जः पुनात्युभयतः पुरुषानेकविंशतिम्। यज्ञस्थायर्त्विजे दैव आदायार्षस्तु गोद्वयम्। चतुर्दशप्रथमजः पुनात्युत्तरजश्च षट्। इत्युक्त्वा चरतां धर्मं सह या दीयतेऽर्थिने। सकायः पावयेत्तज्जः षड्वंश्यांश्च सहात्मना। आसुरो द्रविणादानाद् गान्धर्वः समयान्मिथः। राक्षसो युद्धहरणात् पैशाचः कन्यकाच्छलात्'। एकविंशतिमिति दश पूर्वान् दशापरान्। आत्मानञ्चैकविंशतिमिति मनुवचनसमानार्थकं पुनाति 'पित्रादीन् पापाचरकांश्च समुद्धरति पुत्रादीन् निष्पापान् जनयति आत्मानमपि निष्पापं करोति आदायेति गोद्वयं वराद्गृहीत्वा तेनैव सह कन्यादानमार्षः सह गोमिथुनेन 'चेति देवलवचनात् सहधर्मं चरतामिति नियमं कृत्वा कन्यादानं कायः कः प्रजापतिर्देवताऽस्येति प्राजापत्य इत्यर्थः। याज्ञीयसंज्ञानियमम्। विना धनग्रहणा-दासुरः अतो नार्षस्य तथात्वं कन्यावरयोः परस्परानुरागात् स-समयः त्वं मे भार्या त्वं मे पतिरिति निश्चयः स गान्धर्वः युद्धेति बलात्कारोपलक्षणम्। 'प्रसह्य कन्याहरणं राक्ष

विधिरिष्यते' इति मनुवचनात् छलमाह मनुः । 'सुप्तां मत्तां प्रमत्तां वा रहो यत्रोपगच्छति । स पापिष्ठो विवाहानां पैशाचः कथितोऽष्टमः' । एवम्भूतत्यागानन्तरग्रहणे ब्राह्माद्यष्टनामको विवाह इति वर्त्तुलार्थः । गान्धर्वादौ विधिमाह देवलः । 'गान्धर्वादिविवाहेषु विधिर्वैवाहिको मतः । कर्त्तव्यस्त्रिभिर्वर्णैः समर्थेनाग्निसाक्षिकः' । क्षतयोन्या अपि संस्कारमाह याज्ञवल्क्यः । 'अक्षता च क्षता चैव पुनर्भूः संस्कृता पुनः' इति दत्ताभ्यन्तरत्वादिना नियोगधर्ममुपक्रम्य मनुः । 'यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः । तामनेन विधानेन निजो विन्देत देवरः । यथाविध्यभिगम्यैनां शुक्लवस्त्रां शुचिव्रताम् । मिथोभजेताप्रसवात् सकृत् सकृदृतावृतौ' । आगर्भग्रहणात् सकृद्गमनोपदेशाच्च यस्मै वाग्दत्ता तस्यैवापत्यं भवतीति कुल्लूकभट्टः । एतच्च कन्यानुमतिसत्त्वे तदनुमत्या तु नेत्याह वशिष्ठः । 'कन्यायां दत्तशुल्कायां म्रियते यदि शुल्कदः । देवराय प्रदातव्या यदि कन्यानुमन्यते । अद्भिर्वाचा प्रदत्तायां म्रियेतोर्द्ध्वं वरो यदि । न च मन्त्रोपनीता स्यात् कुमारी पितुरेव सा' । प्राग्वचनं मनोरपि मन्त्रोपनीता पाणिग्रहणमन्त्रजन्यसंस्कारवती कुमारी पितुरेव सेति अन्यस्मै यादृशेन सम्बन्धेन पित्रा विवाह्यते तादृक् पितृसम्बन्धवती एतत्परमेव 'नोदकेन न वाचा वा कन्यायाः पतिरिष्यते । पाणिग्रहणसंस्कारात् पतित्वं सप्तमे पदे' इति यमवचनम् । कन्यायाः सकृद्दानन्तु पाणिग्रहणसंस्कारयुक्तकन्यादानविषयं कात्यायनः । 'अनेकेभ्योऽपि दत्तायामनूढ़ायान्तु यत्र वै । वरागमश्च सर्वेषां लभेताद्यवरस्तु ताम् । पश्चाद्वरेण यद्दत्तं तस्याः प्रतिलभेत सः । तथा गच्छेत् समूढ़ायां दत्तं पूर्ववरो हरेत्' वरो विवाहोपस्थितः तथा 'प्रदाय शुल्कं गच्छेद् यः कन्यायाः

स्त्रीधनं तथा। धार्य्या सा वर्षमेकन्तु देयान्यस्मै विधानतः।
अथ प्रवृत्तिरागच्छेत् प्रतीक्षेत समात्रयम्। अत ऊर्द्ध्वं प्रदा-
तव्या कन्यान्यस्मै यथेच्छतः’। प्रवृत्तिरागमनवार्त्ता। मनुः।
‘मङ्गलार्थं स्वस्त्ययनं यज्ञश्चासां प्रजापतेः। प्रयुज्यते विवा-
हेषु प्रदानं स्वाम्यकारणम्। पाणिग्रहणिका मन्त्रा नियतं
दारलक्षणम्। तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे’।
स्वस्त्ययनं कुशलेन कालातिवाहनहेतुकं करणसाधनात् कन-
कधारणादि होम् स्वस्ति भवन्तो ब्रुवन्त्विति च यज्ञ प्रजा-
पतिदैवतो वैवाहिको होमस्तत्सर्वं मङ्गलार्थम् अभिमतार्थ-
सिद्धिर्मङ्गलं तदर्थमवैधव्यार्थमिति यावत्। स्वाम्यकारणन्तु
प्रदानं न तु वाग्दानं रत्नाकरकृतापि प्रदाने नैव कन्यायां
वरस्य स्वाम्यं जायते कन्यादातुः स्वाम्यं निवर्त्तते इति व्याख्यातं
निष्ठा भार्य्यात्वस्य समाप्तिरूपा सप्तमे पदे गतायां कन्याया-
मिति बोध्यम्। तदानीं गोत्रापहारमाह लघुहारीतः।
‘स्वगोत्राद् भ्रश्यते नारी विवाहात् सप्तमे पदे। पतिगोत्रेण
कर्त्तव्या तस्याः पिण्डोदकक्रिया’। पाणिग्रहणादपि पितृ-
गोत्रापहारमाह श्राद्धविवेके। बृहस्पतिः। ‘पाणिग्रहणिका
मन्त्राः पितृगोत्रापहारकाः। भर्त्तुर्गोत्रेण नारीणां देयं पिण्डो-
दकं ततः’। यत्तु सपिण्डनस्य गोत्रापहारित्वप्रतिपादकव-
चनं ‘संस्थितायान्तु भार्य्यायां सपिण्डीकरणान्तिकम्। पैतृकं
भजते गोत्रमूर्द्ध्वन्तु पतिपैतृकम्’। इति कात्यायनीयं तत्
शाख्यन्तरीयं शिष्टव्यवहाराभावात्। अतएव अनुमन्त्रिता गुरु
गोत्रेणाभिवादयेत इति गोभिलोक्तं सप्तपदीगमनानन्तरं पत्यु-
रभिवादनं तत्पतिगोत्रेण कर्त्तव्यमिति भट्टनारायणेनोक्तम् एतेन
पितृगोत्रेणेति सरलाभवदेवभट्टाभ्यामुक्तं हेयम्। एतत्पत्य-
भिवादान्त एव सामगानां विवाहः तावुभौ ततः प्रभृति

त्रिरात्रमक्षारलवणाशिनौ ब्रह्मचारिणौ भूमौ सह शयी-
यातामिति तत्सूत्रे ततः प्रभृति विवाहकर्मण ऊर्द्ध्वमिति भट्ट-
नारायणव्याख्यानात्। अतएव तत्पत्यभिवादनानन्तरं भव-
देवेनापि प्रायश्चित्तहोमवामदेव्यगानदक्षिणा लिखिताः।
यजुर्वेदिनान्तु प्रेक्षकाभिमन्त्रणानडुच्चर्मोपवेशनान्तो विवाहः
आचार्य्याय वरं ददातीति पारस्करसूत्रेण तदनन्तरं वरशब्द-
वाच्यगवादिदक्षिणादानस्योक्तत्वात्। अतएव 'विवाहादिः
कर्मगणो य उक्तो गर्भाधानं शुश्रुम यस्य चान्ते। विवाहादा-
वेकमेवात्र कुर्य्यात् श्राद्धं नादौ कर्मणः कर्मणः स्यादिति'
छन्दोगपरिशिष्टवचने विवाहादिरिति समशनीयचरुहोम-
गृहप्रवेशयानारोहणचतुर्थ्यामन्त्रणाव्रतभङ्गसमाधानार्थ-होम-
चतुर्थीहोमादिशब्देन ग्रहणम्। एषु विवाहादिगर्भाधानान्त-
कर्मसु एकमेव श्राद्धं कार्य्यमिति श्राद्धविवेकः। अतः सम-
शनीयचरुहोमादयः साङ्गविवाहाङ्गिका इति। ततश्च नाशौचं
राज्ञां राजकर्मणीत्यधिकृत्य न देवप्रतिष्ठाविवाहयोः पूर्वसंभू-
तयोरिति विष्णुसूत्रेणारब्धविवाह एव अशौचाभावो न तु सम-
शनीयचरुहोमादौ विवाहारम्भश्च वृद्धिश्राद्धं 'व्रतयज्ञविवाहेषु
श्राद्धे होमेऽर्चने जपे। आरब्धे सूतकं न स्यादनारब्धे तु
सूतकम्। आरम्भो वरणं यज्ञे सङ्कल्पो व्रतजापयोः। नान्दी-
श्राद्धं विवाहादौ श्राद्धे पाकपरिष्क्रिया' इति राघवभट्टधृतवच-
नात् पाकपरिष्क्रियेति साग्निदर्शश्राद्धविषयं तत्र तस्य तदुप-
रणस्य असाधारणाङ्गत्वात्। न चैवं विवाहपूर्वकृतेन नान्दी-
मुखश्राद्धेन सर्वेषां श्राद्धवत्त्वात् सर्वेषामेवारम्भो भूतः इति
वाच्यं विवाहार्थं कृतवृद्धिश्राद्धसमशनीयादीनामारम्भकत्वा-
भावात् उद्दिश्यत्वगर्भकत्वादारम्भपदार्थस्य अन्यथा अन्वार्थ-
मरणादावप्यारम्भः स्यात्। अव्रभङ्गाभावात् तदर्थहोमाकरणे

विवाहार्थं कृतश्राद्धेन तस्याप्यारम्भादारम्भाकरणे प्रत्यवायश्च स्यात्। अतएव अग्न्याधानार्थं विवाहार्थं वा कृते श्राद्धेऽशौचे तु न वैश्वदेवस्य गर्भाधानस्य वा करणम्। एवञ्च विवाहकालेऽशौचे समञ्जनीयचरुहोमादयोऽशौचगते महाव्याहृतिहोम-प्रायश्चित्तं कृत्वा कर्त्तव्याः। 'गौणेषु तेषु कालेषु कर्म चोदित-मारभेत्। प्रायश्चित्तप्रकरणप्रोक्तां निष्कृतिमाचरेत्' इति भर-द्वाजवचनात्। गौणकालमाह हरिहरपद्धतौ। 'यद्यागामिक्रिया-मुख्यकालस्याप्यान्तरालवत्। गौणकालत्वमिच्छन्ति केचित् प्राक्तनकर्मणि'? अन्तरालवत् मध्यकालस्यैव स्मार्त्तचिन्तामणि-कृत्यतत्त्वार्णवयोः 'एवमागामियागीयमुख्यकालादधस्तनः। स्वकालादुत्तरो गौणः कालः पूर्वस्य कर्मणः'। एवञ्च सर्वा-स्वेवान्वाहार्य्यवन्तीति गोभिलगृह्येण 'यच्छ्राद्धं कर्मणामादौ या चान्ते दक्षिणा भवेत्। अमावास्यां द्वितीयं यदन्वाहार्य्यं विदुर्बुधाः'। इति गृह्यान्तरे नान्दीमुखश्राद्धदक्षिणयोरन्वा-हार्य्यत्वप्रतिपादनात् गृह्योक्तकर्मणामाद्यन्ताङ्गत्वेन नान्दी-मुखश्राद्धदक्षिणानियमाभिधानात् विवाहमात्रस्य गृह्यकर्म-त्वेन तदादौ वृद्धिश्राद्धमवश्यं कर्त्तव्यं तत्राद्यविवाहे पित्रा तत् कर्त्तव्यं 'स्वपितृभ्यः पिता दद्यात् सुतसंस्कारकर्मणि। पिण्डा-नोद्वहनात्तेषां तस्याभावेऽपि तत् क्रमात्'। इति छन्दोगपरि-शिष्टात् सुतसंस्कारग्रहणात् पुत्रस्य विवाहान्तरे पित्रा नाभ्यु-दयिकं कार्य्यम् आद्येन संस्कारसिद्धौ द्वितीयादेस्तदजनकत्वात् तथाचाश्वलायनगृह्यपरिशिष्टं 'सीमन्तोन्नयनं प्रथमे गर्भे सीमन्तोन्नयनसंस्कारो गर्भपात्रसंस्कारः' इति श्रुतिरिति गर्भ पात्रयोरयं गार्भपात्रः गर्भस्य उदरस्थस्य पात्रस्य तदाधारस्य स्त्रिया इति कल्पतरुः। हारीतोऽपि। 'सकृत्तु कृतसंस्काराः सीमन्तेन द्विजस्त्रियः। यं यं गर्भं प्रसूयन्ते स गर्भः संस्कृतो

भवेत्। अत्र सकृत् संस्कृतपात्रजातानां सर्वेषां संस्काराभिधानेन प्रत्येककृतजातकर्मादिसंस्काराणां सुतरां संस्कृतत्वं सकृत् कृते कृत: शास्त्रार्थ इति न्यायात्। पिण्डानिति श्राद्धपरं कन्यापुत्रविवाहेषु इति श्राद्धविधायकविष्णुपुराणैकवाक्यत्वात् तदेकवाक्यतया एकार्थत्वात् सुतसंस्कारकर्मणीत्यत्र सुतपदं कन्यापुत्रपरम्। आ उद्वहनादित्यभिविधावाङ्। तस्याभावेऽपि संस्कार्य्यक्रमबाधकस्य पितुरभावेऽपि पुनरन्य: संस्कार्य्य: सपिण्डादिर्वा तत्क्रमादिति 'चित्रं कर्म यथानेकैरङ्गैरुन्मील्यते शनै:। ब्राह्मण्यमपि तद्वत् स्यात् संस्कारैर्विधिपूर्वकै:'। इत्यङ्गिरसोक्तफलभागितया तस्य प्रधानस्य क्रमात्तेषां पितॄणां दद्यात्। ततश्च संस्कार्य्ये पित्रादित्रयमातामहादित्रयेभ्य: श्राद्धं कुर्य्यात्। न च संस्कार्य्ये पितरमादाय तेषां पितु: संप्रदानभूतानां तत्क्रमादित्यनेन पितु: प्रवेशात् पितु: प्रपितामहेतर पञ्चानामिति नारायणोपाध्यायमतं युक्तमिति वाच्यं पित्रनुवेशेन संस्कार्य्ये पितृपितामहप्रपितामहानां श्राद्धे तन्मातामहपक्षस्यैव 'पितरो यत्र पूज्यन्ते तत्र मातामहाध्रुवम्' इत्यनेन युक्तत्वात् न वा तेषां संस्कर्त्तृपितॄणां संस्कार्य्ये पितु: पितृगणमातामहगणानां वा ग्रहणं तत्क्रमादित्यनुपपत्ते: तथाहि आद्ये संस्कर्त्तुरनुपात्तत्वेन तच्छब्दादनुपस्थिति:। द्वितीये तेषामित्यनेनैव प्रक्रान्तत्वेन तथाविधानं प्राप्त्या तत्क्रमादित्यस्यानुवादकतापत्तिरूपानुपपत्ति: एवं तस्याभावे त्विति मैथिलपाठे प्रक्रान्तव्यवच्छेदकतुकारेण द्वितीयपक्षस्य सुतरां बाधितत्वमिति। ततश्च तेषामिति निर्विशेषितपितृमात्रपरामर्शकमिति। एवञ्च भ्रात्रापि संस्कार्य्ये देवदत्तादिपितुरिति प्रयोज्यम्। नान्दीमुखे तु छन्दोगैर्योषितां श्राद्धं न कर्त्त-

व्यम् । 'न योषिद्भ्यः पृथग्दद्यादवसानदिनादृते । स्वभर्तृ-पिण्डमात्राभ्यस्तृप्तिरासां यतः स्मृता' इति छन्दोगपरिशिष्टे पर्युदस्तत्वात् न च अवसानदिनेतरत्र योषिद्भ्योऽपृथग्दद्यात् यतः स्वभर्तृः पिण्डांशेभ्य उभयार्द्ध्यकदन्नेभ्य एव योषितां तृप्तिः पुरुषाणां योषिज्जीवनादौ पृथक्पिण्डादपि तृप्तिमत्त्वात् योषित्पदमपि सार्थकमिति वाच्यं तथात्वेऽवसानदिनादृते इति व्यर्थं स्यात् तथाहि परिप्राप्ते योषितां श्राद्धेऽपृथक्त्वं विधीयते किंवा अपृथक् श्राद्धं विशिष्टं विधीयते नाद्यः अमावस्यादौ योषिद्दानाप्राप्तौ कथं तदनूद्याऽपृथक्त्वमात्र-विधानं न च अमावास्यायां पितृभ्यो दद्यादित्यत्र प्रेते पितृ-त्वमापन्ने सपिण्डीकरणादन्विति विष्णुपुराणीयेन योषिता-मपि पितृत्वात् श्राद्धप्राप्तिरिति वाच्यं पितृभ्यो दद्यादित्यत्र पितृपदं न प्राप्तपितृलोकमात्रपरम् । किन्तु पितृपितामह-प्रपितामहमात्रपरम् असावेतत्ते इति यजमानस्य पित्रे असा वेतत्ते इति यजमानस्य पितामहाय असावेतत्ते इति यज-मानस्य प्रपितामहायेति श्रुत्याद्येकवाक्यत्वात् 'त्रयाणामुदकं कार्य्यं त्रिषु पिण्डः प्रवर्त्तते । चतुर्थः सम्प्रदातैषां पञ्चमो नोपपद्यते' इति मनुवचने त्रयाणामित्यनेन पितृपिता-महप्रपितामहानां पत्नीनिरपेक्षाणां तर्पणवद्देवतात्वावगमाच्च मातामहादिलाभस्तु 'पितरो यत्र पूज्यन्ते तत्र मातामहा-ध्रुवम् । अविशेषेण कर्त्तव्यं विशेषान्नरकं व्रजेत्' इति हव-याज्ञवल्क्यवचनात् मातामहा इति तदादित्रिकपरम् इत्यादि बहुवचनान्ता गणस्य संसूचका इत्युक्तेः श्राद्धेतिकर्त्तव्यतायां मातामहादित्रिकोपादानाच्च । नान्त्यः तदा अवसानदिना-दृत इति व्यर्थं स्यात् अवसानदिने तु 'ध्रुवाणि तु प्रकुर्वीत प्रमीताहनि सर्वदा' इति छन्दोगपरिशिष्टवचनेन स्त्रीपुंसयोः

साधारणत्वेन श्राद्धप्राप्त्या 'स्त्रीणामप्येवमेवैतदेकोद्दिष्टं प्रकी-र्त्तितम्। मृताहनि यथान्यायं नृणां यद्वदिहोदितम्' इति मार्कण्डेयपुराणीयेन च विशेषतः श्राद्धप्राप्त्या च विशिष्ट-विधित्वानुपपत्तेः तस्मादवसानदिनादृत इति वाक्यस्य सार्थक-त्वाय पृथक्पदमेवानुवादः न च वैपरीत्यं तथात्वे वाक्यानु-वादः स्यात् अव्ययपदानुवादे तु विभक्तेर्नानुवादकतेति एव-मेवेशानन्यायाचार्य्याः तस्मात् 'मातृश्राद्धन्तु पूर्वं स्यात् पितृणां तदनन्तरम्। ततो मातामहानाञ्च वृद्धौ श्राद्धं त्रयं स्मृतम्, इति शातातपवचनात् 'अन्वष्टकास्वष्टकावदग्नौ हुत्वा देव-पूर्वकमेव मात्रे पितामह्यै प्रपितामह्यै पूर्ववद्ब्राह्मणान् भोजयित्वा' इति विष्णुसूत्रात् 'मृताहनि तु कर्त्तव्या स्त्रीणा-मप्युत्तरक्रिया' इति विष्णुपुराणात् 'श्राद्धं सपिण्डकं कुर्य्यात् स्वसूत्रोक्तविधानतः। अन्वष्टकासु वृद्धौ च गयायाञ्च क्षया-हनि। मातुः श्राद्धं पृथक् कुर्य्यादन्यत्र पतिना सह' इति। वृद्धिश्राद्धे च मात्रादिगयायां पितृपूर्वकमिति तीर्थचिन्ता-मणिधृतवायुपुराणवचनात् वृद्ध्यन्वष्टकाऽवसानदिनगया-निमित्तकश्राद्धइतरेषु न योषिद्भ्य इत्यादिना छन्दोगेतरो-ऽवसानदिनेतरत्र वृद्ध्यादौ योषिद्भ्यः पृथक्श्राद्धायासं दद्यात् छन्दोगो वृद्ध्यादौ योषिद्भ्यो न दद्यात् अवसानदिने तु छन्दोगाच्छन्दोगोभयमेव योषिद्भ्यः पृथक् दद्यादित्यर्थात् सिद्धम्। ततश्च वृद्ध्यादौ छन्दोगयोषितां कथं तृप्तिरित्या-काङ्क्षामुत्थाप्य उत्तरार्द्धान्वय इति। एतदर्थमेव स्वसूत्रोक्त-विधानत इत्युक्तं सूत्रेति गृह्यशास्त्रपरम् अन्यत्रामावास्यादौ पतिना सह भोज्यं श्राद्धं कर्त्तव्यमित्येवार्थः असावेतत्त इति यजमानस्य पित्रे इति प्रागुक्तश्रुत्या श्राद्धे पत्नीनिरपेक्षपित्रादि-बोधकतया 'सपिण्डीकरणादूर्द्धं यत् पितृभ्यः प्रदीयते।

सर्व्वेष्वंशहरा माता इति धर्मेषु निश्चयः' इति स्मृत्या भर्तृदत्ताहारकत्वबोधिकया च एकवाक्यत्वात् अन्वष्टकायान्तु साग्नेरेवाधिकारः विष्णुवचने हि हुत्वेत्यनेनाग्निप्राप्तेरग्नाविति ग्रहणं तन्नियमार्थं न च अनग्नौनामग्नौकरणहोमे विप्रपाण्यादिविधानादत्रापि तथेति वाच्यं प्रकृतिभूतश्राद्धविध्युक्तस्य आधारान्तरस्य विकृतिभूतश्राद्धविशेषस्य विहिताधारेण बाधात् शरमयबर्हिषा कुशमयबर्हिर्बाधवत् नकालौकिकाग्नौ होमः न पैतयज्ञियो होमो लौकिकाग्नौ विधीयते इति मनुना निषेधात्। वाचस्पतिमिश्रोऽप्येवम्। प्रागुक्तपर्य्युदासात् वृद्धिश्राद्धे छन्दोगपरिशिष्टेन 'षड्भ्यः पितृभ्यस्तदनुश्राद्धदानामुपक्रमेत्' इत्युपक्रम्य मातामेवानुष्ठानमुक्तं न तु मातॄणामिति एतेन षड्भ्यः इति जीवच्छ्राद्धकविषयमिति निरस्तम्। जीवच्छ्राद्धकेण छन्दोगेतरेण पितामह्यादीनां श्राद्धे क्रियते जीवन्तमतिदद्याद्वा प्रेतायान्नोदके द्विजः' इति छन्दोगपरिशिष्टात् जीवन्तमित्यत्र निमित्तविशेषत्वेन पुंस्त्वमविवक्षितम्। अतएव लघुहारीतेनाप्युक्तं 'स्वेन भर्त्रा सहैवास्याः सपिण्डीकरणं स्त्रियाः। एकत्वं सा गता यस्मादुपचरन्मन्त्राहुतिव्रतैः। तस्मिन् सति सुताः कुर्य्युः पितामह्या सहैव तु। तस्याश्चैव तु जीवन्त्यां तस्याः श्वश्र्वेति निश्चयः'। पितुर्देशान्तरस्थायित्वे च तत्प्रतिनिधित्वेन पुत्रादिना वृद्धिश्राद्धं कर्त्तव्यं तथाच हारीतः। 'जीवति पितरि पुत्राणामर्थादानविसर्गाक्षेपेषु न स्वातन्त्र्यं कामं दीने प्रोषिते चार्त्तिं गते ज्येष्ठोऽर्थांश्चिन्तयेत्' इति अर्थान् दृष्टादृष्टप्रयोजनानि। दक्षोऽपि। 'ऋत्विक्पुत्रो गुरुर्भ्राता भागिनेयोऽथ विट्पतिः। एभिरेव हुतं यत्तु स्यात्तद्धुतं स्वयमेव हि'। स्वयं प्रहृतस्यापि ऋत्विक्त्वमाह विवादचिन्तामणौ नारदः। 'ऋत्विक् च

त्रिविधो दृष्टः पूर्वैर्जुष्टः स्वयंकृतः। यदृच्छया च यः कुर्य्या-द्दात्विज्यं प्रीतिपूर्वकम्'। यदृच्छया स्वेच्छया मरणादिना पितुरनधिकारे द्वितीयादिविवाहे वा विवाहाधिकारिणा स्वयमवश्यं स्वपितृभ्यः श्राद्धं कर्त्तव्यम्। 'नान्दीमुखेभ्यः श्राद्धन्तु पितृभ्यः कार्य्यमन्वहे। ततो विवाहः कर्त्तव्यः शुद्धः शुभसुतप्रदः' इति ब्रह्मपुराणे श्राद्धेन विवाहस्य शुद्धत्वाभि-धानेन तदभावादशुद्धत्वप्रतीतेः अङ्गत्वादेव जीवत्पितृकेणापि जीवन्तं विहायापरमादायावश्यं वृद्धिश्राद्धं कार्य्यं 'जीवे पितरि वै पुत्रः श्राद्धकालं विवर्जयेत्। येषां वापि पिता दद्यात्तेषामेके प्रचक्षते'। इति हारीतवचनोत्तरार्द्धेन प्रधान-साङ्गतार्थं श्राद्धविधानात्तत्र पितामहाद्युद्देशमाह विष्णुधर्मो-त्तरं 'येषां श्राद्धं पिता कुर्य्यात्तेषामेव स कारयेत्। मन्त्रोहेण तु कर्त्तव्यं तेषां श्राद्धं नराधिप!'। स जीवत्पितृकः प्रतिनिधिना-तु अमुकपितुरित्याद्यभिलापे प्रयोज्यम्। आयान्तु नः पितरः इत्यादौ तु न तथा 'या वै काश्चनयज्ञे ऋत्विज आशिषमाशा-सते यजमानस्यैव तामाशासत इति होवाच' इति श्रुतेः एवञ्च अङ्गत्वात् पितामहादिक्रियमाणे कन्यादाने वृद्धिश्राद्धान्युप-पद्यते। मात्रा जीवत्पित्रादित्रिकवद्वृद्धिश्राद्धं विना कन्या दीयते तदनधिकारात् तथाहि पार्वणाधिकारे विष्णुः 'पितरि पितामहे प्रपितामहे च जीवति नैव कुर्य्यात्' इति तद्विकृति-त्वाद्वृद्धिश्राद्धेऽप्यनधिकारः। 'एवं मृताहनि तु कर्त्तव्या स्त्रीणामप्युत्तरक्रिया। प्रतिसंवत्सरे राजन्नेकोद्दिष्टविधानतः' इति विष्णुपुराणीये सपिण्डनोत्तरक्रियायामेकोद्दिष्टविधाने-नान्यत्रानधिकारः। अत्र स्त्रीणामिति प्रकरणात् कर्त्तरि षष्ठी ननु एवं व्रतप्रतिष्ठादिषु स्त्रीकथं ब्राह्मणान् ह्वावयतीति चेन्न तत्र तद्विधानात् तथाहि जुहुयाद्धावयेद्वेति गोभिल-

*सूत्रेण विकल्पदर्शनात् 'सूतके च प्रवासे च अशक्तौ श्राद्ध-*भोजने। एवमादिनिमित्तेषु हावयेदिति योजयेत्' इति छन्दोगपरिशिष्टीये चादिशब्दात् होममात्रे हावयेदिति श्रुतेस्तथाकल्प्यते एवं शूद्रस्यापि ब्राह्मणद्वारा विवाहादौ होमाधिकारः। विष्णुधर्मोत्तरे "विवाहादिक्रियाकाले तत्-क्रियासिद्धिकारकम्। यः प्रयच्छति धर्मज्ञः सोऽश्वमेधफलं लभेत्'। चादिशब्दात् यज्ञोपनयनप्रतिष्ठादिग्रहणमिति दानवाक्यावली मनुः 'अद्भिरेव द्विजाग्र्याणां कन्यादानं प्रश-स्यते। इतरेषान्तु वर्णानामितरेतरकाम्यया'। उदककरणक-मेव ब्राह्मणानां कन्यादानं प्रशस्यते क्षत्रियादीनां पुनर्दातृ-प्रतिग्रहीत्रोर्दानग्रहणेच्छाकरणेन जलं विनापि दानं प्रशस्यते न तु जलकरणकत्वं तेषां निषिध्यते व्यवहारोऽपि यथा रत्ना-करकृद्भिस्तु कन्यावरयोः परस्परानुरागेण इति। बौधायनः 'श्रुतशीलिने विज्ञाय ब्रह्मचारिणेऽर्थिने देया' इति ब्रह्म इति ब्रह्मचारिणे अजातस्त्रीसम्पर्कायेति कल्पतरुयाज्ञवल्क्य-दीपकलिके। जातपरिणीतस्त्रीसङ्गमस्य द्वितीयविवाहे विवाहाष्टकवहिर्भावापत्तेस्तदुपादानं प्राशस्त्यर्थमिति तत्त्वं ब्राह्मग्रानुवृत्तौ संवर्त्तः 'तां दत्त्वा तु पिता कन्यां भूषणाच्छा-दनासनैः। पूजयन् स्वर्गमाप्नोति नित्यमुत्सववृत्तिषु'। स्वयं नित्यं चिरकालीनम् उत्सवानां वाद्यादीनां वर्त्तमानेषु मत्सु दत्त्वेति सम्बन्धः। तत्फलमाह मत्स्यपुराणम्। 'मङ्गल्यानि च वाद्यानि ब्रह्मघोषञ्च गीतकम्। ऋद्ध्यर्थं कारयेद्धीमानमङ्गल्यविनाशनम्'। यमः। 'कूपारामप्रपा-कारी तथा वृक्षादिरोपकः। कन्याप्रदः सेतुकारी स्वर्ग-माप्नोत्यसंशयम्'। अतएव मत्स्यपुराणम् 'शास्त्रे युक्तमस-न्दिग्धं बहुद्वारमहाफलम्। दशपुत्त्रसमा कन्या यापि

स्वाच्छीलवर्जिता' अतएव। अनपत्यस्य गत्यभावस्तत्रैवोक्ता यथा। 'अनपत्यस्य लोकेषु गतिः का च न विद्यते'। भविष्योत्तरे 'कन्यास्वेवानपत्यानां ददतां गतिमुत्तमाम्'। अनपत्यानामनपत्येभ्यः प्रकृष्टां गतिं जानीयादिति शेषः। विष्णुप्रीत्यर्थमपि कन्या दीयते 'देयानि विप्रमुख्येभ्यो मधुसूदनतुष्टये'। इति वामनपुराणेन सामान्यतोऽभिधानात् विष्णुपुराणञ्च 'विशिष्टफलदा कन्या निष्कामानाञ्च मुक्तिदा'। मनुः। 'येन येन हि भावेन यद्दानं संप्रयच्छति। तेन तेन हि भावेन प्राप्नोति प्रतिपूजितः'। येन येन हि भावेन सात्त्विकराजसतामसान्यतमेन तेन तेन हि भावेन देवमानुषपशुभावेन। यमः 'परस्यानुपहत्येह दानं दद्याद्विचक्षणः। सुखोद्भवं शुभोदर्कं प्रेत्यैव लभते फलम्'। इत्येतयोर्दानमात्रे गृहीतृनिष्ठं फलं यच्च कन्यादाने प्रागुक्तं दातृनिष्ठं फलं तदौत्सर्गिकं किन्तु तत्पित्रादिनिष्ठमपि कल्प्यते। 'ततस्तोद्दिश्य पितरं ब्राह्मणेभ्यो ददौ धनम्' इति अयोध्याकाण्डे। 'रत्नवस्त्रमहीयानसर्वभोगादिकं वसु। विभवे सति विप्रेभ्यो योऽस्मानुद्दिश्य दास्यति'। इति विष्णुपुराणीयपितृगीतायाञ्च पितृनिष्ठफलजनकत्वाभिधानात् तदीयन्तु कन्यादि तदर्थं देयमाह आपस्तम्बः 'अन्तेवास्यर्थांस्तदर्थेषु धर्मकृत्येष्वेव योजयेत् दुहिता वेति। तदर्थेषु मासिकादिना तद्भोगार्थं धर्मकृत्येष्वेवेत्यदृष्टार्थमिति' अतएव व्यासः। 'आयासशतलब्धस्य प्राणेभ्योऽपि गरीयसः। एकैव गतिरर्थस्य दानमन्या विपत्तयः' एवञ्च पित्रादिनारब्धदेवगृहपुष्करिण्यादि तद्धनस्वामिना तदर्थं देयं तदाह विवादरत्नाकरे कात्यायनः 'सुस्थेनार्त्तेन वा दत्तं श्रावितं धर्मकारणात्। अदत्त्वा तु मृते दाप्यस्तत्सुतो नात्र संशयः'। एवञ्च मुमुर्षु दत्तस्य यद्दानोपसर्गत्वाभिधानं

तद्दमार्थेतरदानपरम्। एवञ्च शास्त्रदेशितं फलं प्रयोक्तरीति-न्यायेन पित्रादयो न व्यावर्त्तन्ते। तेषामपि शास्त्रदेशित-फलभागित्वात् किन्तु वेतनेन प्रवर्त्तमाना होमदेवगृहतड़ा-गादिषु ऋत्विकस्थपतिखनित्रप्रभृतयो न फलभागिनः। अतएव ऋत्विक्विषयिका श्रुतिः दीक्षितमदीक्षिता दक्षिणा-दिभिः क्रीता ऋत्विजोयाजयेरन्निति इतरेषामपि लोकव्यव-हारादेव धनार्थित्वमात्रम्। काश्यपः। 'शुल्केन ये प्रयच्छन्ति स्वसुतां लोभमोहिताः। आत्मविक्रयिणः पापा महाकिल्बिष-कारिणः। पतन्ति नरके घोरे घ्नन्ति चासप्तमं कुलम्। गमना-गमने चैव सर्वः शुल्कोऽभिधीयते'। गमनागमने पारितोषिक-द्रव्यमादाय कन्याप्रदानार्थं कन्यापितृवेश्मयातायाते अत्र लोभ-मोहिता इत्यनेन स्वार्थं न ग्राह्यं कन्यार्हणार्थन्तु ग्रहणे न दोषः 'यासां नाददते शुल्कं ज्ञातयो न स विक्रयः। अर्हणं यत् कुमारीणामानृशंस्यं हि केवलम्'। आनृशंस्यमनुकम्पा अतएव मनुः। 'आददीत न शूद्रोऽपि शुल्कं दुहितरं ददत्' एवञ्च रत्नाकरधृतयमवचने यत् शूद्रसम्प्रदानकदानमुक्तं तत् कन्यादानविषयकमपि तद्यथा 'शूद्रे समगुणं दानं वैश्ये द्विगुणमुच्यते। क्षत्रिये षड्गुणं प्रोक्तं विप्रे दशगुणं स्मृतम्'। अत-एव मदनपारिजाते भरद्वाजः 'साधारणं स्यात्त्रिविधं विदुस्तञ्च क्रमागतम्। प्रीतिदानं तथैवान्न प्राप्तञ्च सह भार्य्यया। अवि-शेषेण वर्णानां सर्वेषां त्रिविधं धनम्'। यत्तु 'चतुरो ब्राह्मण-स्याद्यान् प्रशस्तान् कवयो विदुः। राक्षसं क्षत्रियस्यैक-मासुरं वैश्यशूद्रयोः'। इति मनुना प्रशस्तत्वेनाभिहितं तदपि प्रागुक्तकन्यार्हणार्थविषयम्। याज्ञवल्क्यः। 'दत्तां कन्यां हरन् दण्ड्यो व्ययं दद्याच्च सोदयम्। मृतायां दत्तमा-दद्यात् परिशोध्यो भयव्ययम्'। वाचा दत्तां कन्यां कारण-

मन्तरेण हरन् दण्ड्यो भवति यच्च वरेण दत्तं हिरण्यादिकं तत् सवृद्धिकं कन्यापिता दद्यात् वाग्दत्तायां मृतायां वरो दत्तमादद्यात् उभयव्ययं परिशोध्य यदवशिष्टमिति। दक्षः। 'मातापितृविहीनन्तु संस्कारोद्वहनादिभिः। यः स्थापयति तस्येह पुण्यसंख्या न विद्यते'। मत्स्यसूक्ते 'बलिकर्मणि यात्रायां प्रवेशे नववेश्मनः। महोत्सवे च मङ्गल्ये तत्र स्त्रीणां ध्वनिः शुभः'। ध्वनिः हुलुहुलुध्वनिः। दाक्षिणात्यास्तु 'आसने शयने दाने भोजने वस्त्रसंग्रहे। विवादे च विवाहे च क्षुतं सप्तसु शोभनम्'। अन्यत्र तु विष्णोरित्यधिकृत्य विष्णु-धर्मोत्तरं 'नामसंकीर्त्तनं नित्यं क्षुत्प्रस्खलितादिषु। वियोगं शीघ्रमाप्नोति सर्वानर्थो न संशयः' अतएव विष्णुपुराणम्। 'स्मृते सकलकल्याणभाजनं यत्र जायते। पुरुषं तमजं नित्यं व्रजामि शरणं हरिम्'। विष्णुधर्मोत्तरे 'नासंवृतमुखः कुर्य्या-द्धास्यं जृम्भां तथा क्षुतम्'। श्रीपतिरत्नमालायाम्। 'आज्ञया नरपतेर्द्विजन्मनां दारकर्ममृतसूतकेषु च। बन्धमोक्षमख-दीक्षणेष्वपि क्षौरमिष्टमखिलेषु च भोडुषु'। क्षौरं क्षुरिकर्म तेन स्त्रिया अपि नखकृन्तनम्। महाभारते 'रात्रौ दानं न शंसन्ति विना चाभयदक्षिणाम्। विद्यां कन्यां द्विजश्रेष्ठा-दीपमन्नं प्रतिश्रयम्'। अभयदक्षिणाम् अभयदानं तथाच रामायणं 'पर्य्याप्तदक्षिणस्यापि नाश्वमेधस्य तत्फलम्। यत्-फलं याति सन्त्रासे रक्षिते शरणागते'। अकरणे निन्दामाह महाभारते 'प्राणिनं बध्यमानं हि यः शक्तः समुपेक्षते। स याति नरकं घोरमिति प्राहुर्मनीषिणः'। प्रतिश्रयं प्रवा-सिनामाश्रयम्। विवाहे रात्रौ दानान्तरमप्याह देवलः 'राहुदर्शनसंक्रान्ति विवाहात्ययवृद्धिषु। स्नानदानादिकं कुर्य्युर्निशि काम्यव्रतेषु च'। ज्योतिःसारसंग्रहे 'विवाहे तु

दिवाभागे कन्या स्यात् पुत्रवर्जिता। विवाहानलदग्धा सा नियतं स्वामिघातिनी'। व्यासः। 'संपूज्य गन्धपुष्पाद्यै-र्ब्राह्मणान् स्वस्तिवाचयेत्। धर्म्मे कर्म्मणि मङ्गल्ये संग्रामा-द्भुतदर्शने'। गन्धादौ तु विशेषमाह विष्णुधर्म्मोत्तरे 'माल्यानु-लेपनादय' न प्रदद्यात्तु कस्यचित्। अन्यत्र देवताविप्र-गुरुभ्यां भृगुनन्दन'। धर्म्मे कर्म्मणीति सप्तमी निर्द्देशादमुक-कर्म्मणि स्वस्तिभवन्तो ब्रुवन्त्विति ब्रूयात्। यमः 'पुण्याह-वाचनं दैवे ब्राह्मणस्य विधीयते। एतदेव निरोङ्कारं कुर्य्यात् क्षत्रियवैश्ययोः। सोङ्कारं ब्राह्मणे ब्रूयान्निरोङ्कारं मही-पतौ। उपांशु च तथा वैश्ये शूद्रे स्वस्ति प्रयोजयेत्'। सौभाग्यतिलकमाह मत्स्यपुराणम्। 'गोरोचनं सगोमूत्रं शुल्कं गोशकृतं तथा। दधिचन्दनसंमिश्रं ललाटे तिलकं न्यसेत्। सौभाग्यारोग्यकृद् यस्मात् सदा च ललिताप्रियम्'। ललिता परमेश्वरी। तत्र कन्यावरयोर्माल्याद्युत्सवेन सहितं सांमुख्याचरणमाह हरिवंशः 'आशीर्भिर्वर्द्धयित्वा तु देवर्षिः कृष्णमब्रवीत्। अनिरुद्धस्य वीर्य्याढ्यो विवाहः क्रियतां विभो!। जम्बूलमालिकां द्रष्टुं वाञ्छा हि मम जायते'। तामाह हारावली 'जम्बूलमालिकाकन्यावरयोर्मुखचन्द्रिका'। मुखदर्शनमिति रभसः वाक्ये तु 'अयसोमार्कग्रहणसंक्रान्त्यादौ सुतीर्थके'। इत्यग्निपुराणीयदाननिमित्तोक्तस्य सोमग्रहण-ऽपि अयेति श्रवणादन्यत्र रात्रावपि अयेत्युल्लेख्यम्। अह: पदस्याहोरात्रपरत्वादविरुद्धम्। विवाहादिसंस्कारकर्म्मणि सौरेणैव वाक्यम् 'आब्दिके पितृकृत्ये च मासश्चान्द्रमसः स्मृतः। विवाहादौ स्मृतः सौरो यज्ञादौ सावनो मतः' इति पितामह-वचनात् 'तिथिकृत्ये च कृष्णादिं व्रते शुक्लादिमेव च। विवा-हादौ च सौरादिं मासं कृत्ये विनिर्द्दिशेत्'। इति रत्नाकर-

भूतब्रह्मपुराणवचनाच्च सौरः सूर्य्यसंक्रमः । विनिर्दिशेत् उल्लिखेत् । सौरे रविराश्युल्लेखोऽपि 'संक्रान्तिविहिते कार्य्ये संक्रान्तिः परिकीर्त्तिता । मासोल्लेखश्चेतरस्मिन् रविराशिस्थितिस्तथा' इति गारुड़ात् । संक्रान्तिनिमित्तके संक्रान्तिः कीर्त्तिता । उल्लेखनीयत्वेन कथिता अत्रैव चान्द्रमासोल्लेखस्य मासपदस्य तत्रैव शक्तेः । इतरस्मिन् संक्रान्तिविहितेतरकर्मणि । संक्रान्तेः सौरत्वेन सौरकर्मणीति यावत् । तत्र रविराशिस्थितिरुल्लेखनीया । तथेति मासोल्लेखोऽपि इत्यर्थः । कल्पतरुरत्नाकरयोर्गृह्यपरिशिष्टं 'कन्यां वरयमानानामेष धर्म्मो विधीयते । प्रत्यङ्मुखा वरयन्ति प्रतिगृह्णन्ति प्राङ्मुखाः । वरयन्ति गोत्रप्रवराभिधानपूर्व्वकं ददति प्रतिगृह्णन्ति इति श्रवणात् । अतएव दानधर्म्मोत्तरे 'सर्व्वत्र प्राङ्मुखो दाता ग्रहीता च उदङ्मुखः । एष दानविधिर्दृष्टो विवाहे तु विपर्य्ययः' । विपर्य्यय इति प्रत्यङ्मुखः संप्रदाता प्रतिग्रहीता प्राङ्मुखः । तथाच शङ्खः 'प्राङ्मुखाभिरूपाय वराय शुचिसन्निधौ । दद्यात् प्रत्यङ्मुखः कन्यां क्षणे लक्षणसंयुतं' । इति भवदेवभट्टीयसम्बन्धविवेके । प्रवराभिधानमाह मत्स्यपुराणं 'तुलापुरुषदाने च तथाच हाटकाचले । कन्यादाने तथोत्सर्गे कीर्त्तयेत् प्रवरादिकम्' इति हरिशर्म्मधृताश्वलायनवचनं शिवदत्तप्रपौत्रो विष्णुदत्तपौत्रो हरिदत्तपुत्रो यज्ञदत्ता कन्या शिवमित्रप्रपौत्राय विष्णुमित्रपौत्राय राममित्रपुत्राय रुद्रमित्राय तुभ्यं संप्रदत्तेति दृष्टार्थत्वात् पुंवचसां क्तप्रत्ययार्थो विवक्षा तेन संप्रददे इत्येव प्रयोगः न संप्रदत्तेति । तथाच व्यासः 'नामगोत्रे समुच्चार्य्य प्रदद्यात् श्रद्धयान्वितः । परितुष्टेन भावेन तुभ्यं संप्रददे इति' नामप्रदेशमाह विष्णुपुराणं 'ततश्च नाम कुर्व्वीत पितैव दशमे-

ऽहनि। देवपूर्वं नराख्यं हि शर्मवर्मादिसंयुतम्। नर-माचष्टे इति नराख्यं नरनामख्याख्यकमूलविभुजादिभ्यश्चेति क इति जिनेन्द्रबुद्धिः अन्यतोऽपि चेति इति वररुचिः। देव-पूर्वं देवात् पूर्वं तच्च 'विशिष्ट' शर्मयुक्तं शर्मा देवश्च विप्रस्य वर्मत्राता च भूभुजः। भूतिर्दत्तश्च वैश्यस्य दासः शूद्रस्य कारयेत्' इति यमवचनेऽपि समुच्चयलब्धः 'शर्मान्तं ब्राह्मणस्य स्यात्' इति शातातपीयेन शर्मान्तता च। एवं 'षष्ठेऽन्नप्राशनं मासि यद्वेष्टं मङ्गलं कुले' इति मनुवचनात् चूडा कार्य्या यथा कुलमिति याज्ञवल्क्यवचनात् 'देशानुशिष्टं कुलधर्ममग्र्यं स्वगोत्रधर्मं न हि संत्यजेच्च' इति वामनपुराणवचनाच्च। संस्कारमात्रेण कुलधर्मानुरोधेन कालान्तरेऽपि मङ्गलविशेषा-चरणम्। शूद्राणां नामकरणे वसुघोषादिपद्धतियुक्तनाम-त्वञ्च बोध्यम्। देव्यन्तास्तु स्त्रियः स्मृता इति द्विजातिस्त्री-परं 'शूद्रीदासान्तकाः स्मृता' इति वचनात् तत्पक्षराच पुंयोगाज्जातेश्चेति ईप्रत्ययेन दास्यन्तता शूद्रे शिष्टव्यवहारो-ऽपि तथा यत्तु सर्ववर्णस्त्रीपरं देव्यन्ता इति तन्न प्रकरणात् द्विजातिपुंयोगबाधाच्च शर्मणी वर्मणीप्रयोगस्तु न व्यवहार्य्यः देवपूर्वं नराख्यं स्यादित्यस्य तत्परत्वानौचित्यात् एवमेव कुल्लूकभट्टः तेन वाक्येऽपि तथा कल्पना। अहं पदप्रयोगस्तु 'अहमस्मै ददानीति एवमाभाष्य दीयते' इति छन्दोगपरि-शिष्टे तथादर्शनात् ददानीति परगामिनि फले ददे इति आत्मगामिफले वाच्यम्। 'देवं गुरुं गुरुस्थानं क्षेत्रं क्षेत्राधि-देवताः। सिद्धं सिद्धाधिकारांश्च श्रीपूर्वं समुदीरयेत्'। इति राघवभट्टकृतप्रयोगसारदर्शनेन स्वर्गकाम्यत्वादिना सिद्धोऽधि-कारो येषां तानित्यनेन जीवतां श्रीशब्दादित्वं नास्ति मृता-नान्तु न तथेति शिष्टाः। श्राद्धादौ फलभागिनां गोत्रा-

श्रुतेश्चदर्शनात् तदितरत्रापि तथोल्लेखाचारः एवं श्राद्धे 'अमुकामुकगोत्रे तत्तुभ्यमत्र स्वधा नमः' इति ब्रह्मपुराणादि-दर्शनाद्दे यविशेषणत्वेन एतच्छब्दप्रयोग इति अत्र कन्यावरयो-रिति पाठक्रमात् ऋष्यशृङ्गोक्तशाब्दक्रमस्य बलवत्त्वात् वर-कुलाभिधानानन्तरं कन्याकुलाभिधानसमाचारः। यथा हेमाद्रिधृतम् ऋष्यशृङ्गवचनं 'वरगोत्रं समुच्चार्य्य प्रपितामह-पूर्वकम्। नाम संकीर्त्तयेद् विद्वान् कन्यायाश्चैवमेव हि'। धनञ्जयकृतसम्बन्धविवेके 'नान्दीमुखे विवाहे च प्रपितामह-पूर्वकम्। वाक्यमुच्चारयेद्विद्वानन्यत्र पितृपूर्वकम्। एतदेव त्रिरुच्चार्य्य कन्यां दद्याद् यथाविधि। विवाहे यो विधिः प्रोक्तो वरणे स विधिः स्मृतः। वाक्यं त्रैपुरुषिकं कार्य्यं त्रिरावृत्ति-विवर्जितं'। इति वचनान्तरात् त्रिरावृत्तिविवर्जिते प्रपिता-महपूर्वकं वरणे। नान्दीसम्पद्भिरिति कथ्यते इति ब्रह्म-पुराणात् नान्दीमुखे पुत्रादिसम्बन्धीनामादिकारणरूपे विवाहे. विवाहस्य विशेषणन्तु विवाहादेव पुत्रादीनां लाभज्ञापनाय चकारस्त्वर्थः अन्यत्र प्राप्तपित्रादिक्रमव्यवच्छेदाय नान्दीमुख-पदस्य श्राद्धपरत्वेऽनेकवचनप्राप्तपितृपूर्वकाभिलापबाधापत्तेः वाक्यभेदापत्तेश्च। एतदिति प्रपितामहपूर्वकं वाक्यं तच्च ऋष्यशृङ्गवचनात् कन्यानामान्तमिति न तु संप्रददे ददानि वेत्यन्तं 'सकृदंशो निपतति सकृत्कन्या प्रदीयते। सकृदाह ददानीति त्रीण्येतानि सकृत् सकृत्' इति मनुवचनात् 'वेदार्थोपनिबन्धृत्वात् प्राधान्यं हि मनोः स्मृतम्। मन्वर्थ-विपरीता या सा स्मृतिर्न प्रशस्यते'। इति बृहस्पत्युक्तेश्च अत्र च पारस्करेण बहिःशालायामुपलिप्ते देशे उद्धृतावोक्षिते अग्नि-मुपसमाधायेति सूत्रात् प्रधानगृहाङ्गनेऽग्निस्थापनानन्तरं कुमार्य्याः पाणिं गृह्णीयात् त्रिषु त्रिषु उत्तरादिषु इति सूत्रा-

न्तरेण पाणिग्रहणविधानात्। यजुर्वेदिनां सामगदेयकन्या-ग्रहणेऽपि दानात् पूर्वमग्निस्थापनम्। त्रिषु त्रिषु उत्तरादिषु नवसु नक्षत्रेषु। ततश्च ज्योतिषानुक्तेषु अपि चित्राश्रवणा-धनिष्ठाश्विनीनक्षत्रेषु निरपेक्षकर्मत्वे यजुर्वेदिनां विवाह इति। तत्र अयं क्रमः प्राङ्मुखाय वराय प्रत्यङ्मुखः सम्प्रदाता एकादशीतत्त्वोक्तप्रमाणं सर्वकर्मसाधारणं ओम् नमो नारा-यणायेत्युच्चार्य्य नत्वा' ओम् तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः। दिवीव चक्षुराततम्' इत्यनेन विष्णुं संस्मृत्य ओम् तत्सदित्युच्चार्य्य च तिलकुशत्रयसहितं जलं गृहीत्वा अद्य अमुके मासि अमुकराशिस्थे भास्करेऽमुकपक्षेऽमुकतिथौ अमुकगोत्रोऽमुकदेवशर्म्मा स्वर्गकामो विष्णुप्रीतिकामो वा इत्यन्तं सकृदुच्चार्य्य अमुकगोत्रस्य अमुकप्रवरस्य अमुकदेव-शर्म्मणः प्रपौत्राय अमुकगोत्रस्य अमुकप्रवरस्य अमुकदेवशर्म्मणः पौत्राय अमुकगोत्रस्य अमुकप्रवरस्य अमुकदेवशर्म्मणः पुत्राय अमुकगोत्राय अमुकप्रवराय अमुकदेवशर्म्मणे वराय अमुक-गोत्रस्य अमुकप्रवरस्य अमुकदेवशर्म्मणः प्रपौत्रीम् अमुक-गोत्रस्य अमुकप्रवरस्य अमुकदेवशर्म्मणः पौत्रीम् अमुकगोत्रस्य अमुकप्रवरस्य अमुकदेवशर्म्मणः पुत्रीम् अमुकगोत्राम् अमुक-प्रवराम् अमुकीदेवीमित्यन्तं त्रिरुच्चार्य्य सालङ्कारां वस्त्रा-च्छादितां प्रजापतिदेवताकामिमां कन्यां तुभ्यमहं सम्प्र-ददे। इति दद्यात् परार्थे चेहदानीति विशेषः अमुकगोत्र इत्यादौ षष्ठ्यन्ततानिर्द्देशश्च वीरेश्वरवामदत्तादयोऽप्येवं विवाहे दानान्तरमप्याह हेमाद्रिधृतं व्यासवचनं 'ग्रहणो-द्वाहसंक्रान्ति यात्रार्त्तिप्रसवेषु च। दानं नैमित्तकं ज्ञेयं रात्रावपि न दुष्यति'। विवाहप्रवर्त्तने रजोयोगेऽपि होमा-दिकं कार्य्यं तथा च रत्नाकरे हृदयाशवचनम्: 'विवाहे

वितते तस्मै होमकाले उपस्थिते। कन्याया ऋतुरागच्छेत् कथं कुर्वन्ति याज्ञिकाः। स्नापयित्वा तु तां कन्यामर्चयित्वा यथाविधि। युञ्जानायेति जुहुयात्ततस्तन्त्रं प्रवर्त्तयेत्'। युञ्जानायाहुतीः स्वाहेति यम्नपार्श्वः मन्त्रानादेशे गायत्री हविषो नादेशे आज्यमिति कात्यायनसूत्रात् गायत्र्याहोम इति पशुपतिः। स्नात्वा भुषार्थे वस्त्रादिदेयमाह हरिवंशः 'उषां प्रद्युम्नगृहिणी स्नुषां दृष्ट्वा सुमध्यमाम्। वासोभिरन्नपानैश्च पूजयामास सुन्दरीम्'। मनुः 'अर्थस्य संग्रहे चैनां व्यये चैव नियोजयेत्। शौचे धर्मेऽन्नपक्तौ च पारिणाह्यस्य रक्षणे'। पारिणाह्यस्य गृहोपकरणस्य शय्यासनादेः। 'पानं दुर्जनसंसर्गः पत्या च विरहोऽटनम्। स्वप्नोऽन्यगेहवासश्च नारीणां दूषणानि षट्'। बृहस्पतिः। ऋतुकालाभिगमनं पुंसा कार्य्यं प्रयत्नतः। सदैव वा पर्ववर्ज स्त्रीणामभिमतं हि तत्'। कूर्मपुराणे 'ऋतुकालाभिगामी स्यात् यावत् पुत्रो न जायते'। विष्णुधर्मोत्तरे 'मण्डनं वर्जयेन्नारी तथा प्रोषितभर्तृका। देवताराधनपरा तिष्ठेद्भर्तृहिते रता। धारयेन्मङ्गलार्थाय किञ्चिदाभरणं तथा। न जातु विधवावेशं कदाचिदपि धारयेत्'। तथा 'येनेच्छेद्विपुलां प्रीतिं तेन सार्द्धमरिन्दम। न कुर्य्यादर्थसम्बन्धं दारसन्दर्शनं तथा'। हेमाद्रिधृताग्निपुराणम् 'अप्रजायान्तु कन्यायां न भुञ्जीत कदाचन। दौहित्रस्य मुखं दृष्ट्वा किमर्थमनुशोचसि। महासत्वसमाकीर्णान्नास्ति ते नरकाद्भयम्। तीर्णस्त्वं सर्वदुःखेभ्यः परं स्वर्गमवाप्स्यसि'। अतएव आदिपर्वणि गान्धारीवाक्यम् 'एकाग्रताधिका कन्या भविष्यति कनीयसी। ततो दौहित्रजाल्लोकादवाह्योऽसौ पतिर्मम'। कामधेनौ आदित्यपुराणं 'विष्णुं जामातरं मन्ये तस्य मन्युं न कारयेत्।

अप्रजायान्तु कन्यायां नाश्नीयात्तस्य वै गृहे। आग्नेयेयाद्विशेषेण नैव भोज्यं सदैव तु'। मत्स्यसूक्ते 'भुङ्क्ता पितृगृहे कन्या भुङ्क्ते स्वामिगृहे यदि। दौर्भाग्यं जायते तस्याः अपन्ति कुलनायिकाः'। दक्षः। 'अनाश्रमी न तिष्ठेत्तु दिनमेकमपि द्विजः। आश्रमेण विना तिष्ठन् प्रायश्चित्तीयते त्वसौ। जपे होमे तथा दाने स्वाध्याये वा रतः सदा। नासौ फलं समाप्नोति कुर्वाणोऽप्याश्रमच्युतः'। विष्णुपुराणञ्च 'व्रतेषु लोपको यश्च आश्रमाद्विच्युतश्च यः। संदंशयातना मध्ये पततस्तावुभावपि'। अत्र आश्रमाद्विच्युतश्च य इति सामान्येन दोषाभिधानात् शूद्रस्यापि तथात्वमिति पूर्ववचने द्विज इत्युपलक्षणम्। शूद्रस्याप्याश्रममाह पराशरभाष्ये वामनपुराणम्। 'चत्वार आश्रमास्चैव ब्राह्मणस्य प्रकीर्त्तिताः। गार्हस्थ्यं ब्रह्मचर्य्यञ्च वानप्रस्थञ्च भिक्षुकम्। क्षत्रियस्यापि कथिता आश्रमास्त्रय एव हि। ब्रह्मचर्य्यञ्च गार्हस्थ्यमाश्रमद्वितयं विशः। गार्हस्थ्यमुचितन्त्वेकं शूद्रस्य क्षणमाचरेत्'। क्षणमुत्सवरूपम्। अत्र विशेषयति भविष्यपुराणं 'चत्वारिंशद्वत्सराणां साष्टानाञ्च परे यदि। स्त्रिया वियुज्यते कश्चित् स तु रण्डाश्रमी मतः। अष्टचत्वारिंशदब्दं वयो यावन्न पूर्य्यते। पुत्रभार्य्यावियुक्तस्य नास्ति यज्ञाधिकारिता'। एवञ्च प्रौढ़कन्याया दोषदृष्ट्या विवाहार्थं यथा महागुरोः सपिण्डनापकर्षाधिकारस्तथाऽनाश्रमिणोऽपीति। एवञ्च प्रत्यवायश्रुतेः कन्यालाभसत्त्वेऽपि स्वेच्छया विवाहाकर्त्तुर्ज्येष्ठस्य कामतः कारिणस्तथेति प्रागुक्तच्छन्दोगपरिशिष्टेन परिवेदने पर्य्युदस्तत्वात् तथाविधज्येष्ठे कनिष्ठस्य विवाहे परिवेदनदोषो नास्तीति। पैठीनसिः। 'अलाभे चैव कन्यायाः स्नातकव्रतमाचरेत्'। एतच्च सन्न्यासानधिकारिणः तदधिकारी

तु गीतासुबोधिन्यां वशिष्ठोक्तः 'प्राप्ते गते यथा द्वेषः सुख-दुःखे न विन्दति। तथा चैव प्राप्तयुक्तोऽपि न केवलाश्रमे वसेत्'। अन्यत्र वशिष्ठोऽपि 'गृहस्थो विनीतक्रोधोऽक्रोधहर्षो गुरुणानुज्ञातः स्नात्वा असमानार्षेयीमस्पृष्टमैथुनामवरवयस्कां सदृशीं भार्य्यां विन्देत' इति गृहस्थ इति भाविनि भूतवदुप-चारस्तत्कर्मप्राप्त्यर्थः नैवाकृतदारोऽपि गार्हस्थ्यमकृत्वा वाना-श्रमाचारनिरतो गृहस्थधर्मे तु अधिक्रियते इति यत्पार्श्वे इति कल्पतरुः 'न समानगोत्रां न समानप्रवरां विन्देत' इति विष्णुसूत्रादौ नञः पर्य्युदासपरता वैधविषयकत्वात् प्रसज्य प्रतिषेधपरता च निन्दाप्रायश्चित्ताभ्यां रागप्राप्तविषयकत्वात् एवंच कल्लभिनमनवत् अतएव भार्य्याशब्दो यूपाहवनी-यादिवदलौकिकाकृसङ्गेन अलौकिकसंस्कारयुक्ता स्त्रीवचनः ततश्च। सपिण्डसन्ततिसमानार्षादिषु परित्यागप्रायश्चित्त-श्रुतेरदृष्टार्थनिषेधात् भार्य्यात्वमेव नोपपद्यते तेन तथा-विधासु परिवेदनादिदोषानिष्पत्तिः धर्मकर्मानुपयोगश्च 'नोद्वहेत्कपिलां कन्यां नाधिकाङ्गीं न रोगिणीम्। नालोमिकां नातिलोमां न वाचालां न पिङ्गलाम्। नर्क्षवृक्षनदीनाम्नीं नान्त्यपर्वतनामिकाम्' इत्यादिना निषिद्धासु 'मनुष्यदेव-जातीनां शुभाशुभनिवेदकम्। लक्षणं हस्तपादादौ विहितं वेधसा किल' इति मत्स्यपुराणाच्छुभाशुभसूचकत्वेन दृष्टदोषासु भार्य्यात्वमुपपद्यते। किन्तु दृष्टदोष एवेति मीमांसकभाष्य-कारेणापि भूतधिकरणे उक्तं ये दृष्टार्थास्ते तत्रैव प्रमाणं येतु अदृष्टार्थास्तेषु वैदिकशब्द एव प्रमाणमिति। मनुः 'न निष्क्रयविसर्गाभ्यां भर्त्तुर्भार्य्या विमुच्यते'। निष्क्रयो विक्रयः विसर्गस्त्यागः। कात्यायनः। 'दासो नोढ़ात्वदासी या सापि दासीत्वमाप्नुयात्। यस्मात्तर्त्ता प्रभुस्तस्याः स्वाम्यधीनः प्रभु-

मंतः'। पदिन्यायात् सप्रतियोगिकदासपदात् यो यस्य दासः तेन तद्दासी परिणीता तस्य दासी भवतीत्यर्थः। तद्दासी च द्विविधा कस्यापि न दासी अन्यस्य दासी वा। तत्र पूर्वा सर्वथैव दासीपरत्वे तत् प्रभोरनुमत्या दासी तदनुमत्या न दासी न वा तत्पतिः। कन्येश्वरस्य वड़वाकृतोदासस्तयो-स्तत्तत्प्रभुतन्त्रत्वात्। वड़वादासमाह नारदः। 'भक्तदासस्य विज्ञेयस्तथैव वड़वाकृतः'। भक्तेनान्नेन दासः वड़वादासी तया कृतः तत्सम्भोभादङ्गीकृतदास्य इत्यर्थं इति रत्नाकरः। 'व्यक्तमाह बृहस्पतिः' यो भुङ्क्ते परदासीन्तु स ज्ञेयो वड़वा-कृतः। कर्म तत् स्वामिनः कुर्य्याद् यथान्येन भृतो नरः'। तत्स्वामिनो दासीश्वरस्य ततश्च तयोरपत्यं द्वयोरेव स्वामिनो-विभाज्यं रत्नाकरादयोऽप्येवम्। यत्तु 'ओघवाताहृतं वीजं यस्य क्षेत्रे प्ररोहति। क्षेत्रिकस्यैव तद्वीजं न वप्ता फलमर्हति। एष धर्मो गवाश्वस्य दास्युष्ट्राजाविकस्य च। विहङ्गमहिषा-णाञ्च विज्ञेयः प्रसवं प्रति' इति मनुवचनं तत्र दासीपदं परोढ़ापरम्। तस्यामन्येन जातो दासीभर्त्तुर्न वीजिभर्त्तुः। हारीतः 'गर्भिणीमधोवर्णगां मिथ्यसुतगामिनीं पापव्यसना-सक्तां धनधान्यक्षयकरीं वर्जयेत्'। यमः 'स्वच्छन्दगा हि या नारी तस्यास्त्यागो विधीयते। न चैव स्त्रीवधः कार्य्यो न चैवाङ्गवियोजनम्'। बृहस्पतिः 'हीनवर्णोपभुक्ता या त्याज्या वध्यापि वा भवेत्' विशेषयति मिताक्षरायां स्मृतिः 'ब्राह्मण-क्षत्रियविशां भार्य्याः शूद्रेण सङ्गताः। अप्रजातास्ता विशुद्ध्यन्ति प्रायश्चित्तेन नेतराः' एतत् बलात्कारविषयमिति।

इति वन्द्यघटीयश्रीरघुनन्दनभट्टाचार्य्यविरचिते
स्मृतितत्त्वे विवाहतत्त्वं समाप्तम्।

# व्रततत्त्वम्।

प्रणम्य सच्चिदानन्दं रामं कामदमीश्वरम्। व्रततत्त्वं मुदे विष्णोर्वक्ति श्रीरघुनन्दनः। अत्र व्रतविधिः। तदारम्भ-प्रतिष्ठाकालमाह ज्योतिषे। 'गुरोर्भृगोरस्तबाल्ये वार्द्धके सिंहके गुरौ'। इति वृद्धे बाले दिनत्रयमित्यन्तं मठप्रतिष्ठा-तत्त्वेऽनुसन्धेयम्। बुधाष्टमीव्रते विशेषो राजमार्त्तण्डोक्तो यथा 'द्विजेन्द्रसुतसंयुक्ता पूर्णा या च सिताष्टमी। तस्यां नियमकर्त्तारो न स्युः खण्डितसम्पदः। पतङ्गे मकरे याते देवे जाग्रति माधवे। बुधाष्टमीं प्रकुर्वीत वर्जयित्वा तु चैत्रकीम्। प्रसुप्ते च जगन्नाथे सन्ध्याकाले मधौ तथा। बुधाष्टमीं न कुर्वीत कृता हन्ति पुरा कृतम्'।

अथ व्रतानुष्ठानम्। तत्र देवलः। 'अभुक्त्वा प्रातराहारं स्नात्वा चैव समाहितः। सूर्य्यादिदेवताभ्यश्च निवेद्य व्रत-माचरेत्। व्रतचर्य्यं तथा शौचं मत्स्याद्यामिषवर्जनम्। व्रतेष्वेतानि चत्वारि वरिष्ठानीति निश्चयः'। अत्र प्रातरि-त्यस्य भुक्त्वेत्यत्र नान्वयः। किन्तु व्रतमित्यनेनान्वयाव्यवहित-त्वात्। 'प्रातः सङ्कल्पयेद्विद्वानुपवासव्रतादिषु। नापराह्णे न मध्याह्ने पितृकालौ हि तौ स्मृतौ'। इति वराहपुराण-वाक्यत्वाच्च। ततश्चाभुक्त्वा प्रातराहारमिति 'मुनिभिर्द्दिरशनं प्रोक्तं विप्राणां मर्त्यवासिनां नित्यम्। अहनि च तमस्विन्यां सार्द्धप्रहरयामान्तः' इति छन्दोगपरिशिष्टादेकाहारं पूर्वदिने कृत्वा परदिने स्नात्वा आचम्य सूर्य्यादिदेवेभ्यो निवेद्य। ओम् सूर्य्यः सोमो यम इत्यादि मन्त्रेण सान्निध्यं प्रार्थ्य व्रतमा-चरेत्। ततः सङ्कल्पयेत् यद्वा सूर्य्यादिदेवेभ्यो निवेद्य पूज-

नीयद्रव्यादि दत्त्वा व्रतमाचरेत्। व्रतं कुर्य्यात् तद्विधानञ्च शान्तिपर्व्वणि 'गृहीत्वौडुम्बरं पात्रं वारिपूर्णमुदङ्मुखः। उपवासन्तु गृह्णीयात् यद्वा सङ्कल्पयेद् बुधः'। कर्म्मादौ सूर्य्यपूजामाह ब्रह्मपुराणम्। यत्नेन दीयते चार्घ्य-मित्यादि नवग्रहपूजामाह मत्स्यपुराणम्। नवग्रहमखं कृत्वा इत्यादि आदित्यादिपूजामाह पद्मपुराणम्। 'आदित्यं गणनाथञ्च देवीं रुद्रं यथाक्रमम्। नारायणं विशुद्धाख्यम् अन्ते च कुलदेवताम्'। यत्तु 'देवमादौ यदा मोहात् गणे-शञ्च न पूजयेत्। तदा पूजाफलं हन्ति विघ्नराजो गणा-धिपः'। इत्यनेन गणेशपूजनस्य नित्यत्वमुक्तम्। तत् सूर्य्ये-तरपरम्। कुलदेवतेत्यत्र कुलाद्युपलक्षणम्। 'व्रतयज्ञविवा-हेषु श्राद्धे होमेऽर्च्चने जपे। आरब्धे सूतकं न स्यादनारब्धे तु सूतकम्'। तत्र विशेषयति मत्स्यपुराणम्। 'गर्भिणी सूतिका नक्तं कुमारी च रजस्वला। यदाशुद्धा तदान्येन कारयेत् क्रियते सदा। उपवासाशक्तौ तु भोजनं कुर्वीत 'उपवासेष्वशक्तानां नक्तं भोजनमिष्यते'। इति वचनान्तरात्। अशुद्धा पूजां कारयेत्। कायिकञ्चोपवासादिकं सदा शुद्धया-शुद्धया च स्वयं क्रियते। गरुडपुराणम्। 'भार्य्या भर्त्तृव्रतं कुर्य्यात् जायायास्तु पतिस्तथा। असामर्थ्यात् द्वयोस्ताभ्यां व्रतभङ्गो न जायते। पुत्रं वा विनयोपेतं भगिनीं भ्रातरं तथा। एषामभाव एवान्यं ब्राह्मणं विनियोजयेत्'। आरब्ध-व्रतस्य असमाप्तौ मरणेऽपि तत्फलप्राप्तिमाह अङ्गिराः। 'यो यदर्थं चरेद्धर्मं न समाप्य मृतो भवेत्। स तत् पुण्यफलं प्रेत्य प्राप्नुयादित्यनुरब्रवीत्'। प्रेत्य परलोके पद्मपुराणं 'क्रोधात्मोहात् प्रमादाद्वा व्रतभङ्गो यदा भवेत्। उपवासत्रयं कुर्य्यात् कुर्य्यात् वा केशमुण्डनम्। वपनं नैव नारीणां नानुव्रज्या जपादि-

णम्।' न गोष्ठे शयनं तासां न च दद्याद्गवाजिनम्। सर्वान् केशान् समुद्धृत्य छेदयेदङ्गुलिद्वयम्। एवमेव तु नारीणां मुण्डमुण्डनमादिशेत्'। इति गोवधप्रकरणे विवेचितम्। 'प्रायश्चित्तमिदं कृत्वा पुनरेव व्रती भवेत्। पूर्वं गृहीत्वा सङ्कल्पं प्रमादान्नाचरेद् यदि। जीवन् भवति चण्डालो मृतः श्वा चाभिजायते'। इति प्रायश्चित्तविवेकधृतवचनम्। 'अथ सर्पभयं व्याधिःप्रमादो गुरुशासनम्। अव्रतघ्नानि कथ्यन्ते दैवतानि च शाश्वतः'। अथ कथाश्रवणमाह देवीपुराणम्। 'तद्ध्यानं तज्जपः स्नानं तत्कथाश्रवणादिकम्। उपवासकृतो ह्येते गुणाः प्रोक्ता मनीषिभिः'।

अथ व्रतप्रतिष्ठाविधिः। श्रीभगवानुवाच। 'गोपथा-रामसेतूनां मठसंक्रमवेश्मनाम्। नियमव्रतकृच्छ्राणां प्रतिष्ठां शृणु सत्तम। ब्राह्मेण विधिना वह्निं समाधाय विचक्षणः। शिलां पूर्णघटं कांस्यं सम्भारं स्थापयेद्बुधः। ब्रह्मन् सर्वं समासाद्य श्रपयेद् यवमयं चरुम्। क्षीरेण कपिलायास्तु तद्विष्णोरिति साधकः। प्रणवेनाभिघार्य्याथ दर्व्या संघट्टये-त्ततः। साधयित्वावघार्य्याथ तद्विष्णोरिति होमयेत्। व्याहृत्या चैव गायत्र्या तद्विप्रासेति होमयेत्। विश्वतश्चक्षुरित्युक्त्वाव-दाय होमयेत्तथा' ओं भूरग्नये स्वाहा, ओं प्रजापतये स्वाहा ओं अन्तरीक्षाय स्वाहा ओं द्यौः स्वाहा ओं ब्रह्मणे स्वाहा ओं पृथिव्यै स्वाहा ओं महाराजाय स्वाहा ओं सोमं राजानमिति जुहुयात्। ओं लोकपालेभ्यः स्वस्वमन्त्रैर्जुहुयाद्ग्रहेभ्यश्च। 'एवं हुत्वा चरोर्भागं दद्याद्दश दिशां बलिम्। ततः पलाश-समिधा हुनेदष्टोत्तरं शतम्। आज्यन्तु जुहुयात् पश्चात् एभिर्मन्त्रैर्द्विजोत्तमः। ततः पुरुषसूक्तस्य मन्त्रैराज्यन्तु होमयेत्। इरावतीति जुहुयात् तिलान् घृतपरिप्लुतान्।

हुत्वा ब्रह्मविष्णीशदेवानामनुयायिनम्। प्रजापतेराहुतिर्हुत्वा लोकेशानामथो पुन:। पर्वतानां नदीनाञ्च समुद्राणां तथैव च। हुत्वा व्याहृतिभिर्दद्यात् स्रुचा पूर्णाहुतित्रयम्। वौ षड़-न्तेन मन्त्रेण वैष्णवेन सुरोत्तम। पञ्चगव्यञ्च संप्राश्य दद्यादा-चार्य्यदक्षिणाम्। तिलपात्रं हेमयुक्तं सवत्सां गामलङ्कृताम्। प्रीयतां भगवान् विष्णुरित्युत्सृजेद् व्रतं बुध:। आरामं कारयेद् यस्तु नन्दनेषु चिरं वसेत्। मठप्रदानात् स्वर्लोकं प्राप्नोति पुरुष: सदा। सेतुप्रदानात् इन्द्रस्य लोकमाप्नोति मानव:। प्रपादानात्तु वारुणं लोकमाप्नोत्यसंशयम्। संक्र-माणाम्तु य: कर्त्ता दुर्गतिं तरते नर:। स्वर्गलोके च निवसेत् इष्टकारामकृत्तथा। गोमार्गस्य तथा कर्त्ता गोलोके क्रीड़ते चिरम्। नियमव्रतकृद्याति विष्णुलोकं नरोत्तम। क्लृप्त-कृत् स्वर्गमाप्नोति सर्वपापविवर्जित:। अनेन विधिना मर्त्त्य: सम्पूर्णं फलमाप्नुयात्। इयं प्रतिष्ठा सामान्या सर्वसाधा-रणानघम्। कर्त्तव्या देविकेन्द्रैस्तु प्रतिष्ठा यत्र विद्यते। इति संक्षेपत: प्रोक्त: समुदायविधिस्तव। सर्वेषामेव वर्णानां सर्वकामफलप्रद:। सर्वव्रतेषु कर्त्तव्या प्रतिष्ठा विधिना बुधै:। फलार्थिभिस्त्वप्रतिष्ठं यस्मान्निष्फलमुच्यते'। इति हयशीर्षे समुदायप्रतिष्ठापटल:। ब्राह्मेण वैदिकेन स्वगृह्यो-क्तेनेति यावत्। शिलेति उदूखलोपलक्षणम्। कांस्यम् अग्नि-प्रणयनार्थम्। कांस्ये अग्निप्रणयनमाह गृह्यसंग्रहे। 'शुभं पात्रन्तु कांस्यं स्यात्तेनाग्निं प्रणयेद् बुध:। तस्याभावे शरावेण नवेनाभिमुखञ्च तम्। सर्वत: पाणिपादान्त: सर्वतोऽक्षि शिरोमुख:। विश्वरूपो महानग्नि: प्रणीत: सर्वकर्मसु' एव-ञ्चाग्निप्रणयनानन्तरं सर्वत इत्यस्य पाठो युक्त:। प्रणीत इति मन्त्रलिङ्गात्। अन्यथा स्थापनानन्तरम् एतद्विधानं व्यर्थं

स्यात्। अत्र च पाकाङ्गत्वात् साहसनामानमग्निमाह गृह्यसंग्रहः। 'प्रायश्चित्ते विधुश्चैव पाकयज्ञे तु साहसः। पूर्णाहुत्यां मृडोनाम शान्तिके वरदस्तथा। आहूय चैव होतव्यं यत्र यो विहितोऽनलः'। प्रायश्चित्ते होमकर्मवैगुण्य-समाधानार्थं प्रायश्चित्तात्मकमहाव्याहृतिहोमादौ। तथा छन्दोगपरिशिष्टम्। 'यत्र व्याहृतिभिर्होमप्रायश्चित्तात्मको-भवेत्। चतस्रस्तत्र विज्ञेया स्त्रीपाणिग्रहणे तथा। अपि वा ज्ञातमित्येषां प्राजापत्यापि वा हुतिः। होतव्या त्रिविकल्पोऽयं प्रायश्चित्तविधिः स्मृतः'। अत्र त्रिविकल्प इत्यभिधानात् सामगानां भवदेवभट्टोक्तशाट्यायनहोमो निष्प्रामाणिकः। अत्रामुकाग्ने इहागच्छागच्छ इत्युद्दाय्यं यवाभावे व्रीह्यादि-रपि। 'हविष्येषु यवा मुख्यास्तदनुव्रीहयः स्मृताः। माषको-द्रवगौरादीन् सर्वाभावे विवर्जयेत्। यथोक्तवस्त्वसम्पत्तौ ग्राह्यं तदनुकारि यत्। यवानामिव गोधूमाव्रीहीणामिव शालयः'। इति छन्दोगपरिशिष्टात्। तत्र गोभिलेन अथ हविर्निर्वपति व्रीहीन् यवान् वा कांस्ये चरुस्थाल्यां वा अमुष्मै त्वाजुष्टं निर्वपामीति देवतानामोद्देशः। सकृद्यजुषां तुष्णीं द्विस्त्रिर्वा इत्यनेन निर्वापक्रमाभिधानात्। सामगेन तथात्रं कर्त्तव्यम्। अत्र च विषये त्वाजुष्टं निर्वपामीत्यनेन यजुषा चरुम् इत्यभिधानात् हवनीयनिर्वापमादिचरुनिष्पत्तिः कर्त्तव्या। तत्र छन्दोगपरिशिष्टम्। 'देवतासंख्यया गृह्य-निर्वापांश्च पृथक् पृथक्। तूष्णीं द्विरेव गृह्णीयाद्धोमश्चापि पृथक् पृथक्'। यवादिनिर्वापः अनुनिर्वापस्तन्त्रेणैव होमेऽपि पृथक् पृथगिति। आलस्यादिपुरुषदोषेण गृहीततण्डुलेनापि मन्त्रेणापि निर्वापादिकं समाचरन्ति याज्ञिकाः। 'घाते शूले तथाच्छिन्ने साखाच्ये माञ्जिके तथा। यज्ञे मन्त्राः

प्रयोक्तव्या मन्त्रा यज्ञार्थसाधकाः'। इत्युक्ते मान्त्रिके मन्त्र-साध्ये भवघातादौ तत्काले न्यूने मन्त्रं पाठाभावे मन्त्राः प्रयोक्तव्याः। कपिलाया अभावे अन्यधेनोरपि घृतेन सप्रणव-तद्विष्णोरित्यनेन घृतेनाभिघार्य्य दर्व्या दक्षिणावर्त्तेन संमिश्र-येत्। दर्वी च प्रादेशप्रमाणा द्व्यङ्गुलविस्तारा ग्राह्या। इध्मजातीयमिध्मार्द्धप्रमाणं मेक्षणं भवेत्। 'वृत्तं चाङ्गुष्ठ-पृथ्वग्रमवदानक्रियाक्षमम्। एषैव दर्वी यस्तत्र विशेषस्तमहं ब्रुवे। दर्वी द्व्यङ्गुलपृथ्वग्रातुरीयोनञ्च मेक्षणम्'। इति छन्दोगपरिशिष्टात्। इध्मार्द्धप्रमाणं प्रादेशद्वयमिध्मस्य प्रमाणं परिकीर्त्तितम्'। इति छन्दोगपरिशिष्टोक्तेः। अग्नेत्यनेन स्वगृह्योक्तशेषकर्मसमापनानन्तरं प्रकृतहोमः। अत्र बहु-देवताकचरुहोमादुपघातहोमः। 'चरौ तु बहुदैवत्यो होमः स्यादुपघातवत्'। इति छन्दोगपरिशिष्टधृतवचनात्। उप-घातलक्षणमाह गृह्यसंग्रहः। 'पाणिना मेक्षणेनाथ स्रुवेणैव तु यद्धविः। हूयते चानुपस्तीर्य्य उपघातः स उच्यते। यद्युप-घातं जुहुयाच्चरावाज्यं समावपेत्। मेक्षणेन तु होतव्यं नाज्यभागो न स्विष्टिकृत्'। अनुपस्तीर्य्येत्यनेन स्रुचि यच्चतुरा-वर्त्तः पञ्चावत्तं घृतोपस्तरणादिकं तदत्र नास्ति तेन मेक्षणा-दिना सकृद् गृहीत्वा, होतव्यं प्रकृतहोमात् प्राक् वह्निपूजन-माह मार्कण्डेयपुराणम्। 'पूजयेच्च ततो वह्निं दद्याच्चाप्या-हुतीः क्रमात्'। तत इति वह्नेर्नामकरणध्यानानन्तरम्। होमानुष्ठाने स्मृतिः। 'मन्त्रेणोङ्कारपूतेन स्वाहान्तेन विच-क्षणः। स्वाहावसाने जुहुयाद्ध्यायन् वै मन्त्रदेवताम्'। ततस्त-द्विष्णोरित्यनेन चरुणा होमयेत्। एवं व्याहृत्या प्रत्येकं भूरित्यादिना गायत्र्यादिना सावित्र्या तद्विप्रासेति तद्विप्रासो विपन्यवोजागृवांस इत्यादिना विष्णत इति। विष्णतश्चुरत

विश्वतोमुख इत्यादिना वेदाद्यैः अग्निमीले इत्यादिना इषेत्वोर्ज्जेत्वा इत्यादिना अग्न आयाहीत्यादिना शन्नोदेवीत्यादिना भूरग्नये इत्याद्यष्टभिः ततः सोमं राजानमित्यादिना ततो लोकपालेभ्य इत्यादिना स्वस्वमन्त्रैस्तत्तद्वेदोक्तदशदिक्पालमन्त्रैः। तत्र सामगानाम् इन्द्रस्य त्रातारमित्यादिना अग्नेश्च अग्निं दूतं वृणीमहे इत्यादिना यमस्य नाके सुपर्णमित्यादिना निर्ऋतेर्विषाहिनिर्ऋतीनामित्यादिना ईशानस्य अभित्वाशूरणोनुम इत्यादिना ब्रह्मणो ब्रह्मयज्ञानां प्रथममित्यादिना। अनन्तस्य चर्षणीधृतमित्यादिना। तथाच गोभिलीयकर्मप्रदीपे। 'त्रातारमिन्द्रमवितारमिन्द्रमिन्द्रस्य परिकीर्त्तितः। अग्निं दूतं वृणीमहे वह्निमन्त्रो यमस्य वै। नाके सुपर्णमित्यादिविषाहि निर्ऋतेस्तथा। घृतवतीति वरुणस्य वातु आवातु भेषजं वायोर्मन्त्रः समुद्दिष्टः सोमं राजानमित्यृचा सोमस्य मन्त्रः कथितस्त्वभित्वेतीश उच्यते'। ईशे ईशानस्य 'ब्रह्मयज्ञानां प्रथमं ब्रह्मणः परिकीर्त्तितः'। चर्षणीधृतमिति। च सर्पस्य समुदाहृतमिति ग्रहेभ्य नवग्रहेभ्यः। स्वमन्त्रैः सर्ववेदसाधारणैः। सूर्य्यस्याकृष्णेनेत्यादिना। सोमस्याप्यायेत्यादिना। मङ्गलस्याग्निर्मूर्द्धा इत्यादिना। बुधस्याग्ने विवस्वेत्यादिना। वृहस्पतेः वृहस्पते अतियदर्येत्यादिना। शुक्रस्य शुक्रन्तेऽन्य इत्यादिना। शनैश्चरस्य शन्नोदेवीरित्यादिना। राहोः कयानश्चित्रेत्यादिना। केतोः केतुं कृण्वन्नित्यादिना। तथाच मत्स्यपुराणम्। 'आकृष्णेनेति सूर्य्याय होमः कार्य्यो विजानता। आप्यायस्वेति सोमाय मन्त्रेति जुहुयात् पुनः। अग्निर्मूर्द्धादिवो मन्त्रमिति भौमाय कीर्त्तयेत्। अग्ने विवस्वदुषस इति सोमसुताय च। वृहस्पते अतियदर्येति गुरोर्मतः। शुक्रन्तेऽन्यदिति शुक्रस्यापि

निगद्यते शनैश्चरायेति पुनः शन्नोदेवीति होमयेत्। कयान-श्चित्र आभुवदूतीराहोरुदाहृतः। केतुं कृण्वन्निति कुर्य्यात् केतू-नामुपशान्तये'। एवं चरुहोमं समाप्य चरुशेषेण प्राच्यादि-दिग्भ्यः पायसबलिं दद्यात्। तद्‌यथा। एष पायसबलिः ओम् प्राच्यै दिशे नम इत्यादिना दक्षिणायै दिशे स्वाहा इति श्रुति-दर्शनात् इति हरिहरकृत्यप्रदीपाभ्यां दशदिग्भ्यो बलिं दद्यात्। वस्तुतस्तु बलिप्रकरण एव प्राच्यूर्द्ध्वावाचीभ्योऽहरहर्नित्यं प्रयोग इति गोभिलसूत्रे स्त्रीलिङ्गनिर्द्देशात् दिशां देवतात्वं बलौ प्रतीयते। अत्र तु अवाचीतिपाठात् श्रुत्युक्तहोमीयदक्षिणायै इत्यनादृत्य ओम् प्राच्यै दिशे नम इति बलौ प्रयुज्यते। एभि-र्मन्त्रैस्तद्विष्णोः परमं पदम् इत्यादि त्र्यवमन्त्रैः आद्यन्विति-शब्देन समिद्धोमस्तेषां व्यावर्त्तनात् मन्त्राकाङ्क्षायां प्राथमिक-त्वेन तद्विष्णोरित्यस्य परिग्रहः। ततस्तद्विष्णोरिति मन्त्रेण स्वाहान्तेन घृताक्तपलाशसमिद्भिरष्टोत्तरशतं जुहुयात्। पूर्वोक्त-मन्त्रैः पूर्वोक्तदेवताभ्यः स्रुवेणाहुतीर्जुहुयात् पुरुषसूक्तमन्त्र-हेटोक्तस्य तत्र सामगानाम्। ओम् इदं विष्णोरिति प्रेत्यकस्य विष्णोरिति प्रकाश्यमुपलेव इति सहस्रशीर्षेति त्रिपादूर्द्ध्व इति पुरुष एवेदमिति एतावानस्य इति ततो विराड़िति कयान इत्यादि पुरुषसूक्तम्। तथाच सामधेनी श्रुतिः। 'इदं विष्णुः प्रेत्यकस्य विष्णुप्रकाश्यमुपलेव ब्रुवानः' इति 'वाराहमन्त्यं पुरुषव्रते चैषा वैष्णवी नाम संज्ञितेमां प्रयुञ्जन् विष्णुः प्रीणाति' इति प्रकाश्यमुपलेव ब्रुवान इति वाराहमन्त्यमित्य-नेन एको मन्त्रः प्रकाशितः पुरुष इत्यनेन पुरुषपदंयुक्तपञ्च-मन्त्राः। व्रते इत्यनेन कयानश्चित्र इत्येको मन्त्रः सामगो जुहुयात्। यजुर्वेदी तु तत्र प्रसिद्धाभिः सहस्रशीर्षेत्यादि ऋग्भिः षोड़शाहुतीर्जुहुयात् इरावतीति घृताक्तान् सक्तून्

यात्। एवं ब्रह्मानुयायिभ्यः स्वाहा विष्णनुयायिभ्यः स्वाहा ईशानानुयायिभ्यः स्वाहा एवं पूर्वोक्तनवग्रहमन्त्रैर्दिक्पाल-मन्त्रैर्जुहुयात्। एवं पर्वतेभ्यः स्वाहा नदीभ्यः स्वाहा नदेभ्यः समुद्रेभ्यः स्वाहा भूःस्वाहा भुवः स्वाहा इति जुहुयात्। ततः पश्चिमाघारादिकं स्वयाखोक्तपूर्णहोमः। ततः पञ्चगव्यं चरुशेषं प्राश्य स्नात्वा वा ईमयुक्तं सपत्नं तिलपात्रम् अलङ्कृतां गाञ्च दक्षिणामाचार्य्याय दद्यात् आचार्य्यश्च 'उदाहरति वेदार्थान् षड्विधाः स्मृतीरपि। श्रुतिस्मृतिसमापन्नमाचार्य्यं तं विदु-र्बुधाः'। इति छन्दोगपरिशिष्टात् कर्म्मोपदेष्टुराचार्य्यत्वेन आचार्य्यपदं स्वयं होतृपक्षे ब्रह्मपरञ्च अन्यहोतृपक्षे ब्रह्महोतृ-द्वयपरम्। स्वयं ब्रह्महोतृकर्म्मकरणपक्षे पुस्तकधारणपरम्। 'ब्रह्मणे दक्षिणे देया यत्र या परिकीर्त्तिता। कर्म्मान्तेऽनुच्य-मानायां पूर्णपात्रादिका भवेत्। विदध्याद्धोत्रमन्यश्चेद्दक्षि-णार्द्धहरो भवेत्। स्वयञ्चेदुभयं कुर्य्यादन्यस्मै प्रतिपादयेत्'। इति छन्दोगपरिशिष्टैकवाक्यत्वात्। एवं ब्रह्म विधिना अग्नि-स्थापनादिप्रीयतां भगवान् विष्णुरित्यन्त कर्म्मसंस्कृतगो-पथादिदाननियमव्रतकृच्छ्रादिकरणान्यतररूपा समुदाय-प्रतिष्ठा कर्त्तव्या समुदायस्य प्रकृतगोपथादेः प्रतिष्ठासमुदायः। तथाच कापिलपञ्चरात्रं 'प्रतिष्ठाशब्दसंसिद्धिः प्रतिपूर्वा च तिष्ठते। बहर्थता निपातानां संस्कारादौ प्रति स्थितिः'। तथाच गोपथादेरुक्तकर्म्मसंस्कृतस्य फलजनकत्वम्। अप्रतिष्ठन्तु निष्फलमित्युक्तेः। एतद् व्रतकर्म्मणा प्रीयतां भगवान् विष्णु-रिति समापयेत्।

अथ व्रतप्रतिष्ठाप्रयोगः। तत्र कृतनित्यक्रियः कथान्तं व्रतं समाप्य तत्तद्देवताप्रीतिकामो यथाशक्ति दानादि कृत्वा ओम् तत्सदित्युच्चार्य्य ओम् अद्येत्यादि अमुकगोत्रोऽमुकदेव-

शर्म्मा तत्तद्व्रतफलकामः एतैतत् अमुकव्रतप्रतिष्ठामहं करिष्ये । स्त्री चेद्व्रतकारिणी तदा अमुकगोत्रामुकीदेवीत्याद्युह्यम् इति सङ्कल्पं कुर्य्यात् ततो घटं संस्थाप्य पञ्च देवान् संपूज्य गौर्य्यादिषोड़शमातृकाः संपूज्य पुरुषश्चेत्तदा नान्दीश्राद्धं कुर्य्यात् । तत उत्तराभिमुखं ब्राह्मणमुपवेश्य तत्समीपे आसनमानीय प्राङ्मुखो यजमानः । ओम् साधु भवानास्ताम् इति कृताञ्जलिर्वदेत् ओम् साध्वहमासे इति वचनम् ओम् अर्च्चयिष्यामो भवन्तम् इति पुनरुक्ते ओम् अर्च्चयेति प्रतिवचनम् । ततो वस्त्रालङ्कारगन्धपुष्पादिभिरभ्यर्च्च्य दक्षिणं जानु स्पृष्ट्वा ओम् अद्येत्यादि अमुकगोत्रममुकदेवशर्म्माणमर्च्चितं एतैतदमुकव्रतप्रतिष्ठाकर्म्मणि होमादिकर्म्मकरणाय भवन्तमहं वृणे ओम् वृतोऽस्मीति प्रतिवचनम् ओम् यथाविहितं कर्म्म कुरु ओम् यथाज्ञानं करवाणीति प्रतिवचनम् । ततो वेदीं पञ्चगव्येनाभ्युक्ष्य पूर्व्वं पञ्चघटान् घटमेकं वा संस्थाप्य प्रथमलिखितक्रमेण भूतशुद्ध्यादिगणेशादिपूजां विधाय तत्तद्देवतां क्रमेण पूजयेत् । ततो होता स्वगृह्योक्तविधिना अग्निं संस्थाप्य ब्रह्मस्थापनानन्तरं चरुश्रपणं कुर्य्यात् । अन्यत् सर्व्वं प्रतिष्ठापद्धतौ ज्ञेयम् ।

अथ व्रतप्रयोगः । स्वस्तिवाचनं कृत्वा सूर्य्यः सोम इति पठित्वा सङ्कल्पं कुर्य्यात् । अद्येत्यादि अमुककामोऽमुकव्रतमहं करिष्ये । व्रताहुतौ आहुतिसंख्यामुल्लिखेत् अथारभ्येति च । उदङ्मुखो भूत्वा एतत् कुर्य्यात् । ओम् यूं सः क्षित्यै नमः स्थण्डिलं मार्ज्जयेत् । ओम् सः इत्यभ्युक्षयेत् । वामहस्तेन स्थण्डिलं गृहीत्वा कुशेन प्रणवपूर्व्वकं चतुर्थ्यन्तव्रतदेवतानाम लिखेत् हस्तप्रमाणं स्थण्डिलं चतुरस्रं सिततण्डुलेनापूर्य्य मध्ये वितस्त्यूर्द्ध्वं कर्णिकां हरिद्राचूर्णेन लवङ्ग-

र्वितस्तिप्रमाणाम्यन्योन्यासक्तानि अष्टदलानि सिततण्डुलचूर्णेन पत्रमूले केशराणि कुसुम्भचूर्णेन पत्रसन्धौ विल्वादिपत्रचूर्णेन पीठगात्राणि दग्धपुलाकजेन कृत्वा घटं संस्थाप्य सामान्यार्घ्यं कृत्वा तदुदकेनात्मानं पूजोपकरणञ्चाभ्युक्ष्य गणेशादीन् नवग्रहांश्चैव पूजयेत्। ततो व्रतदेवतां पूजयेत्।

इति श्रीहरिहरभट्टाचार्य्यात्मज श्रीरघुनन्दनभट्टाचार्य्यकृत व्रततत्त्वं समाप्तम्।

---

# दायतत्त्वम्।

---

प्रणम्य सच्चिदानन्दं वासुदेवं जगत्पतिम्। दायभागस्मृतेस्तत्त्वं वक्ति श्रीरघुनन्दनः। निरूप्यन्तेऽत्र संक्षेपाद्दायभागविनिर्णयः। पितृकृतविभागश्च भ्रातृभागक्रियास्तथा। स्त्र्यनधिकारिणो भागेष्वविभाज्यविभाज्यता। विभक्तसंशयच्छेदो विभागो निह्नुतस्य च। स्त्रीधनं तद्विभागार्होऽपुत्त्रधनाधिकारिणः।

अथ दायभागः। तत्र नारदः। 'विभागोऽर्थस्य पित्र्यस्य पुत्त्रैर्यत्र प्रकल्प्यते। दायभाग इति प्रोक्तं तद्विवादपदं बुधैः'। अर्थो धनम्। पित्र्यः पितृसम्बन्धागतः। यत्र विवादपदे। दीयते इति व्युत्पत्त्या दायशब्दः। तत्र ददातिप्रयोगो गौणः। मृतप्रव्रजितादिस्वत्वनिवृत्तिपूर्वकपरस्वत्वोत्पत्तिफलसाम्यात्। न तु मृतादीनां स्वत्वध्वंसफलको न ममेदमिति संकल्पात्मकस्त्यागस्तत्रास्ति। एवं तद्वने दायपदप्रयोगात् पूर्वस्वामिनः स्वत्वापगमोऽवसीयते। तत्रान्येषाञ्च पूर्वस्वामिसम्बन्धाधीनं

स्वत्वं जायते। 'तत्स्वकुजेषु तत्स्वामी ह्यर्थी भवति'। इति बौधायनवचनात्। पितृस्वत्वोपरमे पुत्रेषु विद्यमानेषु पुत्रगतं तत्स्वत्वास्पदं धनं भवतीत्यर्थः। यत्तु मिताक्षरायाम् 'उत्पत्त्यैवार्थं स्वामित्वाल्लभेत इत्याचार्य्याः' इति गौतमवचनं तदपि पितृस्वत्वोपरमेऽङ्गजत्वहेतुत्वेनोत्पत्तिमात्रसम्बन्धेनान्यसम्बन्धाधिकेन जनकधने पुत्राणां स्वामित्वात्तद्धनं पुत्रो लभेत नान्यसम्बन्धीत्याचार्य्या मन्यन्ते। नच पितृस्वत्वे विद्यमानेऽपि जन्मना तद्धने पुत्रस्वत्वमिति वाच्यम्। देवलवचनविरोधात्। तद्यथा। 'पितर्य्युपरते पुत्राः विभजेयुर्धनं पितुः। अस्वाम्यं हि भवेदेषां निर्द्दोषे पितरि स्थिते'। निर्द्दोषेऽपतिते। अतएव विभागं प्रक्रम्य नारदः। 'विनष्टे वाप्यशरणे पितर्य्युपरतस्पृहे'। विनष्टे पतिते। अशरणे गृहस्थाश्रमरहिते। तेन मरणपातित्यगार्हस्थ्येतराश्रमगमनः स्वत्वध्वंसे उपरतस्पृहे सत्यपि स्वत्वे स्वगतधनेच्छारहिते च पुत्राणां विभागाधिकारः। अत्र पतितानामपि स्वधन साध्यप्रायश्चित्तश्रुतेः पातित्येन स्वत्वनाशः प्रायश्चित्तवैमुख्ये बोध्यः स्वत्वसमान-कालीनेच्छाप्रागभावासमानकालीनेच्छाध्वंसत्वमुपरतस्पृहत्वम्। अतोपेक्षया स्वत्वे नाशिते पुनरिच्छया न स्वत्वमिति बोध्यम्। तस्मात् देवलवचने पितरि विद्यमाने तद्धने पुत्राणामस्वाम्यश्रुतेः 'उत्पत्त्यैवार्थं स्वामित्वाल्लभेत इत्याचार्य्याः' इति गौतमवचनम्। पितृस्वत्वोपरमानन्तरमेव जन्मना पुत्रस्वत्वसम्पादनात् स्वामित्वेन तद्धने पुत्रो लभेतेत्येतत्परम्। न तु पितृस्वत्वकाले जन्मानन्तरम्। नारदप्रथमवचने पितृपुत्रेति सम्बन्धिमात्रोपलक्षणम्। दायभागमुपक्रम्य 'पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा। तत्सुतो गोत्रजो बन्धुः शिष्यः सब्रह्मचारिणः। एषामभावे पूर्वस्य

धनभागुत्तरोत्तरः। स्वर्यातस्य ह्यपुत्रस्य सर्ववर्णेष्वयं विधिः'।
इति याज्ञवल्क्योक्तेः। उत्तरोत्तर इति वीप्साश्रुतेः पूर्वस्येत्य-
त्रापि तथा तेन यत्र द्रव्ये यत् स्वामिनः पुत्रत्वादिसम्बन्धा-
धीनं तत्स्वत्वोपरमे तत्सम्बन्धिनः स्वत्वं तत्र तं प्रति निरूढो
दायशब्दः। पुत्रत्वादिसम्बन्धाधीनं न तु क्रयाद्यधीनं स्वत्वो
परमे न तु पतिस्वत्वसमकालीनपत्नीस्वत्वयुक्तेः। तत्र विभा-
गस्तु सम्बन्ध्यन्तरसद्भावेन भूहिरण्यादावुत्पन्नस्य एकदेशगत-
स्वत्वस्य विनिगमनाभावात् विशेषव्यवहारानर्हस्य गुटिका-
पातादिना अमुकस्येदमिति विशेषेण भजनं स्वत्वज्ञापनमिति
वदन्ति तन्न समीचीनम्। यत्र भूम्यं स्वत्वं तत्रैव गुटिकापात
इति कथं वचनाभावान्निषेतव्यः। यत्र वा पितुर्निधनानन्तरं
तदीयाश्वयोरेकतरमादाय भ्रात्रा यदर्जितं तत्रार्जकस्य
द्व्यंशावपरस्यैकः सर्वसम्मतः तत्र यदि प्राचीनधनविभागे
गुटिकापातादर्जकेन स एवाश्वः पश्चाल्लब्धः तदा प्रादेशिक-
स्वत्ववादिमते प्रागर्जकस्यैव सोऽश्व इति तेनार्जितधने कथं
भ्रात्रन्तरस्य भागः। यदि चार्जकेतरेण सोऽश्वो लब्धः तदा
तेनार्जितधनस्य समभागो युक्तः। एकस्य स्वायासेन अप-
रस्य अस्वायासेनार्जितत्वात्। वस्तुतस्तु पूर्वस्वामिस्वत्वोपरमे
सम्बन्धाविशेषात् सम्बन्धिनां सर्वधनप्रसूतस्वत्वस्य गुटिका-
पातादिना प्रादेशिकस्वत्वव्यवस्थापनं विभागः। एवं कृत्स्न-
धनगतस्वत्वोत्पादविनाशावपि कल्प्येते संसृष्टतायां प्रादेशिक-
स्वत्वनाशकृत्स्नधनगतस्वत्वोत्पादाविव। एतच्च 'विभक्तो यः
पुनः पित्रा भ्रात्रा चैकत्र संस्थितः। पितृव्येणाथवा प्रीत्या
स त संसृष्ट उच्यते'। इति बृहस्पतिवचने येषामेव हि पितृ-
भ्रातृपितृव्यादीनां पितृपितामहोपार्जितद्रव्येण अविभक्तत्व-
मुत्पत्तितः सम्भवति त एव विभक्ताः सन्तः परस्परप्रीत्या पूर्व-

कृतविभागध्वंसेन यत्तव धनं तन्मम धनं तत्तवापि इत्येकस्मिन् कार्य्ये एकवाक्यरूपतया स्थिताः संसृष्टाः। न तु अनेवंरूपाणां धनसंसर्गमात्रेण सम्भूयकारिणां वणिजामपि संसर्गित्वं नापि विभक्तानां धनसंसर्गमात्रेण प्रीतिपूर्वकाभिसन्धानं विना इत्यभिदधता दायभागकृतापि स्वहस्तितम्। साधारणस्वत्वादेव हि। 'बन्धूनामविभक्तानां भोगं नैव प्रदापयेत्'। इति कात्यायनवचनं यथाश्रुतं सङ्गच्छते द्रव्यमात्रे स्वत्वस्यापि सम्भवात् अतएव अत्र चौर्य्यं न भवतीति वक्ष्यते। एवञ्च 'साक्षित्वं प्रातिभाव्यञ्च दानग्रहणमेव च। विभक्ता भ्रातरः कुर्य्युर्नाविभक्ताः परस्परम्'। इति नारदवचनेन अविभक्तपरस्परदानादिनिषेधोऽपि न्यायादेव संगच्छते। दानात् पूर्वमपि तद्धने प्रतिग्रहीतृस्वत्वसम्भवात् दानग्रहणयोरसम्भवः। एवं साक्षित्वप्रातिभाव्ययोर्ज्ञेयम्। स्वत्वाविशेषादेवाविभक्तद्रव्येण यत् कृतं तत्र दृष्टादृष्टे कर्मणि सर्वेषां फलभागित्वम्। तथाच नारदः। 'भ्रातॄणामविभक्तानामेको धर्मः प्रवर्त्तते। विभागे सति धर्मोऽपि भवेत्तेषां पृथक् पृथक्'। व्यासः। 'स्थावरस्य समस्तस्य गोत्रसाधारणस्य च। नैकः कुर्य्यात् क्रयं दानं परस्परमतं विना'। अत्र समस्तस्येतिविशेषेण कृत्स्नधनविषयकमेव प्रत्येकस्वत्वं प्रतीयते। तस्मात्तुल्यसम्बन्ध्यन्तरस्वत्वे सम्बन्धिसकाशात् संक्रान्तधनं तस्यापि ममापीति सम्बन्धिना प्रतीयते। तदिच्छातो स्वार्थं दानादिकं प्रतिषिद्धम्। अतो न स्वैकदेशगतस्वत्वमिति सिद्धम्। भागं विशेषयति बृहस्पतिः। 'पितृरिक्थहराः पुत्राः सर्व एव समांशतः। विद्याधर्मयुतस्तेषामधिकं लब्धुमर्हति। विद्याविज्ञानशौर्य्यार्थज्ञानदानक्रियेषु च। यस्येह प्रथिता कीर्त्तिः पितरस्तेन पुत्रिणः'। कालभेदेनापि विभागमाह बृहस्पतिः। 'एकां स्त्री

कारयेत् कर्म यथांशेन गृहे गृहे'। अत्र एकस्यापि एकस्यां
भूमौ सामर्थ्यविज्ञानाभावात्त्वविनाशकल्पनं स्फुटमिति। सर्वेषां
सामर्थ्यविज्ञानाभावात्त्वसङ्कोचो वा। देशादिभेदेनापि विभाग-
माह कल्पतरुरत्नाकरयोः कात्यायनः। 'देशस्य जातेः सङ्घस्य
धर्मो ग्रामस्य यो भृगुः। उदितः स्यात् स तेनैव दायभागं
प्रकल्पयेत्'। भृगुराहेति शेषः।

अथ पितृकृतविभागः। हारीतः। 'जीवन्नेव वा प्रवि-
भज्य वनमाश्रयेत् वृद्धाश्रमं वा गच्छेत् स्वल्पेन वा संविभज्य
भूयिष्ठमादाय वसेत् यद्युपदिशेत् पुनस्तेभ्यो गृह्णीयात्'
इति। वृद्धाश्रमः प्रव्रज्या। अनेन स्वल्पस्य विभागो भूयिष्ठ-
द्रव्यग्रहणञ्च पितुरभिहितम्। विष्णुः। 'पिता चेत् पुत्रान्
विभजेत् तस्य स्वेच्छा स्वयमुपात्तेऽर्थे पैतामहे तु पितापुत्रयो-
स्तुल्यं स्वामित्वम्' इति। स्वार्जितेऽपि स्वेच्छया न्यूनाधिक-
विभागो भक्तत्वबहुपोष्यत्वाक्षमत्वादिसत्वासत्वकारणात् यथा
कात्यायनः। 'जीवद्विभागे तु पिता नैकं पुत्रं विशेषयेत्।
निर्भाजयेन्न चैवैकमकस्मात् कारणं विना'। उक्तकारण-
शून्ये तु नारदः। 'व्याधितः कुपितश्चैव विषयासक्तचेतनः।
अयथा शास्त्रकारी च न विभागे पिता प्रभुः'। विषयासक्तत्वं
प्रियभार्यापुत्रत्वादिना यत्र तु भ्रातर एव विभागमर्थयन्ते तत्र
विषमभागाभावमाह मनुः। 'भ्रातॄणामविभक्तानां यद्युत्थानं
भवेत् सह। न तत्र भागं विषमं पिता दद्यात् कथञ्चन'।
पितामहमर्थ्यैश्च तं पित्रोद्धृतं तदकामतो न विभजनीयम्।
यथा मनुविष्णू। 'पैतृकन्तु पिता द्रव्यमनवाप्तं यदाप्नुयात्।
न तत् पुत्रैर्भजेत् सार्द्धमकामः स्वयमर्जितम्'। तत् स्वय-
मर्जितमिति कृत्वा न विभजेदित्यन्वयः। अन्योद्धारे तु
प्रमाणाभावचनाद्व्यवस्था सामान्यविशेषन्यायात्। एतत्तु

स्थावरविषयम्। मन्वादावनुहृते तु पितुरेव स्वाच्छन्द्यम्। यथा याज्ञवल्क्यः। 'मणिमुक्ताप्रवालानां सर्वस्यैव पिता प्रभुः। स्थावरस्य तु सर्वस्य न पिता न पितामहः'। पितामहकृतेस्तावनविषयमिदम्। एवञ्च 'पूर्वनष्टाञ्च यो भूमिमेकश्चेदुद्धरेत्क्रमात्। यथाभागं भजन्त्यन्ये दत्त्वांशन्तु तुरीयकम्' इति शङ्खवचनं भ्रात्राद्युद्धृतविषयम्। अत्र स्वयं तुरीयांशं गृहीत्वा भ्रात्रादिभिः सहोद्धर्त्ता गृह्णीयात् अन्यथा विषमसृष्टं स्यात्। पितुर्भागकरणे तु अपुत्रपत्नीः पुत्रतुल्यांशदानमाह व्यासः। 'अपुत्राश्च पितुः पत्न्यः समानांशाः प्रकीर्त्तिताः। पितामह्यश्च सर्वास्ता मातृतुल्याः प्रकीर्त्तिताः'। एतच्च अदत्ते स्त्रीधने। यथा याज्ञवल्क्यः। 'यदि कुर्य्यात् समानंशान् पत्न्यः कार्य्याः समांशिकाः। न दत्तं स्त्रीधनं यासां भर्त्रा वा श्वशुरेण वा'। एतद्वचनैकवाक्यतया व्यासवचने पितु पत्न्य इति नान्वयः। न च वैपरीत्यं स्पष्टस्य तु विधेर्नान्यैरुपसंहार इष्यते इति न्यायात्। तेन पुत्रकृतविभागे विमातुर्नांशिता स्त्रीधने दत्ते तु अर्द्धं पुत्रांशस्य पत्न्या देयम्। 'अधिविन्नस्त्रियै देयमाधिवेदनिकं समम्। न दत्तं स्त्रीधनं यस्यै दत्ते त्वर्द्धं प्रकीर्त्तितम्' इति विवाहे याज्ञवल्क्यदर्शनेन 'बहूनामेकधर्म्माणामेकस्यापि यदुच्यते। सर्वेषामेव तत् कुर्य्यादेकरूपा हि ते स्मृताः'। इति बौधायनोक्तेन तथा प्रतीतेः पितामहधनस्य पौत्रैर्विभागे पितामह्यै मातृवद्भागो देय इति 'पैतामहे तु पितापुत्रयोस्तुल्यं स्वामित्वम्' इति विष्णूक्तम्। भूर्या पितामहोपात्ता निबन्धो द्रव्यमेव वा। तत्र स्यात् सदृशं स्वाम्यं पितुः पुत्रस्य चोभयोः'। इति याज्ञवल्क्योक्तञ्च। निबन्ध आकरादौ राजादिदत्तं नियतलभ्यमिति कल्पतरुकृता द्रष्टव्यम्। द्रव्यं द्विपदरूपं भूसाहचर्य्यात्।

तथाच 'स्थावरं द्विपदञ्चैव यद्यपि स्वयमर्जितम्। असम्भूय सुतान् सर्वान् दानं न च विक्रयः'। इत्येतेषु निबन्धभूमि-द्विपदेषु पितामहोपात्तेषु पितुर्यथा पार्वणपिण्डदातृत्वेन तत्पितृधने स्वत्वं तथा तन्मरणादिना तत्स्वत्वोपरमे तत्-पुत्राणां पितृयोग्यांशे सत्यपि पितृस्येऽंशिता। अतएव व्यक्त-माह रत्नाकरधृतकात्यायनः। 'अविभक्ते मृते पुत्रे तत्सुतं रिक्थभागिनम्। कुर्वीत जीवनं येन लब्धं नैव पितामहात्। लभेतांशं सपित्र्यन्तु पितृव्यात्तस्य वा सुतात्'। सति तु पितरि पार्वणानधिकारात् पुत्राणां नांशिता। एवं धनिनः पौत्रस्वत्वोपरमे तदंशमात्रे प्रपौत्राणामंशिता। सति पौत्रे तु नांशिता इति यैश्च पुत्रेभ्यः स्वधनविभागदाने स्वाच्छन्द्यात् यथा न्यूनाधिकदानं तथात्र नास्तीत्येतत्परं न तु पितापुत्रयो-स्तुल्यांशित्वम्। 'द्वावंशौ प्रतिपद्येत विभजन्नात्मनः पिता। समांशहारिणी माता पुत्राणां स्यान्मृते पतौ'। इति नारद-वचने पितुर्द्व्यंशित्वात्। न चैतत् स्वार्जितपितृद्रव्यपरम्। 'तस्य स्वेच्छा स्वयमुपात्तेऽर्थे' इति विष्णूक्तस्वेच्छाया उदार-रूपाया द्व्यंशनिर्णयानर्हत्वात् भूयिष्ठमादाय वसेदित्यनेन विरोधात् किन्तु नारदवचनं द्वावंशाविति पितामहादिधन-परम्। 'पितुः प्रसादाद्भुज्यन्ते वस्त्राण्याभरणानि च। स्थावरन्तु न भुज्येत प्रसादे सति पैतृके'। इति मिताक्षरा-धृतवचनमपि पितामहधनपरम्। पित्रा च स्वोपार्जितं स्थावरं दत्तं भुज्येत एवेति अन्यथा मूलभूतश्रुत्यन्तरकल्पना-पत्तेः निवृत्तरजस्कायामेव मातरि पितामहधनविभागमाह वृहस्पतिः। 'पित्रोरभावे भ्रातॄणां विभागः सम्प्रदर्शितः। मातुर्निवृत्ते रजसि जीवतोरपि शस्यते'। अत्र मातृपदं विमातृपरमपि पुत्रान्तरोत्पत्तिसम्भावनातौल्यात्। मातु-

निवृत्ते रजसीति श्रुतेरेतद्वचनं पितामहधनपरं न तु पितृधन-
परं तत्र विभक्तजस्य भागदर्शनात्। यथाह बृहस्पतिः।
'पित्रा सह विभक्ता ये सापत्ना वा सहोदराः। जघन्यजाश्च
ये तेषां पितृभागहरास्तु ते। अनीशः पूर्वजः पित्रे भ्रातृ-
भागे विभक्तजः'। विभक्तजो विभागानन्तरं गर्भाधानेन
जातः। 'यथा धने तथर्णेऽपि दानाधानक्रयेषु च। पर-
स्परमनीशास्ते मुक्ताशौचोदकक्रियाः'। याज्ञवल्क्यः।
'विभागञ्चेत् पिता कुर्य्यादिच्छया विभजेत् सुतान्। ज्येष्ठं
वा श्रेष्ठभागेन सर्वे वा स्युः समांशिनः'। अत्रेच्छयेति
स्वोपात्तविषयं श्रेष्ठभागेन विंशोद्धारयुक्तभागेन श्रेष्ठसमभागौ
पैतामहधनविषयौ प्रागुक्तवचनसामञ्जस्यात्। एवं 'चोर्द्ध
पितुः पुत्रा रिक्थं विभजेयुर्निवृत्ते रजसि मातुर्जीवति
चेच्छति' इति गौतमवचनस्य मातृरजसो निवृत्त्युक्तेः पैता-
महधनगोचरत्वं तत्रोर्द्ध पितुरिति पितुर्मरणप्रतीतेर्जीवति
चेच्छतीत्यत्रापि पितुरेवेच्छा प्रतीयते। तेन पितामहधने
पितुरिच्छया विभागो न पुत्रस्येति सिद्धम्। एवञ्च 'अस्वाम्यं
हि भवेदेषां निर्दोषे पितरि स्थिते'। इति देवलवचनं पितु-
रनुमत्या विभागविषयकमिति बौधायनवचनस्य पितृधनवत्
पैतामहधनपरमप्यविशेषात्। यदि तु निवृत्तरजस्कायां मात-
र्य्यपि दैवात् पितामहधनं विभक्तम्। तत्र विष्णुः। 'पितृ-
विभक्ताविभागानन्तरोत्पन्नस्य विभागं दद्युः' इति। नेदं पितृ-
धनपरम्। प्रागुक्तबृहस्पतिवचनविरोधात् द्वादशविधान् पुत्रानु-
द्दिश्य देवलः। 'सर्वे ह्यनौरसस्यैते पुत्रादायहराः स्मृताः।
औरसे पुनरुत्पन्ने तेषु ज्यैष्ठं न विद्यते। तेषां सवर्णा ये पुत्रास्ते
तृतीयांशभागिनः। हीनास्तमुपजीवेयुर्ग्रासाच्छादनसंवृताः'।
दायहराः पूर्णांशहराः। तेषामौरसव्यतिरिक्तानां मध्ये ये

पितुः सवर्णास्ते सत्यौरसे तृतीयांशहराः। अत्रापि विशेष-माह मनुः 'औरसक्षेत्रजौ पुत्रौ पितृरिक्थस्य भागिनौ। दशापरे च क्रमशो गोत्ररिक्थांशभागिनः'। सन्ततिकारक-त्वेन धनिदेयपिण्डदातृत्वेन च प्रथमं पुत्रिकापुत्रस्य तद-नन्तरं दत्तकस्य गोत्ररिक्थयोर्भागित्वम्। क्रमशः पूर्वपूर्वाभावे परः परः इत्थं क्रमेण गोत्रधनयोर्भागिनः। शूद्रस्य दासीपुत्र-विभागमाह याज्ञवल्क्यः। 'जातोऽपि दास्यां शूद्रेण कामतो-ऽंशहरो भवेत्। मृते पितरि कुर्य्युस्तं भ्रातरस्त्वर्द्धभागि-नम्। अभ्रातृको हरेत् सर्वं दुहितॄणां सुतादृते'। कामतः पितुरिच्छातः। अंशहरः पुत्रान्तरतुल्यांशहरः। सति तु दौहित्रे तस्यैव स्वीयसन्तानत्वात्। दासीपुत्रस्य अपरिणीता-जातत्वात्। तयोस्तुल्यांशित्वं युक्तमिति। अनियोगोत्पन्न-क्षेत्रजस्य औरसेन सह विभागमाह मनुः। 'यद्येक ऋक्थिनौ स्यातामौरसक्षेत्रजौ सुतौ। यद्यस्य पैतृकं रिक्थं स तद्-गृह्णीत नेतरः'। एक ऋक्थिनौ एकस्यां जातौ ऋक्थिनौ। यस्य वीजाद् यो जातः स तस्य ऋक्थं गृह्णीयात्। इतरो-ऽन्यवीजजो न गृह्णीयादित्यर्थः। स्त्रीधने यत् पितृदत्तं यद्धनं स्त्रीयै तद्वीजजस्तद्धनं गृह्णीयात् नान्य इत्याह नारदः। 'द्वौ सुतौ विवदेयातां द्वाभ्यां जातौ स्त्रिया धने। तयोर्यद् यस्य पित्र्यं स्यात् स तद्गृह्णीत नेतरः'।

अथोपरते पितरि भ्रातॄणां विभागः। तत्र देवलः। 'पितर्य्युपरते पुत्रा विभजेयुर्धनं पितुः'। पितुःसकाशादागत-धनमित्यर्थः। नारदः। 'यच्छिष्टं पितृदायेभ्यो दत्त्वर्णं पैतृकं ततः। भ्रातृभिस्तद्विभक्तव्यमृणी न स्याद् यथा पिता'। पितृदायेभ्यः पित्रा दत्तप्रतिश्रुतेभ्यः। ऋणी न स्यादित्यने-नाशक्तौ शोधनीयमित्युत्तमर्णस्थाने स्वीकर्त्तव्यम्। अत्र

मातरि जीवन्त्यां सोदराणां विभागो न धर्म्यः। यथा शङ्खलिखितौ। 'अकृच्छ्रमूलं हि कुटुम्बमस्वातन्त्र्याः पितृमन्तो मातुरप्येवमवस्थितायाः' इति। अतएव व्यासः। 'भ्रातॄणां जीवतोः पित्रोः सहवासो विधीयते। तदभावे विभक्तानां धर्मस्तेषां विवर्द्धते'। विभक्तानां स्वमात्रधने वैदिककर्मकरणात्तन्मात्रत्वेन तद्वृद्धिरित्यर्थः। यदि तु विभज्यते तदा मातुर्भागमाह कात्यायनः। 'मातापि पितरि प्रेते, पुत्रतुल्यांशहारिणी'। समांशता तु मातुरप्राप्तस्त्रीधनायाः। प्राप्तस्त्रीधनायास्तु भागार्द्धं प्रागुक्तवचनात्। सोद्धारानुद्धाराभ्यां द्विप्रकारविभागमाह बृहस्पतिः। द्विप्रकारो विभागस्तु दायादानां प्रकीर्त्तितः। वयोज्येष्ठक्रमेणैकः समांशपरिकल्पना'। वयोज्येष्ठक्रमेणेत्युद्धाराभिप्रायेण। शूद्रे तु उद्धाराभावो वक्ष्यते। समभागस्य शास्त्रीयत्वेऽपि उद्धारपक्षो भक्तयतिशयाद्‌विरुद्धः। विभागाविभागविकल्पवत्। यथा मनुः। 'ज्येष्ठ एव तु गृह्णीयात् पित्र्यं धनमशेषतः। शेषास्तमुपजीवेयुर्यथैव पितरं तथा'। नारदः। 'बिभृयाद्वेच्छतः सर्वान् ज्येष्ठो भ्राता यथा पिता। भ्राता शक्तः कनिष्ठो वा शक्त्यपेक्षा कुले स्थितिः'। मध्यमोऽत्र दण्डापूपन्यायात् सिद्धः। स च न्यायो यथा मूषिकस्य दण्डभक्षणं दुष्करं तन्निष्पत्तौ तत्सहचरितापूपभक्षणमिति सुकरत्वात् यथा सम्भाव्यते तथात्रापि सहचरितैकसिद्धावपरसिद्धेरौचित्यात् तत्सम्भाव्यते। अतएव अविशेषान्नारदः। 'कुटुम्बार्थेषु चोद्युक्तस्तत् कार्य्यं कुरुते तु यः। स भ्रातृभिर्बृंहणीयो ग्रासाच्छादनवाहनैः'। एवम्भूतं प्रशंसति व्यासः। 'जीविते यस्य जीवन्ति विप्रा मित्राणि बान्धवाः। सफलं जीवितं तस्य आत्मार्थे को न जीवति'। इतरविंशे वैपरीत्याद्दोषमाह दुष्टं प्रति नारदः।

'अन्योन्यभेदो भ्रातृणां सुहृदां वा बलात्मक। भवत्यानन्त्यहेव हि पितां नात्र संशयः'। अत्र सर्वेच्छया नारदेन सङ्घाव उक्तः। विभागस्तु न तथा। यथा विभागं प्रक्रम्य कात्यायनः। 'अप्राप्तव्यवहाराणां धनं व्ययविवर्जितम्। न्यसेयुर्बन्धुमित्रेषु प्रोषितानां तथैव च'। अप्राप्तव्यवहाराणां बालानां यस्तु स्वयोग्यतया पित्रादिधने निष्पृहः स तण्डुलप्रस्थादि दत्त्वा तत्पुत्रादेर्दुरन्ततानिरासाय विभजनीयः। यथा मनुः। 'भ्रातृणां यस्तु नेहेत धनं शक्तः स्वकर्मणा। स निर्भाज्यः स्वकादंशात् किञ्चिद्दत्त्वोपजीवनम्'। कात्यायनः। 'दृश्यमानं विभज्येत गृहक्षेत्रचतुष्पदम्। गूढद्रव्यादिशङ्कायां प्रत्ययस्तत्र कीर्त्तितः'। प्रत्ययो दिव्यम्। एतदेव स्पष्टयति। 'गृहोपस्करवाह्यास्तु दोह्याभरणकर्मिणः। दृश्यमाना विभज्यन्ते कोषं गूढेऽब्रवीद् भृगुः'। गृहोपस्करः उदूखलादि कर्मिणो दासादयः कोषो दिव्यविशेषः। स तु दिव्यतत्त्वेऽनुसन्धेयः। प्रसिद्धमन्यत्। नारदः। 'येषान्तु न कृताः पित्रा संस्कारविधयः क्रमात्। कर्त्तव्या भ्रातृभिस्तेषां पैतृकादेव तद्धनात्। अविद्यमाने पित्रर्थे स्वांशादुद्धृत्य वा पुनः। अवश्यकार्य्याः संस्कारा भ्रातृभिः पूर्वसंस्कृतैः'। कन्याभ्यस्तु विवाहोचितद्रव्यदानमाह देवलः। 'कन्याभ्यश्च पितृद्रव्याद्देयं वैवाहिकं वसु। अपुत्रकस्य कन्या स्वा धर्मजा पुत्रवद्धरेत्'। विष्णुः। 'असूढानान्तु कन्यानां सद्वृत्तानुसारेण संस्कारं कुर्य्यात्'। एवं तुरीयांशदानप्रतिपादकमपि विवाहोचितद्रव्यदानपरम्। पितृव्यातिरिक्तानामपि संस्कर्तृत्वमाह द्वैतनिर्णयास्मृतधृतस्मृतिः 'अष्टौ संस्कारकर्माणि गर्भाधानमिव स्वयम्। पिता कुर्य्यात्तदन्यो वा तस्याभावे तु तत्क्रमात्'।

अथ विभागानधिकारिणः। आपस्तम्बः। 'सर्वे हि धर्मयुक्ता भागिनो द्रव्यमर्हन्ति। यस्त्वधर्मेण द्रव्याणि प्रतिपादयति ज्येष्ठोऽपि तमभागं कुर्वीत' इति ज्येष्ठोऽपि पुत्र इति शेषः। तथाच बृहस्पतिः। 'सवर्णाजोऽप्यगुणवान् नार्हः स्यात् पैतृके धने। तत्पिण्डदाः श्रोत्रिया ये तेषां तदभिधीयते'। तत्पिण्डदाः धनिपिण्डदाः अतएव श्रोत्रिया इत्युक्तम् अगुणवान् गुणविरुद्धदोषवान् अगुणवद्ग्रासाच्छादनदातार इति रत्नाकरः एतन्मतेऽपि सुतरां धनिपिण्डदातृत्वं प्रतीयते। 'यथा जलं कुप्लवेन तरन्मज्जति मानवः। तथा पिता कुपुत्रेण तमस्यन्धे निमज्जति'। कात्यायनः। 'यन्नार्थं द्रव्यमुत्पन्नं तस्मात् द्रव्यं नियोजयेत्। स्थानेषु द्रव्ययोगिषु न स्त्रीमूर्खविधर्मिषु'। स्त्रीति पत्न्यादिविशेषविहितेतरसपिण्डस्त्रीपरं तथा 'शास्त्रशौर्य्यादिरहितस्तपोदानविवर्जितः। आचारहीनः पुत्रस्तु मूत्रोच्चारसमस्तु सः'। शङ्खः। 'अकृत्वा प्रेतकार्य्याणि प्रेतस्य धनहारकः। वर्णानां यद्वधे प्रोक्तं तद्व्रतं नियतश्चरेत्'। देवलः। 'मृते पितरि न क्लीवकुष्ठ्युन्मत्तजडान्धकाः। पतितः पतितापत्यं लिङ्गी दायांशभागिनः। तेषां पतितवर्ज्जेभ्यो भक्तवस्त्रं प्रदीयते। तत्सुताः पितृदायांशं लभेरन् दोषवर्जिताः'। जडोऽधर्मकृत्ये निरुत्साहः अन्धो जन्मान्धः आत्यन्धबधिरौ तथेति मनुवचनात् लिङ्गी कपटव्रतधारी। नारदः। 'पितृद्विट् पतितः षण्ढो यश्च स्यादौपपातिकः। औरसा अपि नैतेऽंशं लभेरन् क्षेत्रजाः कुतः'। पितृद्विट् पितरि जीवति तत्ताड़नादिकृत् मृते तु तत्श्राद्धादिविमुखः। औपपातिकः उपपातकैः संसृष्टः कल्पतरुकृता तु औपपातिक इत्यत्रापपात्रित इति पठित्वा राजवधादि दोषेणबान्धवैर्यस्य घटापवर्जनं कृतमिति

विवृतम्। प्रकाशकारेण उपपातकौति पठित्वा उपपातकै-र्युक्त इति विवृतम्।

अथ विभाज्याविभाज्ये। तत्र व्यासः। 'अनाश्रित्य पितृद्रव्यं स्वशक्त्याप्नोति यद्धनम्। दायादेभ्यो न तद्दद्यात् विद्यालब्धञ्च यद्भवेत्'। विद्याधनमाह कात्यायनः। 'उपन्यस्ते तु यल्लब्धं विद्यया पणपूर्वकम्। विद्याधनन्तु तद्विद्यात् विभागे न नियोजयेत्। शिष्यादार्त्त्विज्यतः प्रश्नात् सन्दिग्धप्रश्ननिर्णयात्। स्वज्ञानसंशनाद्वादाल्लब्धं प्राध्ययनाच्च यत्। विद्याधनन्तु तत् प्राहुर्विभागे न प्रयोजयेत्। शिल्पेष्वपि हि धर्मोऽयं मूल्याद् यच्चाधिकं भवेत्। परं निरस्य यल्लब्धं विद्यया द्यूतपूर्वकम्। विद्याधनन्तु तद्विद्यात् न विभाज्यं बृहस्पतिः'। यदि भवान् भद्रमुपन्यस्यति तदा भवत एव मयैतद्देयमिति पणितं यत्रोपन्यासं निस्तीर्य्य लभते तत्र विभाज्यं शिष्यादध्यापितात् आर्त्त्विज्यतः यजमानाद्दक्षिणया लब्धधनं न प्रतिग्रहलब्धं वेतनरूपत्वात्तस्य तथा यत्किञ्चिद्विद्याप्रश्ने निस्तीर्णेऽपणितं यदि कश्चित् परितोषाद्ददाति तथा यो ह्यस्मिन् शास्त्रार्थे अस्माकं संशयमपनयति तस्मै धनमिदं ददानीत्युपस्थितस्य संशयमपनीय यल्लब्धं वादिनोर्वा सन्देहे न्यायकरणार्थमागतयोः सम्यङ्निरूपणेन यल्लब्धं षष्ठांशादिकं तथा शास्त्रादिप्रकृष्टज्ञानं सम्भाव्य यत्प्रतिग्रहादिना लब्धं तथा शास्त्रज्ञानविवादे अन्यत्रापि यत्र कुत्रचिदन्योन्यज्ञानविवादे निर्जित्य यल्लब्धम्। तथैकस्मिन् देये बहूनामुपप्लवे येन प्रकृष्टात् यल्लब्धम्। तथा शिल्पादिविद्यया चित्रकरसुवर्णकारादिभिर्यल्लब्धम्। तथा द्यूतेनापि परं निर्जित्य यल्लब्धं तत् सर्वमविभाज्यमितरैः तस्माद् यया कयाचिद्विद्यया लब्धमर्जकस्यैव तन्नेतरेषामिति। प्रदर्शनार्थन्तु

कात्यायनेन विस्तारितमिति दायभागः। नारदः। 'कुटुम्बं बिभृयाद् भ्रातुर्यो विद्यामधिगच्छतः। भागं विद्याधनात्तस्मात् स लभेताश्रुतोऽपि सन्'। बिभृयादित्येकवचननिर्देशात्र बहवः यदि विद्यामभ्यस्यतो भ्रातुः कुटुम्बमपरो भ्राता स्वधनव्ययशरीरायासाभ्यां संवर्द्धयति तदा तद्विद्यार्जितधने तस्याधिकारः। अश्रुतो मूर्खः। कल्पतरुमिताक्षरादीपकलिकासु। कात्यायनः। 'परभक्तोपयोगेन विद्या प्राप्तान्यतस्तु या। तया लब्धं धनं यत्तु विद्यालब्धं तदुच्यते'। अन्यतः पितृमातृकुलव्यतिरिक्तात् अत्र विशेषयति स एव 'नाविद्यानान्तु वैद्येन देयं विद्याधनात् क्वचित्। समविद्याधिकानान्तु देयं वैद्येन तद्धनम्'। तत्रोच्चरितविद्याधर्मभाभ्यां सम्बध्यते तेन समविद्याधिकविद्यानां भागो न तु न्यूनविद्याविद्ययोः वैद्येन विदुषा पुनर्विशेषयति। 'कुले विनीतविद्यानां भ्रातॄणां पितृतोऽपि वा। शौर्यप्राप्तन्तु यद्वित्तं विभाज्यं तद्वृहस्पतिः' कुले सकुले पितामहपितृव्यादिभ्यः पितृत एव वा शिक्षितविद्यानां भ्रातॄणाम्। यद्विद्याशौर्यप्राप्तं धनं तद्विभजनीयमिति कल्पतरुरत्नाकरौ पुनः कात्यायनः। 'इंशभहरोऽर्द्धहरो वा पुत्रवित्तार्जनात् पिता'। पुत्रवित्तार्जनात्। कृदभिहितभावो द्रव्यवत् प्रकाशत इति न्यायात् पुत्रार्जितवित्तात् पितुर्द्व्यंशित्वं पितृधनानुपघातविषयं भ्रातृधनोपघातविषयञ्च। अर्जकस्य तु द्व्यंशित्वं भ्रातृधनोपघाते तु तेषामप्येकांशित्वं वक्ष्यमाणव्यासवचनात् पितुरर्द्धहरत्वन्तु पितृद्रव्योपघातादगुणवत्त्वाद्वेति दायभागः। अनुपघाते पिता द्व्यंशहरः अर्जकत्वात्। स्वयमपि द्व्यंशहरः इतरेषामनंशित्वं भ्रातृद्रव्योपघाते तु तस्याप्येकांश इति द्व्यंशार्द्धांशयोर्भेदकथनम्। पुनः कात्यायनः। 'गोप्रचारश्च रथ्या च वस्त्रं यच्चाङ्गयोजितम्।

प्रयोज्यं न विभज्येत शिल्पार्थन्तु बृहस्पतिः'। प्रयोज्यं यद् यस्य प्रयोजनार्हं पुस्तकादि न तन्मूर्खादिभिः सह पण्डितादिभिर्विभजनीयम् एवमेव दायभागमदनपारिजातादयः। याज्ञवल्क्यः। 'पितृभ्याञ्चैव यद्दत्तं तत्तस्यैव धनं भवेत्'। पुत्रदुहित्रोर्यदलङ्कारादि दत्तं तत्तस्यैवेति शूलपाण्युपाध्यायाः। नारदः 'शौर्य्यभार्य्याधने चोभे यच्च विद्याधनं भवेत्। त्रीण्येतान्यविभाज्यानि प्रसादो यश्च पैतृकः'। शौर्य्यस्य सह भार्य्ययेति भरद्वाजवचनात् भार्य्याप्राप्तिकाले लब्धं धनं भार्य्याधनमौद्वाहिकम् इत्यर्थः। चोभे इत्यत्र हित्वेति पाठे एतत्त्रिकं हित्वान्यद्विभजेदित्यनुवर्त्तते अत एतान्यविभाज्यानीति। प्रसाददत्तस्य पौर्वापर्य्यपूर्वसंप्रदानस्यैव तल्लभ्यम्। 'सर्वेष्वेव विवादेषु बलवत्युत्तरा क्रिया। आधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरा' इति याज्ञवल्क्यवचनात्। अत या बलवती सैव सिध्यतीत्यर्थः। तत्राद्याधिक्रियास्वामिनो यथेष्टविनियोगविरोधिका न तु स्वत्वध्वंसजनिकेति सा पूर्वा परा वा प्रतिग्रहरूपक्रियाभ्यां पूर्वस्वामिस्वत्वध्वंसोत्तरजाताभ्यां बलवतीभ्यां साध्यते अतएव रत्नाकरादिधृतस्मृतिः। 'न्यासं कृत्वा परत्राधिं कृत्वा वाधिं करोति यः।. विक्रयं वा क्रिया तत्र पश्चिमा बलवत्तरा'। न्यासं कृत्वाधिं करोति आधिं कृत्वा वा विक्रयं करोति विक्रयपदं स्वत्वध्वंसकत्वात् दानं लक्षयति तत्र परा क्रिया सिध्येत्यर्थः। एवञ्च विक्रेतृदात्रोर्मरणादिना आध्युद्धारे विक्रयदानाभ्यां तत्कर्त्तृतुल्यस्वत्वजननात्तत्र तत्क्रेतृप्रतिग्रहीतृभ्यामाध्युद्धारः कार्य्य इति तत्रैवागमविवादे ताभ्यां तयोर्भोग एव व्यवस्थापनीयो नागमादेरिति। शङ्खलिखितौ। 'न वास्तुविभागो नोदकपात्रालङ्कारोपयुक्तस्त्रीवाससामपां प्रचारः

रथ्यानां विभागश्च' इति प्रजापतिरिति यस्मिन् वास्तुनि येन गृहोद्यानादिकं कृतमपरेणापि स्थानान्तरे तथाकृतश्चेत्तदा येन यत् कृतं तत् तस्यैव अन्यत्रापि एवं साधारणधनार्जितेऽपि विशेषमाह व्यासः। 'साधारणं समाश्रित्य यत्किञ्चिद्वाहनायुधम्। शौर्य्यादिनाप्नोति धनं भ्रातरस्तत्र भागिनः। तस्य भागद्वयं देयं शेषास्तु समभागिनः'। अत्र भ्रातर इत्युपलक्षणं पितृव्यादयोऽपि बोद्धव्याः तस्यार्जकस्य साधारणोपघाते यस्य यावतोऽशस्यांशस्य महता वोपघातस्तस्य तदनुसारेण भागकल्पना कार्य्येति दायभागः। न च स्थावरस्य समस्तस्य गोत्रसाधारणस्य च। नैकः कुर्य्यात् क्रयं दानं परस्परमतं विना। विभक्ता अविभक्ता वा सपिण्डाः स्थावरे समाः। एको ह्यनीशः सर्वत्र दानाधमनविक्रये'। इति व्यासवचनाभ्यामेकस्य दानबन्धकविक्रयाधिकार इति वाच्यं यथेष्टविनियोगार्हत्वरूपस्य स्वत्वस्य द्रव्यान्तर इव अत्राप्यविशेषात् वचनञ्च स्वामित्वेन दुर्वृत्तपुरुषगोचरविक्रयादिना कुटुम्बविरोधादधर्मज्ञापनार्थनिषेधरूपं न तु विक्रयाद्यनिष्पत्त्यर्थमिति दायभागः विभक्तानामपि यत्रांशविच्छेदो न जातस्तन्मध्यगत एवावतिष्ठते तेन तत्र साधारणत्वमेव तत्रैकोऽनीशः पृथग्भूतेषु स्वतन्त्रकृतस्य सिद्धिरेवेति विवादचिन्तामणिः। वस्तुतस्तु विभक्तेषु अनुज्ञाग्रहणं विभक्ताविभक्तसीमादिसंशयव्युदासाय ग्रामसामन्ताद्यनुमतिग्रहणवत्तदुक्तं मिताक्षरायाम्। 'स्वग्रामज्ञातिसामन्तदायादानुमतेन च। हिरण्योदकदानेन षड्भिर्गच्छति मेदिनी' इति दायादा दौहित्रादयः। ज्ञातेः पृथगुपादानात् हिरण्योदकदानेनेति। 'स्थावरे विक्रयो नास्ति कुर्य्यादाधिमनुज्ञया' इति स्थावरस्य केवलविक्रयप्रतिषेधात् एवं 'भूमिं यः प्रतिगृह्णाति यश्च भूमिं

प्रयच्छति। तावुभौ पुण्यकर्माणौ नियतं स्वर्गगामिनौ'। इति दानप्रशंसादर्शनाच्च विक्रयेऽपि कर्त्तव्ये सहिरण्यमुदकं दत्त्वा दानरूपेण स्थावरविक्रय इति विज्ञानेश्वरः। वस्तु-तस्तु स्थावरविक्रयनिषेधोऽविभक्तस्थावरविषयः। तत्रापि यदि विक्रयं विनाऽवस्थितिर्न भवति तदा विक्रये कर्त्तव्ये दाया-दानां दुरन्ततानिवृत्त्यर्थं क्रेतुरिच्छया दानमप्युक्तम् अतएव हारीतेन यश्चोपकारिणे ददाति इति यत् दानोपसर्गत्वमुक्तं तदुपगमनोपकारिपरं तदितरोपकारिणे दाने फलमाह दक्षः। 'मातापित्रोर्गुरौ मित्रे विनीते चोपकारिणे। दीनानाथ-विशिष्टेभ्यो दत्तन्तु सफलं भवेत्'। अतएव नारदः। 'स्व-भागान् यदि ते दद्युर्विक्रीणीयुरथापि वा। कुर्य्युर्यथेष्टं तत् सर्वमीशास्ते स्वधनस्य वै'। अतएव याज्ञवल्क्यः। 'क्रमा-दभ्यागतं द्रव्यं हृतमभ्युद्धरेत्तु यः। दायादेभ्यो न तद्दद्यात् विद्यया लब्धमेव च'। पितृपितामहागतं बलादन्यैर्हृतं योऽंशान्तराणामनुज्ञया उद्धरति तदंशान्तरेभ्यो न दद्यात्। भूमौ तु विशेषयति। शङ्खः। 'पूर्वनष्टाञ्च यो भूमिमेक एवो-द्धरेत्क्रमात्। यथाभागं भजन्त्यन्ये दत्त्वांशन्तु तुरीयकम्'। एत-द्वचनं स्मृतिमहार्णवकामधेनुपारिजातप्रभृतिषु अलिखनाद-युक्तमेवेति रत्नाकरः। तन्न दायभागमिताक्षराप्रभृतिधृतत्वात् पूर्वपुरुषार्जितनष्टोद्धारे विशेषयति मिताक्षरायाम्। 'स्थावरं द्विपदञ्चैव यद्यपि स्वयमर्जितम्। असम्भूय सुतान् सर्वान् न दानं न च विक्रयः। ये जाता येऽप्यजाता वा ये च गर्भे व्यवस्थिताः। वृत्तिन्तेऽपि हि काङ्क्षन्ति वृत्तिलोपो विगर्हितः'। अस्यापि अपवादमाह 'एकोऽपि स्थावरे कुर्य्याद्दानाधमनविक्र-यम्। आपत्काले कुटुम्बार्थे धर्मार्थे च विशेषतः'। आधमनं बन्धकत्वेन स्थापनम्। कुटुम्बार्थे दासकृतस्यापि सिद्धिमाह

मनुः। 'कुटुम्बार्थेऽध्यधीनोऽपि व्यवहारं यमाचरेत्। स्वदेशे वा विदेशे वा तं ज्यायान्न विचालयेत्'। तद्गृहस्थे देशान्तरस्थे वा स्वामिनि कुटुम्बव्यवहारनिमित्तकं दासोऽपि यद्दणादिकं कुर्य्यात् तत्स्वाम्यनुमन्येतेति कुल्लूकभट्टः। व्यक्तमाह बृहस्पतिः। 'पितृव्यभ्रातृपुत्रस्त्रीदासशिष्यानुजीविभिः। यद्गृहीतं कुटुम्बार्थे तद्गृही दातुमर्हति'। मनुः। 'ग्रहीता यदि नष्टः स्यात् कुटुम्बार्थे कृतव्ययः। दातव्यं बान्धवैस्तत् स्यात् प्रविभक्तैरपि स्वतः'। स्वतः स्वधनात्। कात्यायनः 'कुटुम्बार्थमशक्ते तु गृहीतं व्याधितेऽथवा। उपप्लवनिमित्तन्तु विद्यादापत्कृतन्तु तत्। कन्यावैवाहिकञ्चैव प्रेतकार्य्ये च यत् कृतम्। एतत् सर्वं प्रदातव्यं कुटुम्बेन कृतं प्रभोः'। कुटुम्बमवश्यं भरणीयम्। प्रभोरिति कर्त्तरि षष्ठी तेन प्रभुणा दातव्यमिति रत्नाकरः। दायभागे हारीतः 'जीवति पितरि पुत्राणामर्थादानविसर्गाक्षेपेषु न स्वातन्त्र्यं कामं दीने प्रोषिते आर्त्तिं गते वा ज्येष्ठोऽर्थांश्चिन्तयेत्'। सुव्यक्तमाहतुः शङ्खलिखितौ। 'पितर्य्यशक्ते कुटुम्बव्यवहारान् ज्येष्ठः प्रतिकुर्य्यादनन्तरो वा कार्य्यज्ञस्तदनुमतो नत्वकामे पितरि रिक्थविभागो वृद्धे विपरीतचेतसि दीर्घरोगिणि वा ज्येष्ठ एव पितृवदर्थान् पालयेत् इतरेषामृक्थमूलं हि कुटुम्बमस्वतन्त्राः पितृमन्तो मातुरप्येवमवस्थितायाः'। एतद्वचनद्वयं कार्य्याक्षमे दीर्घरोगिणि च पितरि विभागं निषिध्यैव ज्येष्ठो गृहं चिन्तयेत् तदनुजो वा कार्य्यज्ञ इत्याह अनुमतिस्त्वप्रतिषेधादपि भवति। 'स्वं द्रव्यं दीयमानञ्च यः स्वामी न निवारयेत्। ऋत्विग्भिर्वापरैर्वापि दत्तं तेनैव तद्भवेत्' इति प्रायश्चित्तविवेकधृतकात्यायनवचनात् अतएव परमतमप्रतिषिद्धमनुमतं भवतीति न्यायविदः एवं दत्तानिवारणत्वात् सिद्धिरिति।

अथ हस्तविभागसन्देहनिर्णयः। मनुः। 'गोत्रभागविभागार्थे सन्देहे समुपस्थिते। गोत्रजैरपरिज्ञाते कुलं साक्षित्वमर्हति'। गोत्रभागविभागार्थे सन्देह इति गोत्रलब्धरविभजनीय विभजनविषयके हस्तविभागवैपरीत्यसन्देहे विभागकरणसन्देहे च कुलं बन्धुः एषामभाव एव अन्यसाक्षी तल्लेख्यमाह बृहस्पतिः। 'भ्रातरः संविभक्ता ये स्वरुच्या तु परस्परम्। विभागपत्रं कुर्वन्ति भागलेख्यं तदुच्यते'। व्यवहारमातृकायां बृहस्पतिः। 'यत्रैकशासने ग्रामक्षेत्रारामाश्च लेखिताः। एकदेशोपभोगेऽपि सर्वे भुक्ता भवन्ति ते'। शासनं पत्रादि तदेकदेशस्यानुपभोगे तु सर्वस्य क्रीतादेर्हानिर्यथा स एव। 'संविभागक्रयप्राप्तं पित्र्यं लब्धञ्च राजतः। स्थावरं सिद्धिमाप्नोति भुक्त्या हानिमुपेक्षया'। प्राप्तमात्रं येन भुक्तं स्वीकृत्या परिपन्थितम्। 'तस्य तत्सिद्धिमाप्नोति हानिस्तूपेक्षया तथा'। संविभागक्रयादिलब्धस्यैव सति भोगे सिद्धिः तद्भोगोपेक्षया हानिरिति। नारदः। 'दानग्रहणपश्वन्नगृहक्षेत्रपरिग्रहाः। विभक्तानां पृथक् ज्ञेयाः पाकधर्मागमव्ययाः। साक्षित्वं प्रातिभाव्यञ्च दानं ग्रहणमेव च। विभक्ता भ्रातरः कुर्य्युर्नाविभक्ताः परस्परम्। येषामेताः क्रिया लोके प्रवर्त्तन्ते स्वऋक्थतः। विभक्तानवगच्छेयुर्लेख्यमप्यन्तरेण तान्'। अतएव याज्ञवल्क्यः। 'भ्रातॄणामथ दम्पत्योः पितुः पुत्रस्य चैव हि। प्रातिभाव्यमृणं साक्ष्यमविभक्तेन तत् स्मृतम्'। परस्परमिति शेषः यद्यपि जायापत्योर्विभागो न विद्यते तथा 'पुण्यापुण्यफलेषु च' इत्यापस्तम्बोक्तेर्विभागाभावः'। पत्न्यधिकरणेऽपि जीवत् पतिधनमात्रे स्वत्वं युक्तञ्च। दम्पत्योर्मध्यगं धनमित्युक्तम् इति श्राद्धविवेकः। मध्यगमुभयस्वामिकमित्यर्थः। तथापि 'यदि कुर्य्यात् समानांशान् पत्न्यः कार्य्याः समांशिकाः' इति

याज्ञवल्क्येन पुत्रविभागकरणे प्रवृत्तस्याऽपुत्रपत्न्या अपि विभागावगतेस्तदभिप्रायेण दम्पत्योरित्युक्तम्। यत्तु 'भार्य्या-पुत्रश्च दासश्च त्रय एवाधनाः स्मृताः'। इत्यत्र अधनत्वश्रुतेराप-स्तम्बीयविभागाभिधानं वैदिककर्म्ममात्रे सहकारित्वेनाधि-कारार्थमिति। तत्र तद्वचनोत्तरार्द्धे 'यत्ते समधिगच्छन्ति यस्यैते तस्य तद्धनम्' इत्यनेन स्वार्जितस्यैव पत्न्यादीनां पत्या-द्यनुमतिमन्तरेण अस्वातन्त्र्यप्रतिपादनात्। आपस्तम्बवचने तथा 'पुण्यापुण्यफलेषु च' इति पृथगुपादानाच्च तस्माद्विभागो न विद्यत इति निषेधस्य प्रवृत्तिपूर्व्वकत्वादेकस्मिन् धने उभयोः स्वत्वं प्राप्यते। अन्यथोभयोः स्वत्वाभावेन विभागप्रसक्त्य-नुपपत्तेर्निषेधविधिर्न स्यात्। 'एकत्वं सा गता यस्माच्चरु-मन्त्राहुतिव्रतैः' इति लघुहारीतोक्तैकत्वस्यैतदपि फलम्।

अथ चिरप्रोषितागतस्य वंशस्य विभागः। तत्र बृहस्पतिः। गोत्रसाधारणं त्यक्त्वा योऽन्यदेशं समाश्रितः। तद्वंशस्यागत-स्यांशः प्रदातव्यो न संशयः। तृतीयः पञ्चमश्चैव सप्तमो वापि यो भवेत्। जन्मनामपरिज्ञाने लभेतांशं क्रमागतम्। यं परम्परया मौलाः सामन्ताः स्वामिनं विदुः। तदन्वयस्या-गतस्य दातव्या गोत्रजैर्म्मही। भुक्तिस्त्रैपुरुषी सिद्धेदपरेषां न संशयः। अनिवृत्ते सपिण्डत्वे सकुल्यानां न सिध्यति। अस्वामिना तु यद्भुक्तं गृहक्षेत्रापणादिकम्। सुहृद्बन्धुसकुल्यस्य न तद्भोगे न हीयते। विवाह्यश्रोत्रियैर्भुक्तं राज्ञामात्यैस्तथैव च। सुदीर्घेणापि कालेन तेषां सिध्यति तत्तु न'। गोत्र-साधारणं द्रव्यमिति शेषः। आपणः पण्यवीथिका। अपरेषां गोत्रजादपरेषां विवाह्यो जामाता इति व्यवहारचिन्तामणिः। नारदः। 'अन्यायेनापि यद्भुक्तं पित्रा पूर्व्वतनैस्त्रिभिः। न तच्छक्यमपाकर्त्तुं क्रमात्त्रिपुरुषागतम्'। पित्रा पूर्व्वतनैरित्यत्र

पित्रा सह पितरमादाय त्रिभिश्चतुर्थः समवाप्नुयादिति वच-नार्थः। भोगं विशिनष्टि व्यासः। 'पिता पितामहो यस्य जीवेच्च प्रपितामहः। त्रयाणां जीवतां भोगो विज्ञेयस्त्वे-कपुरुषः'। युगपद्भोगी षष्टिवर्षोऽपि न त्रैपुरुषिकः प्रपिता-महस्य तत्र स्वातन्त्र्यात् तस्यैव भोगः तदा कोनाम असावित्याह विज्ञेयस्त्वेकपुरुष इति। त्रिपुरुषं विशेषयति व्यासः। 'प्रपितामहेन यद्भुक्तं तत् पुत्रेण विना च तम्। तौ विना यस्य पित्रा च तस्य भोगस्त्रिपौरुषः'। कियन्तं कालमेकैकस्य भोग इत्यपेक्षायां व्यासः। 'वर्षाणि विंशतिं भुक्त्वा स्वामिना व्याहता सती। भुक्तिः सा पौरुषी भूमेर्द्विगुणा च द्विपौरुषी। त्रिपौरुषी च त्रिगुणा न तत्राऽन्वेष्य आगमः'। अत्राव्याहतेति प्रतिवादिसमक्षं लभ्यते षष्टिवर्षभोगस्याप्यने-कैकवाक्यत्वम्। अतः पुनरुपेक्षया स्वत्वनाशाद्बृहस्पतिरपि आहर्त्ता शोधयेत् भुक्तिमागमञ्चापि संसदि। तत्सुतो भुक्ति-मेवैकां पौत्त्रादिषु न किञ्चन'। याज्ञवल्क्यः। 'आगमस्तु कृतो येन सोऽभियुक्तस्तमुद्धरेत्। न तत्सुतस्तत्सुतो वा भुक्ति-स्तत्र गरीयसी'। भुक्तिशोधनमाह कात्यायनः 'आगमो दीर्घ-कालश्च निश्छिद्रोऽन्यरवोज्झितः। प्रत्यर्थिसन्निधानश्च पञ्चाङ्गो भोग इष्यते'।

अथ विभागकाले निह्नुतस्य पश्चादवगतस्य विभागः। तत्र कात्यायनः। 'प्रच्छादितन्तु यद् येन पुनरागत्य तत्समम्। भजेरन् भ्रातृभिः सार्द्धमभावे तु पितुः सुताः। अन्योन्यापहृतं द्रव्यं दुर्विभक्तञ्च यद्भवेत्। पश्चात् प्राप्तं विभज्येत सम-भागेन तद्भृगुः'। पश्चात्प्राप्तमित्युपादानात् विभक्ते सति लौकिकप्रमाणेन यस्य कस्यचिन्निह्नुतस्य प्रदर्शनं विनापि न पुनर्विभागो न वा तत्र दिव्यं विना क्वचिदप्यनिश्चितद्रव्यत्वेन

सम्यग्विभागो न स्यात्। दुर्विभक्तमिति असम्यग्विभागस्य पुनर्विभागं दर्शयति। 'सकृदंशो निपतति सकृत् कन्या प्रदीयते। सकृदाह ददामीति त्रीण्येतानि सतां सकृत्'। इति मनुनारदकात्यायनबृहस्पतिवचनेऽपि स्वेच्छापदोपादानं सम्यग्विभागविषयम्। 'येनांशो यादृशो भुक्तस्तस्य तत्र विचालयेत्। स्वेच्छाकृतविभागो यः पुनरेव विसंवदेत्। स राज्ञांशे स्वके स्थाप्यः शासनीयोऽनुबन्धकृत्' इति रत्नाकरधृत-बृहस्पतिवचनेऽपि स्वेच्छाकृतपदोपादानात् स्वारसिकन्यूना-धिकपरं न तु भ्रान्त्यादिकृतदुर्विभागपरम्। पश्चात् प्राप्त-मित्यनेन तन्मात्रस्यैव विभागो न पूर्वविभक्तं विभजनीयमित्यव-गम्यते। समभागेनेति अपहर्त्तुरपहर्त्तृतया भागो न देयोऽल्पो वा देय इति निरासार्थं भृगुराहेति शेषः वाक्यार्थकर्मता च अविभक्तत्वादेव विभागे प्राप्ते वचनारम्भश्चौर्य्यदोषाभावं ज्ञापय-तीति विश्वरूपहलायुधप्रभृतयः स्तेयधात्वर्थानिष्पत्तिरित्यभि-प्रायः। तथाहि 'यत् परद्रव्यहरणं स्तेयं तत् परिकीर्त्तितम्' इति कात्यायनवचने परशब्दादात्मीयत्वव्यवच्छेदेनैव परकीय-त्वस्यावगमात्। यथा मुद्गापचारे प्रतिनिधित्वेन माषप्राप्ता इव अयज्ञिया वै माषा इति माषा निषिद्धाः। तत्र माष-मात्रारम्भकमिश्रितानां निषेधो न तु माषमुद्गोभयारम्भक-मिश्रितानां तथात्रापि परमात्रद्रव्यस्यापहार एव स्तेयं न तु स्वपरसाधारणस्याविभक्तदायस्य भोगादिनेति साधारणासाधा-रणयोश्च असाधारणस्यैव शीघ्रप्रतीतिरिति। अतएव परकीय त्वेन विशेषतो जानतस्तदपहारे स्तैन्यं न तु स्वद्रव्यभ्रमेण परद्रव्यव्यवहर्त्तुरपीति जितेन्द्रदायभागप्रायश्चित्तविवेककृन्म तम्। तत्र स्वीयबुद्ध्या परकीयापहारे यदस्तेयत्वमुक्तं तत् समीचीनं भागवतीयनृगोपाख्यानविरोधात् तथाहि 'कस

चिह्निजमुख्यस्य भ्रष्टा गौर्मम गोधने। संपृक्ताऽविदुषा सा च
मया दत्ता द्विजातये। तां नीयमानां तत्स्वामी दृष्ट्वोवाच
ममेति च। ममेयं प्रतिगृह्याह नृगो मे दत्तवानिति। विप्रौ
विवदमानौ मामूचतुः स्वार्थसाधकौ। भगवान् दातापहर्त्ता
च तच्छ्रुत्वा मेऽभवद्भ्रमः। तत्पापात् कृकलासत्वं प्राप्तिश्च मे
यथाभवत्। तावद्द्वारवतीमाप्तं कृकलासतनुं प्रभो' इति।
तत् अनेकेषामङ्गुरीयकसमुदये सङ्करतया आत्मीयाङ्गुरीयक-
भ्रमेण परकीयाङ्गुरीयकविक्रये न स्तेयत्वं तदविशेषचिह्नित-
द्रव्याणां कपर्दकादीनां नानास्वामिकानामेकत्र स्थापनदशायां
च परस्परद्रव्यविनिमयादेव परस्परविनियोगे दोषाभाव
सवगत्य एकत्र स्थापनात् अन्यथा दोषशङ्कया न तथा
कुर्यादिति एतद्विषये। मत्स्यपुराणम्। 'अज्ञानाद् यः पुमान्
कुर्यात् परद्रव्यस्य विक्रयम्। स निर्दोषोऽज्ञानपूर्वं चौर-
दण्डमर्हति' इति एतदज्ञानकृतदण्डाभाव परमिति। तेन
स्वस्वत्वावच्छिन्नद्रव्ये परमाणुमतिमन्तरेण ममेदं यथेष्ट-
विनियोज्यमिति कृत्वा व्यवहारः स्तेयम्। स च क्वचिन्मानसः
सङ्कल्परूपः क्वचित् कायिको दानविक्रयादिलक्षणः तस्य
अविभक्तभ्रात्रादिधनेषु सम्भवः। इदं परकीयमेव इदं
ममैवेति विशेषानिश्चयात्। अतएव कात्यायनः। 'बन्धुनाप-
हृतं द्रव्यं बलान्नैव प्रदापयेत्। बन्धूनामविभक्तानां भोगं नैव
दापयेत्'। अत्रापहृतपदं भाक्तं सामादिना प्रदापयितव्यो
न तु बलात् अविभक्तेन यदधिकं भुक्तं तदसौ न दाप्यः।
अस्य निधिलाभेऽपि न दोषो नष्टस्वामिकत्वात्। तथाच
मनुः। 'राजा लब्ध्वा निधिं दद्याद्द्विजेभ्योऽर्द्धं द्विजः पुनः।
विद्वानशेषमादद्यात् स सर्वस्य प्रभुर्यतः। इतरेण निधौ लब्धे
राजा षष्ठांशमाहरेत्। अनिवेदितविज्ञाता दाप्यस्तं दण्ड-

मेव च'। सभूय वाणिजिकानान्तु नैतादृशं वचनाभावात् प्रत्युत 'शिल्पं त्यजेयुर्निर्लाभम्' इति याज्ञवल्कीयेन वचनस्य लाभशून्यं ज्ञात्वा त्याग उक्तः दायद्रव्य इव वाणिजिकानामेक-धनेऽन्येषां स्वत्वाभावाच्च किन्तु मिलनात्तदनिश्चयमात्र-मिति।

अथ स्त्रीधनम्। तत्र कात्यायनः। 'प्राप्तं शिल्पैस्तु यद्वित्तं प्रीत्या चैव यदन्यतः। भर्त्तुः स्वाम्यं भवेत्तत्र शेषन्तु स्त्रीधनं स्मृतम्'। अन्यतः पितृमातृभर्त्तृकुलव्यतिरिक्ताद् यल्लब्धं शिल्पेन वा यदर्जितं तत्र भर्त्तुः स्वातन्त्र्य तेन स्त्रिया अपि धनं न स्त्रीधनं अस्वातन्त्र्यात् एतद्द्वयातिरिक्तधने स्वत्वं स्त्रिया एव दानाद्यधिकारात्। मनुविष्णू। 'पत्यौ जीवति यः कश्चिदलङ्कारो धृतो भवेत्। न तं भजेरन् दायादा भज-मानाः पतन्ति ते'। पत्युरदत्तेऽपि तदनुज्ञया परिहितो अलङ्कारस्तावतैव भार्य्यायाः स्त्रीयो भवतीति मेधातिथिः। कात्यायनः। 'ऊढ़या कन्यया वापि पत्युः पितृगृहेऽथवा। भर्त्तुः सकाशात् पित्रोर्वा लब्धं सौदायिकं स्मृतम्। सौदायिकं धनं प्राप्य स्त्रीणां स्वातन्त्र्यमिष्यते। यस्मात्तदानृशंस्यार्थं तैर्दत्तं तत्प्रजीवनम्। सौदायिके सदा स्त्रीणां स्वातन्त्र्य परिकीर्त्तितम्। विक्रये चैव दाने च यथेष्टं स्थावरेष्वपि' सुदायेभ्यः पितृमातृभर्त्तृकुलसम्बन्धिभ्यो लब्धं सौदायिकम् आनृशंस्यमनैष्ठुर्य्यम्। नारदः। 'भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन्मृतेऽपि तत्। सा यथाकाममश्नीयाद्दद्याद्वा स्थावरा द्दते'। भर्त्तृदत्तविशेषणात् भर्त्तृदत्तस्थावरादृतेऽन्यस्थाव देयमेव अन्यथा यथेष्टं स्थावरेष्वपीति कात्यायनोक्तं विरुध्यते कल्पतरुरत्नाकरयोः कात्यायनः। 'अपकारक्रियायुक्ता निर्लज्ज चार्थनाशिनी। व्यभिचाररता या च स्त्रीधनं न च सार्हति

याज्ञवल्क्यः। 'दुर्भिक्षे धर्मकार्य्ये वा व्याधौ संप्रतिरोधके। गृहीतं स्त्रीधनं भर्त्ता नाकामो दातुमर्हति'। संप्रतिरोधके भोजनाद्यवरोधकारिण्युत्तमर्णादिके। अन्यत्र तु। कात्यायनः। 'न भर्त्ता नैव च सुतो न पिता भ्रातरो न च। आदाने वा विसर्गे वा स्त्रीधने प्रभविष्णवः'।

अथ स्त्रीधनाधिकारिणः। देवलः। 'सामान्यं पुत्त्रकन्यानां मृतायां स्त्रीधनं विदुः। अप्रजायां हरेद्भर्त्ता माता भ्राता पितापि वा'। अत्र द्वन्द्वनिर्देशात् पुत्त्रकन्ययोस्तुल्याधिकारः अन्यतराभावेऽन्यतरस्य तद्धनम् एतयोरभावे ऊढ़ाया दुहितुः पुत्त्रवत्याः सम्भावितपुत्त्रायाश्च तुल्याधिकारः स्वपुत्त्रद्वारेण पार्वणे 'सपिण्डीकरणादूर्द्ध्वं यत् पितृभ्यः प्रदीयते। सर्व्वेष्वंशहरा माता इति धर्म्मेषु निश्चयः'। इति शातातपोक्ततद्भोग्यपतिपिण्डदानसम्भवात्। तथाच नारदः। 'पुत्त्राभावे तु दुहिता तुल्यसन्तानदर्शनात्'। अतएव एतादृशदुहित्रभावे पौत्त्राधिकारः तदभावे दौहित्राधिकारः 'दौहित्रोऽपि ह्यमुत्रैनं सन्तारयति पौत्त्रवत्' इति मनुवचने। दौहित्रे पौत्त्रधर्मातिदेशात् पुत्त्रेण परिणीतदुहितुर्बाधाद्बाधकपुत्त्रेण बाध्यदुहितृपुत्त्रबाधस्य न्याय्यत्वात् एवं तदभावे प्रपौत्त्रः तद्भोग्यपिण्डदातृत्वात् तदभावे वन्ध्याविधवयोर्मातृधनाधिकारः तयोरपि तत्प्रजात्वात् तदभावे तु भर्त्ता। एवञ्च न पितृमातृदत्तधनविषयं तत्र भ्रातुरधिकारात्। तथाच वृद्धकात्यायनः 'पितृभ्याञ्चैव यद्दत्तं दुहितुः स्थावरं धनम्। अप्रजायामतीतायां भ्रातृगामि तु सर्व्वदा। मातुः परिणयनकाललब्धन्तु पुत्त्रसत्त्वेऽपि क्रमेण अनूढ़ाढ़दुहित्रोरेवाधिकारः मातुः पारिणाय्यं स्त्रियो विभजेरन्निति वशिष्ठोक्तेः। स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानाञ्चेति गोतमवचनेन प्रथम-

मप्रत्तानामवाग्दत्तानां तदभावे त्वप्रतिष्ठितानां वाग्दत्तानाम् ईषदर्थे नञ् तदभावे चकारसमुच्चितानाम् ऊढ़ानां स्त्रीधनं दुहितॄणामिति सामान्यतः प्रागुक्तत्वात् अप्रत्तानामित्यादेस्तु । क्रमार्थत्वे नोपसंहारार्थत्वात् । व्यक्तमाह मनुः 'मातुश्च यौतुकं यत् स्यात् कुमारी भाग एव सः' इति यौतुकपदं युमिश्रणे इत्यस्मात् मिश्रं मिश्रता च स्त्रीपुंसयोर्विवाहाद् भवति । यदेतत् हृदयन्तव तदस्तु हृदयं मम यदिदं हृदयं मम तदस्तु हृदयं तवेति मन्त्रलिङ्गात् यौतुकं तदिति वाचस्पतिमिश्ररायमुकुटधृतात् यौतुकं यौतुकमपि साधु । परिणयनकालः परिणयनपूर्वापरीभूतकालः स च वृद्धिश्राद्धारम्भपत्न्यभिवादनान्तो विवाहतत्त्वे विवृतः । यत्तु मनुवचनं 'स्त्रियांस्तु यद्भवेद् वित्तं पित्रा दत्तं कथञ्चन । ब्राह्मणी तद्धरेत् कन्या तदपत्यस्य वा भवेत्' इति तत्पित्रा दत्तमिति विशेषणाद्विवाहसमयादन्यदापि पितृदत्तं कन्याया एवेत्येतदर्थं ब्राह्मणीपदन्तु कन्यामात्रपरम् । यद्वा क्षत्रियादिस्त्रीणामनपत्यानां पितृदत्तं धनं सपत्नीदुहिता ब्राह्मणीकन्या हरेत् न पुनरप्रजस्त्रीधनं भर्त्तुरिति वचनावकाश इति वचनार्थः । तदभावे पुत्राधिकारः 'दुहितॄणामभावे तु रिक्थं पुत्रेषु तद्भवेत्' इति मनुवचनात् एवं पुत्राधिकारात् प्राग् दुहित्रधिकारविधायकवचनान्तराण्यपि तद्विषयकाणि पुत्राद्यभावे तु ब्राह्मादिपञ्चकविवाहकालीनं स्त्रीधनं भर्त्तुः आसुरादित्रयविवाहकालीनन्तु मातुस्तदभावे पितुः । यथा मनुः । ब्राह्मदैवार्षगान्धर्वप्राजापत्येषु यद्धनम् । अतीतायामप्रजायां भर्त्तुरेव तदिष्यते । यत्त्वस्याः स्याद्धनं दत्तं विवाहेष्वासुरादिषु । अतीतायामप्रजायां मातापित्रोस्तदिष्यते' । कन्याधनाधिकारे क्रममाह बौधायनः । 'रिक्थं मृतायाः

कन्याया गृह्णीयुः सोदराः स्वयम्। तदभावे भवेन्मातुस्तद-भावे भवेत् पितुः'। अत्र क्रमदर्शनात् पूर्ववचने मातापित्रो-रित्यत्र पाठक्रमेणाधिकारो न तु द्वन्द्वनिर्देशात् समुच्चितेन। बृहस्पतिः। 'मातुः स्वसा मातुलानी पितृव्यस्त्री पितृस्वसा। श्वश्रूः पूर्वजपत्नी च मातृतुल्याः प्रकीर्त्तिताः। यदासामौरसो न स्यात् सुतो दौहित्र एव वा। तत्सुतो वा धनं तासां स्वस्रीयाद्याः समाप्नुयुः'। औरसपदं कन्यापुत्रोभयपरं सुत इति सपत्नीपुत्रपरम्। 'सर्वासामेकपत्नीनामेका चेत् पुत्रिणी भवेत्। सर्वास्तास्तेन पुत्रेण प्राह पुत्रवतीर्मनुः' इति मनु-स्मृतेः। एकपत्नीनामिति एकः पतिर्यासां ताः न तु सुत-पदमौरसविशेषणं वैयर्थ्यात् सपत्नीपुत्रसद्भावे स्वस्रीयाद्यधि-कारापत्तेश्च तत्सुत इति पौत्रसपत्नीपौत्रपरं न तु दौहित्र-पुत्रपरं तस्य स्वभोग्यभर्त्तृपिण्डदानानधिकारात् अत्र प्रागु-क्तानुसारात् दौहित्रपर्य्यन्तानन्तरमेव सपत्नीपुत्रतत्पुत्रयो-रधिकारः न तु प्रागुक्तभर्त्रादिपितृपर्य्यन्ताभावेऽपीति वाच्यं भर्त्रादीनां धनिभोग्यपार्वणपिण्डदानानधिकारात् तस्मादे-तेषां सपत्नीपौत्रान्तानां तत्सुतो वेति वा शब्दसमुच्चिता-नाम्। 'सामान्यं पुत्रकन्यानां मृतायां स्त्रीधनं विदुः। अप्रजायां हरेद्भर्त्ता माता भ्राता पितापि वा' इति देव-लोक्तानां भर्त्रादिपितृपर्य्यन्तानाञ्च अभाव एव सत्स्वपि श्वशुर-भ्रातृश्वशुरादिषु स्वस्रीयाद्या इत्यनेन भगिनीसुतभर्त्तृभागि-नेय-भर्त्तृज्येष्ठकनिष्ठोभयरूपभ्रातृसुतस्वभ्रातृपुत्र-जामातृदेव-राणां मातृस्वस्रादिधनेऽधिकारः अनन्यगतेर्वचनात्। अत्र 'त्रयाणामुदकं कार्य्यं त्रिषु पिण्डः प्रवर्त्तते। चतुर्थः संप्रदा-तैषां पञ्चमो नोपपद्यते' इति दायभागप्रकरणीयमनुस्मृतेः 'पिण्डदोऽंशहरः' इति याज्ञवल्कीयात् 'मातृतुल्याः प्रकी-

र्त्तिताः' इत्यनेन स्वस्रीयादीनां पुत्रत्वज्ञापनेन पिण्डदत्त्वसूचनस्य दायभागप्रकरणे उपकारतारतम्येन धनाधिकारक्रमज्ञापनेनैवप्रयोजनकत्वात्। 'मातुलो भागिनेयस्य स्वस्रीयो मातुलस्य च। श्वशुरस्य गुरोश्चैव सख्युर्मातामहस्य च। एतेषाञ्चैव भार्य्याभ्यः स्वसुर्मातुः पितुस्तथा। पिण्डदानन्तु कर्त्तव्यमिति वेदविदां स्थितिः' इति शातातपवचनात् पिण्डदानविशेषेऽत्र चैषामेषामधिकारक्रमः प्रतिपत्तव्यः पाठक्रमादर्थक्रमस्य बलवत्त्वात् अन्यथा सर्वशेषे देवराधिकारे महाजनविरोधः स्यात्। तत्र प्रथमं देवरस्तत्पिण्डतद्भर्त्तृपिण्डतद्भर्त्तृदेयपुरुषत्रयपिण्डदत्त्वात् सपिण्डत्वाच्च भ्रातृस्त्रीधनेऽधिकारी तदभावे भ्रातृश्वशुरदेवरयोः सुतौ तत्पिण्डतद्भर्त्तृपिण्डतद्भर्त्तृदेयपुरुषद्वयपिण्डदत्वात् सपिण्डत्वाच्च तयोरभावे तु असपिण्डोऽपि भगिनीपुत्रस्तत्पिण्डतत्पुत्रदेयतत्पुत्रादिपिण्डत्रयदत्वात्तदभावे भर्त्तृभागिनेयः पुत्राद्भर्त्तुर्दुर्बलत्वेन तत्स्थानपातिनोरपि भगिनीपुत्रभर्त्तृभागिनेययोस्तथैव बलाबलस्य न्याय्यत्वेन तद्भर्त्तृदेयपुरुषत्रयपिण्डदत्वात् तत्पिण्डदत्वात् तद्भर्त्तृपिण्डदत्वाच्च मातुलानी धनेऽधिकारी तदभावे भ्रातृपुत्रः तत्पिण्डतत्पुत्रदेयतत्पित्रादिपिण्डद्वयदत्वात् पितृस्वसुर्धनेऽधिकारी तदभावे श्वशुरयोः पिण्डदानाज्जामाता श्वश्रूधनेऽधिकारीति क्रमः स्वस्रीयाद्या इति तु अधिकारिमात्रपरं न पाठिकक्रमपरम् एषां चैषां प्रातिस्विकोक्तानामभावे सपिण्डानन्तर्य्येण श्वशुरादिवदधिकारी न च सपिण्डाभावे ;मातृस्वसेति वचनं वाच्यम् अस्मिन्नधिकारिगणे देवरतत्सुतभ्रातृश्वशुरसुतानामधिकारज्ञापनादासन्नतरश्वशुरभ्रातृश्वशुरादेः परित्यागादिति।

अथ अपुत्रधनाधिकारिणः। याज्ञवल्क्यः। 'पत्नी दुहि-

तदस्यैव पितरौ भ्रातरस्तथा। तत्सुतो गोत्रजो बन्धुः शिष्यः सब्रह्मचारिणः। एषामभावे पूर्वस्य धनभागुत्तरोत्तरः। स्वर्य्यातस्य ह्यपुत्रस्य सर्व्ववर्णेष्वयं विधिः'। तथा विष्णुः। 'अपुत्रस्य धनं पत्न्यभिगामि तदभावे दुहितृगामि तदभावे दौहित्रगामि तदभावे पितृगामि तदभावे मातृगामि तदभावे भ्रातृगामि तदभावे भ्रातृपुत्रगामि तदभावे सकुल्यगामि तदभावे बन्धुगामि तदभावे शिष्यगामि तदभावे सहाध्यायिगामि तदभावे ब्राह्मणधनवर्ज्जं राजगामि' इति। अत्र अपुत्रपदं पुत्रपौत्रप्रपौत्राभावपरं तेषां पार्व्वणपिण्डदातृत्वाविशेषात् अतएव बौधायनवचने पुत्रपौत्रप्रपौत्रानुपक्रम्य 'सत्स्वङ्गजेषु तद्गामी ह्यर्थो भवति' इत्युक्तं तद्यथा प्रपितामहः पितामहः पिता स्वयं सोदर्य्या भ्रातरः सवर्णायाः पुत्रः पौत्रः प्रपौत्र एतानविभक्तदायादान् सपिण्डानाचक्षते विभक्तदायादान् सकुल्यानाचक्षते सत्स्वङ्गजेषु तद्गामी ह्यर्थो भवतीति। अस्यार्थः पित्रादिपिण्डत्रयेषु सपिण्डनेन भोक्तृत्वात् पुत्रादिभिस्त्रिभिस्तत्पिण्डस्यैव दानात् यश्च जीवन् यत् पिण्डदाता स मृतः सन् सपिण्डनेन तत् पिण्डभोक्ता एवं मध्यस्थितः पुरुषः पूर्व्वेषां जीवन् पिण्डदाता मृतश्च तत् पिण्डभोक्ता परेषां जीवतां पिण्डसम्प्रदानभूत आसीत् मृतैश्च तैः सह दौहित्रादिदेयपिण्डभोक्ता अतो येषामयं पिण्डदाता ये वा तत्पिण्डदातारस्ते अविभक्तं पिण्डरूपं दायमश्नन्तीति अविभक्तदायादाः सपिण्डाः पञ्चमस्य पूर्व्वस्य मध्यमः पञ्चमो न पिण्डदाता न च तत्पिण्डभोक्ता एवमधस्तनोऽपि पञ्चमो न मध्यमस्य पिण्डदाता नापि तत्पिण्डभोक्ता तेन वृद्धप्रपितामहात् प्रभृतित्रयः पूर्व्वपुरुषाः प्रतिनप्तृः प्रभृत्यधस्तनास्त्रयः पुरुषा एकपिण्डभोक्तृत्वाभावाद्विभक्त-

दायादाः सकुल्या इत्याचक्षते। इदं सपिण्डत्वं सकुल्यत्वञ्च दायग्रहणार्थमित्युक्तम् अशौचविवाहाद्यर्थञ्च पिण्डलेपभुजामपीति विवृतं शुद्धितत्त्वे। पुत्रादिविभागक्रमं व्यक्तमाह रत्नाकरधृतकात्यायनः। 'अविभक्ते मृते पुत्रे तत्सुतं रिक्थभागिनम्। कुर्वीत जीवनं येन लब्धं नैव पितामहात्। लभेतांशं स पित्र्यन्तु पितृव्यात्तस्य वा सुतात्। स एवांशस्तु सर्व्वेषां भ्रातॄणां न्यायतो भवेत्। लभेत तत्सुतो वापि निवृत्तिः परतो भवेत्'। जीवनं जीवनोचितद्रव्यं यदा भ्रातॄणां कश्चिदेको न विद्यते तदा तत्सुतस्य पित्रंशो दातव्यः यदा विपन्नस्याप्यनेकपुत्रास्तदा एकः पित्रंशस्तेषां विभज्य दातव्यः एवं तत्सुतोऽप्यंशं लभेत तत्सुतस्य भागो निवर्त्तत इत्यर्थः। एतच्च सहवासविषयम्। यथा देवलः। 'अविभक्तविभक्तानां कुल्यानां वसतां सह। भूयो दायविभागः स्यादाचतुर्थादिति स्थितिः'। अविभक्तानां सहवसतां संसृष्टानां वा पुनर्विभागो भ्रातृतत्सुततत्सुतपर्य्यन्तमेव तत्सुताच्चतुर्थान्निवर्त्तते इति प्रागुक्तसप्तमपुरुषपर्य्यन्तं विभागदानन्तु भिन्नदेशादागतानामिति न विरोधः तेन प्रपौत्रपर्य्यन्तानामभावे पत्नी धनाधिकारिणी। यथा कात्यायनः। 'भर्त्तृदायं मृते पत्यौ विन्यसेत् स्त्री यथेष्टतः। विद्यमाने तु संरक्षेत् क्षपयेत्तत्कुलेऽन्यथा। अपुत्रा शयनं भर्त्तुः पालयन्ती व्रते स्थिता। भुञ्जीतामरणात् क्षान्ता दायादा ऊर्द्ध्वमाप्नुयुः'। यथेष्ट इति धर्मार्थम्। तथाच व्यासः। 'लोकान्तरस्थं भर्त्तारमात्मानञ्च वरानने। तारयत्युभयं नारी नित्यं धर्मपरायणा' मदनपारिजातधृता स्मृतिः। 'यद् यदिष्टतमं लोके यद् यत् पत्युः समीहितम्। तत्तद्गुणवते देयं पतिप्रीणनकाम्यया'। भर्त्तुः शयनं पालयन्ती साध्वगामिनी। अतएव

हरिवंशीयपुण्यकव्रतोपाख्याने 'दानोपवासपुण्यानि सुव्रता-न्यप्यनन्यति। निष्फलान्यसतीनां हि पुण्यकानि तथाशुभे'। तथा वृहन्मनुः। अपुत्रा शयनं भर्त्तुः पालयन्ती व्रते स्थिता। पत्न्येव दद्यात् तत्पिण्डं कृत्स्नमंशं लभेत च'। तत्पिण्ड-मित्यत्र तदित्यनुषज्यते तच्छब्देन भर्त्तुः परामर्शाद्भर्त्तुः कृत्स्न-मंशं यावदंशं हरेत् न तु वसनजीवनोचितमात्रं पत्नी सवर्णा ज्येष्ठापत्नीत्यभिधानात्। ज्येष्ठत्वमाह मनुः। 'यदि स्वाश्च पराश्चैव विन्देरन् योषितो द्विजाः। तासां वर्णक्रमेणैव ज्येष्ठं पूजा च वेश्म च'। तदन्यस्या भार्य्यायाः पोषणमात्रमाह नारदः। 'भ्रातॄणामप्रजः प्रेयात् कश्चिच्चेत् प्रव्रजेच्च वा। विभजेरन् धनं तस्य शेषास्ते स्त्रीधनं विना। भरणञ्चास्य कुर्व्वीरन् स्त्रीणामाजीवनक्षयात्। रक्षन्ति शय्यां भर्त्तुश्चेदा-च्छिन्द्युरितरासु च'। प्रेयात् म्रियेत एवं पत्नीभार्य्याभेदात्। 'ततो दायमपुत्रस्य विभजेरन् सहोदराः। तुल्या दुहितरो वापि म्रियमाणः पितापि वा। सवर्णा भ्रातरो माता भार्य्या चैव यथाक्रमम्। तेषामभावे गृह्णीयुः कुल्यानां सहवासिनः' इत्यादिवचनानि व्यवस्थेयानि म्रियमाणो जीवन्। वस्तुतस्तु एतदुक्तक्रमः सर्व्वत्र न ग्राह्यः उपकारतारतम्यमूलकवक्ष्यमाण-वचनविरोधात्। अतएव अत्र क्रमानास्थासूचकमपि वापी-त्युक्तं पत्न्यभावे दुहितरः अत्र बहुवचनात् कन्योढादौहित्राणां परिग्रहः तत्र कन्योढयोस्तु 'अपुत्रस्य मृतस्य कुमारी रिक्थं गृह्णीयात् तदभावे चोढ़ा' इति पराशरवचनात् क्रमः तद-भावे दौहित्रः 'पौत्रदौहित्रयोर्लोके विशेषो नास्ति धर्मतः। तयोर्हि मातापितरौ सम्भूतौ तस्य देहतः' इति मनुवचने पौत्रतुल्यत्वाभिधानेन यथा पुत्राभावे पौत्रः तथा दुहित्रभावे दौहित्रः अतएव गोविन्दराजधृतो विष्णुः। 'अपुत्रपौत्रे

संसारे दौहित्रा धनमाप्नुयुः। पूर्वेषां हि स्वधाकारे पौत्र दौहित्रकाः समाः'। दौहित्राभावे पितरौ तत्र प्रथमं पिता ततो माता पूर्वोक्तविष्णुस्मृतेः। तदभावे भ्रातरः अत्रापि बहुवचनं सोदरासोदरसंसृष्टत्वभेदेनाधिकारिभेदार्थम् अतएव एकपितृजातयोरपि सोदरविमातृजयोर्मृतदेयषट्पुरुषपिण्ड दातृत्वेन सोदरस्यैव धनाधिकारो न तु पित्रादित्रयमात्र पिण्डदातुर्विमातृजस्य क्वचित्तु संसृष्टत्वेन विमातृजस्याप्य संसृष्टसोदरेण सह तुल्याधिकारिता सोदरस्य संसृष्टत्वेन स एव गृह्णीयान्न संसृष्टापि विमातृज इति। तथाच याज्ञवल्क्यः। 'संसृष्टिनस्तु संसृष्टी सोदरस्य तु सोदरः। दद्याच्चापहरेदंशं जातस्य च मृतस्य च। अन्योदर्य्यस्तु संसृष्टी नान्योदर्य्यो धनं हरेत्। असंसृष्ट्यपि चादद्यात् संसृष्टो नान्यमातृजः'। संसृष्टिनमाह बृहस्पतिः। 'विभक्तो यः पुनः पित्रा भ्रात्रा चैकत्र संस्थितः। पितृव्येणाथवा प्रीत्या स तु संसृष्ट उच्यते'। तेन विभागानन्तरं मैत्र्यात् पितृभ्रातृपितृव्यभातृपुत्राणां यथा- यथमेकत्रावस्थानं संसर्गः तद्युक्तः संसर्गी एवम्भूतस्य संसर्गिणो मृतस्य धनं तज्जातस्यापत्यस्य तदपत्याभावे संसर्गी स्वयं गृह्णी- यात् एवं सोदरस्य तु सोदरः। अत्र विशेषयति यमः। 'अवि- भक्तं स्थावरं यत् सर्वेषामेव तद्भवेत्। विभक्तं स्थावरं प्राप्तं नान्योदर्य्यैः कदाचन'। सर्वेषां सोदरासोदराणां स्थावराति- रिक्तन्तु विभक्ताविभक्तं सोदराणामेवेत्यर्थतः सिद्धं तेषां तत् पिण्डदातृत्वेन तन्मातृभोग्यपार्वणपिण्डदातृत्वेन चाधि- कारात्। व्यक्तमाह मनुः। 'येषां ज्येष्ठः कनिष्ठो वा हीये- तांशप्रदानतः। म्रियेतान्यतरो वापि तस्य भागो न लुप्यते'। अंश प्रदानतो विभागात् पूर्वं हीयेत प्रव्रज्यादिनेति शेषः। तेषामंशविभाग इत्यत्राह स एव। 'सोदर्य्या विभजेरंस्तं

मित्य सञ्चिता: समम्। भ्रातरो ये च संसृष्टा भगिन्यश्च नाभय:'। बृहस्पति:। 'विभक्ता भ्रातरो ये च संप्रीत्यैकत्र स्थिता:। पुनर्विभागकरणे तेषां ज्यैष्ठं न विद्यते। यदि कश्चित् मीयेत प्रव्रजेद्वा कथञ्चन। न लुप्यते तस्य भाग: सोदरस्य वधीयते। या तस्य भगिनी सा तु ततोऽंशं लब्धुमर्हति। नपत्यस्य धर्मोऽयमभार्य्या पितृकस्य च। संसृष्टानान्तु य: श्चिद्विद्याशौर्य्यादिना धनम्। प्राप्नोति तस्य दातव्यो द्व्यंश: षा: समांशिन:'। अत्र संसृष्टानां ज्येष्ठांशाभावो वर्ण-याणां बोध्य: शूद्रस्य तु सर्वदा ज्येष्ठांशाभावात्। तथाच नु:। 'समवर्णासु ये जाता: सर्वे पुत्रा द्विजन्मनाम्। उद्धारं यायसे दत्त्वा भजेरन्नितरे समम्। शूद्रस्य तु सवर्णैव नान्या र्य्योपदिश्यते। तस्यां जाता: समांशा: स्युर्यदि पुत्रशतं वेत्'। समांशा: समभागा एव भवेयुर्नोद्धार: कस्यचिद्देय ति कुल्लूकभट्ट: युक्तञ्चैतत् तथाहि 'ज्येष्ठस्य विंश उद्धार: र्वद्रव्याच्च यद्वरम्। ततोऽर्द्धं मध्यमस्य स्यात्तुरीयन्तु यवी-स:' इति मनुना सामान्यतो ज्येष्ठादीनामुद्धाराभिधानात् द्विजन्मनाम् इत्यस्य वर्णमात्रोपलक्षकत्वशङ्कानिरासायोत्तर-मनोत्तरार्द्धं न च पुन्नामनरकत्रातृत्वाविशेषाच्च द्रव्यस्याप्यधि-कार इति वाच्यं मदनिस्तारकमध्यमकनीयसोरर्द्धपादोद्धार-दर्शनेन तस्याप्रयोजकत्वात् न चोद्धारांशयोर्भेदात् समांशिता-भिधानेन पूर्वोक्ता सवर्णाजातविषमांशभाग एव शूद्रस्य निषि-ध्यते नोद्धार इति वाच्यं शूद्रस्य तु सवर्णैवेति पूर्वार्द्धेनैव तत्सिद्धमिति द्विजन्मनामपि उद्धारनिरासाय समांशता मनुना विहिता सजातं समवर्णास्विति वचनमभिधाय 'द्विप्रकारो विभागस्तु दायादानां प्रदर्शित:। वयोज्येष्ठक्रमेणैक: परा समांशकल्पना'। इति प्रक्रोन्तित इत्यत्र प्रदर्शित इति

बृहस्पतिः। अत्र भगिन्यधिकारो विवाहोचितद्रव्यलाभाय मुनिभिः संग्रहकृद्भिस्तथोक्तत्वात् अभार्य्यापितृकस्येत्यत्र पितृ-पदमेकशेषात् पितृमातृपरं मातुरभावे भ्रात्रधिकारस्य विष्णादिभिरुक्तत्वात् ततश्च संसृष्टिनस्तु संसृष्टीत्येतद्वचनं तुल्यरूपसम्बन्धिसमवाये संसर्गकृतविशेषप्रतिपत्त्यर्थं तेन सोद-राणां सापत्नानां भ्रातृपुत्राणां पितृव्याणां तुल्यानां सद्भावे संसर्गी गृह्णीयात् वाक्यादविशेषश्रुतेः पूर्ववचने सर्वेषामेव प्रकृतत्वात् सर्वेषु चाक्षेपासम्भवात् अतो न भ्रातृमात्रविषय-मिदं वचनमिति जीमूतवाहनः। सोदरे त्वसंसृष्टिनि संसृ-ष्टिन्यसोदरे च सति कतरस्तावद् गृह्णीयात् एवं सोदरासोद-रयोः संसृष्टयोः सद्भावे कतर इत्यत्र प्रथमतः आह अन्योदर्य्य-स्त्विति अन्योदर्य्यः पुनः संसृष्टो सन् गृह्णीयात् नान्योदर्य्य-मात्रः किन्तु असंसृष्ट्यपि पूर्ववचनस्थसोदरपदानुषङ्गात् प्राप्तः सोदरश्च गृह्णीयात् तेनैकत्र विषये पूर्ववचनोक्तसंसृष्टत्वसोदर-त्वयोरेकशः सम्बन्धेन तुल्यत्वादुभयोर्विभज्य ग्रहणं तदुभयसत्त्वे चासोदर्य्यस्यासंसृष्टिनोऽतुल्यरूपत्वान्नेति द्वितीये आह संसृष्टी नान्यमातृज इति सोदरे संसृष्टिनि सति अन्यमातृजः संसृष्ट्यपि न गृह्णीयात् अर्थात्तत्र संसृष्टी सोदर एव गृह्णीयात् संसृ-ष्टत्वाविशेषेऽपि सोदरत्वेन तस्यैव बलवत्त्वात्। दायभाग-कारस्तु अन्योदर्य्यस्तु संसृष्टी सन् सत्यपि सोदरेऽसंसृष्टिनि धनं हरेत् नान्योदर्य्यः संसृष्ट्यपि गृह्णीयादिति पूर्वार्द्धस्यार्थः। तत्र किं सोदरस्तदानीं न गृह्णीयादेवेत्यपेक्षायामुत्तरार्द्धेनोक्तम् असंसृष्ट्यपि च आदद्यात् सोदर इत्यनुषज्यते न संसृष्टोऽन्य-मातृजः केवलः किन्तु उभाभ्यामेव विभज्य गृहीतव्य-मित्याहुः। मिताक्षरादयोऽप्येवम्। याज्ञवल्क्यदीपकलि-कायां शूलपाणिमहामहोपाध्यायास्तु 'अन्योदर्य्यस्तु संसृष्टी

नान्योदर्य्यधनं हरेत्' । असंसृष्टापि सोदर एव गृह्णीयात् न तु संसृष्टः सापत्नो भ्राता संसृष्ट इति गर्भसंसृष्टः सोदर इति केचित् नान्योदर्य्यधनं हरेदिति पाठे अन्योदर्य्यः सन् धनं न गृह्णीयात् इति व्याख्या असंसृष्टिसोदरस्याधिकारार्थमिदं वचनमतो न पुनरुक्तिरित्याहुः । रत्नाकरप्रभृतयस्तु यत्तु कल्पतरौ नान्योदर्य्यधनं हरेदिति पाठोदृश्यते तन्मूलभूतयाज्ञवल्क्यमिताक्षरापारिजातहलायुधग्रन्थेषु नान्योदर्य्यधनं हरेदिति पाठदर्शनात् तदनुसारव्याख्यादर्शनाच्च लिपिकरप्रमाद इत्याहुः । भ्रातॄणामभावे तत्सुतः तत्र प्रथमं सोदरपुत्रः । 'स्वेन भर्त्रा सह श्राद्धं माता भुङ्क्ते स्वधामयम् । पितामही च स्वेनैव स्वेनैव प्रपितामही' इति बृहस्पतिवचनात् । सोदरभ्रातृपुत्रदत्तपितामहपिण्डे धनिमातुर्भोगश्रुतेस्तद्गतधनत्वेन तथोपकारदर्शनात् तदभावे वैमात्रेयपुत्रः तदभावे गोत्रजः तत्र 'त्रयाणामुदकं कार्य्यं त्रिषु पिण्डः प्रवर्त्तते । चतुर्थः संप्रदातैषां पञ्चमो नोपपद्यते । अनन्तरः सपिण्डाद् यस्तस्य तस्य धनं हरेत्' इति मनूक्तात् तस्य मृतस्य धनिनः सपिण्डात् सपिण्डमध्यात् अनन्तरः सन्निहिततरस्तस्य धनं हरेत् एवमेव कुल्लूकभट्टः । 'बहवो ज्ञातयो यत्र सकुल्या बान्धवास्तथा । योह्यासन्नतरस्तेषां सोऽनपत्यधनं हरेत्' । इति बृहस्पत्युक्तत्वाच्च । पिण्डदानसम्बन्धतारतम्येन आसन्नानन्नतारतम्येन च धनेष्वधिकारी तत्र यथा दौहित्रान्तत्रसन्तानाभावेऽन्योऽधिकारी एवं भ्रातृपुत्राभावे तद्दौहित्रान्तः पितुः सन्तानोऽधिकारी तदभावे पितामहः तदभावे पितामही । 'अनपत्यस्य पुत्रस्य माता दायमवाप्नुयात् । तस्यामपि च हृतायां पितुर्माता धनं हरेत्, इति मनुवचनात् ॥ पित्रभावे माता तथा पितामहाभावे पितामही तद-

भावे पितामहदौहित्रास्तत्सन्तान: पितरि तथा दर्शनात् एवं प्रपितामह: प्रपितामही तत्सन्ताना अपि कृतभोग्यपिण्डदाता-भावे बन्धुरिति मातामहमातुलादि: तत्रापि पित्रादिवत् सति मातामहे स एव तदभावे यथाक्रमं मातुलादि: कृत-देयमातामहादिपिण्डदत्वात् तदभावे सकुल्यो विभक्तपिण्ड: प्रतिनप्तृ: प्रभृतिपुरुषत्रयमधस्तनं वृद्धप्रपितामहादिसन्ततिश्च अतएव दायक्रता ननु सहोदरभ्रातृपुत्रवत् पितृव्यस्यापि धनिदेयपूर्वपुरुषद्वयपिण्डदत्वात् धनिपितृव्यभ्रातृपुत्रयो-स्तुल्योऽधिकार: स्यादुच्यते पितृव्यो हि धनिपितामहप्रपिता-महयो: पिण्डद: भ्रातृपुत्रस्तु धनिपितरं प्रधानमादाय पुरुष-द्वयपिण्डद इति स एव बलवान् इति पितृव्यात् पूर्वमधि-क्रियते इत्युक्तं एवं यत्र मृतस्य पितृव्यमृतपितृव्यपुत्रयो: सत्त्वे धनिदेयपितामहप्रपितामहपिण्डदातृत्वाविशेषेऽपि 'अनेक-पितृकाणान्तु पितृतो भागकल्पना' इत्यत्र जननसान्निध्यता-रतम्येन भागदर्शनात् अत्रापि जननसन्निकर्षाधिक्येन पितृव्य-स्यैवाधिकार: अतएव मिताक्षरायां पितामहपितृव्यतत्पुत्रा क्रमेणाधिकारिण इत्युक्तम्। विवादचिन्तामणावपि अपु धनाधिकारे भ्रातुरभावे तत्पुत्र: तदभावे आसन्नसपि इत्युक्तं बृहस्पत्युक्तबान्धवा इत्यनेन यथाक्रमम् आत्मपितृमा बान्धवा धनाधिकारिण: ते च 'आत्मपितु: स्वसु: पुत्रा आत मातु: स्वसु: सुता:। आत्ममातुलपुत्राश्च विज्ञेया आत बान्धवा:। पितु: पितु: स्वसु: पुत्रा: पितुर्मातु: स्वसु: सुता: पितुर्मातुलपुत्राश्च विज्ञेया: पितृबान्धवा:। मातुर्मातु: स्व पुत्रा मातु: पितु: स्वसु: सुता:। मातुर्मातुलपुत्राश्च विज्ञेय मातृबान्धवा:'। आपस्तम्ब:। 'अन्तेवासी 'कार्यांस्तद धर्मकृत्येषु योजयेद् दिता वा'। इति। तदर्थेषु मासिश्रा

द्दिना तद्भोगार्थं धर्मकृत्येष्विति अदृष्टार्थमिति एवञ्च यस्य मृतस्य धनं देशान्तरस्थतद्धनाधिकारिसत्त्वे तद्धनविनाश-सम्भावनायां तदौर्द्ध्वदेहिककर्मार्थं तत्पुण्यार्थञ्च येन केनापि दातुं युक्तम्। 'यदृच्छयापि यः कुर्य्यादार्त्विज्यं प्रीतिपूर्व-कम्'। इति नारदवचने तस्यापि प्रतिनिधित्वात् एतत् प्रपञ्चितं शुद्धितत्त्वे। दायभागकृतापि सर्व्वलोकरीत्या मृत-धनस्य मृतार्थत्वमनुसन्धेयमिति वदताप्येतत् स्वहस्तित-मिति।

महामहोपाध्याय श्रीहरिहरभट्टाचार्य्यात्मज श्रीरघुनन्दन-भट्टाचार्य्यविरचितं स्मृतितत्त्वे दायतत्त्वं समाप्तम्।

---

# व्यवहारतत्त्वम्।

प्रणम्य सच्चिदानन्दं वागीशं विदुषां मुदे।
व्यवहारदृशस्तत्त्वं वक्ति श्रीरघुनन्दनः।

अथ व्यवहारदर्शनम्। तत्र याज्ञवल्क्यः। 'स्मृत्याचार-व्यपेतेन मार्गेणाधर्षितः परैः। आवेदयति चेद्राज्ञे व्यवहार-पदं हि तत्'। स्मृतिसदाचारवहिर्भूतेन वर्त्मना परैरर्थतः शरीरतो वा पीड़ितश्चेद्राजनि निवेदयेत् तद्व्यवहारदर्शनस्थानं चेदित्यत्र यदिति मैथिलाः। आवेदयति चेदित्यनेन स्वयं विवादोत्थापनं राज्ञा न कर्त्तव्यमिति शूलपाणिमहामहोपा-ध्यायाः। राज्ञीति व्यवहारप्रदर्शकपरम्। तथाच बृह-स्पतिः। 'प्रजा कार्य्याणि संपश्येत् प्राड्विवाकोऽथवा द्विजः'। प्राड्विवाकलक्षणमाह स एव 'विवादे पृच्छति प्रश्नं प्रतिप्रश्नं

तथैव च। 'प्रियपूर्वं प्राग्वदति प्राड्विवाकस्ततः स्मृतः'। कात्यायनः। 'व्यवहाराश्रितं प्रश्नं पृच्छति प्राड़िति स्थितिः। विवेचयति यत्तस्मिन् प्राड्विवाकस्ततः स्मृतः'। अर्थिनं प्रति भाषा ते कीदृशी प्रत्यर्थिनं प्रति च तत्रापि कीदृश-मुत्तरम् इति पृच्छतीति प्राट् श्रुत्वा च युक्तायुक्तत्वेन जयं पराजयं वा विविनक्ति इति विवाकः प्राट् च स विवाकश्चेति प्राड्विवाकः। कात्यायनः। 'स प्राड्विवाकः सामात्यः सब्राह्मणपुरोहितः। स्वयं स राजा चिनुयात्तेषां जयपरा-जयौ। यदा कार्य्यवशाद्राजा न पश्येत् कार्य्यनिर्णयम्। तदा नियुञ्ज्याद्विद्वांसं ब्राह्मणं वेदपारगम्। यदि विप्रो न विद्वान् स्यात् क्षत्रियं तत्र योजयेत्। वैश्यं वा धर्मशास्त्रज्ञं शूद्रं यत्नेन वर्जयेत्'। स विनीतवेशः। मनुः। जातिमात्रोप-जीवी वा कामं स्याद् ब्राह्मणब्रुवः। धर्मप्रवक्ता नृपतेर्न तु शूद्रः कदाचन। नाध्यापयति नाधीते सब्राह्मणब्रुवः स्मृतः'। व्यासः। 'द्विजान् विहाय यः पश्येत् कार्य्याणि वृषलैः सह। तस्य प्रक्षुभ्यते राज्यं बलं कोषश्च नश्यति। यः शूद्रो वैदिकं धर्मं स्मार्त्तं वा भाषते यदि। तस्य दण्डं द्वे सहस्रे सुवर्णो चैव भेदयेत्। दुःशीलोऽपि द्विजः पूज्यो न शूद्रो विजिते-न्द्रियः। दुष्टां गां कः परित्यज्यार्चयेत् शीलवतीं खरीम्'। व्यवहारमाह कात्यायनः। 'विनानार्थेऽव सन्देहे हरणं हार उच्यते। नानासन्देहहरणाद्व्यवहार इति स्थितिः'। नाना-विवादविषयः संशयो ह्रियतेऽनेन इति व्यवहारः। भाषो-त्तरक्रियानिर्णायकत्वं व्यवहारत्वम्। तथाच वृहस्पतिः। 'अज्ञानतिमिरोपेतान् सन्देहपटलार्दितान्। निरामयान् यः कुरुते शास्त्राञ्जनशलाकया। इह कीर्त्तिं राजपूजां लभते स्वर्गतिञ्च सः। तस्मात् संशयमूढानां कर्त्तव्यश्च विनिर्णयः'।

अतएव नारदः। 'अनियुक्तो नियुक्तो वा शास्त्रज्ञो वक्तुमर्हति। दैवीं वाचं स वदति यः शास्त्रमुपजीवति'। दैवीं देवानुमताम्। धर्मशास्त्रयोस्तु विरोधे लोकव्यवहार एवादरणीय इत्याह स एव। 'धर्मशास्त्रविरोधे तु युक्तियुक्तो विधिः स्मृतः। व्यवहारो हि बलवान् धर्मस्तेनावहीयते'। अवहीयते अवगम्यते हिगताविस्यास्माद्धातोः। अतएव बृहस्पतिः। 'केवलं शास्त्रमाश्रित्य न कर्त्तव्यो विनिर्णयः। युक्तिहीनविचारे तु धर्महानिः प्रजायते'। युक्तिर्न्यायः स च लोकव्यवहार इति व्यवहारमातृका। अतएव कात्यायनः। 'कुलशीलवयोवृत्तवित्तवद्भिरधिष्ठितम्। वणिग्भिः स्यात् कतिपयैः कुलवृद्धैरधिष्ठितम्'। सद इति शेषः। कात्यायनः। 'सभ्येनावश्यवक्तव्यं धर्मार्थसहितं वचः। शृणोति यदि नो राजा स्यात्तु सभ्यस्तदानृणः'। सभ्यः सभायां साधुः। तथाविधमाह याज्ञवल्क्यः। 'श्रुताध्ययनसम्पन्नाः कुलीनाः सत्यवादिनः। राज्ञा सभासदः कार्य्याः शत्रौ मित्रे च ये समाः'। श्रुताध्ययनसम्पन्नाः धर्मशास्त्रज्ञाः कुलीनाः सङ्करादिदोषशून्यमातापितृपरम्पराकाः। एवम्भूताः सभासदः सभायां यथा सीदन्ति उपविशन्ति तथा दानमानसत्कारैराज्ञा कर्त्तव्याः। तथाविधावस्थानेन भूमेः सभात्वमाह मनुः। 'यस्मिन् देशे निषीदन्ति विप्रा वेदविदस्त्रयः। राज्ञः प्रतिकृतो विद्वान् ब्राह्मणस्तां सभां विदुः'। विद्वत्संहतावपि सभापर्य्यायपरिषच्छब्दमाह स एव। 'त्रैविद्यो हैतुकस्तर्की निरुक्तो धर्मपाठकः। त्रयश्चाश्रमिणः पूर्वे परिषत् स्याद्दशावराः'। त्रैविद्यः त्रिवेदपारगः हैतुकः सद्युक्तिव्यवहारी। अतएव अमरसिंहः। 'सभासदसि सभ्ये च' अत्र भा दीप्तिः प्रकाशो ज्ञानमिति यावत् तया सह साक्षात् परम्परया वा वर्त्तते इति

सभा। कात्यायनः। 'दिवसस्याष्टमं भागं मुक्त्वा भागत्रयं तु यत्। सकालो व्यवहाराणां शास्त्रदृष्टः परः स्मृतः'। अष्टम यमाद्यार्द्धप्रहरं भागत्रयं प्रहरद्वयपर्य्यन्तम्। मनुः। 'धर्मासनमधिष्ठाय संवीताङ्गः समाहितः। प्रणम्य लोकपालेभ्यः कार्य्यदर्शनमारभेत्'। मनुनारदबौधायनहारीताः। 'पादोऽधर्मस्य कर्त्तारं पादः साक्षिणमृच्छति। पादः सभासदः सर्व्वान् पादो राजानमृच्छति। राजा भवत्यनेनास्तु मुच्यन्ते च सभासदः। एनो गच्छति कर्त्तारं निन्दार्हो यत्र निन्द्यते'। कर्त्तारं वादिनं राजपदं विवेचकपरम् अनेनाः निष्पापः। अर्थित्वमाहतुर्व्यासनारदौ। 'यस्य चाभ्यधिका पीड़ा कार्य्यं वाप्यधिकं भवेत्। तस्यार्थिभावो दातव्यो न यः पूर्वं निवेदयेत्'। अत्रैव 'पूर्वपक्षो भवेत्तस्य' इति कात्यायनीये तृतीयपादः। न यः पूर्वं निवेदयेदिति तस्योत्तरः पक्ष इति शेषः स यः पूर्वमिति पाठे यः प्रथमं निवेदयति स पूर्ववादीत्यर्थः। बृहस्पतिः। 'अहं पूर्विकया यातावर्थिप्रत्यर्थिनौ यदा। वादो वर्णानुपूर्व्वेण ग्राह्यः पीड़ामवेक्ष्य वा'। यत्र द्वावेव वदतः प्रभो मद्वाक्यं शृणु इति तत्र ब्राह्मणादिक्रमेणाधिकपीड़ादर्शनेन वा वादो ग्राह्यः। स्वयं विवादाशक्तौ प्रतिनिधिमाह नारदः। 'अर्थिना सन्नियुक्तो वा प्रत्यर्थिप्रहितोऽथ वा। यो यस्यार्थे विवदते तयोर्जयपराजयौ'। तयोर्वादिप्रतिवादिनोः। बृहस्पतिरपि। 'ऋत्विग्वादे नियुक्तश्च समौ सम्परिकीर्त्तितौ। यज्ञे स्वाम्याप्नुयात् पुण्यं हानिं वादेऽथवा जयम्'। कात्यायनः। 'मनुष्यमारणे स्तेये परदाराभिमर्षणे। अभक्ष्यभक्षणे चैव कन्याहरणदूषणे। पारुष्ये कूटकरणेऽनुपद्रोहे तथैव च। प्रतिवादी न दातव्यः कर्त्ता तु विवदेत् स्वयम्'। कुलस्त्री प्रभृतीनां प्रतिनिधि-

माह व्यासः । 'कुलस्त्रीबालकोन्मत्तजड़ार्त्तानाञ्च बान्धवाः । पूर्वपक्षोत्तरे ब्रूयुर्नियुक्तो भृतकस्तथा' । भ्रात्रादीतरस्य पक्ष-स्थितस्य दण्डनीयत्वमाह नारदः । 'यो न भ्राता पिता वापि न पुत्रो न नियोजितः । परार्थवादी दण्ड्यः स्याद्व्यवहारेषु विब्रुवन् विरुद्ध' ब्रुवन् । नारदः 'निर्वेष्टुकामो रोगार्त्तो यियक्षुर्व्यसने स्थितः । अभियुक्तस्तथान्येन राजकर्मोद्यत-स्तथा । गवां प्रचारे गोपालाः शस्यबन्धे कृषीवलाः । शिल्पिनश्चापि तत्काले आयुधीयाश्च विग्रहे । अप्राप्तव्यव-हारश्च दूतो दानोन्मुखो व्रती । विषमस्थाश्च नासेध्या न चैतानाह्वयेन्नृपः' । निर्वेष्टुकामो विवाहप्रवृत्तः अन्येन वादा-न्तरेण अप्राप्तव्यवहारः षोड़शवर्षावरवयस्कः । तत्काले विवाहादि समाप्तिपर्य्यन्तकाले । एते विषमस्थाश्च उपप्लव-देशस्थाश्च उत्तमर्णादिना नासेध्यानावधावनीयाः । एतान् प्रागुक्तान् वादिना निवेदितानिति शेषः । याज्ञवल्क्यः । 'अभियोगमनिस्तीर्य्य नैनं प्रत्यभियोजयेत्' । अभियुक्तः सन् उत्तरमदत्त्वा भाषावादिनमेतं स्वाभियोगानुपमर्द्दकेन विवादा-न्तरेण न योजयेत् युगपदनेकव्यवहारासम्भवात् । नारदो-ऽपि । 'पूर्ववादं परित्यज्य योऽन्यमालम्बते पुनः । वाद-संक्रमणाज्ज्ञेयो हीनवादी स वै नरः' । हीनवादीत्यनेन दण्ड्यतोक्ता न तु प्रकृतार्थाद्धीनता अन्यथा छलापत्तेः । पारुष्ये प्रतिप्रसवमाह स एव । 'कुर्य्यात् प्रत्यभियोगञ्च कलहे साहसेषु च' । वाक्पारुष्ये शस्त्रादिप्रहारेषु च यथापूर्व-महमप्यनेनाक्रुष्टः शस्त्रेण हत इत्यपराधाभावाय प्रत्यभि-योगं कुर्य्यात् । तथाच बृहस्पतिः । 'आक्रुष्टस्तु यदाक्रोशं स्ताड़ितः प्रतिताड़यन् । हत्वाततायिनश्चैव नापराधी भवे-न्नरः' । एतेन वाक्पारुष्यदण्डपारुष्ययोः प्रकृताभियोगी

स्वल्पकाभियोगेऽपि न दोषः यत्तु 'पूर्वमाचारयेद् यस्तु नियतं स्यात् स दोषभाक्। पश्चाद् यः सोऽप्यसत्कारी पूर्वे तु विनयो गुरुः' इति नारदवचनं तत्पूर्वापेक्षया परस्याधिकवाक्पारुष्योत्पादकस्यापि स्वल्पदण्डविधायकम्। युगपत्संप्रवृत्तेऽधिकदण्डाभावमाह स एव। 'पारुष्ये साहसे चैव युगपत्संप्रवृत्तयोः। विशेषश्चेन्न लभ्येत विनयः स्यात् समस्तयोः'। विनयो दण्डः। एवञ्च दण्डोऽयमनपराधे मयि जातः 'पीड़ितत्वादिति भाषायां प्रत्यभियोगः कार्य्य एव। प्रत्यभियोगानोसरत्वेन युगपदनेकव्यवहारापत्तिदोषस्याभावात्। सभापतेः कर्त्तव्यमाह कात्यायनः। 'अथ चेत् प्रतिभूर्नास्ति वादयोग्यस्तु वादिनोः। स रक्षितो दिनस्यान्ते दद्याद्भृत्याय वेतनम्'। प्रतिभवति तत्कार्य्ये तद्वद्भवतीति प्रतिभूर्लग्नकः। वादयोग्यः विवादफलस्य साधितधनादिदानस्य दण्डदानस्य च क्षमः। वादिनोर्भाषावादिनः उत्तरवादिनश्च। तथाच याज्ञवल्क्यः। 'उभयोः प्रतिभूर्ग्राह्यः समर्थः कार्य्यनिर्णये। प्रतिभुवस्त्वभावे च राज्ञा संज्ञपनं तयोः'। राज्ञा संज्ञपनं दण्डतुल्याभिकरणं निर्णयस्य कार्य्ये धनादिदाने राजदन्तादित्वात् कार्य्यशब्दस्य पूर्वनिपातः भृत्यः तद्रक्षको राजनियुक्तः। प्रत्यर्थी यदि कश्चित्कालं प्रार्थयते स लभते अर्थी तु कालं प्रार्थयन् अर्थित्वमेव व्याहन्यादिति तेन कालो न प्रार्थनीयः। तदाह 'प्रत्यर्थी लभते कालं त्र्यहं सप्ताहमेव च। अर्थी तु प्रार्थयन् कालं तत्क्षणादेव हीयते'। क्वचित् प्रत्यर्थीकालं न लभते। याज्ञवल्क्यः। 'साहसस्तेयपारुष्यगोऽभिशापात्यये स्त्रियाम्। विवादयेत् सद्य एव कालोऽन्यत्रेच्छया स्मृतः'। साहसं मनुष्यमारणं गौरत्र दोह्या अभिशापो महापातकादिना अत्यये द्रव्यनाशे स्त्रियां कुलस्त्रियां चारित्र-

पिण्डदानपर्य्यन्तम् । 'यस्याग्निदाता प्रेतस्य पिण्डान् दद्यात् स एव हि' इति वायुपुराणैकवाक्यत्वात् । ब्रह्मपुराणे 'श्रावयेद् भर्तृजायान्तु स्वभर्तृकुलपामिमाम् । चितामारोपयन् प्राज्ञः प्रमृते धर्ममुत्तमम् । इमाः पतिव्रताः पुण्याः स्त्रियो यायाः सुशोभनाः । सह भर्तृशरीरेण संविशन्तु विभावसुम् । एवं श्रुत्वा ततो नारी श्रद्धाभक्तिसमन्विता । पितृमेधेन यज्ञेन इष्ट्वा स्वर्गमवाप्नुयात्' प्रमृते भर्त्तरि इति शेषः पितृमेधेन यज्ञेन चितारोहणरूपेण । पादुकाद्वयग्रहणपूर्वकानुमरणेऽपि सह भर्तृशरीरेणेत्यनूहः प्रयोज्यः । देशान्तरमृते पत्याविल्यादिना शरीरप्रतिनिधित्वेन तदीयद्रव्यविधानात् प्रतिनिधौ च यथाश्रुतमन्त्रपाठमाह कात्यायनः । 'शब्दे विप्रतिपत्तिः' इत्येतद्विवृतमेकादशीतत्त्वे । न च 'अग्निजलप्रविष्टानां भृगुसंग्रामदेशान्तरमृतानां गर्भाणां जातदन्तानां मरणे त्रिरात्रेण शुद्धिः' इति काश्यपवचनात् सह मृताया अप्यग्निप्रवेशेन त्रिरात्राशौचं तत्रैव तस्याः पिण्डदानमिति वाच्यम् । प्रागुक्तब्रह्मपुराणे पृथक्चितिसमारोहणमात्रे त्र्यहाशौचविधानात् अन्यत्र भर्तृतुल्याशौचप्रतीतेः सहमरणे काश्यपोक्तत्रिरात्राशौचाङ्गीकारेऽपि तस्याशौचस्य वृद्ध्या पत्यशौचकालावधिस्थायित्वम् । 'अन्तर्दशाहे स्यातांचेत् पुनर्मरणजन्मनी । तावत् स्यादशुचिर्विप्रो यावत्तत् स्यादनिर्दशम्' इति मनूक्ताशौचसङ्करे पराशौचस्य पूर्वाशौचकालावधिस्थायित्वप्रतीतेः । ततश्च यथाशौचकालसङ्कोचे तन्मध्य एव सङ्कलय्य पिण्डदानं तथाशौचकालवृद्धावपि यावदशौचं यथाक्रमं दश पिण्डा देया इति । अतएव जिकनीयान्त्येष्टिविध्यनुमरणविवेकयोर्व्यासः । 'पृथक्स्थितं पतिमालिङ्ग्य प्रविशेद् या हुताशनम् । तस्याः पिण्डादिकं देयं क्रमशः पतिपिण्डवत्' । विष्णुः ।

'अन्विता पिण्डदानन्तु यथा भर्त्तुर्दिने दिने । तदन्वारोहिणी यस्मात् तस्मात् सा नात्मघातिनी' । अत्रानु: सहार्थ: पति मालिङ्ग्येत्यनेनैकवाक्यत्वात् स्वाम्यशौचाभ्यन्तरे पृथक्चिता मृतायास्त्र्यहेण पिण्डदानं स्वाम्यशौचापगमे तु श्राद्धम् 'अन्विताया: प्रदातव्या दश पिण्डास्त्र्यहेण तु । स्वाम्यशौच व्यतीते तु तस्या: श्राद्धं विधीयते' इति त्रिकाण्डधृतपैठीनसि वचनात् । अग्निपुराणस्येदमिति शूलपाणि: । अत्रानु पश्चादर्थ: । अतीते तु भर्त्रशौचे पादुकाद्वयमुपादाय ज्वल दग्निप्रवेशे त्र्यहाशौचव्यवस्थया पिण्डदानं चतुर्थदिने श्रा पूर्वोक्तब्रह्मपुराणवचनात् । यत्र तु भर्त्तु: संग्रामहतत्वादिन सद्य: शौचं तत्र पृथक्चितामृताशौचस्य पूर्वोक्तब्रह्मपुराणवच नात् त्रिरात्रत्वेन बहुकालव्यापित्वेनाघवृद्धिमत्त्वात् तेनैव पूर्वा शौचस्य व्यपगमात् तत्र भर्त्तुरपि त्र्यहेण पिण्डदानं तत्रापि एकचितारोहणे भर्त्रशौचव्यपगमात् शुद्धि: । संस्थितं पति मालिङ्ग्येति अन्विता पिण्डदानमिति पूर्वोक्तवचनाभ्याम् अग्नि प्रवेशे सुमन्तुना सद्य:शौचविधानाच्च । यथा 'भृग्वग्निजल संग्रामदेशान्तरस्थसंन्यासनशनाशनिमहाध्वनिकानाम् उदक क्रिया कार्य्या सद्य:शौचं भवति' इति । भृगुरुच्चदेश: महा ध्वनिक: पुण्यार्थं हिमालयावधिकमहापथगमनेन संपादित मरण: । न चैतत् सद्य: शौचं नित्य' वेदाध्यापकैरग्निहोत्र भिन्न एकाहाशौचिभिन्न कर्त्तव्यमिति हारलतादत्तविषयत्वेन नैतद्विषयकमिति वाच्यं तन्मात्रविषयकत्वे प्रमाणाभावात् सामान्यमुखप्रवृत्ततया वचनान्तरसंवादितया चैतद्विषयक मिति अन्यथा काश्यपोक्तत्रिरात्राशौचमपि अग्निजलसंग्राम प्रविष्टानां प्रमादादेव मरण इति हारलतादर्शनादनुमरण विषयकं न स्यात् तस्मात् काश्यपवचनं ब्रह्मपुराणसमान

विषयकमिति सुमन्तुवचनञ्च संग्रामहतभर्त्तृसहगमनविषयकमपीति। न च अत्र योगसिद्ध्यधिकरणविरोधान्न समुच्चितफलसिद्धिरिति वाच्यम्। योगसिद्ध्यधिकरणे हि यः पुत्रकामो यः पशुकाम इत्यादिना यज्ञक्रतूनुपक्रम्य एकस्मै वा कामायान्ये यज्ञक्रतव आक्रियन्ते सर्वेभ्यो दर्शपौर्णमासावित्युक्तं तत्र तत्तद्विधिवाक्येषु निरपेक्षफलश्रुतेः कामनाभेदाच्च कर्त्रैक्यं ततश्च सर्वशब्देन प्रकृतवाचिना निरपेक्षाणामेव पुत्रादिफलानां दर्शपौर्णमाससम्बन्धेऽवगते प्रयोगभेदादेव भवतु तत्र तत्तत्फलसिद्धिः तथाच तदधिकरणसिद्धान्तसूत्रं योगसिद्धिर्वा अर्थस्योत्पत्त्ययोगित्वादिति। अस्यार्थः। वाशब्दः सिद्धान्तद्योतनार्थः सर्वेभ्यो दर्शपौर्णमासावित्यत्रार्थस्य तत्तत्फलस्य योगेन प्रयोगभेदेन सिद्धिः उत्पत्त्ययोगित्वात् सर्वशब्दानुकर्षणीयानां यः पुत्रकामो यः पशुकाम इत्यादावुत्पत्तिवाक्ये फलानां युगपदसम्बन्धात्। न चार्थस्य नानाविधस्य उत्पत्त्ययोगित्वात् महेन्द्रादितत्तल्लोकवासादीनाम् एकदोत्पत्त्यसम्भवादिति व्याख्यानं युक्तमिति वाच्यं तड़ागोत्सर्गादौ एकस्मात् कर्म्मणः क्रमिकनानाफलोक्तेः। तथाच मत्स्यपुराणम्। 'एतान्महाराजविशेषधर्म्मान् करोति योऽथामतिशुद्धबुद्धिः। स याति रुद्रालयमाशु पूतः कल्पाननेकान् दिवि मोदते च। अनेकलोकान् समहस्तपादीन् भुक्त्वा परार्द्धद्वयमङ्गनाभिः। सहैव विष्णोः परमं पदं यत् प्राप्नोति तद्यागबलेन भूयः'। तथेहापि सर्वनाम पदाभावादार्थवादिकफलानि समुच्चितान्येव कामनाविषयो लाघवात् आर्थवादिकसमुच्चितनानाफलविषयकविधिरप्येक एव कल्प्यते लाघवात् न हि निमित्तसाधारण्ये साधकं विना नैमित्तिकानां पर्य्यायता सम्भवति वह्निसामीप्ये दाहप्रकाशयोः पर्य्यायताया अदर्शनात् तस्मात् सकृदनुष्ठितेन

कर्म्मणा यथैकं फलं निष्पाद्यते तथा बाधकं विना फलान्तरमपि विनिगमकाभावात्। ज्योतिष्टोमादेस्तु षष्टिवर्षावच्छिन्नफलश्रुतेः पृथगनुष्ठानादेव पृथक्फलसिद्धिः अन्यथा षष्टिसंख्याद्यभिधानं व्यर्थं स्यात्। यत्र तु कर्म्मफले कालविशेषो नोक्तस्तत्रापि तत् कर्म्मसंपादकानुरूपेण कालविशेषो बोध्यः फलस्य कर्म्मनिष्पत्तेस्तेषां लोकवत् परिमाणतः फलविशेषः स्यादिति न्यायात्। तेषां कर्म्मणां लोकवत् कृष्यादिकवत्। तथाच मत्स्यपुराणे। 'पौरुषं दैवसम्पत्त्या काले फलति पार्थिव। त्रयमेतन्मनुष्याणां पिण्डितं स्यात् फलावहम्। कृषेर्वृष्टिसमायोगाद् दृश्यन्ते फलसिद्धयः। तास्तु काले प्रदृश्यन्ते नैवाकाले कथञ्चन' पौरुषं पुरुषसाध्य ऐहिकक्रियाष्टन्दं दैवं सुखाद्युत्पादनोन्मुखीभूतादृष्टं पूर्व्वजन्मना कृतं तथाच याज्ञवल्क्यः। 'तत्र दैवमभिव्यक्तं पौरुषं पूर्व्वदैहिकम्'। अभिव्यक्तं फलोन्मुखीभूतं काले तत्तत् काले तत्कार्य्यजननोन्मुखीभूते अतएव सर्व्वैर्निबन्धृभिर्बाधकं विना एकस्मात् प्रायश्चित्तात् नानापापध्वंस इत्युक्तम्। तथा वृषोत्सर्गजलाशयोत्सर्गदुर्गापूजा तन्माहात्म्यपाठगङ्गास्नानादिषु एकशास्त्रोक्तमिलितफलवाचकपदयुक्तानि सङ्कल्पवाक्यान्युक्तानि तथाच भवदेवभट्टाः। 'एकस्मै वा कामायान्ये यज्ञक्रतव आक्रियन्ते' इति संकीर्त्त्य सर्व्वेभ्यो दर्शपौर्णमासाविति प्रयोगभेदविधानाद् भवतु तत्र पृथगनुष्ठानसाध्यत्वं ब्रह्मवधप्रायश्चित्ते तथाभूतं पृथगनुष्ठानसाध्यत्वप्रतिपादकवचनाभावात् अनेकफलानाञ्च तन्त्रेण दशहरान्यायेन एककामनाविषयत्वसम्भवात् तन्त्रत्वमित्याहुः हरिनाथोपाध्यायास्तु वृषोत्सर्गफलान्युद्दिश्य एतानि च अर्थवादिकफलानि समुच्चितान्येव कामनाविषयः पुरुषविशेषणत्वस्य कल्पत्वात्

तत्राच मिलितानामेककामनाविषयत्वकल्पना अग्नीषोमयोरिव देवतात्वे लाघवन्यायस्य विशिष्टत्वादित्याहुः। अथवा यत्र तारा क्षीरधौयीत तस्य पितरो घृतकुल्याः मधुकुल्याः वा चरन्ते इत्यत्रापि वैकल्पिकान्वयोपगमे जातेष्टिनयभङ्गप्रसङ्गात् लाघवाद्दिकल्पेऽष्टदोषाच्च एकस्य कार्य्यस्य नियोज्याकाङ्क्षायां सकलार्थवादोपस्थितफलकाम एक एव नियोज्यः स्त्रीकृतस्तथाचापीति। अथानुत्पन्नब्रह्महत्यादिपतिकायाः स्तत्पूतत्वरूपफलबाधात् तत्तत्कामनाविरहेण अनधिकारः स्यादिति चेत् उक्तयुक्त्या समुच्चितफलसिद्धेरनन्यथासिद्धार्थवादबलेन सन्दिग्धपापध्वंसकामनाया एवाधिकारो मङ्गलवत्। सति जन्मान्तरीये तादृशपातके, संसर्गादिकृते वा तद्ध्वंसोऽपि जायते असति तु न तथाप्रतियोगिरूपसहकारिविरहात् निर्विघ्नस्य कृतमङ्गलवत्। महादाननिर्णयोऽप्येवम्। एवं दशहरादावपि अतएव विश्वामित्रेण पापसन्देहेऽपि प्रायश्चित्तमुक्तं यथा 'कृच्छ्रचान्द्रायणादीनि शुद्ध्यभ्युदयकारकम्। प्रकाशे वा रहस्ये वा संशयेऽनुक्तकेऽस्फुटे'। अनुक्तकेऽतिपातकाद्यष्टान्यतमत्वेन विशेषतोऽनुक्तके प्रकीर्णक इति यावत् अस्फुटे अज्ञाते। वस्तुतस्तु मिलितफलदानयोग्यानामपि श्राद्धादिकर्मणां प्रत्येकफलसम्पादकत्वं तथाहि अथेतमाहुः 'श्राद्धशब्दं कर्म प्रोवाच प्रजानिःश्रेयसार्थम्' इति आपस्तम्बोक्तादिविशिष्टफलार्थिनः केवलरागिणः केवलमुमुक्षोरपि प्रत्येकफलसिद्धिः साङ्गाहि वैदिककर्मणा इष्टसम्पादकत्वनियमात्। तथाच मार्कण्डेयपुराणं 'पितृगणस्थे दिवि ये च मूर्त्ताः स्वधाभुजः काम्यफलाभिसन्धौ। प्रदानशक्ताः सकलेप्सितानां विमुक्तिदा येऽनभिसंहितेषु'। अनभिसंहितेषु काम्यफलेषु इति शेषः। अतएव अद्वयमेकत्वमाहुः-

पुष्टिकामो वेति समस्तपदोपात्तानामपि प्रत्येकफलकामना-सम्बन्ध इति भूपालः। एवञ्च 'ऋग्भ्यां द्वाभ्यां तिलव्रीहि-गोधूमयवकल्पितम्। हविः प्रजुहुयात्तच्च वासरेष्वेकविंशती' इति बौधायनवचने तिलादीनां सति सम्भवे समुच्चयः असति विकल्प इति कर्म्मविपाके विश्वेश्वरभट्टाः। एवञ्च समाधिना त्यक्तदेहस्य मुक्तस्य धृतराष्ट्रस्य पर्णोटजाग्निना देहदाहकाले तत्पत्न्या गान्धार्य्या अग्निप्रवेशदर्शनादिदानीं काश्यादिमृतस्य मुक्तस्यापि पत्युस्तत्पत्न्याः सहमरणं सङ्गच्छते। श्रीभागवते तदुक्तम्। 'दह्यमानेऽग्निभिर्देहे पत्युः पत्नी सहोटजे। बहिःस्थिता पतिं साध्वी तमग्निमनुवेक्ष्यति'। अनुवेक्ष्यति अग्निप्रवेशनं करिष्यतीति युधिष्ठिराय नारदस्य भविष्यत् कथनम्। 'दयितं यान्यदेशस्थं मृतं श्रुत्वा पतिव्रता। समारोहति शीघ्राग्नौ तस्याः सिद्धिं निबोधत' इति व्यासवचनादिना सहमरणानुमरणयोनिरवकाशनैमित्तिककाम्यत्वेन मलमासादावपि कर्त्तव्यता 'नैमित्तिकानि काम्यानि निपतन्ति यथायथा। तथातथैव कार्य्याणि न कालस्तु विधीयते' इति दक्षवचनात्।

तदयं प्रयोगः। पुत्रादिना स्वगृह्योक्तविधिना अग्नौ दत्ते ज्वलितायां भर्त्तृचितायां सहगन्त्री साध्वी स्नाता परिहितधौतवासोयुगा कुशहस्ता प्राङ्मुखी उदङ्मुखी वा दैवतीर्थेनाचान्ता तिलजलकुशत्रयमादाय ओम् तत्सदिति ब्राह्मणेनोच्चारिते नारायणं संस्मृत्य नमोऽद्य अमुके मासि अमुके पक्षेऽमुकतिथौ अमुकगोत्रा श्रीमती अमुकी देवी अरुन्धतीसमाचारत्वपूर्वकस्वर्गलोकमहीयमानत्वमानवाधिकरणक-लोमसमसंख्याब्दावच्छिन्नस्वर्गवासभर्त्तृसहितमोदमानत्वमातृ-पितृश्वशुरकुलत्रयपूतत्वचतुर्दशेन्द्रावच्छिन्नकालाधिकरणकाप-

रोगवत्सूयमानत्वपतिसहितक्रीडमानत्व-ब्रह्मघ्न-कृतघ्न-मित्रघ्न-पतिपूतत्वकामा भर्त्तृज्वलच्चितारोहणमहं करिष्ये इति अनुमरणे तु भर्त्तृज्वलच्चितारोहणमित्यत्र ज्वलच्चिताप्रवेशेन भर्त्रनुमरणमिति सङ्कल्प्य अष्टौ लोकपाला आदित्यचन्द्रानिलाग्न्याकाशभूमिजलहृदयावस्थितान्तर्यामि-पुरुषयमदिनरात्रिसन्ध्याधर्मा यूयं साक्षिणो भवत ज्वलच्चितारोहणेन भर्त्तृशरीरानुगमनमहं करोमीति अनुमरणे तु भर्त्तृशरीरानुगमनमित्यत्र भर्त्रनुमरणमित्युच्चार्य्य ज्वलच्चिताग्निं त्रिःप्रदक्षिणीकृत्य ओम् इमा नारी रविधवाः सपत्नीराञ्जनेन सर्पिषा संविशन्तु अनस्वरोऽनमीरा सुरत्ना आरोहन्तु जलयोनिमग्ने इति ऋग्वेदोक्तमन्त्रे 'ओम् इमाः पतिव्रताः पुण्याः स्त्रियो याया: सुशोभनाः। सह भर्त्तृशरीरेण संविशन्तु विभावसुम्' इति पौराणिके मन्त्रे च ब्राह्मणेन पठिते नमो नम इत्युच्चार्य्य ज्वलच्चितां समारोहेत्। आपस्तम्बः। 'चितिभ्रष्टा तु या नारी मोहाद्विचलिता भवेत्। प्राजापत्येन शुध्येत्तु तस्माद्धि पापकर्मणः'। पापात्मनिर्णयामृते स्मृतिः। एकचित्यां समारूढौ दम्पती निधनङ्गतौ। पृथक्श्राद्धं तयोः कुर्य्यादोदनन्तु पृथक् पृथक्'। विद्याकरधृता स्मृतिः। एकाहेन मृतानान्तु बहूनामथवा द्वयोः। तन्त्रेण श्रपणं कृत्वा पृथक् श्राद्धं प्रवर्त्तयेत्'। यत्तु 'यदा नारी विशेदग्निं स्वेच्छया पतिना सह। अशौचमुदकं तस्याः सह भर्त्रेति निश्चितम्। तिथ्यन्तरमृतायास्तु पृथक् श्राद्धं न विद्यते'। इति चतुर्भुजभट्टाचार्य्यधृतवचनाद्भिन्नतिथिमृताया अपि पत्युस्तत्तिथौ श्राद्धमिति हरिदासतर्काचार्य्याः तन्न अस्य वचनस्यामूलत्वात् समूलत्वेऽपि श्राद्धपदं पिण्डपरम्। एकोद्दिष्टं मृताहनीति यमवचनविरोधात्।

अथाशौचसङ्करः। मनुः 'अन्तर्दशाहे स्यातान्चेत् पुनर्मरणजन्मनी। तावत् स्यादशुचिर्विप्रो यावत्तत् स्यादनिर्दशम्' इत्यनेन परजातस्य पूर्वजाताशौचसमानकालीनाशौचस्य सङ्कोचं विना शुद्धेरजन्यत्वात् पूर्वाशौचकालेन पराशौचकालस्य सङ्कोचोऽस्तु स्वल्पकालीनाशौचस्य तु हानिं विनापि पूर्वाशौचस्थितेरशुद्धिर्भविष्यतीति तत्र कथं सपमरणे हानिरुक्ता इति चेन्न शङ्खेन तथोक्तत्वात् यथा 'समानाशौचं प्रथमे प्रथमेन समापयेत्। असमानं द्वितीयेन धर्मराजवचो यथा'। प्रथमार्द्धपतितं सजातीयाशौचं प्रथमेन समापयेत् अत्र प्रथमार्द्धपतितत्वेन विशेषोऽवहृद्धिमदाशौचविषयः। अघवृद्धिमदाशौचमूर्द्ध्वं चेत्तेन शुद्ध्यति। अथ चेत् पञ्चमीं रात्रिमतीत्य परतो भवेत्। अघवृद्धिमदाशौचं तदा पूर्वेण शुद्ध्यति' इति कूर्मपुराणवचनात् एकस्मादशौचजन्मन ऊर्द्ध्वं परतः इत्यवच्छाद्ये व्यवहार इति न्यायात् तेनाशौचकालमध्ये अन्यदघवृद्धिमदाशौचं तदा तेनाघवृद्धिमता द्वितीयेन शुद्धिः। अस्यापवादमाह। अथ चेदिति परतोऽशौचकालावधेः प्रातिलोम्येन पञ्चमीं रात्रिमतिक्रम्य यदि भवति पूर्वाशौचप्रथमार्द्ध इति यावत्तदा प्रथमेन शुद्धिरिति शङ्खवचनैकवाक्यत्वात् अन्यथा क्रमिकापरत्वस्यातीत्येत्यनेन लब्धत्वात् परत इत्यस्यानर्थक्यापत्तेः अघवृद्धिमत्त्वन्तु सपिण्डजननाशौचापेक्षया स्वपुत्रजननाशौचस्य सपिण्डमरणापेक्षया पितृमातृभर्तृमरणाशौचस्य च यतः स्वपुत्रजनने स्नानात् पूर्वमङ्गास्पृश्यत्वमन्यत्र न तथा। मातृपितृभर्तॄणां महागुरुत्वात्तेषां मरणे द्वादशरात्रमक्षारलवणाशनं सपिण्डमरणे त्रिरात्रं यथा कूर्मपुराणं 'सूतके तु सपिण्डानां संस्पर्शो नैव दुष्यति। सूतकं सूतिकाञ्चैव वर्जयित्वा नृणां पुनः'। सूतकं पितरं नृणां

संस्पर्शकर्तॄणाम्। संवर्त्तः। 'जाते पुत्रे पितुः स्नानं सचेलन्तु विधीयते। माता शुद्ध्येद्दशाहेन स्नानात्तु स्पर्शनं पितुः'। शुद्धेरत् स्पर्शमात्रे उत्तरवाक्ये तथा दर्शनात्। सपिण्डमरणं प्रकृत्याश्वलायनः। 'त्रिरात्रमक्षारलवणाश्विनः स्युर्द्दादशरात्रं महागुरुष्विति'। महागुरूनाह विष्णुः। 'त्रयः पुरुषस्य महागुरवो भवन्ति पितामाताचार्य्यश्चेति' आचार्य्यश्च 'उपनीय ददद्वेदमाचार्य्यः स उदाहृतः' इति याज्ञवल्क्योक्तः। तन्मरणे त्रिरात्राशौचित्वेन नैतादृङ्नियमः। पत्युर्म्महागुरुत्वमाह रामायणे सीतां प्रति अनसूयावाक्यम्। 'नातो विशिष्टं पश्यामि बान्धवं वै कुलस्त्रियाः। पतिर्बन्धुर्गतिर्भर्त्ता दैवतं गुरुरेव च'। शातातपः। 'गुरुरग्निर्द्विजातीनां वर्णानां ब्राह्मणो गुरुः। पतिरेको गुरुःस्त्रीणां सर्वत्राभ्यागतो गुरुः' इति अत्रैकपदेन दत्तस्त्रीणां पितृमातृव्यावृत्तिः। अत्राशौचस्याघवृद्धिमद्विशेषणेन तद्रहितेऽपि अशौचमात्रे पूर्वापरार्द्धपतितत्वेन व्यवस्था मैथिलोक्ता ज्ञेया। अतएव नवमदिनाभ्यन्तरपातिनि तुल्याशौचे तु प्रथमेन समापनं बौधायनोक्तम्। यथा 'अथ चेद्दश रात्राः सन्निपतेयुराद्यं दशरात्रमानवमाद्दिवसात्'। दशरात्रा इति 'शुद्ध्येद्विप्रो दशाहेन द्वादशाहेन भूमिपः। वैश्यः पञ्चदशाहेन शूद्रो मासेन शुद्ध्यति' इति मनूक्तस्वस्वजात्युक्ताशौचपरम्। आनवमादिति च तत्तदुपान्त्यदिनपरम् एवं पञ्चमीं रात्रिमित्यपि स्वस्वजात्युक्ताशौचार्द्धपरं 'समानाशौचं प्रथमे प्रथमेन समापयेत्' इत्येकवाक्यत्वात्। अत्राद्यं दशरात्रमित्याद्यपदमेकपरं तथाच पूर्वाशौचपूर्वार्द्धे समानाशौचपाते पूर्वेण उपान्त्यदिनाभ्यन्तरे चेत् तदा परेण अन्त्यदिने महागुरुनिपातेऽपि दिनद्वयादिवृद्धिरिति मिश्राःतन्न आद्यपदस्यैकार्थत्वे प्रथमा-

पत्तेः 'अन्तर्दशाहे स्यातांचेत् पुनर्मरणजन्मनी' इति जननाशौचमध्य इति 'अथ चेद्दशरात्राः सन्निपतेयुः' इति समानं लघुचाशौचमित्यादिमनुविष्णुबौधायनलघुहारीतवचनानामेकवाक्यतया उपान्त्यदिनमध्ये अशौचान्तरपाते पूर्वेणैव शुद्धिः। अन्यथा अघवृद्धिमदाशौचमित्यादिवचने अघवृद्धिपदस्यानर्थक्याच्च। असमानमिति असमानं पूर्वजातं जननाशौचं द्वितीयेन मरणाशौचकालेन समापयेत्। 'सूतके मृतकं चेत् स्यान्मृतके सूतकं तथा। मृतेन सूतकं गच्छेन्नेतरत् सूतकेन तु' इति लघुहारीतवचनैकवाक्यत्वात्। एवञ्च यदि जननस्य परभाविनापि मरणेन समापनं तदा स्वल्पकालीनस्यापि पूर्वभाविना दीर्घेण सुतरां समापनम्। शङ्खवचनस्य समानं लघुचाशौचमिति पारिजातपाठे सुतरां तथैवार्थः। विष्णुः। 'जननाशौचमध्ये तु यद्यपरं जननं स्यात्तदा पूर्वाशौचव्यपगमे शुद्धिः। रात्रिशेषे दिनद्वयेन प्रभाते दिनत्रयेण मरणाशौचमध्ये ज्ञातिमरणेऽप्येवमिति'। रात्रिशेष इति पुंनपुंसकयोः शेष इत्यमरोक्तेः शेषशब्दस्यास्त्रीलिङ्गत्वात् स्त्रीलिङ्गविशेषणत्वेऽपि न स्त्रीलिङ्गत्वम्। तेन रात्रिःशेषोऽवशिष्टो यत्र तत्राशौचान्त्यदिने इत्यर्थः। अहःशेषे द्विरात्रकमित्यनेनानवमाद्दिवसादित्यनेन चैकवाक्यत्वात्। प्रभाते तद्दिवसीयोत्तरप्रभातेऽरुणोदयात्प्रभृति सूर्य्योदयप्राक्काले। 'प्रभातायाञ्च शर्वर्य्यां भास्करेऽनुदिते तथा' इति विष्णुधर्मोत्तरवचनात्। उदयमाह गृह्यसंग्रहे। 'रेखामात्रञ्च दृश्येत रश्मिभिश्च समन्वितम्। उदयं तं विजानीयाद्धोमं कुर्य्याद्विचक्षणः'। अत्र सर्वैर्निबन्धृभिर्दशमदिनादधिकेन दिनद्वयेनेति व्याख्यानाद्दिनद्वयेन पूर्वाशौचस्यापि समापनम्। अन्यथा दशाशौचसमापकत्वे सनिमित्तमध्येव दिनद्वयं स्यान्न च

विध्यनुवादवैषम्यभिया नान्यदिनपरिग्रह इति वाच्यं दिन-द्वयस्य पराशौचमात्रकालत्वेन प्रागप्राप्तत्वेन दशमदिनस्यानु-वादानुपपत्तेः। किन्तु पूर्वाशौचस्यान्त्यदिनमादाय दिनद्वया-शौचाभिधाने अन्त्यदिनस्य पूर्वाशौचकालत्वेन प्राप्तत्वात् तदंशेऽनुवादकत्वम् अपरदिनस्य च अप्राप्तत्वात्तदंशे विधित्व-मिति विध्यनुवादवैषम्यादधिकेन व्याख्यानं सङ्गच्छते। न च पूर्वाशौचव्यपगमे दिनद्वयेनेति व्याख्यानान्न तथात्वमिति वाच्यं तथा मरणाशौचदशमदिने मृतस्य तद्दिने पिण्डोदक-दानं न स्यात्तस्य स्वाशौचविधानात्। विष्णुः 'यावदशौचं तावत् प्रेतोदकं पिण्डमेकञ्च दद्युः' इति पूर्वाशौचव्यपगमे इत्यस्यानुषङ्गकल्पने प्रमाणाभावाच्च। 'मरणादेव कर्त्तव्यं संयोगो यस्य नाग्निना। दाहादूर्द्धमशौचं स्याद् यस्य वैतानिको विधिः'। इति शङ्खोक्तस्य निमित्तीभूतमरणसत्त्वे मरणादिनिश्चयात् नैमित्तिकाशौचस्यावश्यं भावस्य बाधा-पत्तेश्च। वैतानिकः श्रौतोहोमः अग्निपदं तदग्निपरं तेन निरग्नेः स्मार्त्ताग्नेश्च मरणादेवाशौचम्। तस्माद्दशमदिन-जातं परनिमित्त स्वातन्त्र्येवाशौचजनकं दिनद्वयेनेति पूर्वाशौचं वर्द्धयेत् पराशौचस्य क्षामकं वाच्यं 'अन्तर्दशाहे स्यातां चेत् पुनर्मरणजन्मनी। तावत् स्यादशुचिर्विप्रो यावत्तत्स्यादनिर्द-शम्' इति मनुना पराशौचस्य पूर्वाशौचकालावधिस्थायित्वेन नियमितत्वात्। रात्रिशेषे दिनद्वयेनेत्यनेन पूर्वाशौचस्या-धिकदिनद्वयावस्थानं वाच्यम् अन्यथा यावत्तत्स्यादनिर्दश-मित्यनेन विरोधः स्यात्। अथवा यावत्तत्स्यादनिर्दशमिति समानं लघुचाशौचं पूर्वेणैव विशुध्यति इति रात्रिशेषे दिन-द्वयेनेति वचनानामेकवाक्यतया पूर्वाशौचस्याधिकदिनद्वयाव-स्थानं वाच्यम् अन्यथा कल्पनागौरवं स्यात् प्रथमोत्पन्न-

निमित्तजनितपापाभिव्याप्तकालाभ्यन्तरे द्वितीयनिमित्तोत्पत्तौ प्रथमपापमेवाभिवर्द्धते आद्यपापद्वितीयपापनिमित्ताभ्याम-घान्तरजननं वा उभयथापि द्वयोरधिकारिणोस्तदत्यय-काल एव अशौचान्तकाल इति मिश्राः। अतएव पूर्वा-शौचान्तदिनकृत्यमपि द्वादशदिने क्रियते। तत्करणादेव च शुद्धिः तथाच आदिपुराणे 'यस्य यस्य तु वर्णस्य यद्यत् स्यात् पश्चिमं त्वहः। स तत्र वस्त्रशुद्धिञ्च गृहशुद्धिं करोत्यपि। समाप्य दशमं पिण्डं यथाशास्त्रमुदाहृतम्। ग्रामाद्बहिस्ततो गत्वा प्रेतस्पृष्टे च वाससी। अन्त्यानामाश्रितानाञ्च त्यक्त्वा स्नानं करोत्यपि। श्मश्रुलोमनखानाञ्च यत्त्याज्यं तज्जहा-त्यपि। गौरसर्षपकल्केन तिलतैलेन संयुतः। शिरःस्नानं ततः कृत्वा तोयेनाचम्य वाग्यतः। वासो युगं नवं शुभ्र-मव्रणं शुद्धमेव च। गृहीत्वा गां सुवर्णञ्च मङ्गलानि शुभानि च। स्पृष्ट्वा संकीर्त्तयित्वा तु पश्चाच्छुद्धो भवेन्नरः'। पश्चिमं त्वहः अशौचान्तिमदिनं गृहशुद्धिं प्राक्तनपाकभाण्डत्याग उपलेपनादिना त्याज्यं त्यागार्हं यत् सदा त्याज्यं तत् इत्यर्थः। यथा मिताक्षरायां 'मुण्डयेत् सर्वगात्राणि कक्ष-वक्षःशिखावर्ज्जिः'। क्रममाह वराहपुराणम्। 'श्मश्रुकर्म कारयित्वा नखच्छेदमनन्तरम्'। गोभिलः 'केशश्मश्रुलोम-नखानि वापयीत शिखावर्जम्'। अशौचाधिकारे आप-स्तम्बः। 'अनुभाविनाञ्च परिवापनम्' इति अनुपश्चाद् भव-न्तीति अनुभाविनः कनिष्ठास्तेषामेव पुरुषाणां वापनमिति रत्नाकरादयः। तत्र श्रीपतिरत्नमालायां जननाशौचे मुण्डन-विधानात्। तथा 'आज्ञया नरपतेर्द्विजन्मनां दारकर्मसृत-सूतकेषु च। बन्धमोक्षमखदीक्षणेष्वपि चौरमिष्टमखिलेषु चोडुषु'। तस्मादनुभाविनां स्वाशौचमनुभवतां 'कृतकेशनख-

श्मश्रुदीप्त:शुक्लाम्बर: शुचि:' इति मनूक्तप्राप्तमुण्डनानां समा-
वृत्तानामपि सर्वाशौचे मुण्डनम्। यत् पुनरापस्तम्ब:। 'न
समावृत्तावपेयुरन्यत्र वीहारादित्येके। अथापि ब्राह्मणम् एव
रिक्तो वाऽनपिहितस्तस्यैव तदेव पिधानं यच्छिखेति'। केचि-
दाचार्य्या मन्यन्ते वीहारात् दर्शपौर्णमासाङ्गयागविशेषाद-
न्यत्र समावृत्ता गृहस्था न वपेयु:। अत्र प्रमाणं तथापीति
ब्राह्मणं मन्त्रेतरवेदभाग इति माधवाचार्य्या: एष गृहस्थ: अन-
पिहित आवरणशून्य: सन् रिक्तस्तुच्छो भवतीत्यर्थ: यस्य
यच्छिखा तदेव पिधानं तेन वीहारादिकं विना न गृहस्थ:
शिरो मुण्डयेदित्येकेषां मतमिति तत् काम्यपरम्। यथा
दानधर्मे 'केशश्मश्रुधारयतामग्र्या भवति सन्तति:'। एवं
केशश्मश्रुधारिणामशौचे पितृमातृमरण एव मुण्डनम्। तथा
विष्णु:। 'प्रयागे तीर्थयात्रायां पितृमातृवियोगत:। कचानां
वपनं कार्य्यं वृथा न विकचो भवेत्' इति। अतएव आदिपुराणे
यच्छान्यमुक्तम्। मङ्गलान्यादर्शघृतप्रदीपप्रभृतीनि शुभानि
दोषरहितानि। पिण्डदानमन्त्यजेभ्यो वासो दानञ्चाद्य-
क्रियाधिकारिण:। अन्यत् सर्वमशौचिमात्रस्य परदिनेऽपि
स्नानादिगवादिस्पर्शब्राह्मणस्वस्तिवाचनैर्विनाप्यशौचस्थिति:।
तथाच देवल:। 'अघाहःसु निवृत्तेषु सुस्नाता: कृतमङ्गला:।
आशुच्याद्विप्रमुच्यन्ते ब्राह्मणान् स्वस्ति वाच्य च'। अस्य
वक्ष्यमाणव्याख्यानात् सर्वं स्फुटीभविष्यति। मङ्गलान्याह
देवल:। 'लोकेऽस्मिन् मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशन:।
हिरण्यं सर्पिरादित्य आपो राजा तथाष्टम:। एतानि सततं
पश्येन्नमस्येदर्चयेत्तु य:। प्रदक्षिणन्तु कुर्वीत तस्य चायुर्न
हीयते'। अभिप्रेतार्थसिद्धिर्मङ्गलं तद्धेतुतया ब्राह्मणाद्यपि।
गोप्रणामे ब्रह्मपुराणम्। 'सदा गाव: प्रणम्यास्तु मन्त्रेणानेन

पार्थिव। नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च। नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः। मन्त्रस्य स्मरणादेव गोदानफलमाप्नुयात्'। भविष्ये। गामालभ्य नमस्कृत्य कृत्वा चैव प्रदक्षिणम्। प्रदक्षिणी कृता तेन सप्तद्वीपा वसुन्धरा। गवामस्थि न लङ्घेत मृते गन्धं न वर्जयेत्। यावदाघ्राति तद्गन्धं तावद्गन्धेन शुध्यते'। विष्णुः। 'गोमूत्रं गोमयं क्षीरं सर्पिर्दधि च रोचना। षडङ्गमेतन्माङ्गल्यं पवित्रं सर्वदा गवाम्'। षडङ्गं षट्प्रकारकम्। अत्र वैदिककर्मानर्हत्वप्रयोजकसंस्कारविशेषरूपमशौचं वैदिककर्मार्हत्वप्रयोजकसंस्काररूपं शौचम्। न च अशौचाभाव एव शुद्धिर्न संस्कारविशेष इति वाच्यम् अघानां यौगपद्ये त्विति न वर्द्धयेदघाहानि इत्येताभ्यामशौचे पापपर्यायाघपदप्रदर्शनात् अशौचपदस्य यथाभावरूपत्वं तथा। 'देवाश्च पितरश्चैव पुत्रे जाते द्विजन्मनाम्। आयान्ति तस्मात्तदहः पुण्यं पूज्यञ्च सर्वदा'। इत्यादित्यपुराणीयेन शौचे पुण्यपदप्रदर्शनात् शौचस्यापि भावरूपता प्रतीयते। तदहरित्यविच्छिन्ननाड़ीपर्य्यन्तपरम्। तथाच दानदर्पणे वराहपुराणं 'यावत् कालं सुते जाते न नाड़ी छिद्यते पुनः। चन्द्रसूर्य्योपरागेण तमाहुः समयं समम्'। कृत्यचिन्तामणौ देवलः 'जाते पुत्रे पिता श्रुत्वा सचेलं स्नानमाचरेत्। ब्राह्मणेभ्यो यथाशक्ति दत्त्वा बालं विलोकयेत्'। एतेन 'सूतके तु मुखं दृष्ट्वा जातस्य जनकस्ततः। कृत्वा सचेलं स्नानन्तु शुद्धो भवति तत्क्षणात्। अन्यथा मातरस्तस्य तद्गेहं न व्रजन्ति चेत्'। इति आदिपुराणवचने मुखं दृष्ट्वेति विशेषणात् पुत्रजन्मनि पितुर्यत् स्नानमुक्तं तन्मुखदर्शनानन्तरमेवेति हारलतोक्तं हेयम्। एवं विदेशस्थस्य पितुः पुत्रजन्मश्रवणे तन्मुखदर्शनावधि अस्नातत्वं स्यात् किन्तु आदि-

पुरार्थं मुखादर्शनानन्तरं पुनः स्नानार्थम्। अथाव्याख्येति चकारेण मुता इति प्राप्तौ तद्वदिति पितृतुल्यतार्थं तेन यथा पितुः स्नानादस्पृश्यतानिवृत्तिः सूतिकास्पर्शे तत्समानकाला-स्पृश्यत्वञ्च। 'मातुरेव सूतकं तां स्पृशतः पितुर्नेतरेषाम्' इति सुमन्तुवचनादत्र सूतकमस्पृश्यत्वं तथा सूतिकासपत्नीनां शेषम् अतस्तद्गृहगमनं तत् स्पर्शोपलक्षणम्। तासु मातृ-पदप्रयोगोऽप्येतदर्थक इति अत्र मातुरेवेत्येवकारेणान्येषां बालकादीनां स्पृश्यता यदा प्रतीयते। ततश्च अत ऊर्द्ध्वमस्र-मासवनमादशरात्रादिति गोभिलसूत्रेण नाड़ीच्छेदात् परतो मातुरङ्गस्पर्शाभावो दशरात्रावधि प्रतीयत इति तेन 'माता शुध्येद्दशाहेन स्नानात्तु स्पर्शनं पितुः' इत्यनेन प्राप्तस्य मातु-रङ्गास्पृश्यत्वस्य नाड़ीच्छेदोत्तरत्वमप्राप्तं विधीयते लाघवा-दन्यथा अश्रुतकल्पनापत्तिः स्यादेवञ्च नाड़ीच्छेदात् प्राङ्मातुः स्पर्शे दोषाभावः। एवमेव भट्टनारायणचरणाः। गर्गः। 'श्रुत्वा पुत्रस्य वै जन्म कृत्वा वेदोदिताः क्रियाः। अच्छिन्ननालं पश्येत्तं दत्त्वा रत्नं फलान्वित' रागप्राप्तदर्शनेऽपि 'पुन्नाम्नो नर-काद् यस्मात् त्रायते पितरं सुतः। मुखसन्दर्शनेनापि तदुत्पत्तौ यतेत सः'। इति तदुत्पन्ननरकनिस्तारार्थ 'ऋणमस्मिन् सन्नयति अमृतत्वञ्च विन्दति पिता पुत्रस्य जातस्य पश्येच्च जीवतो मुखम्' इति वशिष्ठोक्त ऋणापनयनाय च यत् पश्ये-दिति नियमविधानं तदकृतपुत्रकार्य्यपुत्रपरं सत्पुत्रस्तु मुख-दर्शनं विनापि नरकनिस्तारकः। तथाच विष्णुपुराणम्। 'सत्पुत्रेण तु जातेन वेणोऽपि त्रिदिवं ययौ। पुन्नाम्नो नरकात् त्रातः स तेन सुमहात्मना'। तेन सुपुत्रेण सुतवेवदविवक्ष्य-माणजातेन पृथुना। ब्रह्मपुराणेऽपि 'समुत्पन्नेन भो विप्राः पुत्रेणैव महात्मना। त्रातः स पुत्रपन्नामः पुन्नाम्नो नरका-

सदा'। पिण्डदातृत्वमात्रेण पितुरानृण्यमाहुः शङ्खलिखित-पैठीनसयः। 'यत्र क्वचन जातेन पिता पुत्रेण नन्दति। तेन च अनृणतां याति पितॄणां पिण्डदेन वै'। विष्णुधर्मोत्तरेऽपि 'देवानाञ्च पितॄणाञ्च ऋषीणाञ्च तथा नरः। ऋणवान् जायते यस्मात्तस्मात् मोक्षे यतेत् सदा। देवानामनृणो जन्तुर्यज्ञैर्भवति नारद। अल्पवित्तश्च पूजाभिरुपवासव्रतै-स्तथा। श्राद्धेन प्रजया चैव पितॄणामनृणो भवेत्। ऋषीणां ब्रह्मचर्य्येण श्रुतेन तपसा तथा'। पुन्नाम्नो नरकाद् यस्मा-दित्यादिकन्तु पुत्रोत्पत्तिस्तावकम्। न च तद्रूपस्य पुत्रत्वा-भावपरम्। दशास्यां पुत्रानाधेहीति श्रुतौ बहवः स्युर्यदा पुत्रा इत्यादि स्मृतौ च औरसमात्रे पुत्रपदप्रयोगविधानात्। अन्यथा 'श्रुतिस्मृतिविरोधे तु श्रुतिरेव गरीयसी। अविरोधे सदा कार्य्यं स्मार्त्तं वैदिकवत् सदा' इति जावालोक्तं श्रुतेर्बल-वत्त्वं बाध्येत। क्षेत्रजातादौ तु पुत्रपदं गौणमेव। 'क्षेत्र-जादीन् सुतानेतानेकादश यथोदितान्। पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः' इति मनूक्तेः कनकं बालकेनापि धार-णीयं सर्वरत्नपवित्रदेवात्मकत्वात्तथाच रामायणे महाभारते च परशुरामं प्रति वशिष्ठवाक्यं 'सर्वरत्नानि निर्मथ्य तेजोराशि-समुत्थितम्। सुवर्णमेभ्यो विप्रेन्द्र रत्नं परममुत्तमम्। एत-स्मात् कारणाद्देवगन्धर्वोरगराक्षसाः। मनुष्याश्च पिशाचाश्च प्रयता धारयन्ति तत्'। तथा 'तस्मात् सर्वपवित्रेभ्यः पवित्रं परमं स्मृतम्'। तथा 'अग्निर्वै सकला देवाः सुवर्णञ्च तदा-त्मकम्। तस्मात् सुवर्णं ददता दत्ताः स्युः सर्वदेवताः'। तस्मात्तत् पादादौ न धार्य्यं देवतात्मकत्वादिति प्रसङ्गादुक्तम्। विष्णुधर्मोत्तरे। 'सूतिकावासनिलया जन्मदानाम देवताः। तासां यागनिमित्तार्थं शुद्धिर्जन्मनि कीर्त्तिता। षष्ठेऽह्नि

त्रियागन्तु अन्नदानाच्च कारयेत्'। अत्र यागनिमित्तार्थमित्युपादानात् तत्कर्मण्येव शुद्धिर्नान्यस्मिन्। अत्र कारयेदित्यन्यगोत्रजाभिप्रायेण तात्कालिक शुद्धौ पुत्रजन्मेति श्रुतेः। तथान्याशौचमध्येऽपि जातकर्मषष्ठीपूजे कर्त्तव्ये तथाच मिताक्षरायां परिशेषखण्डे प्रजापतिः। 'अशौचे तु समुत्पन्ने पुत्रजन्म यदा भवेत्। कर्त्तुस्तात्कालिकी शुद्धिः पूर्वाशौचाद्विशुद्ध्यति'। अत्र पुत्रजन्मेति श्रुतेः शूद्रस्याप्यधिकारः। एवं षष्ठदिनकृत्येऽपि पुत्ररक्षायाः कर्त्तव्यत्वादतः प्रागुक्तादित्यपुराणे द्विजन्मनामित्युपलक्षणम्। ततश्च शुद्ध्यशुद्ध्योः संस्काररूपत्वेनैकपुरुषस्यैकदोभयस्थितिर्घटते। अशुद्धेर्भावरूपत्वे शुद्धेस्तदभावरूपत्वेनैवं विरोधात्। अतएव शङ्खः 'ततः श्राद्धमशुद्धौ तु कुर्य्यादेकादशे तथा। कर्त्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव सः' अशुद्धौ चतुर्थाहादौ कथमशुद्धौ श्राद्धं कालाशौचस्याधिकारिविशेषणत्वादत आह कर्त्तुस्तात्कालिकीति श्राद्धविधानाक्षेपात्तन्मात्रनिष्ठा शुद्धिः कल्प्यते। स पुनरशुद्ध एव कर्मान्तर इति श्राद्धविवेकः। एवं शुद्धेर्भावरूपत्वे अशौचस्य तदभावरूपत्वेऽपि विरोधः। तथात्वे अशौचसङ्करोऽपि न स्यात् एकस्मिन् शुद्ध्यभावरूपे अशौचे सति अपरस्य तद्रूपस्य तदानीं तत्पुरुषीयशुद्धिरूपप्रतियोग्यन्तराभावादनुत्पत्तेः तस्मात् शुद्ध्यशुद्ध्योर्भावरूपत्वम्। यदा तु सपिण्डमरणाशौचदशमदिने अपर सपिण्डमरणे पूर्वाशौचस्य दिनद्वयवृद्ध्या एकादशद्वादशदिने वा पित्रादिमरणं तदा पूर्वाशौचद्वादशाहेन बहुकालव्यापिना गुरुणा लघुकालव्यापिनः परतराशौचस्य शुद्धिः। 'अघानां यौगपद्ये तु ज्ञेया शुद्धिर्गरीयसा' इति देवलवचनादत्र च प्रथममृतपितृकेण साधर्म्येकादशाह एव कृत्यं द्वितीयमृतपितृकेण परार्द्धपतित-

त्वेन पितृमरणावध्येकादशाह एव कृत्यं वृद्धीभूतदिनद्वयाभ्यन्तरे तृतीयमृतपितृकेण पूर्वमृतत्रयोदशाह एव कृत्यं सपिण्डमात्रेण तु पूर्वमृतत्रयोदशाह एव कृत्यं कर्त्तव्यमिति प्रथममृतपितृकेण तु एकादशाहद्वादशाहान्यतरमृतस्य तदवधि दशाहाशौचमेव कर्त्तव्यमिति। ततश्च अशौचवितयाम्लद्वितीयदिनकृत्यं शय्यादानादि अत्रापि संगच्छते। पूर्वाशौचपरार्द्धपराशौचपूर्वार्द्धमृतपितृकस्य तृतीयाशौचनिवृत्तिकाल एव शुद्धिः। पूर्वपरार्द्धमृतपितृकयोर्द्वितीयाशौचनिवृत्तिकाल एव शुद्धिः 'परतः परतः शुद्धिरपवृद्धौ विधीयते। स्याच्चेत्पञ्चतमादह्नः पूर्वेणाप्यनुशिष्यते' इत्यत्र परतः परतः इत्यवधारणार्थत्वात् अन्यथा वैयर्थ्यत्वात्। एवं पूर्वार्द्धे निमित्तान्तरपाते परार्द्धे उभयोर्ज्ञाने गुरुणः परनिमित्तस्यापि पूर्वनिमित्ताशौचकालेनैव शुद्धिः विगतन्तु विदेशस्थमिति वक्ष्यमाणवचनात्। अथ सर्वस्मृतिप्रवलमनुस्मृतौ अन्तर्दशाह इति श्रवणाद् यदि निमित्तस्य मरणादेः कालमध्ये निमित्तान्तरमुत्पद्यते तदा पूर्वनिमित्तकालमात्रमशौचम्। ततश्च कालद्वारा निमित्तयौगपद्यमेव शुद्धिप्रयोजकं न तु नैमित्तकाशौचद्वारा यौगपद्यमपि इति। इत्यञ्च पूर्वनिमित्ते ज्ञातेऽज्ञाते वा परनिमित्तं पूर्वनिमित्तकालादुपरि स्वावधिदशाहाभ्यन्तरे श्रुतमपि न अशौचं जनयति तस्य तत्कालीनाशौचं प्रति अनिमित्तत्वात् इत्यश्रुतपूर्वनिमित्तस्य तत्कालमध्यपातिद्वितीयनिमित्तश्रवणे यत्तदवध्यशौचाचरणं तद् भ्रान्त्यैवेत्याहुः तच्चिन्त्यम्। मरणादिसम्बन्धित्वेन सर्ववर्णसाधारणकालस्य बोधकाभावादशौचान्तर्भावेनैव तद्बोधनम्। अतएव मनुनैव 'न वर्द्धयेदघाहानि' इत्युक्तं ततश्च मरणादिसम्बन्धि स्वस्वाशौचाह परं दशाहपदमवश्यं वाच्यं ततश्च लाघवात्

स्वव्यापारत्वाच्चाशौचद्वारैव निमित्तानां साङ्कर्य्यं फलोपधायकं वाच्यम् अशौचरूपव्यापारानुबन्धेन प्रथमस्य मरणादेस्तदासत्त्वात्। तथाच शङ्खः। 'समानाशौचं प्रथमे प्रथमेन समापयेत्'। एतच्च अशौचसाङ्कर्य्यं वक्ष्यमाणोशनोवचने स्फुटीभविष्यति। अतएव सर्व्वैर्निबन्धृभिरथाशौचसङ्कर इति प्रतिज्ञया निर्दिश्यत इति अन्तर्दशाह इति कालोपादानन्तु तत्कालाभ्यन्तर एव अशौचसाङ्कर्य्यार्थं न तु तदनन्तरं स्नानादेः प्रागपि अशौचसाङ्कर्य्यमिति प्रतिपादनार्थम् एतदपि पश्चात् स्फुटीभविष्यति। यत्र तु पूर्व्वजातं निमित्तं पश्चाज्ज्ञातं पश्चाज्जातञ्च पूर्व्वं ज्ञातं तत्र निमित्तज्ञानजन्याशौचपौर्व्वापर्य्यमगणयित्वैवाशौचस्वरूपयोग्यनिमित्तकालपौर्व्वापर्य्यादेवाशौचव्यवहारार्थञ्चेति। ततश्च जननं मरणञ्च दशाहाद्यशौचं प्रति स्वरूपसन्निमित्तं फलोपधायकञ्च तदवधारणे अपि दातृग्रहीत्रोश्च सूतके सति चान्तरा 'अविज्ञाते न दोषः स्याच्छ्राद्धादिषु कथञ्चन। विज्ञाते भोक्तुरेव स्यात् प्रायश्चित्तादिकं क्रमात्' इति ब्रह्मपुराणात् यदा तु स्वीयमशौचं दाता न जानाति भोक्ता च जानाति तदा लोभात् भुञ्जानस्य भोक्तुः प्रायश्चित्तम् अशौचन्तु दातृतुल्यं तच्च क्रमादशौचोत्तरकालं कर्त्तव्यमित्यर्थः। एवञ्च 'श्रुत्वा देशान्तरस्थे जननमरणे अशौचशेषेण शुद्ध्येत्' इति विष्णुवचने अशौचशेषेण इत्यस्याशौचयोग्यत्वाद्दशेषेणेत्यर्थाद्दिदेशस्थाशौचस्य जातनिमित्तत्वात् स्वरूपयोग्यत्वम् अन्यथाशौचशेषेणेत्यनुपपन्नं स्यात् श्रुत्वेत्युपादानेन च तत्कालमध्ये श्रवणात् फलोपधानं ततश्च पूर्व्वनिमित्तकाले निमित्तान्तरपाते स्वरूपसत्साङ्कर्य्यं हृत्तं पूर्व्वनिमित्तकालाभ्यन्तरे उभयश्रवणे साङ्कर्य्यस्य कार्य्यं न तु पूर्व्वनिमित्तकालोत्तरश्रवणेऽपि किन्तु अश्रुतपूर्व्वनिमित्तकाले

समानं लघु वा निमित्तं जातं पूर्वनिमित्तकालादुपरि स्वकाले श्रुतमशौचं जनयत्येव अत एवम्भूतविषये यत्तदवध्यशौचा- चरणं तद्भ्रान्त्यैवेति यद्विमृष्टं तन्न शोभनं तथात्वे तु पूर्वा- शौचकालोत्तरं यत्तद्दिन पिण्डदानवृषोत्सर्गादिकृतं परकाले पूर्वजातसङ्करज्ञानेन तस्य अयथाकालकृतत्वात् कस्यचित् पुनःकरणप्रसङ्गः। कस्यचिद्वैफल्यं तत्कालीनसन्ध्याद्यकरण- निमित्तप्रायश्चित्तप्रसङ्गश्च स्यात्। देशान्तरीयाशौचनिमि- त्तान्तरशङ्कया बहुवित्तव्ययायाससाध्यवृषोत्सर्गाद्यनुष्ठानञ्च न स्यात् तस्मादविज्ञाते न दोषः स्यादित्यविशेषात् सङ्करेऽपि प्रसज्जतीति। अतएव 'शवानां यौगपद्ये तु ज्ञेया शुद्धि- र्गरीयसा' इत्यत्र लक्षणां विनापि सङ्गतिरिति। एवं शवानु- गमनप्रयुक्ताशौचयोः शूद्रदहनादिब्राह्मणपितृमरणयुक्ताशौच- योरशुच्यन्नभोजनजाशौचयोर्दशाहाद्युपरि संवत्सराभ्यन्तरे मरणश्रवणप्रयुक्ताशौचयोरपि साङ्कर्य्यं मकृच्छ्रते। अन्यथा तत्रानध्यवसायः स्यात् अतएव वाचस्पतिमिश्रेण प्रथमजनिता- घसत्त्वे परं निमित्तं जातमपि येन तदा न ज्ञातं तस्य न सङ्करः द्वितीयस्य तं प्रति तदा पण्डत्वात्। तस्य क्रमिक- प्रज्ञातमशौचद्वयमित्युक्तम्। जननमरणनिमित्तावधारणन्तु भ्रमप्रमासाधारणं छन्दोगपरिशिष्टे मृतभ्रान्त्या पर्णनरदाहे पश्चादागतस्य शान्त्यभिधानात् यथा 'एवं कृते मृतभ्रान्त्या यद्यागच्छेत् पुमान् क्वचित्। कुर्य्यादायुष्मतीमिष्टिं पुन- राधाय पावकम्'। एतच्च साग्नेर्निरग्नेस्तु सामान्यस्वस्त्ययनं हरिपूजादिकम्। अतएव विष्णुपुराणीयस्य स्यमन्तकोपा- ख्याने गद्यम्। तस्य जीवतः कथमेतावन्ति दिनानि शत्रुक्षये व्याक्षेपो भवतीति कृताध्यवसाया द्वारकामागत्य हतः कृष्णः इति कथयामासुः तद्बान्धवाश्च तत्कालोचितमखिलमुपरत-

क्रियाकलापश्चक्रुः। तत्र च अस्य युध्यमानस्यातिश्रद्धया दत्त-विशिष्टपात्रोपयुक्तान्नादिना कृष्णस्य बलप्राणपुष्टिरभूदिति। एवं स्वरूपयोग्यतामादायैव अथ चेद्दशरात्राः सन्निपतेयुराद्यं दशरात्रम् आनवमाद्दिवसादिति बौधायनीयेऽपि दशरात्र-सन्निपाताभिधानं सङ्गच्छते। अन्यथा प्रथमदिनातिरिक्ते फलोपहितदशरात्रान्तरानुपपत्तेः। न च प्रथमदिन एव तथेति वाच्यम् आनवमादित्यनुपपत्तेः आद्यं दशरात्रमित्यभि-धानस्य वैयर्थ्यं स्यादिति। एवं परजातस्य दशरात्रत्ववत् पूर्वजातस्य तन्मध्ये मरणेऽपि तदशौचस्य फलानुपहितदश-रात्रत्वेऽपि स्वरूपयोग्यतया दशरात्रत्वं तेन सहसङ्करं पर-शौचस्य पूर्वाशौचकालावधिस्थायित्वाद् यथा तत्र पूर्णपूर्व-शौचान्तदिने पूर्णाशौचनिमित्तान्तरपाते दिनद्वयादिरूप-तद्वृद्धा मध्यजाताशौचस्यापि स्थितिः तथा यत्र सपिण्डजन-नाशौचकालमध्ये सपिण्डान्तरजननं भूतं तत्र पूर्वजातस्यान्त-रामरणे पूर्वाशौचनिवृत्त्यापराशौचस्य निवृत्तिः न तु पर-जातस्य तन्मध्ये मरणेऽपि पूर्वाशौचस्य निवृत्तिः तस्य स्वाधीन-स्थायित्वात् एवमेव शुद्धितत्त्वार्णवे। यत्र दशमदिने सपिण्ड-जननान्तरं भूतं तत्र तद्दिने पूर्वजातमरणे सपिण्डानां सद्यः शौचं 'बालस्त्वन्तर्दशाहे तु प्रेतत्वं यदि गच्छति। सद्य एव विशुद्धिः स्यान्नाशौचं नैव सूतकम्' इति शङ्खोक्तेः पूर्व-जातस्य मातापित्रोस्तु स्वजात्युक्तस्वपुत्रजननाशौचकालेन शुद्धिः। जातमात्रस्य बालस्य यदि स्यान्मरणं पितुः। मातुश्च सूतकं तत् स्यात् पिता त्वस्पृश्य एव च' इति कूर्मपुराणात्। परजातस्य पितुःस्वपुत्रजननावधि पूर्णाशौचकालेन शुद्धिः परार्धपातित्वात् परजातपुत्रकन्यामातुश्च विंशत्यहमासाभ्यां शुद्धिः। सूतिकां पुत्रवतीं विंशतिरात्रेण स्नातां सर्वकर्माणि

क्षारयेत् मासेन स्त्रीजननीमिति पैठीनस्युक्त बहुकालीना-शौचत्वात् पूर्वजातकन्यामरणे तु मातृपितृसपिण्डानां सद्यः शौचम्। 'आजन्मनस्तु चूड़ान्तं यत्र कन्या विपद्यते। सद्यः शौचं भवेत्तत्र सर्ववर्णेषु नित्यशः' इति ब्रह्मपुराणोक्तेः पर-जातकन्यामरणे तु पितृसपिण्डयोर्वर्द्धितदिनद्वयसहितपूर्वा-शौचान्तादेव शुद्धिः तन्मातुस्तु मासाशौचभागितया पूर्वाशौचा-वधिस्थायित्वाभावेन सपिण्डसाधारण्याभावात् सद्यः शौचम् आजन्मनस्तु इति प्रागुक्तेः। एवञ्च असमान द्वितीयेनेति प्रागुक्तशङ्खवचने यन्मरणस्य शुद्धिहेतुत्वमुक्तं तज्जननाशौच-कालापेक्षया समानदीर्घकालव्यापकाशौचजनकत्वेन बोध्यम्। अन्यथा दीर्घकालीनाशौचस्य स्वकालशुद्धिं प्रति दीर्घकाली-नत्वरूपं गुरुत्वं बाधित्वा समानलघुकालीनाशौचयोस्तु दीर्घकालीनत्वरूपगुरुत्वासम्भवेन तदबाधित्वा मरणमात्रस्य गुरुत्वे प्राप्ते बाधकापेक्षानपेक्षतया विधिवैरूप्यापत्तेर्वाक्यभेदः स्यात्। तथाच दीर्घकालाशौचकालाच्छुद्धिमाह मिताक्षरायाम् उशनाः। 'स्वल्पाशौचस्य मध्ये तु दीर्घाशौचं भवेद् यदि। न तु पूर्वेण शुद्धिः स्यात् स्वकालेनैव शुद्ध्यति' इति 'दशा-हाभ्यन्तरे बाले प्रमीते तस्य बान्धवैः। शावाशौचं न कर्त्तव्यं सूत्याशौचं विधीयते' इति मिताक्षराधृतवृद्धमनुवचनात् 'मातुश्च सूतकं तत् स्यात् पिता त्वस्पृश्य एव च' इति कूर्म-पुराणवचनाच्च 'मरणोत्पत्तियोगे तु गरीयो मरणं भवेत्' इत्यस्य 'मृतेन सूतकं गच्छेन्नेतरत् सूतकेन तु' इत्यस्य च सामान्यविषयत्वे व्यभिचारः। तथाच जननाशौचमध्ये मरणा-शौचपाते अधिककालव्यापकेन जननाशौचेन शुद्धिः। कुबेर-धृतवृद्धमनुरपि 'शावस्योपरि शावे तु सूतकोपरि सूतके। शेषाहोभिर्विशुद्धिः स्यात् उदक्यां सूतिकां विना' अत्र

शावमात्रसूतकमात्राभिधानात् त्रिरात्रादिसङ्करेऽपि पूर्वाशौचशेषाहेण शुद्धिः। तथा एकदिनपातितुल्यमरणाशौचद्वये यावदशौचं सर्वगोत्रास्पृश्यत्वं यथा 'सर्वं गोत्रमसंस्पृश्यं तत्र स्यात् सूतके सति। मध्येऽपि सूतके दद्यात्पिण्डान् प्रेतस्य तृप्तये। मरणं यदि तुल्यं स्यान्मरणेन कथञ्चन। अस्पृश्यन्तु भवेद्गोत्रं सर्वमेव हि बान्धवम्' इत्यादिपुराणवचनात्। एवञ्च तदन्तिमदिने आत्यन्तरमरणे न दिनद्वयादिवृद्धिः किन्तु महागुरुनिपाते इति ध्येयम् अतएव 'समानं लघु चाशौचं पूर्वेणैव विशुद्ध्यति' इति हारलता। एतेन सजातीयत्र्यहाशौचसङ्करमात्रे 'अघवृद्धावशौचन्तु पश्चिमेन समापयेत्' इति यमवचनेनोत्तरव्यपगमात् शुद्धिरिति मिश्रोक्तं निरस्तम् अघवृद्धावित्यस्य प्रागुक्ताघवृद्धिमदाशौचविषयत्वात् स्नानमात्रापनेयाङ्गास्पृश्यत्वयुक्तत्रिरात्रस्य एकरात्राङ्गास्पृश्यत्वयुक्तत्रिरात्रेण गुरुणैव शुद्धिः। 'अघानां यौगपद्ये तु ज्ञेया शुद्धिर्गरीयसा' इति देवलवचनैकवाक्यत्वात् एवं जननमरणत्रिरात्रयोः साङ्कर्य्ये मरणत्रिरात्राच्छुद्धिः 'मरणोत्पत्तियोगे तु गरीयो मरणं भवेत्' इति देवलवचनान्तरात्। उदक्यां सूतिकां विनेत्यत्रेदं वीजम्। उदक्याशौचस्य मरणजननाशौचभिन्नत्वं सूतिकाशौचस्य बहुकालव्यापित्वम् अतएव कूर्मपुराणे तुल्यकालाशौचमुपक्रम्य मरणाच्छुद्धिरुक्ता यथा। 'यदि स्यात् सूतके सूतिर्मृतके च मृतिर्भवेत्। शेषेणैव भवेच्छुद्धिरहःशेषे द्विरात्रकम्। मरणोत्पत्तियोगे तु मरणाच्छुद्धिरिष्यते'। शेषेण पूर्वाशौचशेषाहेण अहःशेषे संपूर्णाशौचान्तदिने आनवमाद्दिवसादित्येकवाक्यत्वात्। अत्र जननस्य तुल्यकालीनमरणेन शुद्ध्यभिधानान्मनुवचनेन पुनर्मरणजन्मनीत्यत्र पुनः शब्दो मरणमात्रेणान्वितो न तु जन्मनाप्यव्यावर्त्तकत्वात्।

जननाशौचतुल्यकालीनमरणाशौचस्य गुरुत्वाभिधानमशक्य-स्पृश्यत्वादिना नैयायिकं न तु वाचनिकं गौरवात्। एतेन मरणसम्बन्धि सद्यः शौचादिना दशाहजननाशौचनिवृत्ति-र्वाचनिकमिति मैथिलमतमपास्तम् एवमेव हारलतादयः। ततस्तु पुत्रवत्या विंशतिरात्राशौचान्तदिने पत्युर्मरणे बहु-कालीनाशौचकालेन यथा शुद्धिस्तथा सपिण्डद्वयजननजात-त्वाद्दशाहान्तदिने पितुर्मातुर्भर्त्तुर्वा मरणे तेनैव शुद्धिः एव-मन्यत्र एवं मृतजाते तु अजातदन्तत्वेन मरणस्य स्वल्प-कालीनाशौचस्य निमित्तत्वात् जननाशौचमेव दशाहं तथा मिताक्षरायां पारस्करः। 'गर्भे यदि विपत्तिः स्याद्दशाहं सूतकं भवेत्'। दशाहमिति स्वस्वजात्युक्ताशौचपरम् एतच्च नवमादिमासमृतजात विषयम्।

अथ गर्भस्रावाशौचम्। तत्र कूर्मपुराणम्। 'अर्वाक् षण्मासतः स्त्रीणां यदि स्यात् गर्भसंस्रवः। तदा माससमै-स्तासां दिवसैः शुद्धिरिष्यते। अत ऊर्द्ध्वन्तु पतने स्त्रीणां स्याद्दशरात्रकम्। सद्यः शौचं सपिण्डानां गर्भस्रावाच्च वा ततः। गर्भच्युतावहोरात्रं सपिण्डेऽत्यन्तनिर्गुणे। यथेष्टा-चरणे ज्ञाते त्रिरात्रमिति निश्चयः'। दशरात्रकमिति स्वस्व-जात्युक्ताशौचकालपरम्। तथा च आदित्यपुराणम्। 'षण्मा-साभ्यन्तरं यावत् गर्भस्रावो भवेद् यदि। तदा माससमैस्तासां दिवसैः शुद्धिरिष्यते। अत ऊर्द्ध्वं स्वजात्युक्तमशौचं तासु विद्यते'। गर्भस्रावाच्च वा तत इति तच्छब्देन सन्निधानादत ऊर्द्ध्वमित्युक्तषण्मासोत्तरकालः परामृष्यते। षण्मासोपरि सगुणानां सद्यः निर्गुणानामेकाहः अत्यन्तनिर्गुण यथेष्टा-चरणज्ञातीनां त्रिरात्रम्। एवञ्च 'जातमृते मृतजाते वा सकुल्यस्य त्रिरात्रम्' इति हारीतवचनं यथेष्टाचरणविषयम्।

जातमृत इति जातदिन एव मरणे त्रिरात्रम्। तथाहि 'क्षीणान्तु पतितो गर्भः सद्योजातोमृतोऽथवा। अजातदन्तो मासैर्वा मृतः षड्भिर्गतैर्बहिः। वस्त्राद्यैर्भूषितं कृत्वा निःक्षिपेत्तन्तु काष्ठवत्। खनित्वा शनकैर्भूमौ सद्यः शौचं विधीयते' इति ब्रह्मपुराणे अनद्विवर्षपर्य्यन्तमृतशरीरप्रतिपत्तौ विशेषाभावेऽपि यद्विशेषकालोपादानं तत्तत्कालेऽशौचविशेषज्ञापनाय। एवञ्च यथा 'अजातदन्तो मासैर्वा मृतः षड्भिर्गतैर्बहिः' इत्यन्तेन दन्तजन्मकालस्य षण्मासानन्तरत्वसूचनादादन्तजननात् सद्य इति कूर्मपुराणेन षण्मासाभ्यन्तरे सद्यः शौचं षण्मासोत्तरन्तु अन्यदशौचं तथा सद्योजातोमृत इत्यत्र सद्य एव जातो जीवन्नुत्पन्नः सद्योमृतः जन्मसमानेऽहनि मृत इत्यर्थेन जातस्य सप्तमाष्टममासीयस्य जन्मदिनमरणादेव त्र्यहाशौचं तदुत्तरदिनादौ तु नवममासादिजातमृतवद् वेदितव्यम्। एतेन जन्मावधि त्रिरात्राभ्यन्तरमरण एव त्रिरात्रमिति निरस्तं प्रमाणाभावात्। अत्र विशेषमाह मरीचिः। 'गर्भस्रुत्यां यथामासमचिरे तूत्तमे त्र्यहः। राजन्ये तु चतूरात्रं वैश्ये पञ्चाहमेव च। अष्टाहेन तु शूद्रस्य शुद्धिरेषा प्रकीर्त्तिता'। यथामासमिति माससमसंख्यदिवसानतिक्रमेण यावन्मासीयो गर्भस्तावन्माससमसंख्यानि दिनानीत्यर्थः। एष च प्रथममासादिषण्मासपर्य्यन्तं अचिरे द्वितीये मासि। तथाच यमः 'गर्भमासा अहोरात्रं त्र्यहं वा गर्भसंस्रवे' इत्यत्र गर्भमासागर्भमाससमसंख्यदिवसा बहुवचननिर्देशात् तृतीयमासात् प्रभृति षण्मासपर्य्यन्तम् अहोरात्रं प्रथममासीयगर्भस्रावे त्र्यहं वेति परिशेषात् द्वितीयमासीयगर्भस्राव इति मासद्वये तु यद्वर्णस्य दिनद्वयाद् यावद्दिनमधिकं मरीच्युक्तं तद्दैवपित्र्यकर्मानधिकारार्थं तथाहि 'रात्रिभिर्मासतुल्याभि-

गर्भस्रावे विशुद्ध्यति। रजस्युपरते साध्वी स्नानेन स्त्री रजस्वला' इति मनुवचने गर्भस्रावाशौचमध्ये रजस्वलाशौचाभिधानं गर्भस्रावाशौचस्य रजस्वलाशौचतुल्यतार्थं समभिव्याहृतयो गर्भस्रावाशौचरजस्वलाशौचयोः रजस्वलायां तथा दर्शनात्। यथा शङ्खः 'शुद्धा भर्त्तुश्चतुर्थेऽह्नि अशुद्धा दैवपैत्रयोः। दैवे कर्मणि पैत्रे च पञ्चमेऽहनि शुद्ध्यति'। एवञ्च तृतीयचतुर्थपञ्चषष्ठमासेषु अपि 'ब्राह्मणो क्षत्रिया वैश्या शूद्राणाञ्च यथाक्रमं' माससमसंख्यदिनातिरिक्तमेकरात्रं द्विरात्रं त्रिरात्रं षड्रात्रञ्च दैवपैत्रे कर्मणि अनधिकारो बोद्धव्यः। लौकिककर्मणि तु माससमसंख्यदिनानन्तरमेव शुद्धिः। अन्यथा द्वितीयमासमात्रपरत्वे तत्परं लघुशौचेन वैषम्यं स्यात् हारलताप्येवं मिताक्षरायां गर्भधारणञ्च श्रमादिभिर्लिङ्गैरवगन्तव्यम्। तथाच श्रुतिः 'सद्योगृहीतगर्भायाः श्रमोग्लानिः पिपासा अशक्त्या निषदनं शुक्रशोणितयोरनुबन्धः स्फुरणञ्च योन्याः' इति।

अथ स्त्र्यशौचम्। आदिपुराणं 'दत्ता नारी पितुर्गेहे सूयते म्रियतेऽथवा। स्वमशौचं चरेत् सम्यक् पृथक् स्थानव्यवस्थिता। तद्बन्धुवर्गस्त्वेकेन शुद्ध्येत्तु जनकस्त्रिभिः। आजन्मनस्तु चूड़ान्तं यत्र कन्या विपद्यते। सद्यः शौचं भवेत्तत्र सर्ववर्णेषु नित्यशः। ततो वाग्दानपर्य्यन्तं यावदेकाहमेव हि। अतःपरं प्रवृद्धानां त्रिरात्रमिति निश्चयः। वाक्प्रदाने कृते तत्र ज्ञेयञ्चोभयतस्त्र्यहम्। पितुर्वरस्य च ततो दत्तानां भर्त्तुरेव हि। स्वजात्युक्तमशौचं स्यात् सूतके मृतकेऽपि वा'। पितुर्गेहे या सूयते म्रियते वा दत्ता नारी सा प्रसवे तदा स्वमशौचं जननीप्रयुक्तमशौचं पैठीनस्युक्तं चरेत् व्यवहरेत् न सपिण्डमात्रजननाशौचम्। यथा पैठीनसिः। 'सूतिकां

पुत्रवतीं विंशतिरात्रेण स्नातां सर्वकर्माणि कारयेत् मासेन स्त्रीजननीम्' इति अस्य स्वजात्युक्ताशौचकालाधिककालबोधकत्वात् शूद्रेतरपरत्वम् अत्र पुत्रवतीमिति मतुपनिर्देशो विद्यमानपुत्रार्थः स्त्रीजननीमित्यत्रापि साहचर्य्यात्तथा कल्प्यते। ततश्च जातानन्तरमृतयोरिव मृतजातयोरपि न विंशत्यहमासामशौचं विद्यमानत्वाभावहेतोरविशेषादिति। पृथक्स्थानव्यवस्थिता पृथक्स्थाने पित्रादिसंसर्गशून्ये पितृगेहे स्थिता चेत्तदा तद्बन्धुवर्गो भ्रात्रादिरेकाहेन जनकस्त्र्यहेण शुद्ध्यति शुक्रशोणितसम्बन्धरूपजननकर्त्तृत्वाविशेषाज्जनन्यपि अन्यथा तस्याः संसर्गे पित्रादेस्तत्तुल्याप्रायत्याप्रसङ्गः। यथाऽशौच्यधिकारे कूर्मपुराणम्। 'यस्तैः सहासनं कुर्य्याच्छयनादीनि चैव हि। बान्धवो वा परो वापि स दशाहेन शुद्ध्यति'। आदिशब्दादालिङ्गनाङ्गसंवाहनादिग्रहणम्। अत्रैव पूर्वार्द्धे बृहस्पतिः। 'यस्तैः सहामपिण्डोऽपि प्रकुर्य्याच्छयनासने'। अत्र प्रशब्देन कामतोऽनुवृत्तश्च द्योत्यते। पराशरः 'सम्पर्काद्दुष्यते विप्रो जनने मरणेऽपि वा। सम्पर्कं विनिवृत्तानां न प्रेतं नैव सूतकम्'। केचित्तु यदि पितुः प्रधानगेहे सूयते म्रियते वा तदा बन्धुवर्गो भ्रात्रादिरेकरात्रेण शुद्ध्यति जनकस्त्रिभिःशुद्ध्यति पृथक्स्थाने शयनभोजनदेवार्चनगृहभिन्नगृहे सूयते म्रियते वा तदा नारीज्ञातिर्वक्ष्यमाणं स्वमशौचं चरेत्। न पित्रादिरिति परिसंख्याविधिः। तथाच कल्पतरुः। 'दत्ता नारी पितुर्गेहे प्रधाने सूयते यदा। म्रियते वा तदा तस्याः पिता शुद्ध्येत्त्रिभिर्दिनैः'। इत्येतदसत् न पित्रादिरिति प्रसक्त्यभावेन तन्निषेधानुपपत्तेः दत्तानां भर्त्तुरेव हि इत्यनेन पौनरुक्त्यापत्तेश्च। अपरे तु चरेदित्यस्य कर्त्ता तत् बन्धुवर्गः पिता च प्रधाने गृहे प्रसवे मरणे स्वस्वजात्युक्ताशौचं पृथग्गृहे

च एकाहाद्यशौचं यथायथं चरेदित्यर्थः। गेहे प्रधाने सूयत इत्यत्राप्रधान इत्याकारप्रश्लेष इत्याहुस्तच्चिन्त्यम्। संस्कारे भर्त्तुरेव हीत्युक्ता स्वजात्युक्ताशौचमिति वक्ष्यमाणैर्विरोधात् म्रियत इत्यनेन तु पितुर्गेहे मरणमात्रे मातापित्रोस्त्रिरात्रं भ्रात्रादेरेकरात्रमिति। चूडान्तमिति चूडापदं 'व्रतचूड़-द्विजानान्तु प्रतीतिषु यथाक्रमम्' इति वक्ष्यमाणात् प्रतीतिपरं द्वितीयवर्षसमाप्तिपर्य्यन्तकालोपलक्षणञ्च। 'अहस्त्वदत्तकन्या-नामशौचं मरणे स्मृतम्। ऊनद्विवर्षान्मरणे सद्यः शौच-मुदाहृतम्'। इति कूर्मपुराणैकवाक्यत्वात्। अतःपरं प्रवृ-त्तानाम् अकृतवाग्दानावस्थातः परं प्रामाधिकरूपाणाम् अधिकरूपं व्यनक्ति वाक्प्रदाने कृत इति उभयत इति व्याख्यां करोति पितुर्वरस्य चेति हारलताप्रभृतयः। केचित्तु अतःपर-मित्यादिना वाग्दानोपलक्षित कालानन्तरं त्रिरात्रं विधीयते। तत्कालश्च कन्याविवाहकालः कन्याविवाहकालश्च उपनयन-कालः पतिसेवा गुरौवास इति मनुवचनेन उपनयनतुल्यकाल-त्वाभिधानात्। सोऽपि गर्भाष्टमाब्दे इत्याहुस्तच्चिन्त्यम्। न खलु शूद्राणामुपनयनमस्ति नवा सर्वेषां द्विजन्मनां गर्भाष्टम एव उपनयनकालः। न वा विवाहकालस्य वाग्दानकालत्वे प्रमाणमस्ति। न च अतःपरं प्रवृत्तानामित्यस्य. वैयर्थ्यमेव प्रमाणमिति चेदाचार्य्याणामियं शैली यत् सामान्येनाभिधाय तदेव विवृणोति यथा तत्रैव उभयत इत्युक्ता पितुर्वरस्य चेति न वैयर्थ्यं सामान्यविधिरस्पष्टं संस्क्रियेत विशेषत इति न्यायात् पितुर्वरस्य चेति उभयपक्षोपलक्षणं तथाच मनुः। 'स्त्रीणामसंस्कृतानान्तु त्र्यहाच्छुद्ध्यन्ति बान्धवाः। यथोक्ते-नैव कालेन शुद्ध्यन्ति हि सनाभयः'। असंस्कृतानामकृत-पाणिग्रहणरूपसंस्काराणां बान्धवा भर्त्तसापिण्ड्यास्त्र्यहेण

शुद्ध्यन्ति एतच्च वाग्दानात् प्रभृति वाग्दानव्यतिरिक्तेन भर्त्तृपक्षे सम्बन्धाभावात्। सनाभयः पितृपक्षीयसपिण्डाः। पुरुषत्रयपर्य्यन्ता इति यावत्। सापिण्ड्यमधिकृत्य अप्रत्तानां त्रिपौरुषमिति वशिष्ठवचनात्। न च 'अप्रत्तानां तथा स्त्रीणां सापिण्ड्यं साप्तपौरुषम्' इति रत्नाकरधृतकूर्म्मपुराणवचनात् कन्यानां त्रिपौरुषसापिण्ड्यप्रतिपादकवचनं वाग्दानोत्तरविषयमिति रुद्रधरोक्तं युक्तं तस्य वचनस्योद्वाहपरत्वेनैवोपपत्तेस्त्रिपौरुषवचनस्य वाग्दानोत्तरकल्पने प्रमाणाभावात् गौरवाच्च। यथोक्तेन पूर्व्वार्द्धोक्तेन त्रिरात्रेण शुद्ध्यति। रत्नाकरादौ शङ्खः विष्णुधर्म्मोत्तरञ्च। 'पितृवेश्मनि या नारी रजः पश्यत्यसंस्कृता। तस्यां मृतायां नाशौचं कदाचिदपि शाम्यति'। पितुर्यावज्जीवमशौचमिति वाचस्पतिमिश्राः। सोदरे विशेषयति कूर्म्मपुराणम्। 'आदन्तात् सोदरे सद्यः आचूडादेकरात्रकम्? आप्रदानात्त्रिरात्रं स्याद्दशरात्रमतः परं' इति। न चात्र सोदरपदं कैमुतिकन्यायात् पित्राद्युपलक्षणमिति वाच्यम्। आदिपुराणे जनकस्त्रिभिरित्यभिधायाजन्मनस्तु चूड़ान्तमित्यभिधानेन पितुरपि जन्मप्रभृतिचूड़ापर्य्यन्तं सद्यः शौचाभिधानाद्वाचनिकेऽर्थे न्यायानवताराच्च। दशरात्रमिति भर्त्रादिसपिण्डपरं 'दत्तानां भर्त्तुरेव हि' इति स्मृतेः। केचित्तु विषमशिष्टभयात् समानमुदरं यस्मादिति बहुव्रीहिणा सोदरपदं पितृपरमित्याहुः तन्न पितुर्वरस्य चेत्यनेन विरोधात्।

अथ बालाद्यशौचम्। 'नवमे दशमे मासि प्रबलैः सूतिमारुतैः। निःसार्य्यते बाण इव जन्तुश्छिद्रेण सज्वरः'। इति याज्ञवल्क्योक्तप्रकृतप्रसवकालनवममासादिजातमृते कूर्म्मपुराणम्। 'जातमात्रस्य बालस्य यदि स्यान्मरणं पितुः। मातुश्च

सूतकं तत् स्यात् पिता त्वस्पृश्य एव च। सद्यः शौचं सपिण्डानां कर्त्तव्यं सोदरस्य च। ऊर्द्ध्वं दशाहादेकाहं सोदरो यदि निर्गुणः'। सूतकं तत्स्यादित्यनेन पूर्व्वजातं जननाशौचमेव पितुर्मातुश्चोच्यते न तु मरणाशौचं मातुरस्पृश्यत्वं पूर्व्वमेव सिद्धमिदानीं पितुरप्युक्तं बालस्त्वन्तर्दशाह इत्यादिवचनात् सद्यः पदं साक्षात्शुद्धिविधायकं न तु मरणेन स्नानापनेयाशौचम् उत्पाद्य जननाशौचनिवर्त्तकमित्यभिधायकं कल्पनागौरवात् 'मरणोत्पत्तियोगे तु मरणात् शुद्धिरिष्यते' इत्यादि वचनाच्च। तथाच मिताक्षरायां वृहन्मनुः। 'दशाहाभ्यन्तरे बाले प्रमीते तस्य बान्धवैः। शावाशौचं न कर्त्तव्यं सूत्याशौचं विधीयते'। बान्धवैः पितृमातृभिः वचनान्तरैकवाक्यत्वात् बहुत्वन्तु व्यक्तिभेदात् दशाहपदं तत्तद्वर्णोक्ताशौचाहपरं सामान्यतः कूर्म्मपुराणे तत्सूतकमित्युक्तत्वात् पारस्करेणान्तःसूतकमित्यभिधानाच्च। 'यथा अद्विवर्षे प्रेते मातापित्रोरशौचमेकरात्रं त्रिरात्रं वेति शरीरमदग्ध्वा भूमौ निखनन्ति। अन्तःसूतके चेदोत्थानादाशौचं सूतकवदिति। नवममासादिमृतजाते तु सपिण्डादीनां दशाहादिजननाशौचं गर्भे यदि विपत्तिः स्यादिति मिताक्षरोक्तप्रागुक्तेः। एकरात्रं त्रिरात्रं वेत्यजातदन्तजातदन्तमृतविषयं यथा कौर्म्मे। 'अजातदन्तमरणे पित्रोरेकाहमिष्यते। दन्तजाते त्रिरात्रं स्याद् यदि स्यातान्तु निर्गुणौ'। अजातदन्तमरणे यदेकाहमुक्तं तच्छूद्रेतरपरं तस्य त्रिरात्रविधानात्। यथा त्र्यहाच्छुद्ध्यतीत्यनुवृत्तौ शङ्खः। 'अनूढानान्तु कन्यानां तथा वै शूद्रजन्मनाम्' इति। न चैतत् सगुणशूद्रस्य जातदन्तविषयमिति रत्नाकराद्युक्तं युक्तं शङ्खवचनस्य बालानामजातदन्तानां त्रिरात्रेण शुद्धिरिति मिताक्षराधृतकाश्यपवचनेन बाले च अजातदन्ते

च त्रिरात्रं शावाशौचमिति गौतमरत्नाकरधृतवैवस्वतवचनेन चैकमूलत्वात्। अकमाह मत्स्यसूक्तं 'त्रिरात्रन्तु भवेच्छूद्रे षण्मासोनशिशौ मृते'। एवञ्च जातदन्तशूद्र एव परिशेषात् पञ्चाहमाहाङ्गिराः। 'शूद्रे त्रिवर्षान्यूने मृते शुद्धिस्तु पञ्चभिः। अत ऊर्द्धं मृते शूद्रे द्वादशाहो विधीयते। षड्वर्षान्तमतीतो यः शूद्रः संम्रियते यदि। मासिकन्तु भवेच्छौचमित्याङ्गिरसभाषितम्'। त्रिवर्षाद्वर्त्तमानतृतीयवर्षान्यूने असमाप्तद्वितीयवर्षे इत्यर्थः। 'षण्मासाभ्यन्तरे शूद्रे मृते बाले त्र्यहं विदुः। अनतीते द्विवर्षे वै मृते शुद्धिस्तु पञ्चभिः' इति यमवचनैकवाक्यत्वात्। यत्तु 'अनूढभार्य्यः शूद्रस्तु षोड़शाद्वत्सरात्परम्। मृत्युं समधिगच्छेत्तु मासं तस्यापि बान्धवाः। शुद्धिं समधिगच्छन्ति नात्र कार्य्या विचारणा'। इति शङ्खवचनम्। तदङ्गिरोवचनविरोधात् सगुणशूद्रविषयमिति गौड़ाः। मैथिलास्तु षड्वर्षोपर्य्यूढभार्य्यत्वे मासः। अनूढभार्य्यत्वे द्वादशाहः। षोड़शोपर्य्यनूढभार्य्यत्वेऽपि मास इत्याहुस्तन्न षड्वर्षाभ्यन्तरे कृतविवाहस्य मरणे मासाशौचस्य वक्ष्यमाणत्वेन षड्वर्षोपर्य्यूढभार्य्यत्वे मास इत्यत्र षड्वर्षोपरीत्यस्य वैयर्थ्यापत्तेः। एवञ्च षड्वर्षोपर्य्यनूढभार्य्यमरणे निर्गुणानां सम्पूर्णाशौचम्। षोड़शोवर्षोपरि सगुणानामिति। शूद्रस्य प्रधानसंस्कारत्वेन दैवात् षड्वर्षाभ्यन्तरेऽपि कृतोद्वाहे मासाशौचं व्यवह्रियते। अन्यथा द्विवर्षीयायाः शूद्रपत्न्या मरणे दशरात्रमतःपरमित्युक्तवचनात् मासाशौचम्। तद्वोढुः पञ्चवर्षीयस्य मरणे द्वादशाह इति महद्वैषम्यं स्यात्। अतएव द्विवर्षोत्तरषोड़शवर्षाभ्यन्तरमनूढभार्य्ये मृते द्वादशाहमेवाशौचम् एवं वदता वाचस्पतिमिश्रेणापि द्विवर्षोपरि ऊढभार्य्यमरणे मासाशौचमङ्गीकृतम्। केचित्तु अनूढभार्य्य-

त्वोढ़भार्य्यत्वस्वरूपयोग्यतारहित: शूद्रो नपुंसक इति यावत् पुंलिङ्गस्तु छान्दस इति वदन्ति। न च षोड़शाद्दर्षात् परमित्यत्रानूढ़भार्य्यत्वविशेषणमपि व्यर्थमिति वाच्यं तद्विशेषणेन न्यायवर्त्तिनां शूद्राणां षोड़शवर्षोपरि विवाहकाल: कल्प्यते। तथाहि 'शूद्राणां मासिकं कार्य्यं वपनं न्यायवर्त्तिनाम्। वैश्यवच्छौचकल्पश्च द्विजोच्छिष्टञ्च भोजनम्' इति मनुवचनान्न्यायवर्त्तिशूद्राणां वैश्यवच्छौचकल्पस्येत्यत्र चकाराद्वैश्यधर्मातिदेशेनोपनयनप्रसक्तौ तत्स्थाने ब्रह्मपुराणेन विवाहो विधीयते। यथा विवाहमात्रं संस्कारं शूद्रोऽपि लभते सदा' इति तत्रोपनयनकालश्च 'गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनायनम्। राज्ञामेकादशे सैके विशामेके यथा कुलम्' इति याज्ञवल्क्योक्तेः। सैके एकादशाह इत्यनुषङ्गात् द्वादशवर्ष इत्यर्थ: अत्र चोत्तरोत्तरकालदर्शनात् शूद्रस्याप्युपनयनस्थानाभिषिक्तविवाहस्य तथैव युक्तत्वात् अतएव यथा कुलमित्यतिदेशेन षोड़शाद्दत्सरात् प्रागपि विवाहो दृश्यते स तु न प्रकृष्ट इति विशेष:। प्रतिलोमजातानान्तु 'शौचाशौचं प्रकुर्वीरन् शूद्रवद्दर्णसङ्करा:'। इति आदिपुराणाद् व्यवस्था द्रष्टा। नौन्तन क्षत्रियाणामपि शूद्रत्वमाह मनु:। 'शनकैस्तु क्रियालोपादिमा: क्षत्रियजातय:। वृषलत्वं गता लोके ब्राह्मणादर्शनेन च'। अतएव विष्णुपुराणं 'महानन्दिसुत: शूद्रा गर्भोद्भवोऽतिलुब्धो महापद्मो नन्द:। परशुराम इव अपरोऽखिलक्षत्रियान्तकारी भविता तत: प्रभृति शूद्रा भूपाला भविष्यन्ति' इति तेन महानन्दिपर्य्यन्तं क्षत्रिय आसीत्। एवञ्च क्रियालोपाद्वैश्यानामपि तथा। एवमम्बष्ठादीनामपि जातिप्रसङ्गादुक्तम्। आउत्थानादिति उत्थानपर्य्यन्तम्। उत्थानञ्च स्वस्वजात्युक्ताशौचान्तदिन एव 'दशम्यासुत्थाप्य ब्राह्मणान् भोज

यित्वा पिता नाम करोति' इति पारस्करवचनात् । न च दशम्यामित्यस्योपलक्षणपरत्वे प्रमाणाभाव इति वाच्यं ब्राह्मणानित्यादिना तदुत्तरदिने शुद्धिश्राद्धसम्बन्धिब्राह्मणभोजनपूर्वकनामकरणविधानात् । न च अशौचाभ्यन्तर एव नामकरणं 'नामधेयं दशम्यान्तु द्वादश्यां वाथ कारयेत्' इति मनुवचनात् हरिशर्मोक्तं युक्तमिति वाच्यम् अशौचव्यपगमे नामधेयमिति विष्णुविरोधात् । अतएव दशम्यामिति निवृत्ताशौचपरमिति ब्रह्मचारिकाण्डम् । एतच्च सङ्करेणाशौचह्रासे तदानीं नामकरणे बोध्यम् एतत् परमेव दिगविशिवशताह इति दीपिकोक्तं सङ्गच्छते । अविद्वांदशाहः अवयः शैलमेघार्कों इत्यमरकोषात् पारस्करीयदशम्यामित्यस्यानुपलक्षणत्वे सूतकं तत् स्यात् सूत्याशौचमित्येतयोः सङ्कोचापत्तेः यत्र ब्राह्मणस्य संपूर्णाशौचं तत्र क्षत्रियादीनामपि तथैव युक्तत्वाच्च । एतेन क्षत्रियादीनामपि दशाहमध्य एव बालकमरणे अङ्गास्पृश्यत्वयुक्तमशौचमुत्थानावधि तदूर्द्ध्वन्तु सद्यः शौचम् । 'बालस्त्वन्तर्दशाहे तु प्रेतत्वं यदि गच्छति । सद्य एव विशुद्धिः स्यान्नाशौचं नैव सूतकम्' । इति शङ्खोक्तनयेनोत्थानञ्च दशमदिन इति निरस्तं तस्मादेतच्छङ्खवचनं मातापितृव्यतिरिक्तानां सपिण्डानां सद्यः शौचविधायकम् अन्तर्दशाहपदञ्च स्वस्वजात्युक्ताशौचाहपरम् । एवञ्च सूतकं तत्स्यादित्यभिधानात् तत्र बालस्य शृगालादिहतत्वेऽपि मरणनिमित्तको विशेषः । यच्चान्तःसूतक इत्युभयोरपि कन्यापुत्रयोः सूतकमध्ये मरणे मातापित्रोर्दशाहपर्य्यन्तमेवाशौचमिति तच्चिन्त्यम् अद्विवर्षे प्रेते इत्यनेन पुंसः प्रक्रतत्वात् । न च निमित्तविशेषणत्वात् पुंस्त्वमविवक्षितमिति वाच्यं तथात्वे षड्वर्षीयकन्यामरणेऽप्येकरात्रं त्रिरात्रं वेति स्यात् । न च

शरीरमदग्ध्वा निखनन्तीति शरीरप्रतिपत्तेः स्त्रीपुंसाधारण-त्वेन स्त्रिया अपि प्रकृतत्वमस्तीति वाच्यं पारस्करेण पुरुषस्य शरीरप्रतिपत्त्यादिकमभिधाय स्त्रीणाञ्चेत्युक्तम्। तदनन्तर-मप्रत्तानामिति सूत्रान्तरेण कन्यानां यथायोग्यमतिदिश्यते अतः शरीरप्रतिपत्ति पिण्डोदकादीनामनन्यप्रकारत्वात् पुंव-देव अशौचस्य तु वचनान्तरेण कन्यानां पृथक्विधानात् न तथात्वमिति अतएव सर्वनिबन्धृभिः प्रकरणभेदेन स्त्र्यशौच-मिति निर्दिश्यते अतएव आदिपुराणे। जनकस्त्रिभिरित्यन-न्तरमेव आजन्मनस्तु चूड़ान्तमित्यभिधानेन पितुरपि सद्यः शौचमुक्तं तस्मादन्तःसूतक इत्यादि पुंमात्रविषयकं न कन्या-विषयकम्। कूर्मपुराणम् 'आदन्तजननात् सद्य आचूड़ा-देकरात्रकम्। त्रिरात्रञ्चोपनयनात् सपिण्डानामुदाहृतम्'। सपिण्डानां निर्गुणानाम्। 'अथोर्द्ध्वं दन्तजननात् सपिण्डा-नामशौचकम्। एकाहं निर्गुणानान्तु चोड़ादूर्द्ध्वं त्रिरात्रकम्' इति तत्रैवोक्तेः। आदन्तजननादिति तु विप्रविषयं शूद्रस्य त्रिरात्रविधानात्। दन्तजननादिकञ्च दन्तजन्मचूड़ोपनयन-कालोपलक्षणम्। अन्यथा दैवादजातदन्तस्य प्रथमेऽब्दे चूड़ाकरणमिति वचनात् कुलाचाराच्च नवमे मासि कृतचूड़स्य मरणेऽनध्यवसायापत्तेः किमजातदन्तत्वेन सद्यः किंवा कृत-चूड़त्वेन त्रिरात्रमिति अतएव ब्रह्मपुराणीयषड्भिर्मासैर्गते-र्वह्निरित्यत्र तथा व्याख्यातम्। गर्भोपनिषदि दन्तजन्मसप्तमे मासीत्युक्तं तेन षण्मासावधि सद्यः शौचं चूड़ायामपि 'विप्रे न्यूने त्रिभिर्वर्षैर्मृते शुद्धिस्तु नैशिकी। निवृत्तचूड़के विप्रे त्रिरात्राच्छुद्धिरिष्यते' इत्यङ्गिरोवचनैकवाक्यत्वात्। त्रिभि-र्वर्षैरिति त्रिभिर्वर्षैरुपलक्षिताद्वर्त्तमान तृतीयवर्षान्न्यूने ऊन-द्विवार्षिक इत्यर्थः एवं शूद्रे त्रिवर्षान्न्यूने इत्यपि बोध्यम् एव-

मुपनयनकालोऽपि गर्भाष्टमाब्द एव। आदिपुराणे अनुपनीतो विप्रस्त्वित्यभिधाय 'म्रियते यत्र तत्र स्यादशौचं त्र्यहमेव हि। द्विजन्मनामयं कालस्त्रयाणान्तु षडाब्दिकम्' इत्युक्तत्वात्। षडब्दपदञ्च मासत्रयाधिकषडब्दपरं 'गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनायनम्' इति याज्ञवल्क्यादिति हारलता। यत्तु 'व्रतचूड़द्विजानान्तु प्रतीतिषु यथाक्रमम्। दशाह त्र्यह एकाहैः शुद्ध्यन्त्यपि हि निर्गुणाः'। इति जावालिवचनं तत् प्रतीतिष्वित्यभिधानात् पञ्चमाब्दोपनीतस्य प्रथमाब्दकृतचूड़स्य षण्मासाभ्यन्तरजातदन्तस्य मरणे दशाहादिभिः शुद्धिपरम् एतत् ब्राह्मणविषयं क्षत्रियादीनामपि तथाशौचवृद्धिः कल्प्यते। अन्यथा ब्राह्मणस्य दन्तादिप्रतीतावशौचाधिक्यमन्यस्य न तथेति वैषम्यं स्यात् तेन शूद्रस्य षण्मासाभ्यन्तरे दन्तोत्पत्तौ मरणे पञ्चाहः द्वित्रर्षाभ्यन्तरे कृतचूड़स्य द्वादशाहः उपनयनवत् प्रधानसंस्कारत्वेन दैवात् कृतोद्वाहेऽपि मासो व्यवह्रियते। अन्यथा यत्र द्विवर्षीयायाः शूद्रपत्न्या मरणे मासाशौचं तद्वोढुः पञ्चाब्दीयस्य मरणे द्वादशाहाशौचे वैषम्यापत्तेः। अतएव द्विवर्षोत्तरं षोड़शवर्षाभ्यन्तरेऽनूढ़भार्य्यशूद्रे मृते द्वादशाहमेवाशौचमिति वदता वाचस्पतिमिश्रेणापि द्विवर्षोपरि ऊढ़भार्य्यमरणे मासाशौचमङ्गीकृतमिति। एवञ्च प्रथमाब्दकृतचूड़मरणविषये मनुः। 'ऊनद्विवार्षिकं प्रेतं निदध्युर्बान्धवा वहिः। अलंकृत्य शुचौ भूमावस्थिसञ्चयनादृते। नास्य कार्य्योऽग्निसंस्कारो नापि कार्य्योदकक्रिया। अरण्ये काष्ठवत् त्यक्त्वा क्षिपेयुस्त्र्यहमेव हि'। अकृतचूड़ेऽपि स एव 'नृणामकृतचूड़ानामशुद्धिर्नैशिकी स्मृता। निवृत्तचूड़कानान्तु त्रिरात्राच्छुद्धिरिष्यते'। एतत् परार्द्धेनोनद्विवार्षिकमिति वचनस्य विषयो दर्शितः। यत्तु पैठीनसिवचन-

मकृतचूड़ानां त्रिरात्रमिति तत्‌द्विवर्षाद्युपर्य्यकृतचूड़ानां मन्तव्यं मिताक्षराप्येवम्। एतेन ऊनद्विवार्षिकस्यादाहेऽपि त्रिरात्रविधानात् स्नेहाद्दाहादाहकृतत्रिरात्रैकरात्रस्य व्यवस्था मैथिलोक्ता हेया। हारलताप्रभृतिभिस्तु निर्गुणात्यन्तनिर्गुणाभ्यां व्यवस्था कृतेति।

अथ सगुणाद्यशौचम्। ननु बालादीनां सद्यः प्रभृत्यशौचश्रवणात्। 'सद्यः शौचं तथैकाहस्त्र्यहश्चतुरहस्तथा। षड़्दशद्वादशाहाश्च पक्षो मासस्तथैव च। मरणान्तं तथाचान्यद्दशपक्षास्तु सूतके' इति दक्षवचनमपि यथायोग्यं तत्परमस्तु न तु अत्यन्तसगुणादिपरं चतुरहश्च चतुर्मासगर्भस्रावविषयः। षड़हः द्विवर्षादुत्तरकालीनोपनयनप्राक्कालीनक्षत्रियबालकविषयः। 'यत्र त्रिरात्रं विप्राणामशौचं संप्रदृश्यते। तत्र शूद्रे द्वादशाहः षण्णवक्षत्रवैश्ययोः'। इति हारलताधृतवचनादिति चेन्न 'उपन्यासक्रमेणैव वक्ष्याम्यहमशेषतः। ग्रन्थार्थंतो विजानाति वेदमङ्गैः समन्वितम्। सकल्पं सरहस्यञ्च क्रियावांश्चेन्न सूतकम्' इत्यादिवचनैर्दक्षेणैव सगुणनिर्गुणभेदेन दत्तविषयत्वात्। अतएव वाचस्पतिमिश्रेण गुणहान्या षड़हादिव्यवस्थोक्ता अन्यज्जननमरणाद्भिन्नं मरणान्तं दशममिति रत्नाकरः। तथाच कूर्मपुराणम्। 'क्रियाहीनस्य मूर्खस्य महारोगिण एव च। यथेष्टाचरणस्याहुर्मरणान्तमशौचकम्'। मूर्खस्य गायत्रीरहितस्य सार्थगायत्रीरहितस्येति रुद्रधरः। मरणान्तं यावज्जीवम्। केचित्तु दक्षवचने सगुणानां दशाहादिसमभिव्याहारात् सद्यः प्रभृतिभिः सर्वाशौचनिवृत्तिः न तु होमाध्यापनमात्रार्थेत्याहुस्तच्चिन्त्यं जावालादिवचनविरोधात्। तथाच जावालः 'उभयत्र दशाहानि सपिण्डानामशौचकम्। स्नानोपस्पर्शनाभ्यासादग्निहोत्रार्थमर्हति'। उभ-

यत्र मृत्युजन्मनोः तत्र साग्नीनामेव दशाहाशौचं प्रतीयते । स्नानाचमनाभ्यासादेकाहात्युत्तरमग्निहोत्रार्हता च । अन्यथा निरग्निसाग्निविषयत्वेन वाक्यभेदाद्गौरवं स्यात् । संवर्त्तः 'होमश्च तत्र कर्त्तव्यः शुष्कान्नेनैव वा फलैः । पञ्चयज्ञविधानञ्च न कुर्य्यान्मृत्युजन्मनोः । दशाहात् तु परं सम्यग्विप्रोऽधीयीत धर्मवित्' । अतएव येषामशौचाभ्यन्तरे होमस्तेषामेव दशाहोत्तरं पञ्चयज्ञादि प्रतीयते । गोतमः । 'श्रुत्वा चोर्द्धं दशम्याः पक्षिणीम्' इति अस्य चतुरहपञ्चाहाशौचिसगुणविषयकतया तैरेव व्यवस्थापितत्वेन दशम्या ऊर्द्ध्वमित्यनुपपत्तेः । 'आशुच्यं दशरात्रन्तु सर्व्वत्राप्यपरे विदुः' इति देवलवचनेन सगुणविषयकत्वान्न क्षत्रियादीनां सर्वाशौचनिवृत्तिः । 'चक्रे द्वादशिकं श्राद्धं त्रयोदशिकमेव च' । इति वक्ष्यमाणवचनेन रामादिविवाहप्रस्तावे । त्रीनग्नींस्ते परिक्रम्य ता उदुहुर्वधूः पृथगित्यादिकाण्डोक्तसाग्नित्वेन सगुणस्य भरतस्य द्वादशाहिकादि श्राद्धकर्त्तृत्वप्रतीतेः । शूद्रस्यापि सेवकान्तराभावे ब्राह्मणसेवार्थमेव दशाहोत्तरं शुद्धिः । 'मासेनैव तु शुद्धिः स्यात् सूतके मृतकेऽथवा' इत्यङ्गिरो वचने एवकारश्रुतेः सर्वाशौचनिवृत्तिस्तु मासेनैव तस्मात् सगुणानां तत्तत्कर्मण्येवाशौचसङ्कोचसर्वाशौचनिवृत्तिस्तु दशाहाद्यूर्द्धमिति हारलतामिताक्षराराकरायुक्तं साधीयः । वस्तुतस्तु हेमाद्रिपराशरधृतादित्यपुराणेन वृत्तादिनिमित्तशौचसङ्कोचश्च कलौ निरस्तः । 'कन्यानामसवर्णानां विवाहश्च द्विजातिभिः' । तथा 'वृत्तस्वाध्यायसापेक्षमघसङ्कोचनं तथा । प्रायश्चित्तविधानञ्च विप्राणां मरणान्तिकम् । संसर्गदोषः पापे मधुपर्के पशोर्वधः । दत्तौरसेतरेषान्तु पुत्रत्वेन परिग्रहः । शूद्रेषु दासगोपालकुलमित्रार्द्धसीरिणाम् । भोज्यान्नता गृहस्थस्य तीर्थसेवाति-

दूरतः'। तथा 'ब्राह्मणादिषु शूद्रस्य पक्वतादिक्रियापि च। भृग्वग्निमरणञ्चैव वृद्धादिमरणन्तथा' इत्यादीन्यभिधाय 'एतानि लोकगुप्त्यर्थं कलेरादौ महात्मभिः। निवर्त्तितानि कर्माणि व्यवस्थापूर्वकं बुधैः'। एवञ्चात्र कलावसवर्णाविवाह-निषेधात् सर्ववर्णसन्निपाताशौचं नाभिहितम्। पक्षिणी तु अहर्द्वयसहिता रात्रिरेव। 'द्वावह्नावेकरात्रिश्च पक्षिणी-त्यभिधीयते'। इति भट्टनारायणधृतवचनात्। पक्षतुल्यौ तु दिवसौ पार्श्वयोस्तु इति पक्षिणीरात्रिरिति सरलापि यत्र रात्रौ श्रुतं तत्र पूर्वदिनमादाय पक्षिणीव्यवहारः। 'रात्रावेव समुत्पन्ने मृते रजसि सूतके। पूर्वमेव दिनं ग्राह्यं यावन्नैवो-दितो रविः' इति वाचस्पतिमिश्रधृतपराशरवचनात्। एतेन दिनद्वयसहिता रात्रिः रात्रिद्वयसहितञ्च दिनमविशेषात् पक्षिणीति निरस्तं दिनविशिष्टत्वे स्त्रीलिङ्गानुपपत्तिः स्यात्।

अथ विदेशस्थाशौचम्। गोतमः। 'श्रुत्वा चोर्द्ध्वं दश-म्याश्च पक्षिणीम्' इति। 'अतिक्रान्ते दशाहे तु त्रिरात्र-मशुचिर्भवेत्'। इत्यादौ स्वस्वजात्युक्तपूर्णाशौचानन्तरमेवाति-क्रान्ताशौचं प्रतीयते न तु बालादिखण्डाशौचानन्तरं 'बाले देशान्तरस्थे तु पृथक्पिण्डे च संस्थिते। सवासा जलमाप्लुत्य सद्य एव विशुद्ध्यति' इति मनुवचनात् अतएव शङ्खेन 'मरणा-देव कर्त्तव्यं संयोगो यस्य नाग्निना। दाहादूर्द्ध्वमशौचं स्याद् यस्य वैतानिको विधिः' इत्यतो विशेषवचनाभावे मरणकाला-वध्यशौचं सामान्यत उक्तम् अन्यथा पूर्णाशौचशेषदिने तन्म-रणश्रवणे ज्ञातीनामेकाहः दौहित्रादीनां त्र्यहादिरिति वैषम्यं स्यात्। तथाच मिताक्षरायां व्याघ्रपादः 'तुल्यं वयसि सर्वेषामतिक्रान्ते तथैव च। उपनीते तु विषमं तस्मि-न्नेवातिकालजम्'। वयसि उपनयनकालात् पूर्वस्मिन् काले

सर्वेषां वर्णानां त्रिरात्राशौचं तुल्यमिति दाक्षिणात्यदेशव्यवस्थितम् । अन्यदेशे तु कूर्मपुराणादिना तत्तत्काले तत्तद्वर्णानामशौचविशेष उक्तः । तथाच मरीचिः 'येषु स्थानेषु यच्छौचं धर्माचारश्च यादृशः । तत्र तन्नावमन्येत धर्मस्तत्रैव तादृशः' । विदेशगतानान्तु पित्राद्याचार एव 'येनास्य पितरौ याता येन याता पितामहाः । तेन यायात् सतां मार्गं तेन गच्छन्न दुष्यति' । इति मनुवचनात् । अतिक्रान्ते यत् त्रिरात्रं तदपि तुल्यम् । तथाच शङ्खः । 'अतीते सूतके स्वे स्वे त्रिरात्रं स्यादशौचकम् । संवत्सरव्यतीते तु सद्यः शौचं विधीयते' । कौर्मे 'तथैव मरणे स्नानमूर्द्ध्वं संवत्सराद् यदि' । जननाशौचेऽपि देवलः । 'नाशौचं प्रसवस्यास्ति व्यतीतेषु दिनेष्वपि' । पुत्रजन्मन्यतीताशौचकाले पितुः स्नानमाह मनुः 'निर्दशं ज्ञातिमरणं श्रुत्वा पुत्रस्य जन्म च । सवासा जलमाप्लुत्य शुद्धो भवति मानवः' । मरणे स्नानादिनाङ्गस्पृश्यत्वनिवृत्तिरूपा शुद्धिः न तु सर्वाशौचनिवृत्तिः त्रिरात्रादेर्विधानात् पुत्रजनने तु सर्वाशौचनिवृत्तिः सङ्कोचाभावात् । उपनीते त्विति उपनयनकालानन्तरन्तु दशाहत्र्यहादशाहादिरूपेण विषमं स्वस्वजात्युक्ताशौचमित्यर्थः । तस्मिन्नेवोपनीतोपरम एव अतिकालजमिति अतिक्रान्तकालाशौचं न तु बालाद्यशौचातिक्रमेऽपि । श्रुत्वा चोर्द्ध्वं दशम्याः पक्षिणीमित्यत्र दशम्या ऊर्द्ध्वमिति श्रुतेः प्राचां मैथिलानां चतुर्मासोपरि अर्वाचाञ्च षण्मासोपरि यत् पक्षिण्यशौचाभिधानं तद्धेयम् । किन्तु हारलतोक्तं सगुणविषयमेवेति युक्तम् । अत्र विशारदचरणाः 'अतीताशौच एकाहं खण्डाशौचि मृते सुतौ । संपूर्णाशौचि मरणे श्रुतौ ज्ञेयं त्रिरात्रकम्' इति वायुपुराणवचनं यदि समूलं तदा खण्डाशौचि पितरि मृते

श्रेयमिति। यत्तु 'मासत्रये त्रिरात्रं स्यात् षण्मासे पक्षिणी तथा। अहस्तु नवमादर्वागूर्द्धं स्नानेन शुद्ध्यति' इति मिताक्षरायां वृहन्मनुवशिष्ठवचनाद्व्यवस्थितेति तद्दाक्षिणात्यानाम्। देवलः 'अशौचाहःस्वतीतेषु बन्धुश्चेत् श्रूयते मृतः। तत्र त्रिरात्रमाशुच्यं भवेत् संवत्सरान्तरे। ऊर्द्धं संवत्सराद्याद्बन्धुश्चेत् श्रूयते मृतः। तावदेकाहमेवात्र तच्च सन्न्यासिनां न तु'। बन्धुरत्र माता पिता भर्त्ता च। यत्तु मिताक्षरायां 'पितरौ चेन्मृतौ स्यातां दूरस्थोऽपि हि पुत्रकः। श्रुत्वा तद्दिनमारभ्य दशाहं सूतकी भवेत्' इति पैठीनस्युक्तं तत्कलिङ्गौड्रादिदेशव्यवस्थितम्। तेषां तथाचरणात्। तथाच वामनपुराणे 'देशानुशिष्टं कुलधर्ममग्र्यं स्वगोत्रधर्मं न हि सन्त्यजेच्च'। एवमन्यानि तद्भूतवचनानि देशविशेषविषयतया व्यवस्थेयानि।

अथ सपिण्डाद्यशौचम्। वृहस्पतिः। 'दशाहेन सपिण्डास्तु शुद्ध्यन्ति प्रेतसूतके। त्रिरात्रेण सकुल्यास्तु स्नात्वा शुद्ध्यन्ति गोत्रजाः'। प्रेतसूतके मरणजननयोः सपिण्डाः सप्तमपुरुषावधयः कन्यायास्तु तृतीयपुरुषावधयः सकुल्या दशमपुरुषावधयः एष विशेषः सपिण्डादिविचारे स्फुटीभविष्यति। गोत्रजाः निवृत्तसमानोदकभावाः दशाहेनेति विप्रपरं तथाच मनुः। 'शुद्ध्येद्विप्रो दशाहेन द्वादशाहेन भूमिपः। वैश्यः पञ्चदशाहेन शूद्रो मासेन शुद्ध्यति'। अङ्गिराः 'दशमेऽहनि शूद्रस्य कार्य्यं संस्पर्शनं बुधैः। मासेनैव तु शुद्धिः स्यात् सूतके मृतकेऽपि वा'। अत्र वर्ज्यावर्ज्ये जावालिः। 'सन्ध्यां पञ्चमहायज्ञान् नैत्यिकं स्मृतिकर्म च। तन्मध्ये हापयेत्तेषां दशाहान्ते पुनः क्रिया'। तन्मध्ये अशौचमध्ये हापयेत् त्यजेत्। नैत्यिकं स्मृतिकर्मैवस्नानादि। अत्र च मुहूर्त्त-

मध्यप्रयतो न स्यादिति आपस्तम्बवचनादस्पृश्यस्पर्शनादौ शौचस्य स्वकृतिसाध्यत्वात् तदर्थं नैमित्तिकं स्नानादिकर्त्तव्यं मूत्रपुरीषोत्सर्गादिनिमित्ताशौचे प्रक्षालनादिवत् एवं भोजनाश्रितत्वात् प्राणाहुत्यादि च। एवञ्च कर्माभ्यन्तरे चाप्रायत्ये शौचसम्पादकत्वेन स्नानादिकं नैमित्तिकाङ्गत्वान्न व्यवधायकम् अतएव पूर्वकृतानां न पुनः करणम्। अतएवाचाररत्नाकरे जावालः। 'कर्ममध्ये तु यः कश्चिद्यदि स्यादशुचिर्नरः। स्नात्वा कर्म पुनः कुर्य्यादन्यथा विफलं भवेत्' इति। यज्ञपार्श्वेऽपि 'स्मार्त्तकर्मपरित्यागो राहोरन्यत्र सूतके'। शङ्खः दानं प्रतिग्रहो होमः स्वाध्यायः पितृकर्म च। प्रेतपिण्डक्रियावर्जं सूतके विनिवर्त्तते। नाशुचिर्देवर्षिपितृ ऋषिनामानि च न कीर्त्तयेत्' इति वचनं विष्णुनामातिरिक्तपरम्। 'न देशनियमस्तत्र न कालनियमस्तथा। नोच्छिष्टादौ निषेधोऽस्ति विष्णोर्नामनि लुब्धक' इति वचनात्। अभिवादयेदित्यनुवृत्तौ शङ्खलिखितौ। 'नाशुचिर्न जपन् दैवपितृकार्य्यं कुर्वन्निति' आपस्तम्बः अप्रयतश्च न प्रत्यभिवादयेदिति। नमस्कारमाह स्मृतिः 'सर्वे चापि नमस्कुर्य्युः सर्वावस्थासु सर्वदा'। इति राघवभट्टधृतनारदवचनम्। अथ सूतकिनः पूजां वक्ष्याम्यागमचोदिताम्। स्नात्वा नित्यञ्च निर्वर्त्य मानस्याक्रियया तु वै। वाह्यपूजाक्रमेणैव ध्यानयोगेन पूजयेत्। यदा कामी न चेत् कामी नित्यं पूर्ववदाचरेत्'। नित्यञ्चाशुचिकर्त्तव्यं प्रेततर्पणादि। मन्त्रमुक्तावल्यां 'जपोदेवार्चनविधिः कार्य्यो दीक्षान्वितैर्नरैः। नास्ति पापं यतस्तेषां सूतकं वा यतात्मनाम्' अतएव मन्त्रग्रहणदिने तथाविधा प्रतिज्ञा राघवभट्टेन लिखिता। यथा 'वरं प्राणपरित्यागश्छेदनं शिरसोऽपि वा। न त्वनभ्यर्च्य भुञ्जीत भगवन्तं

त्रिलोचनम्' इति 'अपूजिते शिवे भुक्त्वा प्रासादाष्टशतं जपेत्। अस्नानादौ द्दशं स्नानं स्नानात् विद्याच्चतुर्गुणम्' अन्यत्राघोरज-मित्याद्यूहेत। मत्स्ये भगवन्तमित्यत्र केशव कौशिकीमिति यत्तु नृसिंहकल्पे सदा मन्त्रं जपेदित्युक्त्वा 'यदि स्यादशुचिस्तत्र स्मरेन्मन्त्रं न तूच्चरेत्। मनो हि सर्वजन्तूनां सर्वदैव शुचि स्मृतम्' इति तन्मूत्रपुरीषोत्सर्गाद्यशौचपरं तत्र रामार्चन-चन्द्रिकाधृतमहार्णवतन्त्रान्तरेऽपि। 'अशुचिर्वा शुचिर्वापि गच्छंस्तिष्ठन् स्वपन्नपि। मन्त्रैकशरणोविद्वान् मनसैव सदा-भ्यसेत्' मरीचिः। 'लवणे मधुमांसे च पुष्पमूलफलेषु च। शाककाष्ठतृणेष्वप्सु दधिसर्पिःपयःसु च। तैलौषध्यजिने चैव पक्वापक्वे स्वयं ग्रहे। पण्येषु चैव सर्वेषु नाशौचं मृतसूतके'। पक्व शुष्कान्नं शक्तु लाजादि अपक्वं तण्डुलादि तत् स्वयं गृह्य-माणं न दोषाय। पण्येषु चेति पृथगभिधानात्तेषु अशौचिना दत्तेष्वपि, न दोषः। बौधायनः मानसमप्यशुचिरिति मान-सेऽपि जननमरणयोरनध्यायः। मिताक्षरायामङ्गिराः 'अति-क्रान्ते दशाहे तु पश्चाज्जानाति चेद् गृही। त्रिरात्रं सूतकं तस्य न च द्रव्येषु कर्हिचित्'। कूर्मपुराणे 'मातामहानां मरणे त्रिरात्रं स्यादशौचकम्। एकोदकानां मरणे सूतकं चैतदेव हि। पक्षिणीयोनिसम्बन्धे बान्धवेषु तथैव च। एकरात्रं समुद्दिष्टं गुरौ सब्रह्मचारिणि। प्रेते राजनि स ज्योतिर्यस्य स्याद्विषये स्थितिः'। तथा 'परपूर्वासु भार्य्यासु पुत्त्रेषु कृतकेषु च। त्रिरात्रं स्यात्तथाचार्य्ये स्वभार्य्या-स्वन्यगासु च। आचार्य्यपुत्त्रे पत्नाञ्च अहोरात्रमुदाहृतम्। एकाहं स्यादुपाध्याये स्वग्रामे श्रोत्रियेषु च। त्रिरात्रमस-पिण्डेषु स्वगृहे संस्थितेषु च। एकाहस्त्वाप्यशुद्धं स्यादेकरात्रञ्च शिष्यकं' एकाहश्चैकरात्रश्चेत्यहोरात्रमित्यर्थः। 'त्रिरात्रं श्वश्रू-

मरणे श्वशुरे चैतदेव हि। सद्यः शौचं समुद्दिष्टं सगोत्रे संस्थिते सति'। एकोदकानां समानोदकानां योनिसम्बन्धे मातृस्वस्रीयभागिनेयेषु बान्धवेषु पितृबान्धवेषु तथैव चेति प्रागुक्तपक्षिणीत्यर्थः अन्यथा तदुपादानं व्यर्थं स्यात् अतएव 'दन्तजातेऽनुजाते च कृतचूड़े च संस्थिते। अशुद्धा बान्धवाः सर्वे सूतकेषु तथोच्यते' इति मनुवचने बान्धवाः सर्वे इत्यत्र सर्वशब्दात् सपिण्डानामिवाशौचं किन्तु समानोदकसगोत्र-मातृबन्धुपितृबन्धुप्रभृतीनां ग्रहणमिति हारलताव्याख्यानेऽपि पितृबन्धूनामप्यशौचमुक्तम्। सम्बन्धविवेके पितृबन्धूनामप्य-शौचमुक्तञ्च सङ्गच्छते। पितृबान्धवाः पितुः पितुः स्वसुः पुत्राः पितुर्मातुः स्वसुः सुताः पितुर्मातुलपुत्राश्च विज्ञेयाः पितृ-बान्धवाः'। अनुजात इति दन्तजातस्य प्राङ्निर्देशादृच्छ-वच्छास्त्रव्यवहार इति न्यायेन जातदन्तादनु पश्चाज्जातो जात-दन्त इत्यर्थः। कृतचूड़ेति चकारात् कृतोपनयने चेति संस्थिते मृते। अत्र मृतस्य तत्तत् कर्मभेदोपादानमशौचभेदाय स च प्रागेव विवृतः। मातृबान्धवेषु तु एकरात्रं तथाच जावालिः समानोदकानां त्र्यहं गोत्रजानामहः स्मृतम्। मातृबन्धौ गुरौ मित्रे मण्डलाधिपतौ तथा'। मातृबान्धवाश्च 'मातुर्मातुः स्वसुः पुत्रा मातुः पितुः स्वसुः सुताः। मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवाः' गोत्रजा एकग्रामवासित्वेन विशेष-णीयाः तन्मरणेऽत्यन्तनिर्गुणानामेकाहः अन्येषान्तु सद्यः प्रागुक्तकूर्मपुराणात्। मण्डलाधिपतिश्च यस्य मण्डले निवास-रूपेण स्थितिः क्रियते। कृतकेषु च इति चकारात् क्षेत्र-जादिषु तथाच त्रिरात्रानुवृत्तौ विष्णुः। अनौरसेषु पुत्रेषु जातेषु च मृतेषु च। परपूर्वासु भार्य्यासु प्रसूतासु मृतासु च' इति। पितृमरणेऽपि तेषां त्रिरात्रमाह ब्रह्मपुराणं दत्तकाश्च

स्वयं दत्तः कृत्रिमः क्रीत एव च। अपविद्धाश्च ये पुत्रा भरणीयाः सदैव ते। भिन्नगोत्राः पृथग्पिण्डाः पृथग्वंशकराः स्मृताः। सूतके मृतके चैव त्र्यहाशौचस्य भागिनः'। एतच्च कलौ दत्तकमात्रविषयम् अन्येषां प्रागुक्तादित्यपुराणेन करणनिषेधात्। स्वभार्य्यास्वन्यगासु च सजातीयोत्कृष्टजातीयपुरुषान्तरसंगृहीतासु। अपकृष्टजातिगमने पतितत्वेनाशौचाभावात्। असपिण्डेषु भिन्नकुलजेषु श्रोत्रियरूपेषु मातृष्वस्रादिषु च स्वगृहमृतेषु त्रिरात्रम्। तथाच प्रचेताः 'मातृष्वसृमातुलयोः श्वश्रूश्वशुरयोर्गुरौ। ऋत्विजि चोपरते च त्रिरात्रमिति शिष्यते। एकाहश्च एकरात्रश्चेति अहोरात्रमित्यर्थः। श्वश्रूश्वशुरयोस्तु स्वगृहभिन्नेऽपि सन्निधिमरणमात्रेण त्रिरात्रं। 'श्रोत्रियेतूपसम्पन्ने त्रिरात्रमशुचिर्भवेत्' इति मनुवचने उपसम्पन्न इत्यत्र सन्निहितत्वेनाशौचविशेषदर्शनादत्रापि तथा कल्प्यते अन्यथा स्वगृहमात्रपरत्वे त्रिरात्रमसपिण्डेषु स्वगृहे संस्थितेषु चेत्यनेन सम्बन्धिमात्रपरत्वेन कूर्मपुराणीयेन त्रिरात्रं श्वश्रूमरणे श्वशुरेचैतदेवहीत्यस्य पुनरुक्तत्वापत्तेः। श्रोत्रियमाह देवलः। 'एकां शाखां सकल्पां वा षड्भिरङ्गैरधीत्य वा। षट्कर्मनिरतो विप्रः श्रोत्रियो नामधर्मवित्। यत्तु यम वचनं 'श्वशुरयोर्भगिन्याश्च मातुलान्याश्च मातुले। पित्रोः स्वसरि तद्वच्च पक्षिणीं क्षपयेन्निशाम्' इति मिताक्षरारत्नाकरयोर्वृहन्मनुवचनञ्च। 'मातुले श्वशुरे मित्रे गुरौ गुर्वङ्गनासु च। अशौचं पक्षिणीं रात्रिं मृता मातामही यदि' इति श्वश्रुश्वशुरयोरेकग्रामस्थितयोरसन्निधिमरणे पक्षिणीविधायकम्। स्वग्रामे श्रोत्रियेषु च इत्यत्र स्वग्रामत्वेनापि विशेषदर्शनादत्रापि वचनानां विरोधे 'बहूनामेकधर्म्माणामेकस्यापि यदुच्यते। सर्वेषामेव तत् कुर्य्यादेकरूपा हि ते स्मृता'। इति बौधायन-

श्रवचनस्वरसात्तथा कल्प्यते। एवञ्च श्वश्रूश्वशुरयोर्विष्णूक्तमेक-रात्रं भिन्नग्राममरणविषयकम्। यथा आचार्य्यपत्नीपुत्त्रोपाध्यायमातुलश्वशुरश्वशुर्य्यसहाध्यायिशिष्येषु एकरात्रेणेति आचार्य्यपत्नीपुत्रयोर्मातुः सापत्नभ्रातर्य्यहोरात्रं सोदरे तु भिन्नस्थानमृतेऽपि पक्षिणी एवं हारलताप्रभृतयः। 'श्वशुर्य्ये श्यालके सहाध्यायिनि सतीर्थे शिष्ये वेदैकदेशवेदाङ्गाध्याप्ये'। मनुः 'मातुले पक्षिणीं रात्रिं शिष्यर्त्विग्बान्धवेषु च'। अत्र पक्षिणीविधानाद्बान्धवपदं स्वबान्धवपरम्। स्वबान्धवाश्च मिताक्षरायाम् 'आत्ममातुः स्वसुः पुत्रा आत्ममातुः स्वसुः सुताः। आत्ममातुलपुत्राश्च विज्ञेया आत्मबान्धवाः'। मातृबन्धौ जावालिनाहर्विधानादात्मबान्धवे तदधिकं युक्तं रायमुकुटप्रभृतयोऽप्येवम्। एकरात्रमित्यनुवृत्तौ विष्णुः। 'असपिण्डे स्ववेश्मनि मृते' इति असपिण्डे अश्रोत्रियरूपे 'अश्रोत्रिये त्वहः कृत्स्नम्' इति मनुवचनैकवाक्यत्वात् ब्रह्मपुराणम् 'आदावेकस्य दत्तायां कुत्रचित् पुत्रयोर्द्वयोः। पितुर्यत्र त्रिरात्रं स्यादेकं तत्र सपिण्डनाम्। एका माता द्वयोर्यत्र पितरौ द्वौ च कुत्रचित्। तयोः स्यात् सूतकादैक्यं मृतकाच्च परस्परम्'। प्रथममन्येनोढ़ा तेनैव जनितपुत्रापुत्रसहितैवान्यमिश्रिता पश्चात्तेनापि जनितपुत्रा तयोः पुत्रयोर्यथासम्भवं प्रसवमरणयोर्द्वितीयपुत्रपितुस्त्रिरात्रम्। एवंविधे च विषये यत्र परस्त्री पुत्रजनकस्य त्रिरात्रं तत्र तत्सपिण्डानामेकरात्रम्। तथाविधपुत्रयोः परस्परं प्रसवमरणयोर्मातृजात्युक्ताशौचम्। अत्र विशेषयति नारदः। 'जाता ये त्वनियुक्तायामेकेन बहुभिस्तथा। अरिक्थभाजास्ते सर्वे वीजिनामेव ते सुताः। दद्युस्ते वीजिने पिण्डं माता चेत् शुल्कतो हृता। अशुल्कोपहृतायान्तु पिण्डदा वोढुरेव ते'।

अरिक्थभाजः क्षेत्रिणामित्यर्थः एवकारेण द्विपितृकत्वं निरस्तम्। तदेतच्छुल्कतः स्त्रीसंग्रहे बोद्धव्यं शुल्काभावे क्षेत्रिण एव पिण्डदा इति श्राद्धविवेकः। वस्तुतस्तु प्रागुक्तादित्यपुराणवचनात् कलौ क्षेत्रजपुत्रकरणनिषेधात् स च पुत्रो बीजिनामेव इदानीं व्यवहारोऽपि तथा। 'जातापि दास्यां शूद्रेण कामतोऽंशहरो भवेत्। मृते पितरि कुर्य्युस्तं भ्रातरस्त्वर्द्धभागिनम्'। इति याज्ञवल्क्यदर्शनाच्छूद्राणामेव तथाविधाचारो नान्येषां वर्णानामिति अतएव प्रागुक्तब्रह्मपुराणवचनमप्येतत्परम्। यत्तु 'अन्यपूर्वा गृहे यस्य भार्य्या स्यात्तस्य नित्यशः। अशौचं सर्वकार्य्येषु देहे भवति सर्वदा। दानं प्रतिग्रहं स्नानं सर्वं तस्य वृथा भवेत्' इति ब्रह्मपुराणवचनानन्तरं तद्गृह इत्युपादानात् समस्तगृहकार्य्यकारिणी यस्येत्यर्थः। इति हारलतादत्तविषयम्। अत्र प्रतिग्रहश्रवणाद्ब्राह्मणमात्रपरं यस्येति विप्रविशेषणत्वेऽप्युपपद्यते। तथाच शङ्खः 'हीनवर्णा तु या नारी प्रमादात् प्रसवं व्रजेत्। प्रसवे मरणे तज्जमशौचं नोपशाम्यति'। हीनवर्णात्र शूद्रा प्रमादात् परिणयं विना कृतसंग्रहात्। तेन यद्यपरिणीता शूद्रोत्तमवर्णादपत्यमुत्पादयति तदा तस्याः प्रसवमरणजमशौचं तन्निमित्तकस्य यावज्जीवं भवतीत्यर्थ इति शुद्धिचिन्तामणिः। यत्तु शङ्खलिखितौ 'अन्यपूर्वासु भार्य्यासु कृतकेषु मृतेषु च। नानध्यायो भवेत्तत्र नाशौचं नोदकक्रिया' इति तदपकृष्टजातिविषयम्। मिताक्षरायां वृद्धयाज्ञवल्क्यः। संस्थिते पक्षिणीं रात्रिं दौहित्रे भगिनीसुते। संस्कृते तु त्रिरात्रं स्यादिति धर्मो व्यवस्थितः। पित्रोरुपरमे स्त्रीणामूढानान्तु कथं भवेत्। त्रिरात्रेणैव शुद्धिः स्यादित्याह भगवान्मनुः'। संस्कृते स्वयं दाहादिना संस्कृते। तथाच पैठीनसिः अस-

स्विनो द्विजान् दहित्वा वहित्वा सद्यः शौचं सम्बन्धे तु त्रिरात्रमिति ऊढ़कन्यानान्तु दाहादिकं विनापि अन्यथा तद्दोढ़ुरशौचं न तस्या इति महद्वैषम्यं स्यात्। तत्रायं 'विशेषः दानध्यायने वर्जयेरन् दशाहं सपिण्डेषु गुरौ वा सपिण्डे त्रिरात्रमितराचार्य्येषु' इति आश्वलायनवचने दशाहा-शौचमुपक्रम्य त्रिरात्रविधानाद् यादृग्वयसि यादृङ्मरणे सपिण्डानां दशाहं तादृग्वयसि तादृङ्मरणे आचार्य्यादीनां त्रिरात्रादि अन्यथा मातुले पक्षिणीं रात्रिमिति मनुवचने नाजातदन्तमातुलमरणेऽपि भागिनेयस्य पक्षिणी स्यात् तत्सपिण्डानां सद्यःशौचमादन्तजननात् सद्य इत्यादि नेति महद्वैषम्यं स्यात् अत्रानूढ़कन्यायाः पित्रादिमरणे संपूर्णाशौचं कार्य्यमिति रायमुकुटप्रभृतयः तन्न 'अपुत्रस्य च या पुत्री सैव पिण्डप्रदा भवेत्। तस्य पिण्डान् दशैतान् वै एकाहेनैव निर्वपेत्। इति वचनेन यावदशौचं पिण्डान् दद्यादिति वचनयोरेकवाक्यतया एकाहो युक्तं एकाहे दशपिण्डदान-विचारेण एकाहाशौचाभ्युपगमात्। वृद्धशातातपः। 'यदा भोजनकाले तु अशुचिर्भवति द्विजः। भूमौ निःक्षिप्य तं ग्रासं स्नात्वा विप्रो विशुद्ध्यति। भक्षयित्वा तु तं ग्रासं अहो-रात्रेण शुद्ध्यति। अशित्वा सर्वमेवान्नं त्रिरात्रेण विशुद्ध्यति'। अत्र भोजनगततारतम्येन स्नानादिप्रायश्चित्तभेदान्नात्राशुचि-पदं स्नानार्हाशौचमात्रपरम् अन्यथा स्नानविधानं व्यर्थं स्यात् मरणपुत्रजन्मस्नानादेव तत्प्राप्तेः किन्तु सपिण्डसमानोदक-जननाचार्य्यादिमरणाशौचिपरमप्यविशेषात् अतएव अशुचिः सूतकादिनेत्यर्थः इति प्रायश्चित्तविवेकः। अहोरात्रेणोपोषि-तेन एवं त्रिरात्रेण प्रायश्चित्तप्रकरणात्।

अथ मृत्युविशेषाशौचम्। कूर्मपुराणे 'आप्यादयेद्दया-

त्मानं स्वयं योऽग्न्युदकादिभिः। विहितं तस्य नाशौचं नाग्निर्नाप्युदकादिकम्। अथ कश्चित् प्रमादेन म्रियतेऽग्निविषादिभिः। तस्याशौचं विधातव्यं कार्य्यञ्चाप्युदकादिकम्'। आत्मानं स्वदेहं स्वयमित्युपादानात् एवञ्चावैधबुद्धिपूर्व्वकात्मघातिनोऽशौचे पर्य्युदस्ते तदितरस्याशौचप्राप्तौ यत् पुनरभिहितमथ कश्चित् प्रमादेनेत्यादिना तदग्न्यादिभिः प्रमादमरणे सत्यशौचविशेषज्ञापनार्थं तच्च काश्यपोक्तं त्रिरात्रम्। अग्निविषादिभिरित्यादिपदं रोगव्यतिरिक्तहेतुपरम्। काश्यपः 'अनशनमृतानामशनिहतानामग्निजलप्रविष्टानां भृगुसंग्रामदेशान्तरमृतानां जातदन्तानां गर्भाणां त्रिरात्रमिति'। अनशनमृतानां शास्त्रानुमत्यापि तत्र फलान्याह दानरत्नाकरे नरसिंहपुराणम्। 'जलप्रवेशे चानन्दं प्रमोदं वह्निसाहसे। भृगुप्रपाते सौख्यन्तु रणे चैवातिनिर्म्मलम्। 'अनशनमृतो यः स्यात् स गच्छेत्तु त्रिपिष्टपम्'। आनन्दादयस्तु स्वर्गविशेषाः। 'एकविंशत्यमी स्वर्गा निर्म्मिता मेरुमूर्द्धनि' इत्युपक्रम्याभिधानात् तीर्थकाण्डकल्पतरौ आदित्यपुराणञ्च 'कीदृशैस्तु तपो दानैः पुरीं पश्यन्ति मानवाः'। भानुरुवाच। 'राज्यार्थं निहता ये च राजानो धर्म्मतत्पराः। अग्निविद्युद्धता ये च सिंहव्याघ्रहताश्च ये। प्राप्नुवन्ति च ते सर्व्वे पुरीमैरावतीं शुभाम्। साक्षाद्धि भगवानग्निर्नागस्य वसते मुखे। सिंहव्याघ्रगजेन्द्राणां विष्णुरेव व्यवस्थितः। विद्युदग्निहता ये च सिंहव्याघ्रहताश्च ये। नागैश्चैव हता ये च ते नराः पुण्यकर्म्मिणः'। एतच्च प्रमादवैधान्यतरकृतमरणविषयम्। कौर्म्मे 'यः सर्व्वपापयुक्तोऽपि पुण्यतीर्थेषु मानवः। नियमेन त्यजेत् प्राणान् मुच्यते सर्व्वपातकैः'। नियमेन तत्तत्सङ्कल्पपूर्व्वकजलप्रवेशादिना जलप्रवेशादिकन्तु

कली शूद्रस्यैव। ब्राह्मणादीनान्तु आदित्यपुराणेन सगुणा-शौचप्रकरणोक्तेन निषेधात्। अथनिमृतानां प्रमादात् भृगुवस्त्रप्रदेश:। ब्रह्मपुराणं 'प्रमादादपि नि:शङ्कस्त्वकस्मा-द्विधिचोदित:। शृङ्गिदंष्ट्रिनखिव्यालविषविद्युज्जलादिभि:। चाण्डालैरथवा चौरैर्निहतो वापि कुत्रचित्। तस्य दाहा-दिकं कार्य्यं यस्मान्न पतितस्तु स:। शृङ्गिदंष्ट्रिनखिव्याल-विषवह्निस्त्रियाजलै:। आदरात् परिहर्त्तव्य: कुर्वन् क्रीड़ां मृतस्तु य:। नागानां विप्रियं कुर्वन् दग्धश्चाप्यथ विद्युता। निगृहीत: स्वयं राज्ञा चौर्य्यदोषेण कुत्रचित्। परदारान् रमन्तश्च द्वेषात्तत्पतिभिर्हता:। असमानैश्च संकीर्णैश्चाण्डाला-द्यैश्च विग्रहम्। कृत्वा तैर्निहतास्तांश्च चाण्डालादीन् समा-श्रिता:। गवाग्निविषदाश्चैव पाषण्डा: क्रूरबुद्धय:। क्रोधात् प्रायं विषं वह्निं शस्त्रमुद्बन्धनं जलम्। गिरिवृक्षप्रपातञ्च ये कुर्वन्ति नराधमा:। कुशिल्पजीविनश्चैव सूनालङ्कारकारिण:। मुखे भगाश्च ये केचित् क्लीवप्राया नपुंसका:। ब्रह्मदण्ड-हता ये च ये च वै ब्राह्मणैर्हता:। महापातकिनो ये च पतितास्ते प्रकीर्त्तिता:। पतितानां न दाह: स्यान्नान्त्ये-ष्टिर्नास्थिसञ्चय:। न चाश्रुपात: पिण्डो वा कार्य्यं श्राद्धादिकं क्वचित्। एतानि पतितानाञ्च य: करोति विमोहित:। तप्तकृच्छ्रद्वयेनैव तस्य शुद्धिर्नचान्यथा'। प्रमादादनवधानात्। नि:शङ्क: दंष्ट्रिशृङ्गिनख्यादिहिंस्रजन्तुसन्निधिशङ्कारहित: पुरुषो विधिचोदितो मरणकर्मप्रेरित: सन् यदा पलायना-समर्थ: अकस्माज्झटिति शृङ्ग्यादिभिर्निहतो भवति तदा सर्वमेव दाहादिकं कर्त्तव्यम्। संकीर्णै: प्रतिलोमसङ्करजातै:। अस-मानैरित्यनेन ब्राह्मणादीनामेव न तु चाण्डालादीनामन्यो-न्यकलहेन। गव्यं व्याधिजनकमौषधं कृत्रिमविषमिति

कश्चित्। पाषण्डा इति वेदवाह्यरक्तपटमौण्डादिव्रतचर्य्या पाषण्डं तदेव तेषामस्तीत्यर्थः। अर्श आदित्वादजितिपाणिनीयाः अदिति कालापाः। अतएव 'पाषण्डमाश्रितास्तेनाः' इति याज्ञवल्क्यः। क्रूरबुद्धयः नित्यं परोपकार एव बुद्धिर्येषां तन्निन्दायां मत्स्यपुराणम्। 'विषाग्निसर्पशस्त्रेभ्यो न तथा जायते भयम्। अकारणजगद्वैरिखलेभ्यो जायते तथा'। कुशिल्पजीविनः सज्जातीया एव चर्म्मास्थ्यादिपात्रनिर्मातारः। सूनालङ्कारकारिणः मनुष्यबधस्थानाधिकारिणः। मुखे भगाः कण्ठदेशोत्पन्नभगाः उत्कलदेशे तादृशरोगयुक्तत्वेन प्रसिद्धाः क्लीवप्राया नपुंसका इति चतुर्दशप्रकाराः नपुंसका नारदोक्ताः अत्र केचित् पुरुषकर्मकरणमसमर्थास्तु क्लीवप्रायाः। ब्रह्मदण्डहताः ब्राह्मणविषयापराधकरणान्निःसृता इत्यनिरुद्धभट्टाः। ये च वै ब्राह्मणैर्हताः तन्मन्युत्पादनादभिचारेण शापेन वा शस्त्रादिना वा इति प्रायश्चित्तविवेकोक्तम्। अत्र विप्रतिरस्कारादिफलपरिपाककालमाह पराशरः। 'कृते तत्कालिकं पापं त्रेतायां दशभिर्दिनैः। द्वापरे चैकमासेन कलौ संवत्सरेण तु'। तदितर एव मरीचिः 'विषशस्त्रश्वापदाहि तिर्य्यग्‌ब्राह्मणघातिनाम्। चतुर्दश्यां क्रिया कार्य्या अन्येषान्तु विगर्हिता'। संग्रामे विशेषमाह अग्निपुराणं 'दंष्ट्रिभिः शृङ्गिभिर्वापि हता म्लेच्छैश्च तस्करैः। ये स्वाम्यर्थं हता यान्ति राजन् स्वर्गं न संशयः'। तथा 'सर्व्वेषामेव वर्णानां चत्रियस्य विशेषतः'। विष्णुधर्मोत्तरञ्च 'स्वाम्यर्थे ब्राह्मणार्थे वा मित्रकार्य्ये च ये हताः। गोग्रहे निहता ये च ते नराः स्वर्गगामिनः'। तस्माच्चाण्डालाद्यैश्च विग्रहमिति यदुक्तं तत् क्रीड़ापरं भविष्यपुराणीयमध्यतन्त्रषष्ठाध्याये। 'शृणु कुष्ठगणं विप्र उत्तरोत्तरतो गुरुम्। विचर्चिका तु दुश्चर्मा चर्चरीयस्तृतीयकः।

ग्रकर्चुर्म्रणताम्रौ च कृष्णश्वेते तथाष्टकम्। एषां मध्ये तु यः
ष्ठी गर्हितः सर्वकर्मसु। व्रणवत् सर्वगात्रेषु गण्डे भाले
थानसि। तथा 'मृते च प्रोथयेत्तोये अथवा तरुमूलके।
पिण्डं नोदकं कुर्य्यान्न च दाहक्रियाञ्चरेत्। षण्मासीय-
त्रीमासीयो मृतः कुष्ठी कदाचन। यदि स्नेहाच्चरेद्दाहं यति-
ान्द्रायणं चरेत्। यतिचान्द्रायणाशक्तौ पादोनधेनुचतुष्टयं
यम्। अतिपातकशेषफलत्वादप्येवं युक्तं यथा विष्णुः।
अथ नरकानुभूतदुःखानां तिर्य्यक्त्वमुत्तीर्णानां मानुष्ये
लक्षणानि भवन्ति कुष्ठ्यतिपातकी ब्रह्महा यक्ष्मी सुरापः
श्यावदन्तकः। सुवर्णहारी कुनखी गुरुतल्पगो दुश्चर्मा इत्यादि
श्यावदन्तकः स्वभावकृष्णदन्तकः प्रधानदन्तद्वयमध्यवर्त्ति
क्षुद्रदन्तः। प्रधानदन्तोपरि दन्तान्तरमिति केचित्। कुनखी
ाकुञ्चितनखः दुश्चर्मा स्वभावतः अनावृतमेढ्रः। अतएव महा-
ोगिणो यावज्जीवमशौचमाह कूर्मपुराणम्। 'क्रियाहीनस्य
मूर्खस्य महारोगिण एव च। यथेष्टाचरणस्याहुर्मरणान्त-
मशौचकम्' क्रियाहीनस्य नित्यनैमित्तिकक्रियाननुष्ठायिनः।
मूर्खस्य गायत्रीरहितस्य सार्थगायत्रीरहितस्येति रुद्रधरः।
महारोगिणः पापरोगाष्टकान्यतमरोगवतः। ते च उन्माद-
स्त्वग्दोषो राजयक्ष्माश्वासो मधुमेहो भगन्दरः। उदरोऽश्मरी
इत्यष्टौ पापरोगा नारदोक्ताः यथेष्टाचरणस्य द्यूतवेश्याद्यास-
क्तस्य। एवञ्च भविष्यपुराणोक्तं यतिचान्द्रायणप्रायश्चित्तम्
अकृतप्रायश्चित्तानां कुष्ठ्यादीनां दाहे बोद्धव्यम् अन्यथैषां
प्रायश्चित्तोपदेशो विफलः स्याद् यथा विष्णुः 'कुनखी श्याव-
दन्तश्च द्वादशरात्रं कृच्छ्रं चरित्वोद्धरेयाताम् तद्दन्तनखौ' इति
अत्र द्वादशरात्रं पराकरूपं तत्र पञ्चधेनवः न तु प्राजापत्यं
तद्दाहकर्त्तुर्यतिचान्द्रायणेन विषमशिष्टत्वात् तत्र बहूनामेक-

धर्माणामिति वचनादाकाङ्क्षितत्वात् कुष्ठ्यादीनामपि प्रायश्चित्तम् अतएव प्रायश्चित्तविवेके प्युक्तमेवं दुश्चर्मादिषु अपि ज्ञेयमिति महापातकादतिपातकस्य गुरुत्वात् तच्छेषेऽपि प्रायश्चित्तं द्विगुणम्। कर्मविपाके शातातपः। 'महापातकजं चिह्नं सप्तजन्मसु जायते। बाधते व्याधिरूपेण तस्य कृच्छ्रादिभिः शमः। कुष्ठञ्च राजयक्ष्मा च प्रमेहो ग्रहणी तथा'। अत्र कुष्ठपदमल्पकुष्ठपरमिति पूर्वेण अविरोधः। एवञ्च 'ऊनैकादशवर्षस्य पञ्चवर्षाधिकस्य च। चरेद् गुरुः सुहृद्वापि प्रायश्चित्तं विशुद्धये'। इत्यङ्गिरोवचने 'रोगी वृद्धस्तु पोगण्डः कुर्वन्त्यन्येव्रतं सदा' इति ब्रह्मपुराणे च अन्यपापक्षयार्थमन्यकर्तृकप्रायश्चित्तदर्शनादत्रापि तुल्यन्यायतया स्वयमकृतप्रायश्चित्तस्य मृतस्य पुत्त्रादिना प्रायश्चित्तं कृत्वा दाहादिकं कार्य्यम्। मनुः। 'शस्त्रेणाभिमुखो यस्तु बध्यते क्षत्रधर्मणा। यज्ञः संतिष्ठते तस्य सद्यः शौचं विधीयते'। क्षत्रधर्मेण अकातरत्वादिना यज्ञः पिण्डदानादिरूपः संतिष्ठते समाप्तिमेतीति रत्नाकरः। यज्ञो ज्योतिष्टोमादिस्तस्य भवतीति प्रसङ्गादुक्तमिति प्रकाशकारः। पराशरः। 'ब्राह्मणार्थे विपन्नानां दण्डिनां गोग्रहे तथा। आहवेषु विपन्नानामेकरात्रमशौचकम्'। गवार्थे ब्राह्मणार्थे वा संग्रामे दण्डेन सम्बध्यमानानां मरणे एकाहोरात्रमशौचकम्। बृहस्पतिः। 'डिम्बाहवे विद्युता च राज्ञा गोविप्रपालने। सद्यः शौचं मृतस्याहुस्त्र्यहञ्चान्ये महर्षयः'। डिम्बाहवे नृपतिरहितयुद्धे शस्त्रैरभिमुखहतस्य सद्यः शौचं लगुड़ादिहतस्य पराङ्मुखहतस्य च त्रिरात्रं वज्राभिघातेन मरणं भवतु इत्यभिसन्धाय स्थितस्य मरणे सद्यः शौचं प्रमादात्त्रिरात्रम्। राज्ञा वधार्हा पराधहतस्य सद्यः शौचं तदन्यस्य त्रिरात्रम्। गोविप्र-

पालनेऽभिमुखत्वपराङ्मुखत्वाभ्यां सद्यस्त्रिरात्रे व्याघ्रः 'क्षतेन म्रियते यस्तु तस्याशौचं भवेद्द्विधा। आसप्ताहात्त्रिरात्रं स्याद्दशरात्रमतःपरम्। शस्त्रघाते त्र्यहादूर्द्ध्वं यदि कश्चित् प्रमीयते। अशौचं प्राकृतं तत्र सर्ववर्णेषु नित्यशः'। विद्याकरकृतस्य वचनं यथेति क्वचित् पाठः। अत्र शस्त्रघातपदं क्षतेतरशस्त्रघातपरं पारिभाषिकशस्त्रघातपरमपि। यथा देवीपुराणे। 'पक्षिमत्स्यमृगैर्ये तु दंष्ट्रिशृङ्गिनखैर्हताः। पतनानशनप्रायैर्वज्राग्निविषबन्धनैः। मृता जलप्रवेशेन ते वै शस्त्रहताः स्मृताः'। अन्यथा क्षतं विना पतनादिभिर्विलम्बमृतानां दिनग्रहणेऽनध्यवसायः स्यात्। न च शास्त्रीयव्यवहारेऽन्तरङ्गत्वेन पारिभाषिकग्रहणस्यैव युक्तत्वमिति वाच्यम्। श्राद्धे पारिभाषिकापारिभाषिकशस्त्राघातग्रहणवदत्रापि तथा युक्तत्वात् पारिभाषिकत्वादेव न प्रकरणनियमः।

अथ सद्यः शौचम्। तत्र विष्णुः। 'नाशौचं राज्ञां राजकर्मणि न व्रतिनां व्रते न सत्रिणां सत्रे न कारूणां स्वकर्मणि न राजाज्ञाकारिणां तदिच्छया न देवप्रतिष्ठाविवाहयोः पूर्वसंवृत्तयोः' इति। सत्रिणां नित्यप्रवृत्तान्नदानानां सत्रेऽन्नदाने। कारवः सूपकाराद्याः। आदिपुराणे 'सूपकारेण यत् कर्म करणीयं नरेष्विह। तदन्यो नैव शक्नोति तस्माच्छुद्धिः सपूपकृत्'। कूर्मपुराणे 'कारवः शिल्पिनो वैद्या दासा दास्यस्तथैव च। दातारो नियमी चैव ब्रह्मविद् ब्रह्मचारिणौ। सत्रिणो व्रतिनस्तावत् सद्यः शौचा उदाहृताः'। आदिपुराणे 'शिल्पिनाश्चित्रकाराद्याः कर्म यत् साधयन्त्युत। तत् कर्म नान्यो जानाति तस्मात् शुद्धः स्वकर्मणि। दासा दास्यश्च यत् कर्म कुर्वन्त्यपि च लीलया।

तदन्यो न क्षमः कर्त्तुं तेन ते शुचयः स्मृताः'। चित्रकाराद्य-रूपाः शिल्पिनः आद्यशब्दाद्वेलनिर्णेजकाद्याः। शातातपः। 'मूल्यकर्मकराः शूद्रा दासादास्यस्तथैव च। स्नाने शरीर-संस्कारे गृहकर्मण्यदूषिताः' स्मृतिः। 'सद्यः स्पृश्यो गर्भ-दासो भक्तदासस्त्र्यहाच्छुचिः'। वैद्या अपि चिकित्सायामेव तथाच स्मृतिः। 'चिकित्सको यत् कुरुते तदन्येन न शक्यते। तस्मात् चिकित्सकः स्पर्शे शुद्धो भवति नित्यशः'। दातार आवश्यकप्रत्यहं गोभूमिहिरण्यादिदाने प्रवृत्ताः। तेषां तद्दान एव। प्रत्यहं दानञ्च दातव्यं प्रत्यहं पात्र इति याज्ञवल्क्यात्। कदाचित्कदानकारित्वात्तु दाने प्रक्रान्ते अशौचं नास्ति तावत् यावत्तत् कर्म कुर्वन्ति। इति हार-लताप्येवम्। पूर्वसङ्कल्पितद्रव्यदानेऽपि न अशौचं तथाच मिताक्षरायाम्। क्रतोः 'पूर्वसङ्कल्पितं द्रव्यं दीयमानं न दुष्यति'। इति आदित्यपुराणे 'निवृत्ते कृच्छ्रहोमादौ ब्राह्म-णादिषु भोजने। गृहीतनियमस्यापि न स्यादन्यस्य कस्य-चित्। निमन्त्रितेषु विप्रेषु प्रारब्धे श्राद्धकर्मणि। निम-न्त्रणाद्धि विप्रस्य स्वाध्यायाद्विरतस्य च। देहे पितृषु तिष्ठत्सु नाशौचं विद्यते क्वचित्'। प्राजापत्यादिकृच्छ्रे समाप्ते होमयागजपेषु समाप्तेषु सम्पूर्णार्थमवश्यं मया ब्राह्मणाभोज-यितव्या इति गृहीतनियमो यस्तस्याशौचेऽन्यकुलजातानाम-मपि भुञ्जानानां दोषाभावः। कस्यचिद्दातृभोक्त्रोरित्यर्थः। एवं प्रारब्धश्राद्धेऽपि क्वचिदित्यनेन दातृभोक्त्रोरशौचाभावः। तथाच विष्णुः। 'व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्चने जपे। आरब्धे सूतकं न स्यादनारब्धे तु सूतकम्' इति पराशरः 'दीक्षितेष्वभिषिक्तेषु व्रततीर्थपरेषु च। तपोदानप्रसक्तेषु नाशौचं मृतसूतके'। यजमानानां सोमयागाङ्गदीक्षणी-

शेष्टौ कृतायां दीक्षितत्वं भवति तेन दीक्षणीयेष्ट्युत्तरकालं यजमानस्य यत् कर्म तत्राशौचं नास्ति। अभिषिक्तेषु क्षत्रियनृपतिषु तीर्थं गङ्गादिगुरुरिति कश्चित्। कालमाधवीयकूर्मपुराणं 'काम्योपवासे प्रक्रान्ते अन्तरा मृतसूतके। तत्र काम्यव्रतं कुर्य्याद्दानार्च्चनविवर्जितम्'। तत्र दानार्च्चनं स्वयं वर्जयेत् अन्यद्वारा तु कारयेत्। तथाच मत्स्यपुराणम्। गर्भिणी सूतिकानक्तं कुमारी च रजस्वला। यदा शुद्धा तदान्येन कारयेत् क्रियते सदा'। उपवासाचरणे गर्भादिपीड़ासम्भावनायां नक्तं भोजनं कुर्य्यात्। 'उपवासेष्वशक्तस्य तदेव फलमिच्छतः। अनभ्यासेन रोगाणां किमिष्टं व्रतमुच्यताम्'। इति नारदप्रश्नानन्तरम्। 'उपवासेष्वशक्तानां नक्तं भोजनमिष्यते' इति मत्स्यपुराणे एवेश्वरप्रतिवचनात्। स्वयमशुद्धा शूद्रद्वारा पूजादिकं कारयेत् कायिकमुपवासादि सदा शुद्धाशुद्धिकाले स्वयं क्रियते स्मृतिपरिभाषायामप्येवं विष्णुः। 'बहुकालिकसंकल्पो गृहीतश्च पुरा यदि। सूतके मृतके चैव व्रतं तन्नैव दुष्यति'। एतत् काम्यव्रतपरं नित्यानाञ्चारब्धानामविशेषेण कर्त्तव्यता न अशौचमित्यनुवृत्तौ ब्रह्मपुराणं 'नैष्ठिकस्याथ वान्यस्य भिक्षार्थं प्रस्थितस्य च'। नैष्ठिकस्य ब्रह्मचारिविशेषस्य अन्यस्य चतुर्थाश्रमिणः अशौचिभिक्षाग्रहणे दोषाभाव इति हारलताप्रभृतयः। कौर्मे 'सद्यः शौचं समाख्यातं दुर्भिक्षे चाप्युपप्लवे। डिम्बाहवहतानाञ्च विद्युता पार्थिवैर्द्विजैः। सद्यः शौचं समाख्यातं शापादिमरणे तथा'। उपप्लवे राजविप्लवे औपसर्गिकात्यन्तमरकपीड़ने च सद्यः शौचमुक्तं तथाच पराशरः। 'उपसर्गे मृते चैव सद्यः शौचं विधीयते'। अतएव 'आपद्यपि च कष्टायां सद्यः शौचं विधीयते'। इति याज्ञवल्क्यवचनेऽनिरुद्धभट्ट-

शूलपाणिप्रभृतिभिरौपसर्गिकात्यन्तमरकपीड़ायां सद्यः शौचं विधीयते इत्युक्तम् उपसर्गश्च त्रिविधोत्पातः तथाच गर्गं संहितावार्हस्पत्ययोः। 'अतिलोभादसत्याद्वा नास्तिक्याद्वाप्यधर्मतः। नरापचारान्नियतमुपसर्गः प्रवर्त्तते। अतोपचारान्नियतमपवर्जन्ति देवताः। ताः सृजन्त्यद्भुतांस्ताव द्दिव्यनाभसभूमिजान्। त एव त्रिविधा लोके उत्पाता देव निर्मिताः। विचरन्ति विनाशाय रूपैः सम्भावयन्ति च'। यद्यप्युपसर्गः स्मृतौ रोगभेदोपप्लवयोरपीति विश्व कोषादुपसर्गस्योभयवाचकत्वं तथापि अत्र मुनिप्रयुक्तत्वे नात्यरूढत्वात् त्रिविधोत्पातात्मकोपसर्गो गृह्यते न तु रोगविशेषात्मक इति एतेनोपसृजन्तीति व्युत्पत्त्या देहाभ्यन्तर एव यावद्वर्त्तते तावत् कालमरण एव सद्यः शौचं वहिर्भावे व्रणपरम्परया मरणे सति स्वजात्युक्ताशौचमेवेति व्रणहमिलिं दर्शनस्मृतिसारप्रदीपा इति वाचस्पतिमिश्रोक्तं हेयम्। द्विजैर्ब्राह्मणैः शापादीत्यादिशब्देनाभिचारमृतस्य ग्रहणं ब्रह्मकूर्म्मपुराणाभ्यां यद्ब्राह्मणहतस्याशौचाभाव उक्तः स बुद्धिपूर्वकहनने बोद्धव्यः। प्रमादहते तु अशौचाद्यस्त्येव अन्यथा मरीचिवचनं निर्विषयं स्यात्। यथा 'विषशस्त्रश्वापदाहितिर्य्यग्ब्राह्मणघातिनाम्। चतुर्दश्यां क्रिया कार्य्या अन्येषान्तु विगर्हिता'। विषादिसाहचर्य्याद् ब्राह्मणकृतघातोऽस्यास्तीति प्रतीयते। यच्चात्र ये च ब्राह्मणैर्हता इति ब्रह्मपुराणीयं साधकत्वेनोपन्यस्तं श्राद्धविवेके तच्चिन्त्यम्। 'महापातकिनो ये च पतितास्ते उदाहृताः'। इत्युत्तरार्द्धेन पातित्यमभिधाय तेषां श्राद्धनिषेधात्। जावालः 'दुर्भिक्षे राष्ट्रसम्पाते शस्त्रगोब्रह्मघातिते। पतितेऽनशनप्रेते विदेशस्थे शिशौ न च'। न अशौचमित्यर्थः।

अथ शवानुगमनागमनाद्यशौचम्। कूर्मपुराणं 'प्रेतीभूतं द्विजं विप्रो योऽनुगच्छति कामतः। स्नात्वा सचैलं स्पृष्ट्वाग्निं घृतं प्राश्य विशुद्ध्यति। एकाहात् क्षत्रिये शुद्धिर्वैश्ये च स्याद्व्यहेन तु। शूद्रे दिनत्रयं प्रोक्तं प्राणायामशतं पुनः'। एतच्च घृतप्राशनं शुद्धिहेतुत्वान्नियमपरं न तु प्रायश्चित्तवद्भोजनाभावपरं तत्र तपस्त्वात्तथा। अनुः सहार्थः यत्तु याज्ञवल्क्यवचनम् 'ब्राह्मणेनानुगन्तव्यो न तु शूद्रः कथञ्चन। अनुगम्याम्भसि स्नात्वा स्पृष्ट्वाग्निं घृतभुक् शुचिः'। तत्प्रमादादनुगमने कथञ्चनेत्यभिधानात् अम्भसि न तु उद्धृतोदके। मनुः 'नारं स्पृष्ट्वास्थि सस्नेहं स्नात्वा विप्रो विशुद्ध्यति। आचम्यैव तु निःस्नेहं गामालभ्यार्कमीक्ष्य वा'। आलभ्य स्पृष्ट्वा इदमज्ञानतः। ज्ञानतोऽत्यन्ताभ्यासे तु वशिष्ठः। 'मानुषास्थि स्निग्धं स्पृष्ट्वा त्रिरात्रमशौचम् अस्निग्धे त्वहोरात्रम्' इति प्रायश्चित्तविवेकः। मिताक्षरायान्तु मनुवचनं द्विजमृत्यस्थिपरम् अन्यत्र तु वशिष्ठोक्तमित्युक्तम्। पैठीनसिः 'असम्बन्धिनो द्विजान् वहित्वा दहित्वा सद्यः शौचं सम्बन्धे त्रिरात्रम्' इति सम्बन्धे तद्युक्ते मातुलादौ। कूर्मपुराणे 'अनाथञ्चैव निर्हृत्य ब्राह्मणं धनवर्जितम्। स्नात्वा संप्राश्य तु घृतं शुध्यन्ति ब्राह्मणादयः'। तथा 'यदि निर्दहति प्रेतं प्रलोभाक्रान्तमानसः। दशाहेन द्विजः शुद्ध्येत् द्वादशाहेन भूमिपः। अर्द्धमासेन वैश्यस्तु शूद्रो मासेन शुद्ध्यति'। तथा 'अवरश्चेद्वरं वर्णमवरं वा वरो यदि। अशौचे संस्पृशेत् स्नेहात्तदाशुच्येन शुद्ध्यति'। तदाशुच्येन तदीयाशौचेन तथा आदिपुराणे 'योऽन्यवर्णन्तु मूल्येन नीत्वा चैव दहेन्नरः। अशौचन्तु भवेत्तस्य प्रेतबन्धुसमं तदा' मनुः। 'असपिण्डं द्विजं प्रेतं विप्रो निर्हृत्य बन्धुवत्। विशुद्ध्यति त्रिरात्रेण मातुराप्तांश्च बान्धवान्।

यद्यन्नमत्ति तेषान्तु दशाहेनैव शुध्यति। अनदन्नन्नमह्नैव न चेत्तस्मिन् गृहे वसेत्'। बन्धुवत् स्नेहाद्यनुबन्धादशुचि-गृहवासे तदन्नभक्षणरहितानां त्रिरात्रं यद्गृहवासतदन्न-भोजनरहितानां स्नेहादसम्बन्धिनो निर्हरणेऽहोरात्रम्। बान्ध-वेषु अदृष्टबुद्ध्या तद्गृहवासाद्यभावेऽपि निर्हरणे त्रिरात्रम्। विष्णुः। 'चिताधूमसेवने सर्वे वर्णाः स्नानमाचरेयुः'। पार-स्करः 'अस्थिसञ्चयनादर्वाग् यदि विप्रोऽश्रु पातयेत्। मृते शूद्रे गृहं गत्वा त्रिरात्रेण विशुध्यति। अस्थिसञ्चयनादूर्द्ध्वं यावन्मासं द्विजातयः। दिवसेनैव शुध्यन्ति वाससां क्षालनेन च। स्वजातेर्दिवसेनैव द्व्यहात् क्षत्रियवैश्ययोः। स्पर्शं विनानु-गमने शूद्रो नक्तेन शुध्यति। मृतस्य बान्धवैः सार्द्धं कृत्वा तु परिवेदनम्। वर्जयेत्तदहोरात्रं दानं स्वाध्याय कर्म च'। गृहगमन एव त्रिरात्रं स्थानान्तरमिलने एकरात्रं मृतस्य शूद्रस्य परिवेदनं रोदनरहितविलापमात्रम्। अस्थिसञ्चय-नाङ्गस्पर्शयोः कालमाह संवर्त्तः। 'चतुर्थेऽहनि कर्त्तव्य-मस्थिसञ्चयनं द्विजैः। ततः सञ्चयनादूर्द्ध्वमङ्गस्पर्शो विधीयते। चतुर्थेऽहनि विप्रस्य षष्ठे वै क्षत्रियस्य च। अष्टमे दशमे चैव स्पर्शः स्याद्वैश्यशूद्रयोः'। एतत् सम्पूर्णाशौचे। खण्डाशौचे तु देवलः। 'अशौचकालाद्विज्ञेयं स्पर्शनन्तु त्रिभागतः'। अतिक्रान्ताशौचे तु सचेलस्नानादङ्गास्पृश्यत्वनिवृत्तिः पूर्वोक्त-निर्देशमिति मनुवचनात्। जनने तु कूर्मपुराणम्। 'सूतके तु सपिण्डानां संस्पर्शो नैव दुष्यति'। मातॄणान्तु आदिपुराणे। 'ब्राह्मणी क्षत्रिया वैश्या प्रसूता दशभिर्दिनैः। गतैः शूद्रा तु संस्पृश्या त्रयोदशभिरेव च'। पुत्रजनने पितुर्विमातॄणाञ्च स्नानात् स्पृश्यत्वं सूतिकास्पर्शने तत्समकालास्पृश्यत्वञ्च वक्ष्यते। अतैव वृद्धशातातपः। 'उदक्या सूतिका वापि अन्त्यजं संस्पृ-

शेद्र यदि। त्रिरात्रेणैव शुद्ध्येत इति शातातपोऽब्रवीत्'। उदक्या रजस्वला तत्साहचर्य्यात् सूतिकाप्यस्पृश्या बोध्या त्रिरात्रेण त्रिरात्रोपवासेन प्रायश्चित्तप्रकरणात् तच्च अशुद्धानन्तरं कर्त्तव्यमिति प्रायश्चित्तविवेकः। यमः। 'अजागावो महिष्यश्च ब्राह्मणी च प्रसूतिका। दशरात्रेण शुद्ध्यन्ति भूमिष्ठञ्च नवोदकम्'। ब्रह्मपुराणे 'नवखातजलं गावो महिष्यश्छागयोनयः। शुद्ध्यन्ति दिवसैरेव दशभिर्नात्र संशयः'। मिताक्षरायां स्मृतिः। 'काले नवोदकं शुद्धं न पातव्यन्तु तत्त्र्यहम्। अकाले तु दशाहं स्यात् पीत्वा नाद्यादहर्निशम्'। काले वर्षाकाले। शङ्खः। स्नानमाचमनं दानं देवता पितृतर्पणम्। शूद्रोदकैर्न कुर्वीत तथा मेघादिनिःसृतैः'। पानादीतरत्र सर्गादौ तु हरिवंशः। 'अभीममम्भो विसृजन्ति मेघाः पूतं पवित्रं पवनैः सुगन्धि'।

अथ द्रव्यशुद्धिः। ब्राह्मे 'सुवर्णरूप्यशङ्खाश्मशुक्तिरत्नमयानि च। कांस्यायस्ताम्ररैत्यानि त्रपुसीसमयानि च। निर्लेपानि विशुद्ध्यन्ति केवलेन जलेन तु। शूद्रोच्छिष्टानि शुद्ध्यन्ति त्रिधा क्षाराम्लवारिभिः। सूतिकाशवविण्मूत्ररजस्वलाहतानि च। प्रक्षेप्तव्यानि तान्यग्नौ यच्च यावत् सहेदपि'। रैत्यं पित्तलम्। त्रपुरङ्गं यत् पात्रं यावत् कालमग्निं सहेत तत् पात्रं क्षालनानन्तरं तावत्तापनीयमित्यर्थः। बृहस्पतिः। अम्भसा हेमरूप्यायःकांस्यं शुद्ध्यति भस्मना। अम्लैस्ताम्रञ्च रैत्यञ्च पुनः पाकेन मृण्मयम्'। राजधर्मे 'पञ्चलोच्छिष्टकांस्यं यद्दवा घ्रातमथापि वा। गण्डूषोच्छिष्टमपि च विशुद्ध्येद्दशभिस्तु तत्'। दशभिर्दिनैरिति शेषः। तथाच न कांस्ये धावयेत् पादौ यत्र स्यादपि भोजनम्' इति। यत्र ताम्रे भोजनं तत्र श्रुतस्यैव तस्य साहचर्य्यात् कांस्य-

तच्छुद्धिः। बौधायनः। 'भिन्नकांस्ये तु योऽश्नीयात्तथा स्नात्वा जपेद्विजः। गायत्र्यष्टसहस्रन्तु एकभक्तः सदा शुचिः'। अष्टसहस्रम् अष्टोत्तरसहस्रम् अन्यथा बहुवचनापत्तेः। देवलः। 'ताम्ररजतसुवर्णाश्मस्फटिकानां भिन्नमभिन्नम् इति' भिन्नत्वेऽपि न दोष इत्यर्थः। विष्णुः। 'शारीरैर्मलैः सुराभिर्मद्यैर्वा यदुपहतं तदत्यन्तोपहतं सर्वं लोहभाण्डमग्नौ प्रतप्तं शुद्धेत मणिमयमश्ममयमब्जमयञ्च सप्तरात्रं महीखनेन शृङ्गदन्तास्थिमयञ्च तक्षणेन दारुमयं मृण्मयं जह्यादिति' लोहपदं सुवर्णाद्यष्टकपरम्। सर्वञ्च तैजसं लौहमित्यमरकोषात्। मनुः। 'त्रीणि देवाः पवित्राणि ब्राह्मणानामकल्पयन्। अदृष्टमद्भिर्निर्णिक्तं यच्च वाचा प्रशस्यते'। अदृष्टमुपघातशङ्कादिभिरज्ञातम्। अज्ञातञ्च सदाशुचीति याज्ञवल्क्यैकवाक्यत्वात्। वाचेति उपघातशङ्कायां पवित्रं भवत्विति ब्राह्मणैर्यद्वाचा प्रशस्यत इति शूलपाणिमहामहोपाध्यायकुल्लूकभट्टौ। शातातपः। 'गोकुले कन्दुशालायां तैलयन्त्रेक्षुयन्त्रयोः। अमीमांस्यानि शौचानि स्त्रीषु बालातुरेषु च'। अमीमांस्यानि शौचाशौचभागितया न विचारणीयानि। मनुः। 'मक्षिकाविप्रुषश्छायागौरश्वसूर्य्यरश्मयः। रजो भूर्वायुरग्निश्च स्पर्शे मेध्यानि निर्दिशेत्'। बौधायनः। 'अदुष्टाः सन्ततधारा वातोद्धूताश्च रेणवः। आकराः शुचयः सर्वे वर्जयित्वा सुराकरम्'। शङ्खलिखितौ। आकरद्रव्याणि प्रोक्षितानि शुचीनि'। यमः 'आममांसं घृतं क्षौद्रं स्नेहाश्च फलसम्भवाः। म्लेच्छभाण्डस्थिता दुष्टा निष्क्रान्ताः शुचयः स्मृताः'। विष्णुधर्मोत्तरे। 'मुखवर्जञ्च गौः शुद्धा मार्जारः संक्रमे शुचिः'। पुष्पाणाञ्च फलानाञ्च प्रोक्षणात् शुद्धिरिष्यते'। अत्रिः। 'मक्षिका सन्ततधारा भूमिस्तोयं हुता-

शनः। मार्जारश्चापि दर्वी च मारुतश्च सदा शुचिः'। बौधायनः। 'अनेकोद्गाह्ये दारुशिले भूमिसमे इष्टकाश्च सङ्कीर्णीभूता' इति सङ्कीर्णीभूताः परस्परसम्बन्धाः विष्णुः। 'प्रोक्षणेन पुस्तकम्' इति। शातातपः। 'तापनं घृत-तैलानां प्लावनं गोरसस्य च। तन्मात्रमुद्धृतं शुद्ध्येत् कठिनन्तु पयो दधि। अविलीनं तथा सर्पिर्विलीनं श्रपणेन तु'। अविलीनं कठिनम्। मनुः। द्रव्याणाञ्चैव सर्वेषां शुद्धिरुत्प्लवनं स्मृतम्। प्रोक्षणं संहतानाञ्च दारवाणाञ्च तक्षणम्'। इदन्तु उच्छिष्टाद्यल्पदोषे। उत्प्लवनं वस्त्रान्तरनिर्वापणेन कीटाद्यपनयनम्। शातातपः। 'क्लीवाभिशस्तपतितैः सूतिकोदक्यनास्तिकैः। दृष्टं वा स्याद् यदन्नन्तु तस्य निष्कृतिरुच्यते। अभ्युक्ष्य किञ्चिदुद्धृत्य भुञ्जीताप्यविशङ्कितः'। देवलः। 'चाण्डालेन शुना वापि दृष्टं हविरयज्ञिकम्। विड़ालादिभिरुच्छिष्टं दुष्टमन्नं विवर्जयेत्'। अन्यत्र हिरण्योदकस्पर्शादिति। मनुः। 'अद्भिस्तु प्रोक्षणं शौचं बहूनां धान्यवाससाम्। प्रक्षालनेन त्वल्पानामद्भिः शौचं विधीयते'। शुद्धिरित्यनुवृत्तौ विष्णुः। 'गुडानामिक्षुविकाराणां प्रभूतानां वायग्निदानेन सर्वलवणानाञ्चेति'। सूतिकां स्पृशतः पितुरपि तादृशमस्पृश्यत्वमाह सुमन्तुः। 'मातुरेव सूतकं तां स्पृशतश्च पितुर्नेतरेषाम्' इति इतरेषां सपत्नीमातृव्यतिरिक्तानां तासान्तु सूतिकास्पर्शे पितुर्यथा तत्समकालमङ्गास्पृश्यत्वं तथा तासामपि। तथाच आदिपुराणम्। 'सूतके तु मुखं दृष्ट्वा जातस्य जनकस्ततः। कृत्वा सचेलं स्नानन्तु शुद्धो भवति तत्क्षणात्। अन्याश्च मातरस्तद्वत्तद्गेहं न व्रजन्ति चेत्। सपिण्डाश्चैव संस्पृश्याः सन्ति सर्वे विनिश्चयः'। तद्वत् पितृवत् स्नात्वा शुद्धाः। गृहगमनन्तु सूतिकास्पर्शोप-

लक्षणम्। अन्यथा ऽपिद्वतोऽधिकदोषापत्तेः। एवञ्च तद्-गृहगमनेऽपि स्पर्शाभावेनास्पृश्यत्वम्। पुत्रजन्मनि स्नानात् पूर्वमङ्गास्पृश्यत्वमाह संवर्त्तः 'जाते पुत्रे पितुः स्नानं सचेलन्तु विधीयते। माता शुद्ध्येद्दशाहेन स्नानात्तु स्पर्शनं पितुः'। एकदिनपातितुल्यमरणाशौचद्वये यावदशौचं सर्वगोत्रास्पृश्य-त्वमाह आदिपुराणम्। 'सर्वगोत्रमसंस्पृश्यं तत्र स्यात् सूतके सति। मध्येऽपि सूतके दद्यात् पिण्डान् प्रेतस्य तृप्तये'। तत्राद्यदिने भिन्नदिने तु मनुना प्रथमेन आनवमीयस्य द्वितीयस्य शुद्ध्यभिधानात्र तथा अत्र प्रथमसूतकपदं मरणाशौच-मात्रपरं द्वितीयसूतकं च अस्पृश्यत्वपरं पिण्डदानश्रुतेः। तथाच याज्ञवल्क्यः। 'त्रिरात्रं दशरात्रं वा शावमाशौच-मिष्यते। ऊनद्विवर्षमुभयोः सूतकं मातुरेव हि'। शाव-माशौचमस्पृश्यत्वलक्षणम्। त्रिरात्रं दशरात्राशौचिनामेक-स्मिन् सूतके द्वितीयसूतके समानदिनपतिते दशरात्राशौच-मस्पृश्यत्वम् ऊनद्विवर्षमरणलक्षणमस्पृश्यत्वं मातापित्रोरेव तदन्येषां स्पृश्यत्वम् एवमेव मिताक्षरादीपकलिके। न च शावाशौचपदम् अशौचपदम् अशौचमात्रपरमिति मिता-क्षरोक्तं युक्तमिति वाच्यम् 'आदन्तजननात् सद्य आचूडादेक-रात्रकम्। त्रिरात्रमाव्रतादेशाद्दशरात्रमतःपरम्' इति याज्ञ-वल्कीयेन पौनरुक्त्यापत्तेः। व्यक्तमाह अङ्गिराः। 'मरणं यदि तुल्यं स्यान्मरणेन कथञ्चन। अस्पृश्यन्तु भवेद् गोत्रं सर्वमेव सबान्धवम्'। तुल्यमभिन्नदिनजाततया दशरात्रादिव्यापि-तया व्याख्येयानि तद्विरुद्धानि तु यथायथं वेदाग्न्यादिसगुण-सर्वाशित्वसर्वविक्रयित्वात्यन्तनिर्गुणदेशभेदादिना च व्यव-स्थेयानि।

अथ मुमूर्षुकृतकृत्यानि। हारीतः। 'शूद्रान्नेन तु भुक्तेन

ऽदरस्थेन योमृतः। स वै खरत्वमुष्ट्रत्वं शूद्रत्वञ्चाधि-
च्छति'। शूद्रान्नं शूद्रस्वामिकान्नम्। तद्दत्तमपि भोजन-
ाले तद्गृहावस्थितं यत्तदपि शूद्रान्नं तदाह अङ्गिराः।
ूद्रवेश्मनि विप्रेण चीरं वा यदि वा दधि। निवृत्तेन न
ोक्तव्यं शूद्रान्नं तदपि स्मृतम्'। अपिशब्दात् साचात्तद्दत्त-
ृततण्डुलादि न तु तद्दत्तकपर्दकादिना क्रीतमपि। स्वगृहा-
ते पुनरङ्गिराः। यथायतस्ततो ह्यापः शुद्धिं यान्ति नदीं
ताः। शूद्राद्विप्रगृहेष्वन्नं प्रविष्टन्तु सदा शुचि'। प्रविष्टं
स्वत्वापादकप्रतिग्रहादिनेति शेषः। अतएव पराशरः।
ताद्भवति शूद्रान्नं यावन्न स्पृशति द्विजः। द्विजातिकर-
स्पृष्टं सर्वं तद्धविरुच्यते'। स्पृशति प्रतिगृह्णातीति कल्प-
रुः। तच्च संप्रोक्षणग्राह्यमाह विष्णुपुराणं संप्रोक्षयित्वा
गृह्णीयाच्छूद्रान्नं गृहमागतम्'। तच्च पात्रान्तरे ग्राह्यमाह
अङ्गिराः। 'स्वपात्रे यत्तु विन्यस्त शूद्रो यच्छति नित्यशः।
ात्रान्तरगतं ग्राह्यं दुग्धं स्वगृहमागतम्'। एतेन स्वगृह-
ागतस्यैव शुद्धत्वं तद्गृहगतस्य शूद्रान्नदोषभागित्वं प्रतीयते।
ातश्चैतादृगपि मुमूर्षुणा सर्वथा शूद्रान्नं न भोक्तव्यम्। पूजा-
त्नाकरे। 'शालग्रामशिला यत्र तत्र सन्निहितो हरिः।
तत्सन्निधौत्यजेत् प्राणान् याति विष्णोः परं पदम्'। लिङ्ग-
पुराणे। 'शालग्रामसमीपे तु क्रोशमात्रं समन्ततः। कीकटे-
ऽपि मृतो याति वैकुण्ठभवनं नरः'। कीकटो मगधः।
वैष्णवामृते व्यासः। 'तुलसीकानने जन्तोर्यदि मृत्युर्भवेत्
क्वचित्। स निर्भर्त्स्य यमं पापी लीलयैव हरिं विशेत्।
प्रयाणकाले यस्यास्ये दीयते तुलसीदलम्। निर्वाणं याति
पक्षीन्द्र! पापकोटियुतोऽपि सः'। कूर्मपुराणम्। 'गङ्गा-
यां च जले मोक्षो वाराणस्यां जले स्थले। जले स्थले चान्त-

तीर्थे गङ्गासागरसङ्गमे'। स्कान्दे 'गङ्गायां त्यजतः प्राणान् कथयामि वरानने!। कर्णे तत् परमं ब्रह्म ददामि मामकं पदम्'। तथा 'तीराद् गव्यूतिमात्रन्तु परितः क्षेत्रमुच्यते। अत्र दानं जपो होमो गङ्गायां नात्र संशयः। अत्रस्थास्त्रिदिवं यान्ति ये मृता न पुनर्भवाः'। गव्यूतिः क्रोशयुगम्। तीर्थचिन्तामणौ ब्रह्मपुराणम् 'अत्र दूरे समीपे च सदृशं योजनद्वयम्। गङ्गायां मरणेनेह नात्र कार्य्या विचारणा'। एवं गङ्गादिमरणेन प्राप्तब्रह्मलोकस्याप्यौर्द्ध्वदेहिकी क्रिया तदधिकारिणा कर्त्तव्या नित्यत्वात्। तथाच श्रीभागवते 'कृष्ण एवं भगवति! मनोवाग्दृष्टिवृत्तिभिः। आत्मन्यात्मानमावेश्य सोऽन्तःश्वासमुपारमत्। सम्पद्यमानमाज्ञाय भीष्मं ब्रह्मणि निष्कले। सर्वे बभूवुस्ते तूष्णीं वयांसीव दिनात्यये। तस्य निर्हरणादीनि सम्परेतस्य भार्गव!। युधिष्ठिरः कारयित्वा मुहूर्त्तं दुःखितोऽभवत्'। कृष्णे आत्मनि परमात्मनि आत्मानं स्वीयात्मानं निवेश्य एकीकृत्य सभीष्म उपारमत् मुक्तिं गतवान् निष्कले निरुपाधौ ब्रह्मणि संपद्यमानं मिलितम् आज्ञाय आलक्ष्य तस्य भीष्मस्य निर्हरणादीनि संस्कारादीनि संपरेतस्य सम्यक् परेतस्य मुक्तस्यापि भार्गवेति शौनकसम्बोधनम्। एवञ्चैतेषामपि तत्तत्कर्मणि तत्तद्वचनोपात्त प्रेतपदस्य पितृपदस्य च मन्त्रादिषु यथायथं वाचनिकत्वात् प्रयोगः सङ्गच्छते। आसन्नमृत्युना देया गौः सवत्सा च पूर्ववत्। तदभावे च गौरेका नरकोद्धारणाय वै। तदा यदि न शक्नोति दातुं वैतरणीञ्च गाम्। शक्तोऽन्योऽरुक् तदा दत्त्वा श्रेयो दद्यान्मृतस्य च। पूर्ववद्धेमशृङ्गादिना। अत्र मृतस्य चेति श्रवणादेकादशाहेऽपि वैतरणीदानाचारः। वनपर्वणि 'सार्थः प्रवसतो मित्रं भार्य्यामित्रं गृहे सतः। आतुरस्य भिषङ्मित्रं

दानं मितं मरिष्यतः'। वराहपुराणे। 'व्यतीपातोऽथ संक्रान्तिस्तथैव ग्रहणं रवेः। पुण्यकालास्तदा सर्वे यदा मृत्युरुपस्थितः। गोभूतिलहिरण्यादिदत्तमक्षयतामियात्'। निरवकाशत्वादत्र मलमासादिदोषो नास्ति सूतकमपि न। तथाच शुद्धिरत्नाकरे दक्षः। 'सुस्थकाले त्विदं सर्वं सूतकं परिकीर्त्तितम्। आपन्नतस्य सर्वस्य सूतकेऽपि न सूतकम्'। त्रिपुष्करशान्तिरपि कार्य्या स च योगः श्रीपतिरत्नमालायाम्। विषमचरणं धिष्ण्यं भद्रातिथिर्यदि जायते। दिनकरशनिक्ष्मापुत्राणां कथञ्चन वासरेषु। मुनिभिरुदितः सोऽयं योगस्त्रिपुष्करसंज्ञितः। त्रिगुणफलदो वृद्धौ नष्टे हृते च मृते विषमचरणं धिष्ण्यम् एकत्रिपादरूपेण उभयराशिप्रविष्टं नक्षत्रं कृत्तिकापुनर्वसुप्रभृति मरणे वाप्यादौ नान्तर्जलाचारः। तथा सति मृतशरीरयोगेन तस्य दुष्टता स्यात्। यथा ब्रह्मपुराणम्। 'येषामभक्ष्यं मांसञ्च तच्छरीरैर्युतञ्च यत्। वापीकूपतड़ागेषु जलं सर्वञ्च दुष्यति'। तच्छरीरैर्मृतशरीरैः। उत्तरवचने कुणपग्रहणात् यथा। 'सकुणपं सकर्दमं तेभ्यस्तोयमपास्य तत्। प्रक्षिपेत् पञ्चगव्यञ्च समन्त्रं सर्वशुद्धिकृत्। अपास्य कुणपं तेभ्यो बहुतोयेभ्य एव वा। शतं षष्ट्यथवा त्रिंशत् तोयकुम्भान् समुद्धरेत्। पञ्चगव्यं ततस्तेषु प्रक्षिपेन्मन्त्रपूर्वकम्'। वापी ससोपाना निःसोपानः कूपः तड़ागः पद्माकरः। शतादिजलाल्पत्वाद्यपेक्षया अत्यल्पस्य सर्वोद्धारणाभिधानात्। एवं मरणसमये गृहान्निःसारितेऽन्यथा गृहस्य दुष्टता स्यात्। यथा वृहन्मनुः। 'ब्रह्मशूद्रपतिताश्चान्त्या मृतास्चेत् द्विजमन्दिरे। शौचं तत्र प्रवक्ष्यामि मनुना भाषितं यथा। दशरात्राच्छुनि प्रेते मासात् शूद्रे भवेच्छुचिः। द्वाभ्यान्तु पतिते गेहे अन्त्ये मासचतुष्टयात्।

अत्यन्त्ये वर्जयेद् गेहमित्येवं मनुरब्रवीत्'। द्वाभ्यां मासाभ्य
मासस़ंदंशपाठात् अन्त्यो म्लेच्छः अत्यन्तः श्वपाकः इति वाच
स्पतिमिश्राः। यमः। 'द्विजस्य मरणे वेश्म विशुध्यति
दिनत्रयात्। दिनैकेन वहिर्भूमिरग्निप्रेक्षणलेपनैः'। यथोक्त
कालानन्तरकर्त्तव्यमाह संवर्त्तः। 'गृहशुद्धिं प्रवक्ष्यामि
अन्तस्थशवदूषिते। प्रोत्सृज्य मृण्मयं पात्रं सिद्धमन्नं तथैव च
गृहादपास्य तत् सर्वं गोमयेनोपलेपयेत्। गोमयेनोलि
प्याथ छागेनाघ्रापयेद् बुधः। ब्राह्मणैर्मन्त्रपूतैश्च हिरण्यकुश
वारिभिः। सर्वमभ्युक्षयेद्वेश्म ततः शुध्यत्यसंशयः'। अत
मन्त्रानादेशे गायत्री देवलः। 'पञ्चधा वा चतुर्द्धा वा भूर
मेध्या विशुध्यति। दुष्टा द्विधा त्रिधा वापि शुध्यते मलि
नैकधा। दहनं खननं भूमेरुपलेपनवापने। पर्जन्यवर्षणञ्चापि
शौचं पञ्चविधं स्मृतम्। प्रसूते गर्भिणी यत्र म्रियते यत
मानुषः। चण्डालैरुषितं यत्र यत्र विन्यस्यते शवः। विण्मू
त्रोपहतं यच्च कुणपो यत्र दृश्यते। एवं कश्मलभूयिष्ठ
भूरमेध्येति कथ्यते। कृमिकीटपदक्षेपैर्दूषिता यत्र मेदिनी
वप्तया कर्षणैः क्षिप्ता वान्तैर्वा दुष्टतां व्रजेत्। नखदन्ततनूज
त्वक्तुषपांशुरजो मलैः। भस्मपङ्कतृणैर्वापि प्रच्छन्ना मलिन
भवेत्। वापनं मृदन्तरेण पूरणम् उषितं वासः वप्ता घनी
भूतश्लेष्मादि चतुर्द्धादौ पञ्चानां मध्ये यथासम्भवं ग्रहणम्
अङ्गिराः। 'शौचं सहस्ररोमाणां वाय्वग्न्यर्केन्दुरश्मिभिः
रेतःस्पृष्टं शवस्पृष्टमाविकं नैव दुष्यति'। सहस्ररोमाण
कम्बलानाम्। विष्णुः। 'नाभेरधस्तात् प्रबाहुषु च कायिकै
र्मलैः। सुराभिर्मद्यैर्वोपहतो मृत्तोयैस्तदङ्गं प्रक्षाल्य अतन्द्रित
शुचिरन्यत्रोपहतो मृत्तोयैस्तदङ्गं प्रक्षाल्य स्नानेन चक्षुष्युपहत
उपोष्य स्नात्वा पञ्चगव्येन दशनच्छदोपहतश्चेति'। प्रबाहु

कफोणेरधो भागः। पञ्चगव्येन प्राशितेन शुद्धेदिति शेषः। मलान्याह मनुः 'वसाशुक्रमसृक्मज्जामूत्रविट्कर्णविण्नखाः। श्लेष्माश्रुदूषिकास्वेदो द्वादशैते नृणां मलाः'। बौधायनः। 'आददीत मृदोऽपश्च षट्सु पूर्वेषु शुद्धये। उत्तरेषु च षट्स्वद्भिः केवलाभिर्विशुध्यति' विशेषयति मनुः। 'देहाच्चैव च्युता मलाः'। देवलः। 'मानुषास्थिवसां विष्ठामार्त्तवं मूत्ररेतसी। मज्जानं शोणितं वापि परस्य यदि संस्पृशेत्। स्नात्वापमृज्य लेपादीनाचम्य स शुचिर्भवेत्। तान्येव स्वानि संस्पृश्य पूतः स्यात् परिमार्जनात्। अत्र स्पर्शनं विनोपमार्जनासम्भवात्तदनन्तरमेव स्नानाचमने कर्त्तव्ये पाठक्रमादर्थक्रमस्य बलवत्त्वात्। ततश्च परमलविशेषस्पर्शे प्रक्षालनस्नानाचमनम् आत्ममलस्पर्शे प्रक्षालनाचमनमात्रम्। विष्णुः। 'मृतं द्विजं न शूद्रेण निर्हारयेन्न शूद्रं द्विजेन'। यमः। 'यस्यानयति शूद्रोऽग्निं तृणकाष्ठहवींषि च। मन्यते ह्येष धर्मोऽस्ति स चाधर्मेण लिप्यते'। अमन्त्रावपि चितायां ब्राह्मणैरेव तृणादिकं देयम्। श्रीभागवतीयद्वतीयस्कन्धकापिलीये। 'तथा पापीयसा नीतस्तरसा यमसादनम्। योजनानां सहस्राणि नवतिं नव चाध्वनः। त्रिभिर्मुहूर्त्तैर्द्वाभ्यां वा नीतः प्राप्नोति यातनाः'। द्वाभ्यामतिपापस्य तेन गमनागमनानुरोधात् द्वादशदण्डादूर्द्ध्वं दाहः। मरणानन्तरकर्मणि प्राचीनावीतित्वादिकमाह मनुः 'प्राचीनावीतिना सम्यगपसव्यमतन्द्रिणा। पित्र्यमानिधनात् कार्य्यं विधिवद्दर्भपाणिना' इति याज्ञवल्क्यः। 'ऊनद्विवर्षं निखनेन्न कुर्य्यादुदकं ततः'। छन्दोगपरिशिष्टम्। 'दुर्बलं स्नापयित्वा तं शुद्धचेलाभिसंवृतम्। दक्षिणाशिरसं भूमौ बर्हिष्मत्यां निवेशयेत्। घृतेनाभ्यक्तमाप्लाव्यं सुवस्त्रमुपवीतिनम्। चन्दनोक्षितसर्वाङ्गं सुमनोभिर्विभूषयेत्। हिरण्य-

शकलान्यस्य चिप्ता छिद्रेषु सप्तसु। मुखेष्वथ पिधायैनं निर्हरेयुः सुतादयः। आमपात्रेऽन्नमादाय प्रेतमग्निपुरःसरम्। एकोऽनुगच्छेत्तस्यार्द्धमर्द्धं पथ्युत्सृजेद्भुवि। अर्द्धमादहनं प्राप्त आसीनो दक्षिणामुखः। सव्यं जान्वाच्य शनकैः सतिलं पिण्डदानवत्। अथ पुत्रादिराप्लुत्य कुर्य्याद्दारुचयं महत्। भूप्रदेशे शुचौ देशे पश्चाच्चित्यादिलक्षणम्। तत्रोत्तानं निपात्यैनं दक्षिणाशिरसं मुखे। आज्यपूर्णां स्रुचं दद्याद्दक्षिणाग्रं नसि स्रुवम्'। घृताक्तस्याप्लावने विशेषमाह वराहपुराणम्। 'दक्षिणाशिरसं कृत्वा सचेलन्तु शवं तथा। तीर्थस्यावाहनं कृत्वा स्नपनं तत्र कारयेत्। गयादीनि च तीर्थानि ये च पुण्याः शिलोच्चयाः। कुरुक्षेत्रञ्च गङ्गाञ्च यमुनाञ्च सरिद्वराम्। कौशिकीं चन्द्रभागाञ्च सर्वपापप्रणाशिनीम्। भद्रावकाशां शरयूं गण्डकीं पनसां तथा। वैणवञ्च वराहञ्च तीर्थं पिण्डारकं तथा। पृथिव्यां यानि तीर्थानि सरितः सागरांस्तथा। ध्यात्वा तु मनसा सर्वे मृतस्नानं गतायुषम्। देवाश्चाग्निमुखाः सर्वे गृहीत्वा तु हुताशनम्। गृहीत्वा पाणिना चैव मन्त्रमेतमुदीरयेत्'। ओं 'कृत्वा तु दुष्कृतं कर्म जानता वाप्यजानता। मृत्युकालवशं प्राप्य नरं पञ्चत्वमागतम्। धर्माधर्मसमायुक्तं लोभमोहसमावृतम्। दहेयं सर्वगात्राणि दिव्यान् लोकान् स गच्छतु। एवमुक्त्वा ततः शीघ्रं कृत्वा चैव प्रदक्षिणम्। ज्वलमानं तथा वह्निं शिरःस्थाने प्रदापयेत्। चातुर्वर्ण्येषु संस्थानमेवं भवति पुत्रिके'। दुर्बलं गतप्राणम्। स्नापयित्वा शुद्धेन वाससा सर्वं शरीरमाच्छाद्यास्तीर्णकुशायां भूमौ दक्षिणाशिरसं स्थापयेत्। ततो घृतेनाभ्यज्य गयादीनीत्यादि सागरांस्तथेत्यन्तान् सर्वांश्चिन्तयित्वा पुनः स्नापयेत्। अत्र सुपांसुपित्यनेन

सर्वं इति द्वितीयार्थे प्रथमा। वस्त्रान्तरं परिधाप्य उपवीत-मुत्तरीयञ्च दत्त्वा चन्दनादिनोपलिप्य मुखेषु मुखसम्बन्धिषु कर्णनासिकानेत्रद्वयमुखात्मकेषु सप्तच्छिद्रेषु सप्तसुवर्णखण्डिकाः प्रक्षिपेत्तदभावे कांस्यादिखण्डिका मुखे निधाय कांस्यसुवर्ण-मणिविद्रुममित्यादि पुराणात्। वस्त्रान्तरेणाच्छाद्य निर्हरे-युः। अग्निपुरःसरमिति साग्निपरम्। तस्यान्नस्याईमर्द्ध-पथे त्यजेत्। आदह्यतेऽस्मिन्निति आदहनं श्मशानं तत्रास्य पुत्रादिरग्निदाता आप्लावनं कृत्वा वामं जान्वाच्य भूमिं नीत्वा दक्षिणामुख उपविशति तिलसहित अपरमन्नाद्धं पिण्डादानेतिकर्त्तव्यतयोत्सृजेदित्यनुषङ्गः। पिण्डदानेति-कर्त्तव्यता च प्राचीनावीतित्वम् उपवीतवदुत्तरीयधारणञ्च। तथाच विद्याकरधृतं 'यथा यज्ञोपवीतञ्च धार्य्यते च द्विजो-त्तमैः। तथा सन्धार्य्यते यत्नादुत्तराच्छादनं शुभम्'। अत्र यथा द्विजोत्तमैः सव्यापसव्यत्वादिना उपवीतं धार्य्यते तथो-त्तराच्छादनमपि। अत्र यथा यज्ञोपवीतधारणे उत्तमत्वम-विवक्षितं क्षत्रियविशोस्तत्सम्भवात्तथोत्तरीयधारणे द्विजोत्तम-त्वमप्यविवक्षितं स्त्रीशूद्रयोरपि द्विजोपवीतधारणवत् उत्त-रीयधारणाचारात् 'विकच्छः कच्छशेषश्च मुक्तकच्छस्तथैव च। एकवासा अवासाश्च नग्नः पञ्चविधः स्मृतः' इति हरिशर्म-धृतगोभिलादेकवस्त्रस्य सामान्यतो नग्नत्वाभिधानात्तत्परि-हाराय द्विवस्त्रोपयोगित्वाच्च स्त्रियास्तु अथ पत्न्याचारम् अनु-क्रमिष्याम इत्युपक्रमे स्नात्वा वाससी परिधायेति हारीतेनोप-देशाच्च। अतएव विवाहप्रकरणीयगोभिलसूत्रस्यप्रावृतां यज्ञो-पवीतिनीमित्यत्र स्त्रिया उपवीता भावे यज्ञोपवीतधारणवत् कृतोत्तरीयामिति भट्टभाष्यव्याख्यानादत्राप्यपसव्यताया युक्त-त्वाच्च। 'अपसव्यं ततः कृत्वा वस्त्रयज्ञोपवीतके' इति ब्रह्म-

पुराणेऽपि वस्त्रस्याप्यपसव्यत्वदर्शनाच्च। एतेन स्त्रियास्तु द्विवस्त्रत्वमात्रं न तु अपसव्यकरणमपि तथैव छन्दोगाचारकल्पे 'प्रतिहस्तकलिखनादिति' श्राद्धचिन्तामण्युक्तं निरस्तम्। मत्स्यपुराणं 'धारयेदथ रक्तानि नारी चेत् पतिसंयुता। विधवा तु न रक्तानि कुमारी शुक्लवाससी'। परिधानप्रकारमाहतुः शङ्खलिखितौ। 'न नाभिं दर्शयेत् कुलवधूरागुल्फाभ्यां वासः परिदध्यात् न स्तनौ विवृतौ कुर्य्यादिति' वासोविन्यासविशेषस्तु देशाचारादेवावगन्तव्यः। रत्नाकरोऽपि एवम्। शिरोऽवगुण्ठनमाह ऋष्यशृङ्गः। 'गृहमेध्या भवेन्नित्यं भूषणानि च पूजयेत्। नित्यस्नानकृतां वेणीमर्चयेत् पुष्पवाससा'। गृहमेध्या गृहकृत्यपरा पूजयेन्मार्जनादिभिः संस्कुर्य्यादित्यर्थः। नित्यस्नानानन्तरकृतामिति रत्नाकरः। ततः पुत्त्रादिः स्नानं कृत्वा दारुचयं कुर्य्यात् शुचिभूप्रदेशे चितायोग्यलक्षणं पञ्चधा भूसंस्काररूपं कुर्य्यात्। तत्र प्रथममाकरशोधनं ततो गोमयेनोपलेपनं ततः खगस्फ्योक्तरेखाकरणं रेखामार्जनं रेखाभ्युक्षणञ्च एतच्च निरग्नेरपि। 'यद्युपेतो भूमिजोषणादि समानमिति' पारस्करसूत्रात्। उपेत उपनीतः जोषणं जुषीप्रीतिसेवनयोरिति धात्वनुसारात् सेवनं तेन भूमिजोषणं भूसंस्कार इति हारलता। तेनोपनीतमात्रस्य दाहे भूसंस्कार इति। चितायां दक्षिणाशिरसं कुणपमधोमुखं सामगं पुमांसं न्यसेत् छन्दोगपरिशिष्टेन दक्षिणाशिरस्त्वाभिधानात्। ननु छन्दोगपरिशिष्टोक्तत्वात् यदि सामगानां दक्षिणाशिरस्त्वं तर्हि उत्तानदेहत्वं कथं नाद्रियते। उच्यते। उत्तानदेहत्वस्य स्रुवादिपात्रन्यासानुरोधित्वेन तन्निवृत्तिर्युक्ता दक्षिणाशिरस्त्वस्य वाचनिकत्वान्निरग्निविषयत्वमपि। नार्य्यास्तु उत्तानदेहत्वं मत्स्यादिपुराणं 'सगोत्रजैर्द्धीत्वा तु चितामारो-

चितामारोप्यते शवः। अधोमुखो दक्षिणादिक्चरणस्तु पुमानिति। उत्तानदेहा नारी तु सपिण्डैरपि बन्धुभिः'। दक्षिणादिक्चरण इत्यनेनोत्तरशिरस्त्वं यत् तत् सामगेतरपरम्। हारलतापि एवम्। ततो देवाश्चाग्निमुखाः सर्वे हुताशनं गृहीत्वा एनं दहन्त्विति मनसा ध्यात्वा 'चाण्डालाग्नेरमेध्याग्नेः सूतिकाग्नेश्च कर्हिचित्। पतिताग्नेश्चिताग्नेश्च न शिष्टैर्ग्रहणं स्मृतम्' इति देवलपर्य्युदस्तेतरमग्निं गृहीत्वा कृत्वा तु दुष्करमिति मन्त्रौ पठित्वा प्रदक्षिणं कृत्वा दक्षिणामुखः शिरस्थाने दद्यात्। स्त्रीदाहेऽपि नरमित्येव पाठः इत्युक्तमेकादशीतत्त्वे। विष्णुपुराणे। 'न हूं कुर्य्याच्छवञ्चेव शवगन्धो हि सोमजः'। आदिपुराणे 'निःशेषस्तु न दग्धव्यः शेषं किञ्चित्त्यजेत्ततः। गच्छेत् प्रदक्षिणाः सप्त समिद्भिः सप्तभिः सह। देयाः प्रहाराः सप्तैव कुठारेणोल्मुकोपरि। क्रव्यादाय नमस्तुभ्यमिति जप्यं समाहितैः। नावेक्षितव्यः क्रव्यादो गन्तव्या च ततो नदी'। प्रदक्षिणा गतिरिति शेषः। समिधां प्रक्षेपमाह प्रचेताः। 'दग्ध्वा शवं ततस्त्वेवं प्रादेशाः काष्ठिकास्तथा। सप्त प्रदक्षिणीकृत्य चैकैकान्तु विनिक्षिपेत्'। तेन प्रादेशप्रमाणाः सप्तकाष्ठिका गृहीत्वा चिताग्निं सप्तवारान् प्रदक्षिणीकृत्य सप्तकाष्ठिका एकैकक्रमेण चिताग्नौ प्रक्षिपेत्। ततः कुठारेण क्रव्यादाय नमस्तुभ्यमिति मन्त्रजपं कुर्वद्भिश्चितास्थज्वलद्दारूपरि सप्तप्रहारा देयाः मन्त्रपाठस्तु सकृदेव। एकद्रव्ये कर्मावृत्तौ सकृदेव मन्त्र वचनं कृत्वेति भट्टभाष्यधृतवचनात्। दर्भजूटिकाहोमे तु अतएव वर्हिषः कुशमुष्टिमादायाज्ये हविष्षि वा त्रिरवदध्यात् अग्राणि मध्यानि मूलानि इति च त्यक्तं रिहाना व्यन्तुवय इति गोभिलेन स्वाम-भेदकथनादेकद्रव्येऽपि कर्मावृत्तौ मन्त्रावृत्तिरिति भट्टभाष्यम्।

तत: 'कोष्ठे तु जठराग्निस्तु क्रव्यादोऽमृतभक्षणे' इति गोभि-लीयपरिभाषितं क्रव्यादमग्निं पश्यद्भिर्वक्ष्यमाणाश्वलायनवच-नात् वामावर्त्तेन स्नातुं नदी गन्तव्या। प्रचेता:। 'नग्नदेहं दहेन्नैव किञ्चिद्देयं परित्यजेत्'। देयं शवसम्बन्धिवस्त्रादिकं श्मशानवासिचाण्डालादिभ्यो दद्यात्। मिताक्षरायां 'सूति-कायां मृतायान्तु कथं कुर्वन्ति याज्ञिका:। कुम्भे सलिल-मादाय पञ्चगव्यं तथैव च। पुण्यगर्भिरभिमन्त्र्यापो वाचा शुद्धिं लभेत्तत:। तेनैव स्नापयित्वा तु दाहं कुर्य्याद् यथा-विधि। पञ्चभि: स्नापयित्वा तु गव्यै: प्रेतां रजस्वलाम्। वस्त्रान्तरावृतां कृत्वा दाहयेद्विधिपूर्वकम्'। पुण्यगर्भिरापो-हिष्ठीयवामदेव्यादिभिरिति स्मृत्यर्थानुसार:। एवं गर्भवत्यां मृतायाम् उदरभेदेन गर्भं नि:सार्य्य स्थानान्तरे क्षिपेत्। स्त्रीणान्तु पतितो गर्भ इत्यादि ब्रह्मपुराणे सामान्यतो गर्भ-प्रतिपत्तिविधानात्। स्मृति:। 'नागदष्टो नरो राजन् प्राप्य मृत्युं व्रजत्यध:। अधोगत्वा भवेत् सर्पो निर्विषो नात्र संशय:। एतन्मोक्षाय तद्बन्धु: पुत्रादिर्मासि भाद्रके। नक्तं कुर्वीत सप्तम्यां शुक्लपक्षे प्रयत्नत:'। यम: 'दशाहाभ्यन्तरे यस्य गङ्गातोयेऽस्थिमज्जति। गङ्गायां मरणे यादृक् तादृक् फलमवाप्नुयात्'। स्मृति:। 'आत्मनस्त्यागिनां नास्ति पति-तानां तथा क्रिया। तेषामपि तथा गङ्गातोये संस्थापनं हितम्'। कौर्मे 'यावन्त्यस्थीनि गङ्गायां तिष्ठन्ति पुरुषस्य च। तावद्वर्षसहस्राणि स्वर्गलोके महीयते'। आदिपुराणं 'मातु:कुलं पितृकुलं वर्जयित्वा नराधम:। अस्थीन्यन्यकुलो-त्थस्य नीत्वा चान्द्रायणाच्छुचि:'। एतच्च धनग्रहणादिना। 'अस्थीनि मातापितृपूर्वजानां नयन्ति गङ्गामपि ये कदा-चित्। सद्भावकस्यापि दयाभिभूतास्तेषाञ्च तीर्थानि फल-

प्रदानि'। अत्र सद्भावकस्य शुद्रभावस्यान्यकुलजस्यापि कृपातिशयाद्धर्मबुद्ध्या अस्थिप्रक्षेपे पुण्याभिधानात्। अत्रैव विधिमाह। 'भागीरथी यत्र यत्रास्ति तीर्थे कुलद्वये चापि यदा विपन्नः। तदा तदा तत्र च तस्य भक्त्या भावेन चास्थीनि विनिक्षिपेच्च। स्नात्वा ततः पञ्चगव्येन सिक्त्वा हिरण्यमध्वाज्य तिलैश्च योज्य। ततश्च मृत्पिण्डपुटे निधाय पश्यन् दिशं प्रेतगणोपगूढाम्। नमोऽस्तु धर्माय वदन् प्रविश्य जलं स मे प्रीत इति क्षिपेच्च। उत्थाय भास्वन्तमवेक्ष्य सूर्यं प्रदक्षिणां विप्रमुखाय दद्यात्'। उत्तरार्द्धेऽस्थित्यागानन्तरं स्नानविधाय-कमैथिलपाठो युक्तः। स यथा 'स्नात्वा तथोत्तीर्य्य च भास्करञ्च दृष्ट्वा प्रदद्यादथ दक्षिणाञ्च। एवं कृते प्रेतपुरस्थितस्य स्वर्गे स्थितिः स्याच्च महेन्द्रतुल्या'। प्रेतगणोपगूढां दक्षिणां दिशम्। ओम् नमोऽस्तु धर्मायेति गङ्गाजलप्रवेशमन्त्रः। स मे प्रीतो भवतु इत्यस्थिप्रक्षेपमन्त्रः इत्यनिरुद्धभट्टः।

अथास्थ्यलाभे पर्णनरदाहः। आश्वलायनगृह्यपरिशिष्टम्। 'अस्थिनाशे पलाशवृन्तानां त्रीणि षष्टिशतानि च। पुरुष-प्रतिकृतिं कृत्वाऽशीत्यर्द्धन्तु शिरसि ग्रीवायां दश योजयेत्। उरसि त्रिंशतं दद्याद्विंशतिं जठरे तथा। बाहुभ्याञ्च शतं दद्यात् दद्यादङ्गुलिभिर्दश। द्वादशार्द्धं वृषणयोरष्टार्द्धं शिश्न एव च। ऊरुभ्याञ्च शतं दद्यात्त्रिंशतं जानुजङ्घयोः। पादाङ्गुलीषु च दश एतत् प्रेतस्य लक्षणम्। ऊर्णासूत्रेण संवेष्ट्य यव-पिष्टेन लेपयेत्'। आदिपुराणं 'तदलाभे पलाशोत्थैः पत्रैः कार्य्यः पुमानपि। शतैस्त्रिभिस्तथाषष्ट्या शरपत्रैर्विधानतः'। तदलाभेऽस्थ्यलाभे। अत्र पलाशपत्रशरपत्रयोस्तुल्यत्वेनोपादानात् आश्व-लायनसूत्रेऽपि प्रतिकृतौ शरपत्रस्य लाभः। अत्राचाराद् योग्य-त्वाच्च शरपत्रैः पुत्तलकं कृत्वा शिरःप्रभृतिषु पलाशपत्राणि

ष्टेयानि ततो वेष्टनमूर्णासूत्रेण लेपनं यवपिष्टेनेति। यत्ता-शौचाभ्यन्तरे दाहे शेषाहेन शुद्धिः तदुत्तरपर्णनरदाहे तु त्रिरात्रम्। 'एवं पर्णनरं दग्ध्वा त्रिरात्रमशुचिर्भवेत्' इत्यादि-पुराणात्। यमपार्श्वे: 'पुत्राश्चेदुपलभ्येरन् तदस्थीनि कदा-चन। तदलाभे पलाशस्य सम्भवे हि पुनः क्रिया'। हि यस्मात्तदलाभेऽस्थ्यसंप्राप्तौ पलाशस्य तत्कृतपुत्तलकस्य दाह-क्रिया पुनरपि सम्भवे लाभेऽस्थिदाहक्रिया विहिता तस्माद् यदि पुनरस्थीनि प्राप्यन्ते तदा पुनर्दाहत्रिरात्राशौचे कर्त्तव्ये न पुनः पिण्डादिदानं वक्ष्यमाणयुक्तेः। 'अशौचानन्तरं चेत् स्याद्दाहः पर्णनरस्य च। त्र्यहाच्छुद्ध्यन्ति च तथा सन्निकृष्टाः सगोत्रजाः'। दर्शे दहेत्। 'पर्णनरं दहेन्नैव विना दर्शं कथञ्चन। अस्थ्यलाभे तु दर्शेऽपि ततः पर्णनरं दहेत्' इति दीपकलिकायां सुमन्तुवचनात्। दर्शे इत्यत्र अष्टम्यामिति क्वचित् पाठः। अष्टमी कृष्णा सन्देहे पितृकर्मणि कृष्णपक्ष-प्राधान्येनोक्तेः। 'नरं पर्णं दहेन्नैव प्राक् त्रिपक्षात् कथञ्चन। त्रिपक्षे तु गते दद्यात् दर्शे प्राप्ते त्वनग्निकः'। इत्यशौचव्यप-गमे बोध्यम्। यथा शुद्धिरत्नाकरे यमः। 'अशौचमध्ये तु यत्नेन दाहयेदुक्तयाकृता। कृष्णपक्ष इत्यत्राशौचव्यपगमे बोध्यः। कृष्णपक्षे पञ्चदश्यामष्टम्यां वा समाहितः। एका-दश्यां विशेषेण ततः प्रभृति सूतकम्। त्रिरात्रं सर्ववर्णाना-मेषधर्मो व्यवस्थितः' इति वायुपुराणे 'पर्णनरं दहेन्नैव प्राक् त्रिपक्षात् कथञ्चन। पितृदिष्टा माद्दष्टाष्टम्यान्नैव दर्शे दहेत यदि'। विष्णुः। 'त्रिपक्षे तु गते पर्णनरं दद्यादनग्निकः; त्रिपक्षाभ्यन्तरे राजन्! नैव पर्णनरं दहेत्। तदूर्द्ध्वमष्टमीं प्राप्य दर्शं वापि विचक्षणः'। दहेदिति शेषः। अशौचा-भ्यन्तरे यदि दाहं न कुर्यात् तदा मरणदिनावधि त्रिपक्षा-

नन्तरं दाहः कार्य्य इत्यर्थः। इति हरिदासतर्काचार्य्याः। 'पर्णं नरं दहेन्नैव विना दर्शं कदाचन। अस्थ्नामलाभे दर्शे तु ततः पर्णनरं दहेत्'। इति दीपकलिकायां सुमन्तुवचनाद्दर्शे दाहः। इत्यत्राष्टमीति क्वचित् पाठः। यमः त्रिपक्षाभ्यन्तरे राजन्! नैव पर्णनरं दहेत्। तदूर्द्ध्वमष्टमीं प्राप्य दर्शं वापि विचक्षणः। अष्टमीत्यत्र कृष्णाष्टमीत्यर्थः। पितृकर्मणि कृष्णपक्षप्राधान्येनोक्तेः इति हरिदासतर्काचार्य्यलिखनात्। एतच्चाशौचव्यतिरिक्तविषयम्।

अथोदकादिदानम्। पारस्करः 'संप्रयुक्तं मैथुनञ्च याचेरन्नुदकं करिष्याम' इति कुरुध्वं माचैवं पुनरित्यशतवर्षे प्रेते कुरुध्वमेवेतरस्मिन्निति प्रार्थिते सर्वे ज्ञातयो भावयन्ति आसप्तमात् पुरुषात् दशपुरुषाद्वा समानग्रामवासे यावत् सम्बन्धमनुस्मरेयुरेकवस्त्राः प्राचीनावीतिनः सव्यस्यानामिकया अप आलोड्य। 'ओम् अपनः शोशुचदघमिति दक्षिणाभिमुखा निमज्जन्ति प्रेतायोदकं सकृत् प्रसिञ्चन्त्यञ्जलिना असावेतत्त इति' संप्रयुक्तं सम्यक्प्रयोगकुशलम् उत्तरदानाभिज्ञमिति यावत् मिथुनं स्त्रीपुंसौ तत्सम्बन्धि मैथुनं श्यालकादिकम्। उदकं करिष्याम इति याचेरन् प्रत्युत्तरमाह कुरुध्वं मा चैवं पुनरित्यशतवर्षे प्रेते कुरुध्वमेवेतरस्मिन्निति। ततः सर्वे स्नानादिक्रियां भावयन्ति यावत् सम्बन्धमनुस्मरेयुः एककुलजाता वयमिति यावत् स्मरणं भवतीति तावदपीयं स्नानादिक्रिया यथा स्नानादि कर्त्तव्यं तदाह एकवस्त्र इत्यादिना अत्रैकवस्त्रत्वविधानादन्यत्र स्नाने द्विवस्त्रत्वं प्रतीयते। तथाच समुद्रकरधृतगोभिलीयसन्ध्यास्नानादिसूत्रभाष्ये गोतमः। 'एकवस्त्रेण यत् स्नानं शूद्र्या विहितेन चैव हि। स्नानन्तु न भवेच्छुद्धं क्रिया च परिहीयते'। कात्यायनीयस्नानसूत्रविवरणेऽपि

नैकवस्त्रं स्नायादितिवचनम्। बृहन्नारदीये 'देवार्चा चमन स्नानव्रतश्राद्धक्रियादिषु। न भवेन्मुक्तकेशश्च नैकवस्त्रधरस्तथा' विद्याकरवाजपेयिनापि यज्ञोपवीतस्यैव वस्त्रकारित्वेऽपि श्रव स्त्रत्वात् स्नानकाले स्थिते तस्मिन् वस्त्रेऽपि गृह्णीते न वासोभिः सहाजस्रमिति निषेधानवकाशः। 'नग्नःकौपीन-वासाश्च त्रिवासाः स्नाति यो नरः। वृथा स्नानं भवेत्तस्य निराशाः पितृदेवताः'। इति याज्ञवल्क्यवाक्यञ्च दृश्यत इत्युक्तम् अतएव सांख्यायनगृह्ये 'सवस्त्रोऽहरहराप्लुत्यानुदकोऽन्यद्वस्त्रमाच्छादयेत्' इति। सवस्त्र इति द्वितीयवस्त्र-प्राप्त्यर्थम् एकवस्त्रस्य नग्नत्वप्रतिषेधेन प्राप्तत्वादिति ब्रह्मदत्त-भाष्यमिति कल्पतरुः। अत्रानुदकश्रुत्या 'स्नातः शिरोनाव-धुनुयान्नाङ्गेभ्यस्तोयमुद्धरेत्' इति विष्णूक्तं स्नानशाटीपाणिभ्या-मिति विशेषणीयम्। 'स्नातो नाङ्गानि मार्जयेत् स्नानशाट्या न पाणिना' इति विष्णुपुराणीयैकवाक्यत्वात्। प्रेतस्नाने प्रथमं परिहितवस्त्रं प्रक्षाल्य तदेव परिधाय स्नातव्यम्। यथादिपुराणम् 'आदौ वस्त्रञ्च प्रक्षाल्य तेनैवाच्छादितैस्ततः। कर्त्तव्यं तैः सचेलन्तु स्नानं सर्वमलापहम्', ततः प्राचीना-वीतिनो दक्षिणामुखाः। ओम् अपनः शोशुचदघमित्यनेन मन्त्रेण वामहस्तानामिकया अप आलोड्य स्नातव्यमिति हारलता याज्ञवल्क्यदीपकलिकाहरिशर्मसुगतिसोपानप्रभृ-तयः असावेतत्ते इति असाविति सम्बोधनान्तनामोपलक्षणम् असाविति नाम गृह्णीयादिति कात्यायनदर्शनात्। अत्रा-साविव्युपादानाददःपदप्रयोग एव नामोहो नतु विरूपाक्षजपा-दाविदं कर्म करिष्यामि इत्यादौ अतएव भवदेवभट्टादिभि रसावित्यत्रोह उक्तो नेदमित्यादौ। तेनामुकगोत्र प्रेतामुक देवशर्मन्नेतत्ते तिलोदकं तृप्यस्वेति यजुर्वेदिनां प्रयोगः।

यद्यपि तृप्यस्वेति न वाचनिकं तथापि 'असुकामुकगोत्रस्तु प्रेतस्तृप्यत्विदं पठन्' इति ब्रह्मपुराणे गोत्रनामानुवादादि तर्पयामीति चोत्तरमिति छन्दोगपरिशिष्टे च तृप्तिपदप्रयोगात् सम्बोधनानुबन्धयोग्यत्वाच्च अत्रापि तथा कल्प्यते। यद्यप्य-सावित्यसंबुद्धिप्रथमान्तोऽपि सम्भवति तथा पितेति युष्मत्पद-प्रयोगात् संबुद्ध्यन्तता प्रतीयते तस्य संबुद्ध्यमानार्थवाचित्वात् अन्यथा अनन्वयापत्तेः। छन्दोगपरिशिष्टम्। 'अथानवेक्ष्य-मित्याप: सर्व एव शवस्पृशः। स्नात्वा सचेलमाचम्य दद्युरस्यो-दकं जले। गोत्रनामानुवादादि तर्पयामीति चोत्तरम्। दक्षिणाग्रान् कुशान् दत्त्वा सतिलांस्तु पृथक् पृथक्। अनवेक्ष्यं चिताग्न्यवेक्षणं यथा न स्यात्तथा अप आगत्य पारस्करोक्त-विधिना स्नात्वा तर्पयेयुः। विशेषमाह गोत्रेति अनुवादपदेन मरणादनुपश्चाद्वादो वदनं यस्य तत्तथेत्यन्वयात् प्रेतान्तनाम-गोत्राभ्यामिति शातातपीयदर्शनाच्च प्रेतपदमभिधीयते तेन गोत्रादि पूर्वं प्रतीकं तर्पयामीति परम् एतेन सम्बन्धार्पकपद-निवृत्तिरवसीयते प्रेतत्वेन देवतात्वात्। पितृपदस्थाने प्रेत-पदम्। प्रेतश्राद्धेऽपि सम्बन्धवाचकपित्रादिपदमनभिधाय विष्णुना 'प्रेतान्तनामगोत्राभ्यां दत्त्वाच्चमोदकोष्विति'। आश्व-लायनगृह्यपरिशिष्टेनापि 'पितृशब्दं न युञ्जीत पितृहा चोपजायते' इत्युक्तम् एतत् प्रेतश्राद्धमिति गोभिलवचनात् प्रेत-पदत्वेन देवतात्वात् पितृपदस्थाने प्रेतपदविधानादुत्सर्गवाक्ये मन्त्रे च पितृपदनिवृत्तिरवसीयते इति न्यायमूलकवचनमिदम् अतो न सांवत्सरिके तत्पदनिवृत्तिप्रसङ्गः। अतएव प्रेतपिण्डो-ऽप्यस्य विषय इति श्राद्धविवेकः। गोत्रनामानुवादादीत्यत्र पाठक्रमादाम्नः परं न प्रेतपदं किन्तु नागृहीतविशेषणा-बुद्धिर्विशिष्य उपजायत इति न्यायान्नाम्नः पूर्वं तन्न्यायस्य कथं

बलवत्त्वमिति चेत् श्रुत्यर्थपठनस्थानमुख्यप्राबृत्तिकाः क्रमा इति जैमिनिसूत्रे पाठक्रमादर्थक्रमस्य बलवत्त्वात्। सम्बन्धवाचकपदस्थलाभिषिक्तत्वाच्च इति। तथाचोक्तं मिश्राचार्य्यपृथिवीधरधृतविष्णुसूत्रम् 'अपः सर्वे सवर्णिनो गत्वा पितृपदस्थाने प्रेतपदोहेन द्वितीयान्तं तर्पयेयुः। पितृशब्दोच्चारणेन पितृत्वा भवति' इति शातातपः 'प्रेतात्मनामगोत्राभ्यामुत्सृजेदुपतिष्ठताम्' इति प्रेतात्मेति तत्पुरुषः न बहुव्रीहिः सर्वजघन्यत्वात् तेन प्रेतात्मनामगोत्रश्चेति समासः एतद्वचनाच्चितापिण्डदाने उपतिष्ठतामिति पितृदयितायामप्युक्तम्। एतेन प्रेतकार्य्ये सम्बन्धार्पकपदप्रयोगो मैथिलोक्तो हेयः एतेन अमुकगोत्रं प्रेतममुकदेवशर्म्माणं तर्पयामीति सामगानां प्रयोगः। अत्र प्रेततर्पणे सतिलांस्त्विति विशेषोपादानात् सूर्य्यादिवारेऽपि तिलैरेव तर्पणं प्रतीयते। व्यक्तमाह मदनपारिजातधृता स्मृतिः। 'अयने विषुवे चैव संक्रान्त्यां ग्रहणेषु च। उपाकर्म्मणि चोत्सर्गे युगादौ मृतवासरे। सूर्य्यशुक्रादिवारे च न दोषस्तिलतर्पणे'। तथा 'तीर्थे तिथिविशेषे च कार्य्यं प्रेते च सर्वदा'। तिथिविशेषे अमावास्यादशहरादौ। अत्र दक्षिणाङ्गुष्ठसहितमध्यमादिना वामहस्ते तिलदानं 'वामहस्ते तिलान् दत्त्वा जलमध्ये तु तर्पयेत्। मुक्तहस्तन्तु कर्त्तव्यं न मुद्रां तत्र दर्शयेत्' इति विद्याकरधृतवामहस्त इति सप्तम्यन्तश्रवणात् 'तिलान् संमिश्रयेज्जले' इति तिलाधिकरणमुपक्रम्याभिधानाच्च। सव्येन तिलाग्राह्या इत्यत्रापि वामहस्ते स्थाप्यां इत्यर्थः। सव्येनेति स्थाल्या पचतीति वदधिकरणे तृतीया विवक्षातो हि कारकाणि भवन्तीत्युक्तेः। मुद्रा अङ्गुष्ठतर्जन्यात्मकयोगरूपा तिलग्रहणायेति शेषः। ननु यथा छन्दोगानां द्वितीयान्तवाक्यं प्रेततर्पणप्रका

त्वात् प्रेततर्पणपरं तथा यजुर्वेदिनां सम्बोधनान्तवाक्यमपि तत्परमस्तु मैवं छन्दोगानां गोभिलेन शर्म्मा तर्पणकर्म्मणीति सामान्यतोऽभिधानात्तथास्तु यजुर्वेदिनान्तु स्वशाखायां प्रात्यहिकतर्पणे प्रकृतावनुक्तमपि सम्बोधनान्तवाक्यं तद्विकृतीभूतप्रेततर्पणीयेनासावेतत्त इत्यनेन निर्णीयते। तथा ज्योतिष्टोमे द्वादशशतगोदक्षिणाविभागोऽनुक्तो विकृतीभूत सत्रे शतेनार्द्धिनो दीक्षयन्तीत्यादिना निर्णीयते इति तद्विभागं मनुराह 'सर्व्वेषामर्द्धिनो मुख्यास्तदर्द्धेनार्द्धिनोऽपरे। तृतीयिनस्तृतीयांशाश्चतुर्थांशैकपादिनः'। श्रौतकात्यायनोऽपि 'अथ द्वादशद्वादशाद्येभ्यः षट्षट् द्वितीयेभ्यश्चतस्रश्चतस्रस्तृतीयेभ्यस्तिस्रस्तिस्र इतरेभ्यः' इति षोड़शानाम् ऋत्विजां चतुरश्चतुरः कृत्वा चत्वारो वर्गा इति शतोन गोभिलोक्ताश्रयणम्। किन्तु स्वशाखाश्रयणम्। तदाश्रयणे 'स्वशाखाश्रयमुत्सृज्य परशाखाश्रयन्तु यः। कर्त्तुमिच्छति दुर्म्मेधा मोघं तस्य तु यत्कृतम्' इति कात्यायनेन दोषाभिधानात्। व्यक्तमाह ब्राह्मणसर्व्वस्वे जातूकर्णः। 'प्रमीतपितृकस्तु उशन्तस्त्वेत्यावाह्य नामगोत्रे समुच्चार्य्य यावतां पितृकार्य्यमसावेतत्त उदकमिति पितॄन् पितामहान् प्रपितामहान् एकैकं त्रीं स्त्रीन् जलाञ्जलीन् दद्यादिति' ततश्च प्रात्यहिकतर्पणे अमुकगोत्र पितरमुकदेवशर्म्मंस्तृप्यस्वैतत्ते तिलोदकं स्वधेति यजुर्विदां प्रयोगः। अञ्जलित्रयदाने त्वनुहृतस्योपादानिकत्वाभावेन त्यागायोगादेतत्ते तिलोदकमिति निर्द्देशासम्भवादेकमन्त्रकानेकहोमे मन्त्रावृत्तिवत् करणत्वात् प्रत्यञ्जल्येव वाक्यं न तु वाचस्पतिमिश्रोक्तं सकृद्वाक्यं क्वचिदगत्यैव स्वत्वसम्भावनया भाविद्रव्यत्यागो न तु श्रुतिसम्भवेऽपि। अथात्र देवपदप्रयोगे किं मानम् उच्यते। 'ततश्च नाम कुर्व्वीत पितैव दशमेऽहनि।

देवपूर्वं नराख्यं हि शर्मवर्मादिसंयुतम्' इति विष्णुपुराणा-
दूर्द्ध्वं(?)ऽहनीति सङ्करेणाशौचक्रासे तदानीं नामकरणे बोध्य-
मिति प्रागुक्तं नरमाचष्टे इति नराख्यं नरनामस्याख्यमिति-
वत् विभुजादित्वात् कप्रत्ययेन सिद्धं देवपूर्वं देवात् पूर्वं तच्च
विशिष्टं शर्मयुतम्। तस्मान्ते 'शर्मवर्ष्मादिवी कार्य्यं शर्मा
तर्पणकर्मणि। शर्मणोऽक्षय्यकाले तु पितॄणां दत्तमक्षयम्'
इति गोभिलदर्शनात्। 'शर्मान्तं ब्राह्मणस्य स्याद्वर्मान्तं
क्षत्रियस्य तु। धनान्तञ्चैव वैश्यस्य दासान्तञ्चान्त्यजन्मनः'
इति शातातपीयाच्च। शृणाति हिनस्त्यशुभमिति मन्प्रत्ययात्
शर्मेति सिद्धं देवपदं विप्राणां नाममात्रसम्बन्धम्। 'शर्म
देवश्च विप्रस्य वर्मत्राता च भूभुजः। भूतिर्दत्तश्च वैश्यस्य दास
शूद्रस्य कारयेत्' इति कल्पतरुकुल्लूकभट्टधृतयमवचनात्
अत्रापि चकारात् समुच्चयः। यत्तु 'शर्मेति ब्राह्मणस्योक्तं
वर्मेति क्षत्रियस्य च। गुप्तदासात्मकं नाम प्रकुर्य्यात् वैश्य
शूद्रयोः' इत्यत्रेति पदस्वरसेन यद्यपि शर्मपदात्मकमेव नामाव
गम्यते इति द्वैतनिर्णये पूर्वपक्षवर्णनं तद्विष्णुपुराणीयैतद्व
चनप्रागवस्थितस्य। ततश्च नाम कुर्वीत इत्याद्युक्तवचनस्यान
भिज्ञानात्। किन्तु शर्मेति वचनं शर्मवर्मादिसंयुतमित्यस्य
विशेषकमिति। एतेनामुकदेवशर्मा प्रेत इत्यादि मैथिलान
वाक्यरचना हेया नाग्रहीतेत्यादि न्यायविरोधात्। यम
विष्णुपुराणोक्तदेवपदादिरहितत्वाद्गोभिलोक्तशर्मन्नित्यादिनिर्दे
शरहितत्वाच्च। गोत्रनामभुवादीत्याद्यनेकवचने गोत्रशब्द
दर्शनात् गोत्रपदमेवोच्चार्य्यं न तु पितृदयिताकल्पतरुश्राद्ध
विवेकोक्तं गोत्रपर्य्यायकमपि सगोत्रपदम् एवं श्राद्धेऽपि तथाच
गोभिलः। 'गोत्रं स्वरान्तं सर्वत्र गोत्रस्याक्षय्य कर्मणि
गोत्रस्तु तर्पणे प्रोक्तः कर्त्ता एवं न मुह्यति' इति। एवमि

शौदत्तादयः। आश्वलायनः। 'सव्यावृतो व्रजन्त्यनवेक्षमाणा यत्रोदकमवहं भवति तत् प्राप्य सकृदुन्मज्ज्यैकं जलाञ्जलिमुत्सृज्य तस्य नामगोत्रे गृहीत्वा उत्तीर्य्यान्यानि वासांसि परिधाय सकृदेवानापीड्य उदग्दशानि विसृज्यासते' इति। सव्यमावर्त्तन्त इति सव्यावृतः अग्निमिति शेषः। अवहमिति यत्र देशे नद्याः स्रोतो नास्ति तत्र स्नातव्यमिति हारलताप्रभृतयः। तेनाशौचिनोऽपि नद्यारजोयोगेऽपि नदीमज्जनं न निषिद्धम्। सकृदुन्मज्जनसामर्थ्यात् सकृदुन्मज्जनमायाति अनापीड्य आसम्यक्प्रकारेण पीड़नमकृत्वा ईषत्पीड़यित्वेत्यर्थः उदग्दशानि तथा त्यज्यानि वस्त्राणि यथोदीच्यां दशाः पतन्ति। शङ्खलिखितौ। 'प्रेतस्य बान्धवा यथा वृद्धपुरःसरमुदकमवतीर्य्य नोद्वर्षयेरन्नपः प्रसिञ्चेरन्' इति। जले वृद्धपुरःसरमवतरणं जलादुत्थानञ्च बालपुरःसरम्। बौधायनेन तथोक्तत्वात्। नोद्वर्षयेरन् तस्मिन् स्नाने मलापकर्षणं न कुर्य्युरित्यर्थः। एवञ्च मरणे। 'यथा बालं पुरस्कृत्य यज्ञोपवीतान्यपसलानि कृत्वा तीर्थमवतीर्य्य सकृन्निमज्ज्य प्रेतार्थमुदकमुत्सृज्य तत एवोत्तीर्य्याचामन्ति' इति बौधायनवचने। यथा बालं पुरस्कृत्येत्यस्योत्तीर्य्येत्यनेन सम्बन्धः न तु अवतीर्य्येत्यनेन तत्र वृद्धपुरःसरोक्तत्वात्। ततश्च जलादुत्थानं बालपुरःसरमेवेति हारलता। अपसलानि अपसव्यानीत्यर्थः। अतएव अस्मादेवोदकात्। आतुरे विशेषयति यमः। 'आतुरे स्नानमापन्ने दशकृत्वस्त्वनातुरः। स्नात्वा स्नात्वा स्पृशेदातं ततः शुध्येत् स आतुरः'। पैठीनसिः 'मृतं मनसा ध्यायन् दक्षिणामुखस्त्रीनञ्जलीन् दद्यात् शावप्रभृत्येकादशाहे विरमेदिति'। त्रीनिति'। प्रेतोपकारार्थम्। एकादश इत्यशौचापगमपरम्। एतद्विरमणं पुत्रातिरिक्तपरम्। 'स्नानञ्चैव महादानं स्वाध्याय

स्नान्यतर्पणम्। प्रथमाब्दे न कुर्वीत महागुरुनिपातने'। इति स्कन्दपुराणीयनिषेधेऽन्येति विशेषणात्। पितृतर्पणमिति पाठे पितृपदं प्रामपितृलोकपरं तेन च तथैवार्थः। 'पितृयज्ञन्तु निर्वर्त्य मासिकं श्राद्ध एव च। श्राद्धं प्रतिरुचौ चैव मातापित्रोर्मृतेऽहनि। असपिण्डीकृतं प्रेतमेकोद्दिष्टेन तर्पयेत्' इति जावालोक्तावपि पितृयज्ञं पितृतर्पणं निर्वर्त्याहरहः क्रियमाणेऽम्बुघटश्राद्ध इति श्राद्धविवेककृतादिभिर्व्याख्यातत्वाच्च।

अथ शोकापनोदनादि। याज्ञवल्क्यः। 'कृतोदकान् समुत्तीर्णान् मृदुशाद्वलसंस्थितान्। स्नातानपनुदेयुस्तानितिहासैः पुरातनैः। मानुष्ये कदलीस्तम्भे निःसारे सारमार्गणम्। यः करोति स सम्मूढो जलबुद्बुदसन्निभे। पञ्चधा सम्भृतः कायो यदि पञ्चत्वमागतः। कर्मभिः स्वशरीरोत्थैस्तत्र का परिवेदना। गन्त्री वसुमती नाशमुदधिर्दैवतानि च। फेनप्रख्यः कथं नाशं मर्त्यलोको न यास्यति। श्लेष्माश्रु बान्धवैर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः। अतो न रोदितव्यञ्च क्रिया कार्य्या विधानतः। इति सञ्चिन्त्य गच्छेयुर्गृहं बालपुरःसराः। विदश्य निम्बपत्राणि नियता द्वारि वेश्मनः। आचम्याथाग्निमुदकं गोमयं गौरसर्षपान्। प्रविशेयुः समालभ्य कृत्वाश्मनि पदं शनैः। प्रवेशनादिकं कर्म प्रेतसंस्पर्शिनामपि। इच्छतां तत्क्षणाच्छुद्धिं परेषां स्नानसंयमात्' इति स्नातानिति तर्पणानन्तरं पुनः स्नानविधानार्थम्। तथाच छन्दोगपरिशिष्टम्। 'एवं कृतोदकान् सम्यङ्मृदुशाद्वलसंस्थितान्। आप्लुत्य पुनराचान्तान् वदेयुस्तेऽनुयायिनः' तर्पणानन्तरं प्रेषिताः। 'ततः स्नानं पुनः कार्य्यं गृहशौचञ्च कारयेत्'। पञ्चधा सम्भृतः पृथिव्यादिपञ्चभूतात्मकतया निर्मितः पञ्चत्वमागतः पुनः पृथिव्यादिरूपतां प्राप्तः। विदश्य

दन्तैः खण्डयित्वा अग्निस्पर्शो वक्ष्यमाणमन्त्रेण कार्य्यः। शिलायां पादन्यासोऽपि वक्ष्यमाणमन्त्रेण कार्य्यः। उक्त-प्रवेशनादिकं यत् कर्म तत् प्रेतसंस्पर्शिनामपि कार्य्यं परेषा-मसपिण्डानान्तत्क्षणाच्छुद्धिमिच्छतान्तत् स्नानसंयमात् स्नानात् प्राणायामात् इति दीपकलिका। शङ्खलिखितौ। 'उत्तीर्य्य प्रेतस्पृष्टान्युत्सृज्य वासांसि परिधाय इतराणि गृह-द्वारे तस्मै प्रेताय पिण्डं दत्त्वा पश्चाद्दूर्वाप्रवालगोमयमज-मग्निं वृषञ्चालभ्य प्रविशन्तो घृतगौरसर्षपैर्मूर्द्धानमङ्गानि चालभेरन्। शस्त्रपाणयो भवेयुर्यथोक्तकालनियमाः'। इति आलभ्य स्पृष्ट्वा वैजवापः। 'शमीमालभन्ते शमी पापं शमय-त्विति अश्मानमालभन्ते अश्मेव स्थिरो भूयासमिति अग्नि-मग्निर्नः शर्म यच्छत्विति छागमित्यन्तरा गामजमुपस्पृशन्तः क्रीत्वा लब्ध्वा वा प्राप्य गृहमेकान्नमलवणमेकरात्रं दिवा भोक्तव्यं त्रिरात्रं कर्म्मोपरमणमिति'। वृषच्छागयोर्मध्ये स्थित्वा छागमिति मन्त्रेण द्वावपि स्प्रष्टव्यौ गृहं प्राप्य उपवासात्यन्ता-शक्तेन क्रीत्वा लब्ध्वा वा एकान्नमलवणं लवणरहितमेक-रात्रम् एकाहोरात्रं तत्रापि दिवा भोक्तव्यम्। कर्म्मोप-रमणमङ्गसंवाहनतैलाभ्यङ्गमार्जनादित्यागः। छन्दोगपरि-शिष्टम्। 'एवमुक्त्वा व्रजेयुस्ते गृहं बालपुरःसराः। स्नाना-ग्निस्पर्शनाभ्यासैः शुद्ध्येयुरितरे कृतैः'। एवं शोकापनोदनान्ते सपिण्डसगोत्राभ्यां इतरे सर्वे सम्बन्धरहितास्त्रिर्निमज्य वार-त्रयमग्निं स्पृष्ट्वा शुद्धा भवन्ति। हारीतः। 'न प्रेतस्पर्शिनो ग्रामं प्रविशेयुरानक्षत्रदर्शनाद्रात्रौ चेदादित्यस्य ब्राह्मणानु-मत्या वेति अशक्तौ ब्राह्मणानुमतिं गृहीत्वा प्रविशेयुः'। आश्वलायनः। 'नैतस्यां रात्रावन्नं पचेयुस्त्रिरात्रमक्षारलव-णाशिनः स्युर्द्वादशरात्रं महागुरुष्विति'। नान्नं पचेयुरित्यने-

नोपवासः सूचितः। 'अधःसंस्तरे ब्राह्मणमनश्नन्तः' इति वक्ष्यमाणवशिष्ठवचनात् त्रिरात्रमिति सपिण्डपरम्। अक्षारलवणं क्षारमृत्तिकादिजातलवणभिन्नम्। तत्तु सैन्धवं सामुद्रं च। यथा ब्रह्मपुराणे। 'सैन्धवं लवणञ्चैव यच्च सामुद्रकं भवेत्। पवित्रे परमे ह्येते प्रत्यक्षेऽपि च नित्यशः'। पृथक्तयोपलभ्यमानं लवणं प्रत्यक्षलवणं न तु व्यञ्जनादिसंस्कारकम्। संस्कारप्रत्यक्षयोर्भेददर्शनात्। तथा कालिकापुराणम्। 'मरीचं पिप्पलं कोषं जीरकन्तन्तुभं तथा। संस्कारे च समक्षे च महादेव्यै निवेदयेत्'। तन्तुभः सर्षपः। 'वनमुद्गे सर्षपे च द्वौ तन्तुभकदम्बकौ' इति अमरकोषात्। तन्तुना भातीति तन्तुभ इति टीकापि। महागुरुषु मातापितृपतिषु कर्मोपदेशिन्यां देवलः। 'अन्यश्राद्धं पराब्नञ्च गन्धं माल्यञ्च मैथुनम्। वर्जयेत् गुरुपाते तु यावत् पूर्णो न वत्सरः'। पारस्करभाष्ये बृहस्पतिः। 'पितुर्य्युपरते पुत्रो मातुःश्राद्धान्निवर्त्तते। मातर्य्यपि च वृत्तायां पितुःश्राद्धादृते समाम्'। ऋत इति मातुःश्राद्धादित्यत्राप्यन्वेति। अन्यथा पूर्वार्द्धवैयर्थ्यापत्तेः। समां संवत्सरं यावत् निवर्त्तते अन्यश्राद्धादिति शेषः। अन्यश्राद्धमपि प्राप्तपितृलोकश्राद्धपरम्। 'प्रमीतौ पितरौ यस्य देहस्तस्याशुचिर्भवेत्। नापि दैवं न वा पैत्रं यावत् पूर्णो न वत्सरः'। इति देवीपुराणात्। तेन प्रेतश्राद्धान्न निवृत्तिः। तथाच कालिकापुराणम्। 'महागुरुनिपाते तु काम्यं किञ्चिन्न चाचरेत्। आर्त्विज्यं ब्रह्मचर्य्यञ्च श्राद्धं देवयुतञ्च यत्'। एतच्च देवपक्षयुतश्राद्धवर्जनम् अमावास्यादिमृताहक्रियमाणसदैवश्राद्धेतरपरं सर्वसामञ्जस्यात्। देवक्रियां तथेति देवलीये पाठः। शौचविषये वशिष्ठः। 'अधःसंस्तरे ब्राह्मणमनश्नन्त आसीरन्' इति अधःसंस्तरे उपवेश-

नादौ पीठादिनिषेधात्। अघनिमित्तेन कटादिविधानादघ-स्रस्तरः कटादिरिति। अशक्तविषये रत्नाकरे विशेषमाहापस्तम्बः। 'भार्य्याः परमगुरुसंस्थायां चाकालमभोजनं कुर्वीरन्निति'। संस्था मरणम् आकालं यत्र काले मरणं भूतं परदिने तत्कालपर्य्यन्तम्। आदिपुराणे। 'अशौचमध्ये यत्नेन भोजयेत्तु सगोत्रजान्'। विष्णुपुराणम्। 'शय्यासनोपभोगश्च सपिण्डानामपीष्यते। अस्थिसञ्चयनादूर्द्ध्वं संयोगो न तु योषिताम्'। तथा 'दातव्योऽनुदिनं पिण्डः प्रेताय भुवि पार्थिव। दिवा च भक्तं भोक्तव्यममांसं मनुजर्षभ'। अत्र सपिण्डानां पिण्डदानार्हदिवसपर्य्यन्तममांसभक्षणश्रुतेः। मत्स्यमांसानि न भक्षयेयुराप्रदानादिति गौतमसूत्रेऽपि आप्रदानादिति पदम् एकादश्यामयुग्मान् भोजयेत् मांसवदिति कात्यायनसूत्रोक्ताद्यश्राद्धीयमांसदानार्हदिनोपलक्षणम्।

अथ पिण्डोदकादिदानम्। पारस्करः। 'प्रेताय पिण्डं दत्त्वावनेजनदानं प्रत्यवनेजनेषु नामग्रहणं मृण्मये तां रात्रिं विहायसि क्षीरोदके निदध्युः। प्रेतात्र स्नाहि पिब चेदं क्षीरमिति उच्चार्य्येति'। अत्र दानशब्देन पिण्डदानमुक्तं बहुवचनात्। तेनावनेजनपिण्डदानप्रत्यवनेजनेषु नामग्रहणं नाम गृहीत्वा प्रेतपिण्डानुष्ठानं समाप्य विहायसि रात्रौ क्षीरोदके। प्रेतात्र स्नाहि पिब चेदं क्षीरमित्युच्चार्य्य निदध्युः। आदिपुराणे। प्रथमेऽहनि यो दद्यात् प्रेतायान्नं समाहितः।* यत्नान्नवसु चान्येषु स एव प्रददात्यपि। मृण्मयं भाण्डमादाय नवं स्नातः सुसंयतः। लगुडं सर्वदोषघ्नं गृहीत्वा तोयमानयेत्। ततश्चोत्तरपूर्वस्यामग्निं प्रज्ज्वालयेद्दिशि। तण्डुलप्रसृतीं तत्र प्रक्षाल्य हि पचेत् स्वयम्। सपवित्रैस्तिलैर्मिश्रां केशकीटविवर्जिताम्।

द्वारोपान्ते ततः क्षिप्त्वा शुद्धां वा गौरमृत्तिकां तत्पृष्ठे प्रस्त
दर्भान् याम्याग्रान् देशसम्भवान्। ततोऽवनेजनं दद्या
संस्मरन् गोत्रनामनी। तिलसर्पिर्मधुक्षीरैः सिक्तं तस्मै
हि। दद्यात् प्रेताय पिण्डन्तु दक्षिणाभिमुखस्थितः। फल
मूलगुड़क्षीरतिलमिश्रन्तु कुत्रचित्। अर्घैः पुष्पैस्तथा धूपै
र्दीपैस्तोयैः सुशीतलैः। ऊर्णातन्तुमयैः शुद्धैर्वासोभिः पिण्ड
मर्चयेत्। प्रयाति यावदाकाशं पिण्डाहाष्पमयी शिखा
तावत्तत्पुरतस्तिष्ठेत् सर्वं तोये ततः क्षिपेत्। दिवसे दिवसे
देयः पिण्ड एवं क्रमेण तु। सद्यःशौचेऽपि दातव्याः सर्वेऽपि
युगपत्तथा। त्र्यहाशौचे प्रदातव्याः प्रथमे त्वेक एव हि
द्वितीयेऽह्नि चत्वारस्तृतीये पञ्च चैव हि। एकस्तोयाञ्जलि
स्त्वेवं पाथमिकश्च दीयते। द्वितीये द्वौ तृतीये त्रीन् चतुर्थे
चतुरस्तथा। पञ्चमे पञ्च षष्ठे षट् सप्तमे सप्त एव हि
अष्टमेऽष्टौ च नवमे नव वै दशमे दश। येन स्युः पञ्चपञ्चा
शत्तोयस्याञ्जलयः क्रमात्। तोयपात्राणि तावन्ति संयुक्तानि
तिलादिभिः'। अत्राह्नः पदमहोरात्रपरम्। 'राहुदर्शनसंक्रान्ति
विवाहात्ययवृद्धिषु। स्नानदानादिकं कुर्युर्निशिकाम्यव्रते
च'। इति देवलवचनेऽत्यये मरणे रात्रावपि स्नानदाना
दिविधानात् एवमेव श्राद्धविवेकः। अतएव प्रागुक्तविष्णुपुराण
वचनेऽनुदिनमिति दिवा चेति पृथगुक्तं पिण्डदानेऽनुदिन
मित्यत्र दिनपदश्रवणात् दिनपदमहोरात्रपरम्। भोजनं
दिवा चेति दिवापदं सूर्य्यावच्छिन्नकालपरम्। अन्यथा पूर्व
त्रापि तथात्वे दिवाचेति पौनरुक्त्यापत्तेः। एतेन दिवसपद
श्रवणाद्रात्रौ पिण्डो न देय इति मैथिलमतमपास्तम्। अत्र
दशमदिनपर्य्यन्तं प्रतिदिनं पिण्डदानाभिधानात्। 'पिण्ड
यज्ञावृता देयं प्रेतायान्नं दिनत्रयम्' इति याज्ञवल्क्यीयदिन

त्रयपिण्डदानावश्यकार्थमङ्गास्पृश्यत्वेऽपि तद्दानार्थञ्चेति हार-लतादयः। स एवेत्येवकारात् प्रथमपिण्डदातैव दशपिण्ड-दानेऽधिकारीति दर्शयति। तेन पुत्त्रादेरसन्निधाने यद्यन्येन प्रथमपिण्डो दत्तस्तदा दशाहमध्ये पुत्त्रादेरागमनेऽपि दाशा-हिकपिण्डदानं पुत्त्रादिना न कर्त्तव्यम्। पुत्त्रादिस्तु दाशा-हिकपिण्डदानातिरिक्तं सर्वं कुर्य्यादिति हारलता। आश्व-लायनगृह्यपरिशिष्टम्। 'असगोत्रः सगोत्रो वा यदि स्त्री यदि वा पुमान्। प्रथमेऽहनि यो दद्यात् स दशाहं समाप-येत्'। न च भरतदत्तपिण्डानन्तरम्। 'ऐङ्गुदं बदरीमिश्रं पिण्याकं दर्भसम्भवे। न्युप्य पिण्डांस्ततो राम इदं वचनम-ब्रवीत्। इदं भुङ्क्ष्व महाराज प्रीतो यदशना वयम्। यदन्नः पुरुषो राजंस्तदन्नाः पितृदेवताः' इति अयोध्याकाण्डे राम-पिण्डदानश्रवणात् प्रधानाधिकारिणापि दशपिण्डा देया इति वाच्यम्। तत्र भरतश्चेत् प्रतीतः स्याद्राज्यं प्राप्येदमुत्तमम्। 'प्रेतार्थं यत् स मे दद्यात् मा मां तत् समुपागमत्' इति अयो-ध्याकाण्डे दशरथशापात् तत्कृतमकृतमिति पुनस्तत्करणम्। न च प्रतीत्यभावात् कथं तस्य दानमिति वाच्यं 'कुरु प्रसादं धर्मज्ञ कैकय्या भरतस्य च। सपुत्त्रां त्वां त्यजामीह यदुक्ता कैकयी त्वया'। इति सीतापरीक्षानन्तरं रघुनाथप्रार्थनात्तु-पपत्तेः अन्यत्र तु स एवेत्येवकारेणान्याधिकारिनिवृत्तेः। प्रद-द्यात्वपीत्यत्रापिरवधारणे अव्ययानामनेकार्थत्वात्। अतएवा-पिशब्दो बहुतरेषु एव आदिपुराणवचनेषु निश्चयार्थं इति हारलता तेन स एव दद्यादित्येवार्थः। पुत्त्राद्यसन्निधाने येन सगोत्रादिना दाहसंस्कारः कृतस्तेनैव दाशाहादिकं प्रेतकर्म कर्त्तव्यम्। प्रागुक्तासगोत्रः सगोत्रो वेति वचना-दिति प्रभृताध्यायि मिताक्षरा अतएव कर्मोपदेशिन्यां वायु-

पुराणम्। असगोत्रः सगोत्रो वा यदि स्त्री यदि वा पुमान्। प्रथमेऽहनि यो दद्यात् स दशाहं समापयेत्'। तथा च हारीतः। 'यस्याग्निदाता प्रेतस्य पिण्डं दद्यात् स एव हि'। अत्रेदं बीजम् आरब्धपूर्वक्रियस्य तत्समापनस्यावश्यकत्वमिति वक्ष्यमाणाधिकारिप्रकरणस्थविष्णुपुराणवचनात्। एवञ्च हारलतायां येन प्रथमः पिण्डोदत्त इति तत्प्रतिपादकवचनञ्च पूर्वक्रियारम्भप्रदर्शनपरम्। किञ्च 'सपिण्डीकरणान्तानि यानि श्राद्धानि षोड़श। पृथङ्नैव सुताः कुर्य्युः पृथगद्रव्या अपि क्वचित्'। इति लघुहारीतेन मध्यक्रियायाः पृथङ्निषेधात् सुतरां पूर्वक्रियासु तथैव युक्तत्वाच्च अन्यथा सर्वपुत्राणामपि प्रत्येकं पिण्डदानापत्तेः अत्रेदं बीजं पूर्वक्रियाया आतिवाहिकदेहत्यागोत्तरदेहान्तरजननं मध्यक्रियाया अपि प्रेतत्वपरिहारोत्तरदेहान्तरजननं ततश्चैकदैव तत्सिद्धौ पुनस्तत्करणं वचनाभावेऽनर्थकम्। तथाच विष्णुधर्मोत्तरम्। 'तत्क्षणादेव गृह्णाति शरीरमातिवाहिकम्। ऊर्द्धं व्रजन्ति भूतानि त्रीण्यस्मात्तस्य विग्रहात्'। त्रीणि भूतानि तेजो वाय्वाकाशानि पृथिवी जले तु अधोगच्छतः। तत्क्षणात् मृत्युक्षणात्। तथा 'आतिवाहिकसंज्ञोऽसौ देहो भवति भार्गव। केवलं तन्मनुष्याणां नान्येषां प्राणिनां क्वचित्'। तथा 'प्रेतपिण्डैस्तथा दत्तैर्देहमाप्नोति भार्गव। भोगदेहमिति प्रोक्तं क्रमादेव न संशयः। प्रेतपिण्डा न दीयन्ते यस्य तस्य विमोक्षणम्। श्माशानिकेभ्यो देवेभ्य आकल्पं नैव विद्यते। तत्रास्य यातना घोरा शीतवातातपोद्भवाः। ततः सपिण्डीकरणे बान्धवैः स कृते नरः। पूर्णे संवत्सरे देहमतोऽन्यं प्रतिपद्यते। ततः स नरके याति स्वर्गे वा स्वेन कर्मणा'। तथाच वायुपुराणं पूरकेण तु पिण्डेन देहो निष्पाद्यते यतः। 'कृतस्य करणायोगात् पुनर्नावर्त्तयेत् क्रियाम्'। अतएवातिवाहिक-

देहपरित्यागाय तत्कालीनकर्मासमर्थपुत्रसत्त्वेऽपि अन्येन दाहादि क्रियते। 'पितृमातृसपिण्डैस्तु समानसलिलैर्नृप। संघातान्तर्गतैर्वापि राज्ञा वा धनहारिणा। पूर्वाः क्रियास्तु कर्त्तव्याः पुत्राद्यैरेव चोत्तराः'। इति विष्णुपुराणवचनेन 'मित्रबन्धुसपिण्डेभ्यः स्त्रीकुमारीभ्य एव च। दद्याद्वै मासिकं श्राद्धं संवत्सरमतोऽन्यथा'। इत्यापस्तम्बवचनेन च सामान्यतोऽधिकारप्रतिपादनात्। अतएव पित्रादेरौर्द्ध्वदेहिकस्य कर्मणोऽसंस्कृतपुत्रस्य करणे प्राशस्त्यमाहापस्तम्बः। 'असंस्कृतः सुतः श्रेष्ठो नापरो वेदपारगः' इति। अतएव बृहस्पतिः। 'सवर्णाजोऽप्यगुणवान्नार्हः स्यात् पैतृकधने। तत्पिण्डदाः श्रोत्रिया ये तेषान्तदभिधीयते'। अगुणवान् गुणविरोधिदोषवान्। 'तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता। अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः'। शङ्खापस्तम्बौ। 'अपपात्रितस्य रिक्थपिण्डोदकानि निवर्त्तन्ते' इति। अपपात्रितः अत्युत्कटदोषेण ज्ञातिभिर्भिन्नोदकीकृतः पितृधनाद्यनधिकारीत्यर्थः। एवञ्च 'पुत्रेषु विद्यमानेषु नान्यत् वै कारयेत् स्वधाम्'। इति ऋष्यशृङ्गवचनं समर्थपुत्त्रपरं विदेशस्थादिना वर्षाभ्यन्तरकर्मासमर्थज्येष्ठपुत्त्रसत्वेऽपि प्रेतत्वपरिहाराय कनिष्ठपुत्त्रेण षोड़शश्राद्धं कर्त्तुमुचितम्। 'मृते पितरि पुत्रेण क्रिया कार्य्या विधानतः। बहवः स्युर्यदा पुत्त्राः पितुरेकत्र वासिनः। सर्वेषान्तु मतं कृत्वा ज्येष्ठेनैव तु यत् कृतम्। द्रव्येण चाविभक्तेन सर्वैरेव कृतं भवेत्'। इति मरीचिवचनमपि समर्थज्येष्ठपरम्। अन्यथा तत्प्रेतत्वप्रतिबन्धकालान्तरासहिष्णुवृद्धिकर्म न स्यात्। ज्येष्ठत्वाच्च 'ज्येष्ठेन जातमात्रेण पुत्री भवति मानवः। पितृणामनृणश्चैव स तस्मात्सर्व्वमर्हति' इति मनूक्तेः सर्वांशोत्पन्नत्वमात्रं न ग्राह्यम्। तत्र विभाग-

प्रकरणीयत्वात्। किन्तु आपेक्षिकज्येष्ठपरम्। 'यमयोश्चैकगर्भेषु जन्मतो ज्येष्ठता स्मृता' इति मनुवचनानन्तरात्। 'ज्येष्ठं गुणवय: क्वतम्'। इति मिताक्षराधृतदक्षवचनाच्च। अतएव 'नवश्राद्धं सपिण्डत्वं श्राद्धान्यपि च षोड़श। एकेनैव तु कार्य्याणि संविभक्तधनेष्वपि' इति मिताक्षराधृत दक्षवचनेऽविशेषादेकेनैवेत्युक्तं पिण्डमिश्रणमिति अत: षोड़शान्तर्गतसपिण्डीकरणश्राद्धेन न पौनरुक्तमिति। एतेन 'श्राद्धानि षोड़शापाद्य विदधीत सपिण्डताम्' इत्यपि व्याख्यातम् अतएव श्रीरामाप्राप्तिशङ्कया भरतेनाद्यादिश्राद्धं क्वतम्। तथाच अयोध्याकाण्डे 'समतीते दशाहे तु क्वतशौचो विधानत:। चक्रे द्वादशिकं श्राद्धं त्रयोदशिकमेव च। ददौ चोद्दिश्य पितरं ब्राह्मणेभ्यो धनन्तथा। महार्हाणि च रत्नानि गाश्च वाहनमेव च। यानानि दासीर्दासांश्च वेश्मानि सुमहान्ति च। भूषणानि च मुख्यानि राजस्तस्यौर्द्ध्वदेहिके। त्रयोदशाहेऽतीते तु क्वते चानन्तरे विधौ। समेता मन्त्रिण: सर्वे भरतं वाक्यमब्रुवन्। गत: स नृपति: स्वर्गं भर्त्तासीद् यो गुरुश्च न:। प्रव्राज्य दयितं पुत्रं रामं लक्ष्मणमेव च। त्वमद्य भव नो राजा धर्मतो नृवरात्मज:'। दशाहपदमशौचकालोपलक्षणम्। द्वादशिकं द्वादशाहेन वृत्तं त्रयोदशाहविधेयमित्यर्थ:। एवं त्रयोदशिकं चतुर्दशाहविधेयमित्यर्थ:। इति श्राद्धविवेक:। न च यत्र देशान्तरादावनुमिति द्रव्यसंश्लेषयोरभावस्तत्र पृथगेव श्राद्धम् अन्यथा प्रत्यवायपरिहारो न स्यादिति श्राद्धविवेकोक्तं युक्तमिति वाच्यम्। 'पृथङ्नैव सुता: कुर्य्यु: पृथगद्रव्या अपि क्वचित्'। इत्युपदेशात् पृथक्करणनिषेधात् सर्वेषान्तु मतं क्वत्वेति द्रव्येण चाविभक्तेन इति विशेषणद्वयश्रवणात् पृथक्करणविध्यन्तरकल्पनापत्ते:।

शुद्धिप्रकाशे। 'निवर्त्तयति यो मोहात् क्रियामन्यनिवर्त्तिताम्।
विधिघ्नस्तेन भवति पितृहा चोपजायते। तस्मात् प्रेतक्रिया
येन केनापि च कृता यदि। न तां निवर्त्तयेत् प्राज्ञः सतां
धर्ममनुस्मरन्' इति वायुपुराणाच्च। सर्वेषान्तु मतं कृत्वेति
द्रव्येण च अविभक्तेन इत्यनेन तेषामेतदेव कर्त्तव्यमिति प्रति-
पादितं न तु तदभावे पृथक्करणविधायकं विध्यन्तरकल्प-
नापत्तेः। अतएव संवत्सरप्रदीपे हलायुधेनोक्तम्। यदि
वैमात्रेयकनिष्ठोऽग्निमान् ज्येष्ठो निरग्निस्तदा कनिष्ठेन दर्शा-
दर्वाक् सपिण्डने कृते सपिण्डनं ज्येष्ठेन पुनर्नावर्त्तनीयं पृथक्-
करणनिषेधात्। एवं कनिष्ठस्य वृद्धिनिपातेऽपि बोध्यम् इति
श्राद्धचिन्तामणौ एतच्च विदेशस्थज्येष्ठे तु बोध्यं स्वदेशस्थे तु
ज्येष्ठे तद्द्वारेवापन्नत्य कनिष्ठेन कर्म कर्त्तव्यमिति। शुद्धि-
चिन्तामणौ तु यद्यपि 'अकृत्वा प्रेतकार्य्याणि प्रेतस्य धन-
हारकः। वर्णानां यद्वधे प्रोक्तस्तद् व्रतं नियतश्चरेत्' इति
एकवचनेन सर्वेषामेव पुत्राणां प्रेतश्राद्धकर्त्तृत्वमायाति।
तथापि स्वीयस्वीयधनदानद्वारा तत्कारयितव्यम्। सर्वेषान्तु
मतं कृत्वेति लघुहारीतमरीचिवचनादित्युक्तम्। प्रत्याब्दिक
एव पृथक्करणमाह लघुहारीतः। 'प्रत्यब्दमितरे कुर्य्युरे-
कोद्दिष्टं पृथक्सुताः। यावन्त एव पुत्राः स्युः पिण्डास्तावन्त
एव हि'। इतरे प्रेतकार्य्यधिकार्य्यन्ये। 'कन्या वैवाहिक-
ञ्चैव प्रेतकार्य्यञ्च यत् कृतम्। तत् सर्वं हि प्रदातव्यं कुटु-
म्बेन कृतं प्रभोः' इति कात्यायनवचने प्रभोरिति कर्त्तरि
षष्ठी। तेन प्रभुणा दातव्यमित्यर्थः। इति रत्नाकरव्याख्या-
नात्तद्दायितव्यद्रव्यदानादपि प्रत्यवायानुदयः। किञ्च पृथङ्
नैव सुताः कुर्य्युरिति श्रवणात् सर्वेषान्तु मतं कृत्वेत्यत्र सर्वेषां
पुत्राणां फलायेदं श्राद्धं भवत्विति मतं ज्ञानं कृत्वेति व्याख्या-

नाश्च। येन च षोड़शश्राद्धं क्रियते तेन सर्वसुतार्थाभिसन्धा-
नेन तत् क्रियते इति प्रतिनिधिनापि तत्करणं सिद्धम्। न च
यस्य प्रतिनिधिस्तेन तदकरणे कथं प्रतिनिधित्वमिति वाच्यम्।
'ऋत्विक् च त्रिविधो दृष्टः पूर्व्वजुष्टः स्वयं कृतः। यदृच्छया च
यः कुर्य्यादार्त्विज्यं प्रीतिपूर्व्वकम्' इति विवादरत्नाकरकल्प-
तरुरत्नाकरविवादचिन्तामणिशान्तिदीपिकाधृत-नारदयमपा-
र्श्ववचने यजमानेन प्रतिनिधित्वाकरणेऽपि तृतीया ऋत्विजः
स्वेच्छया तद्दर्शनात्। पूर्व्वैः पूर्व्वपुरुषैः। तद्भेदप्रयोजनन्तु
तत्रैव। 'ऋत्विक्याज्यमदुष्टं यस्त्यजेदनपकारिणम। अदुष्टम्
ऋत्विजं याज्यो विनेयौ तावुभावपि। क्रमागतेष्वेष धर्मो
वृतेष्वृत्विक्षु च स्वयम्। यादृच्छिके तु संयोज्ये तत्त्यागे
नास्ति किल्विषम्'। विनेयौ दण्डनीयौ संयोज्ये प्रेषणार्हे
ऋत्विजि। 'परिसमुह्योपलिप्योल्लिख्योद्धृत्याभुक्ष्याग्निमुप-
समाधाय दक्षिणतो ब्रह्मासनमास्तीर्य्य प्रणीय परिस्तीर्य्यार्थ-
वदासाद्य पवित्रे कृत्वा प्रोक्षणीश्च संस्कृत्यार्थवत् प्रोक्ष्य निरु-
प्याज्यमधिश्रित्य पर्य्यग्निं कुर्य्यात्। स्रुवं प्रतप्य दर्भैश्च
संमृज्याभुक्ष्य पुनः प्रतप्य निदध्यादाज्यमुद्वास्योत्पाप्य उत्
पूयावेक्ष्य प्रोक्षणीः पूर्व्ववदुपयमन् कुशानादाय समिधोऽप्या-
धाय पर्य्युक्ष्य जुहुयात्' इति कात्यायनेन परिसमूहोपक्रम-
पूर्णहोमपर्य्यन्तव्यापारकलापस्यैककर्त्तृत्वप्राप्तावपि आरब्धक-
र्मर्त्विजि विनष्टे ऋत्विगन्तरेण तत् कर्मसमापनोक्तेः। तथाच
याज्ञवल्क्यः। 'जिह्मं त्यजेयुर्निर्लोभमशक्तोऽन्येन कारयेत्।
अनेन विधिराख्यात ऋत्विक्कर्षककर्मिणाम्'। जिह्मं कुटि-
लम्। अत्रमाहतुः शङ्खलिखितौ। तत्र चेदनुप्राप्ते सवने
ऋत्विङ् म्रियते तत्र किं कार्य्यमिति जिज्ञासायां तस्य
सगोत्रः शिष्यो वा तत्कार्य्यमनुपूरयेत् तथा चेदवाप्ववस्तौ

ऽन्यस्त्विजं वृणुयादिति। अनुयाते प्रारब्धे सत्रने यज्ञे एवं प्रेतकार्य्यं प्रथमाधिकारिनाशेऽन्येनापि शेषः समाप्यते। तदाह वृहस्पतिः। 'एवं क्रियाप्रवृत्तानां यदि कश्चिद्विपद्यते। तद्बन्धुना क्रिया कार्य्या सर्व्वैर्वा सहकारिभिः'। न च सत्रे यथैकापचारे कर्म्ममध्ये एव सर्व्वेषां समुत्थानं कर्म्मसमापनमुक्तं तद्वदत्रापीति वाच्यम्। तत्र फलस्य स्वर्गतत्वेन तथा सिद्धान्तितम्। अत्र परगतत्वेऽन्येनापि तस्य समापनमिति। अथ द्वितीयाधिकारिणापि प्रेतत्वपरिहाराय कर्म्मादिकालविहितसङ्कल्पं विना कथं क्रियत इति चेन्न षोड़शश्राद्धानां नित्यत्वात् प्रथमाधिकारिणापि तत्सङ्कल्पो न क्रियते। तन्नित्यत्वमाह छन्दोगपरिशिष्टं 'ध्रुवाणि तु प्रकुर्व्वीत प्रमीताहनि सर्व्वदा। द्वादशप्रतिमास्यानि आद्यं षाण्मासिके तथा। सपिण्डीकरणञ्चैव इत्येतत् श्राद्ध षोड़शम्'। ध्रुवाणि आवश्यकानि। अतोऽशौचादिशङ्कया भविष्यद्दुर्गोत्सवादौ यद्वरणादिकं करोति तत् कर्म्मकाले स्वयं प्रवर्त्तनवत् प्रवर्त्तनाय न तु तत एव तदानीं प्रतिनिधिर्भवति किन्तु कर्म्मकाले स्वयमेव तदर्थं कर्म्म क्रियते। अन्यथा शुचि तत्कालजीवित्वेनाधिकारात् तदानीमधिकाराभावात् कथं प्रतिनिधिविधानमिति। अतएव शङ्खलिखितौ। 'राज्ञां पुरोहितोऽमात्यः शुद्धिस्तस्य तदाश्रया'। नृपतीनामात्मप्रतिनिधीभूतपुरोहितस्तेन नृपतेरशौचे पुरोहितस्याशौचाभावात् नृपतेः शान्तिकपौष्टिकं पुरोहितेन स्वीयशुद्ध्या कर्त्तव्यमिति हारलताप्रभृतयः। एवञ्चेदशौचिद्रव्येण कथं क्रियत इति चेत् शुद्धिकाले तदर्थोपकल्पितत्वात्। तथाच यमः। 'देवे भये समुत्पन्ने प्रधानाङ्गे विनाशिते। पूर्व्वसङ्कल्पिते चैव तस्मिन्नाशौचमिष्यते'। सप्ताङ्गराज्यस्य प्रधानाङ्गे राजनि। किञ्चि-

धर्मकार्य्यं पुष्करिण्यादिकर्त्तुं पूर्वाशौचकाले धने सङ्कल्पिते पृथक्कृते तस्मिन् कार्य्ये अशौचं नास्तीति हारलताकृत्य-चिन्तामणौ। 'विवाहोत्सवयज्ञेषु अन्तरामृतसूतके। पूर्व-सङ्कल्पितं द्रव्यं दीयमानं न दुष्यति' इति। प्रथमपिण्ड-कर्त्तृत्वनियमवत् प्रथमपिण्डद्रव्यनियममप्याह शुनःपुच्छः। 'प्रथमेऽहनि यद्द्रव्यं तदेव स्यात् दशाहिकम्'। विष्णुः। 'याव-दशौचं तावत् प्रेतस्योदकं पिण्डमेकञ्च दद्युः' इति यावत्ताव-दित्यभिधानादशौचाभ्यन्तर एव पिण्डदानं मुख्यम्। दैवा-त्तदकरणे मध्यमक्रिया पूर्वकाले कर्त्तव्यम्। 'यद्वागामि-क्रियामुख्यकालस्याप्यन्तरालवत्। गौणकालत्वमिच्छन्ति केचित् प्राक्तनकर्मणि' इति वचनेन प्राप्तपूर्वक्रियस्यैव मध्यम-क्रियाभागित्वावगमात् अन्तरालवत् मध्यकालस्यैव। तत्रा-गामिक्रियामुख्यकालस्य गौणकालत्वमिति यद्वेति पक्षा-न्तरम्। जलसमीपे पिण्डदानमुक्तं मत्स्यपुराणे। 'प्रेती-भूतस्य सततं भुवि पिण्डं जलन्तथा। सतिलं सकुशं दद्यात् वहिर्जलसमीपतः'। ऋष्यशृङ्गः। 'न स्वधाञ्च प्रयुञ्जीत प्रेत-पिण्डे दशाहिके। भाषेतैतच्च वै पिण्डं यन्नदत्तस्य पूर-कम्। यस्य न ज्ञायते गोत्रं पिण्डं नाम्ना तु निर्वपेत्'। दाशाहिकग्रहणादेकादशाहिकश्राद्धे स्वधाप्रयोगोऽस्तीति हारलता। न च स्वधापितृहविर्दानमन्त्र इति प्रेतस्य पितृ-त्वाभावात् कथं तत् प्रयोग इति वाच्यम्। पित्रे तु द्विगुणा दर्भा इतिवत् पितृपदस्य प्रमीतवचनत्वात्। 'दानं प्रति-ग्रहो होमः स्वाध्यायः पितृकर्म च। प्रेतपिण्डक्रियावर्ज्जं सूतके विनिवर्त्तते' इति शङ्खवचनेनापि पितृपदस्य मृतमात्र-परत्वेन प्रेतपिण्डस्यापि पितृकर्मत्वात्तद्वर्ज्जनमुपपद्यते। अन्यथा प्रसक्त्यभावात् प्रतिप्रसववैफल्यापत्तेः। 'पितृयज्ञ

निर्वत्य मासिके श्राद्ध एव च'। इति पूर्वोक्तप्रेततर्पणेऽपि पितृयज्ञपदप्रयोगाच्च। एवञ्च प्रेतश्राद्धेऽपि भुक्तामिपितृभ्यो-ऽग्रदानं सङ्गच्छते। अत्र भाषणविधावेतत् पिण्डं यद्दत्तस्य पूरकमित्येतावन्मात्रश्रुतेः। शिरःपूरकमित्यादिविशेषोल्लेखे प्रमाणं नास्ति। न च 'शिरस्त्वाद्येन पिण्डेन प्रेतस्य क्रियते सदा। द्वितीयेन तु कर्णाक्षिनासिकान्तु समासतः। गलांसभुजवक्षांसि तृतीयेन यथा क्रमात्। चतुर्थेन तु पिण्डेन नाभिलिङ्गगुदानि च। जानुजङ्घे तथा पादौ पञ्चमेन तु सर्वदा। सर्वमर्माणि षष्ठेन सप्तमेन तु नाड़यः। दन्तलोमाद्यष्टमेन वीर्यञ्च नवमेन तु। दशमेन च पूर्णत्वं तृप्तताक्षुद्विपर्य्ययः'। इति ब्रह्मकूर्मपुराणीयं वाक्यं प्रमाण-मिति वाच्यम्। तद्वाक्येन तत्तत्पिण्डदानात्तत्तदङ्गकरणं विधीयते। भाषतेतिवदुल्लेखानभिधानात् पूर्णत्वं तृप्तताक्षु-द्विपर्य्ययः इत्यत्र पूर्णत्वपूरणानुपपत्तेः। पूर्णत्वपूरणयोरेकार्थ-त्वात्। 'प्रेतपिण्डैस्तदा दत्तैर्देहमाप्नोति भार्गव'। इति विष्णुधर्मोत्तरे देहश्रुतेर्देहपूरकमिति प्रयोगोपपत्तेश्च। तस्मात् अनिरुद्धभट्टाद्युक्तः केवलपूरकप्रयोगो युक्त इति। तोयैः सुशी-तलैरित्युक्तस्य विधानमाह 'एकस्तोयाञ्जलिस्त्वेवं पात्रमेकञ्च दीयते'। इत्यादिना लाघवात्पृथग्दानं तत्र तोयाञ्जलेरुप-स्थितत्वात् लाघवात् पात्रमपि तदाधाररूपं न तु भिन्नम्। अतएव तोयपात्राणि तावन्तीत्युपसंहृतम्। तदप्यामसृण्म-यम् 'अशुच्यशुचिना दत्तमामसृच्छकलादिना' इति वक्ष्य-माणात्। आममृच्छकलादिना अशुचिद्रव्यमित्यर्थः तद्दानञ्च तूष्णीमाह शुनःपुच्छः। 'फलमूलैश्च पयसा शाकेन च गुड़े-न च। तिलमिश्रन्तु दर्भेषु पिण्डं दक्षिणतो हरेत्। द्वार-देशे प्रदातव्यं देवतायतनेषु वा। तूष्णीं प्रसेकं पुष्पञ्च धूप-

दीपौ तथैव च'। तूष्णीं प्रसेकमिति मृण्मयामपात्रस्थजला-ञ्जलिमिति। हारलता। तेन प्रसेकपदं कर्म्मणि व्युत्पन्नम्। अतोऽत्र मैथिलानां वाक्यरचना हेयैव। यदप्युक्तम् इदञ्च पात्राञ्जल्योर्दानम्। पिण्डोपरि एव द्वितीये द्वावित्यादिना तत्पिण्डस्यैवाधारत्वकथनात्। न च द्वितीयदिनादिकं तदर्थः सद्यःशौचादौ बाधापत्तेः सद्यस्त्र्यहाशौचे पिण्डदानस्याप्युप-क्रमादिति वाचस्पतिमिश्रेण तदयुक्तं द्वितीय इत्यादावपि द्वितीयेऽहनि चत्वार इति पूर्ववचनेऽहश्रुतेः तत्रापि विशेष-त्वेन तदेवान्वेति न तु पिण्डे इति। अतएव मिताक्षरायां प्रचेताः। 'दिने दिनेऽञ्जलीन् पूर्णान् प्रदद्यात् प्रेतकार-णात्। तावद्वृद्धिश्च कर्त्तव्या यावत् पिण्डः समाप्यते' प्रतिदिनमञ्जलीनाञ्च वृद्धिः कार्य्या यावद्दशमः पिण्डः समाप्यते इति अतएव भुवि पिण्डं जलन्तथा इति माल्यं प्रागुक्तमपि। तथाच प्रचेताः। 'गृहद्वारे तस्मै प्रेताय पिण्डं निर्वपेयु भूमौ माल्यं पानीयं दीपञ्चोपलिप्तायामिति' सद्यस्त्र्यहा-शौचयोस्त्वगत्या पिण्डदानसङ्कलनवन्मृण्मयपात्रदानसङ्कलन-मिति यदप्युक्तं पुष्पादिदानसाहचर्य्याद्दूर्णाकृतवस्त्रदानं तूष्णी-मिति। तन्न 'पिण्डयज्ञावृतादेयं प्रेतायान्नं दिनत्रयम्'। इति याज्ञवल्क्येन पिण्डपितृयज्ञेतिकर्त्तव्यतातिदेशात् पिण्ड-पितृयज्ञे च गोभिलेन 'सव्येनैव पाणिना सूत्रतन्तुं गृहीत्वा अपसव्यविपूर्वस्यां कर्षां पिण्डे निदध्यात् पितुर्नाम गृहीत्वा असावेतत्ते वासो ये चात्र त्वामनुयांश्च त्वमनु तस्मै ते स्वधा' इति सूत्रतन्तुषु वासः प्रयोगात् वाक्यरचनाविधानाच्च नववस्त्र-दानं नवा तूष्णीमिति। अपसव्यवि पितृतीर्थेन। तथाच भट्टभाष्ये गृह्यान्तरम्। 'तर्जन्यङ्गुष्ठयोरन्तरा अपसव्यवि अपसव्यं वा तेन पितृभ्यो निदधातीति'। अतएव मनुना पितृ-

तीर्थे अपसव्यपदमुक्तम्। यथा 'प्राचीनावीतिना सम्यगप-सव्यमतन्द्रिणा' इति मरीचिः। 'प्रेतपिण्डं बहिर्दद्यात् मन्त्रदर्भविवर्जितम्। प्रागुदीच्यां चरुं कृत्वा सुस्नातः सुस-माहितः'। अत्र दर्भमन्त्रवर्जनं चूड़ाकरणकालेऽप्यकृतचूड़ा-नाम् उपनयनकालेऽप्यकृतोपनयनानां कन्यानामनूढ़ानाञ्च। अन्यथा हारीतवचने तत्तद्धैटोपादानं व्यर्थं स्यात्। असं-स्कारा इत्यनेनैव सर्वेषां प्राप्तत्वात्, यथा हारीतः। 'अकृत-चूड़ा ये बाला ये च गर्भाद्विनिःसृताः। मृता ये चाप्यसं-स्कारास्तेषां भूमौ प्रदीयते'। ये च गर्भाद्विनिःसृता इति स्नेहाद्दाहपक्षे। यमः 'अनूढ़ा या मृता कन्या तस्या भूमौ प्रदीयते' पिण्ड इति शेषः। अन्येषान्तु आदिपुराणाद्दर्भेषु एव। अत्रापि वेदीकरणमाह ब्रह्मपुराणम्। 'ततो दक्षिण-पूर्वस्यां कार्य्या वेदी तथा दिशि। हस्तमात्रा तथा भूमिश्च-तुरङ्गुलमुच्छ्रिताः। पिण्डनिर्वपणार्थाय रमणीया विशेषतः'। प्रागुदीच्यामैशान्याञ्चरुं कृत्वा इत्यनेन छन्दोगपरिशिष्टोक्त-चरुपाकविधिर्लभ्यते। यथा 'स्वशाखोक्तश्चरुः स्विन्नोऽप्यदग्धो-ऽकठिनः शुभः। न चातिशिथिलः पाच्यो न च वीतरसो भवेत्'। वीतरसोऽगालितमण्डः। इति नारायणोपाध्यायाः। स्वशाखोक्तश्चरुः खिन्न इति पाठान्तरम्। सुस्नातः सशिर-स्कस्नातः। त्र्यहपिण्डदाने आदिपुराणोक्तत्वात् पक्षान्तर-माह पारस्करः। 'प्रथमे दिवसे देयास्त्रयः पिण्डाः समा-हितैः। द्वितीये चतुरो दद्यादस्थिसञ्चयनन्तथा। त्रींस्तु दद्यात् तृतीयेऽह्नि वस्त्रादि क्षालयेत्तथा' वस्त्रादिक्षालयेदिति प्रागुक्तक्षौरादिसमस्ताशौचान्तकृत्यपरम्। त्र्यहपिण्डदाने सामगादिभिः स्वशाखिककर्मविशेषाभावे पौराणिकवत् पार-शाखिकमपि गृह्यते। 'यन्नाम्नातं स्वशाखायां परोक्तमवि-

रोधि च। विहङ्गिस्तदनुष्ठेयमग्निहोत्रादि कर्मवत्' इति छन्दोगपरिशिष्टोक्तेः। ऋग्वेदिनान्तु 'अनुदकमधूपञ्च गन्धमाल्यविवर्जितम्। निनयेदश्मनि पूर्वं ततः श्राद्धं प्रकल्पयेत्'। इत्याश्वलायनगृह्यपरिशिष्टवचनान्मृण्मयपात्रस्थ उदकाञ्जलिगन्धादिरहितं प्रस्तरोपरि पिण्डदानमिति विशेषः। मत्स्यपुराणम्। 'तस्मान्निधेयमाकाशे दशरात्रं पयस्तथा। सर्वपापोपशान्त्यर्थमध्वश्रमविनाशनम्'। पयःशब्दात् जलं दुग्धञ्च प्रतीयते। पारस्करीये तथा दर्शनात् पारस्करीये तां रात्रिमित्यभिधानादेकरात्रमावश्यकं दशरात्रन्तु जलदुग्धदानं फलातिशयार्थम्। अशौचे दिवाभोजननियमात्। तदन्तरमप्येतद्रात्रौ दीयते सद्यः शौचे तु द्वे सन्ध्ये सद्य इत्याहुरित्युक्तकाले युगपद्दशपिण्डा देयाः। स्वाशौचकाले पिण्डदानानुरोधात्। अतएव 'पिण्डः शूद्राय दातव्यो दिनान्यष्टौ नवाथवा। सम्पूर्णे तु ततो मासि पिण्डशेषं समापयेत्' इति प्रचेतो वचने सम्पूर्णे मास इति पदं लक्षणया मासान्तिमदिनपरमिति सर्वैर्निबन्धृभिर्व्याख्यातम्। कालादर्शकर्मोपदेशिनीप्रभृति ग्रन्थेषु शातातपः। 'भर्त्तुः पिण्डप्रदाने तु साध्वी स्त्री चेद्रजस्वला। वस्त्रं त्यक्त्वा पुनः स्नात्वा सैव दद्यात्तु पूरकम्'। भवेन्नारी रजस्वलेतिपाठो व्यासवचने श्राद्ध एव पश्चाद्दो गतमिनोक्तः। यथा 'अपुत्रा तु यदा भार्य्या संप्राप्ते भर्त्तुराब्दिके। रजस्वला भवेत् सा तु कुर्य्यात्तत् पञ्चमेऽहनि' अतएव छन्दोगपरिशिष्टे 'अशुच्यशुचिना दत्तमामसच्छकलादिना। अनिर्गतदशाहास्तु प्रेतारक्षांसि भुञ्जते' इति सामान्यतोऽशुचिना दत्तमित्यभिहितम्। अशुचिनदीरजस्वलात्वेन दुष्टमपि जलम्। तथाच। 'उपाकर्म्मणि चोत्सर्गे प्रेतस्नाने तथैव च। चन्द्रसूर्य्यग्रहे चैव रजो दोषो

न विद्यते'। अतएव रजस्वलाशुद्ध्युत्तराशौचाहासत्त्व एवाशौचकालानुरोधात्। तन्मध्येऽपि तथा पिण्डदानव्यवहार इति। एवमवाग्दत्तायाः कन्याया एकाह्नेन दशपिण्डदानानुरोधात्। एकाहाशौचं निबन्धृभिः कल्प्यते तथाच ऋष्यशृङ्गः। 'अपुत्रस्य च या पुत्री सापि पिण्डप्रदा भवेत्। तस्य पिण्डान् दशैतान् वा एकाह्नेनैव निर्वपेत्'। दशैतान् वेति वाकारो 'दत्तानाञ्चाप्यदत्तानां कन्यानां कुरुते पिता। चतुर्थेऽहनि तास्तेषां कुर्व्वीरन् सुसमाहिताः'। इत्यादिपुराणोक्तत्रिरात्रापेक्षया व्यवस्थितविकल्पार्थः। अत्रादत्तानामित्यत्र 'तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता। अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः'। इत्यनुसारेण ईषदर्थे नञ् ऋष्यशृङ्गवचनानुरोधात्। तेन वाग्दत्तेति गम्यते। अतएव कृतचूड़कन्या वाग्दानपर्य्यन्तमेकाहेन दश पिण्डान् दद्यात् वाग्दानोत्तरकाले तु त्रिरात्रेण इति हारलताप्रभृतयः। तद्दशावस्थायां वासना चेयम्। पूर्वोक्तादिपुराणवचनात् कन्याया मरणे पितुर्वाग्दानपूर्वापरयोरेकाहत्र्यहविधानात्तस्या अपि पितृमरणे तथैवेति। एवञ्च यन्मरणे यदशौचं तन्मरणे तदशौचं बाधकाभावात् कल्प्यते। तथाच आदिपुराणे। 'मातामहानां दौहित्राः कुर्वन्त्यहनि चापरे। तेऽपि तेषां प्रकुर्वन्ति द्वितीयेऽहनि सर्वदा। जामातुः श्वशुराश्चक्रुस्तेषान्तेऽपि च संयताः। मित्राणां तदपत्यानां श्रोत्रियाणां गुरोस्तथा। भागिनेयसुतानाञ्च सर्वे चान्यपरेऽहनि। आद्यकार्य्यञ्च प्रथमं स्नात्वा कृत्वा जलक्रियाम्'। अपरेऽहन्यशौचकालादिति शेषः। एवं द्वितीयेऽह्नीति देवलः। 'भर्त्तृगुर्वोरशौचं स्यान्मृत्युप्रसवकारणम्। कारणाद्गच्छति प्रेष्य' तदाशुच्यं न तान् व्रजेत्'। भर्त्तृसम्बन्ध्यशौचं प्रेष्याणाम्। गुरुसम्बन्ध्यशौचं शिष्याणां

योग्यत्वात्। भर्तृसम्बन्ध्याशौचे विशेषमाह कारणादिति कारणादेकत्र वासात्। बृहस्पतिः 'दासान्तेवासिभृतकाः शिष्याश्चैकत्रवासिनः। स्वामितुल्येन शौचेन शुद्ध्यन्ति मृतसूतके'। अन्तेवासिनमाह नारदः। 'शिल्पमिच्छन्नाहर्त्तुं बान्धवानामनुज्ञया। आचार्य्यस्य वसेदन्ते कालं कृत्वा सुनिश्चितम्'। विप्रस्य दासत्वं निषेधयति कात्यायनः। 'त्रिषु वर्णेषु विज्ञेयं दास्यं विप्रस्य न क्वचित्। समवर्णे तु विप्रस्य दासत्वं नैव कारयेत्'। तदाशुच्यं प्रेष्यसम्बन्ध्यशौचं भर्तृगामि न भवतीति अनेनापि तथा कल्प्यते। अन्यथा तन्निषेधो न स्यात् प्रसक्त्यभावादिति रत्नमाला भट्टाचार्य्यचरणाः। न च प्रेते राजनि स ज्योतिरिति राजमरणे प्रजानां सज्योतिर्विधानात् प्रजामरणेऽपि राज्ञस्तथाशौचापत्तिरिति वाच्यं राज्ञान्तु सूतकं नास्तीति पराशरेण निषिद्धत्वात्। न चैतद्व्यवहारप्रदर्शनमात्रपरं तन्मात्रपरत्वे प्रमाणाभावात्। किन्तु राजत्वेनैव यदशौचं प्रेते राजनि स ज्योतिरित्यादिना प्रजानां विहितं तत् प्रजामरणेऽपि तेषां तत्प्राप्तौ राजत्वेनैव राज्ञान्तु सूतकं नास्तीति विहितं 'कारणादिच्छति प्रेष्यं तदाशुच्यं न तान् व्रजेत्' इति वत्। 'निवासे राजनि प्रेते तदहः शुद्धिकारणम्। महीपतीनां नाशौचं हतानां विद्युता तथा' इति याज्ञवल्क्यवचने पूर्वार्द्धेन राजमरणे प्रजानामशौचविधानात् प्रागुक्तत्वेऽपि तेषां प्रकुर्वन्तीतिवत्तन्मरणे राज्ञामशौचप्राप्तौ महीपतीनामित्यनेन तन्निषिध्यते। एवञ्च राज्ञ क्षत्रियत्वादिना यदशौचं तस्य नेदं सामान्यतो बाधकम्, किन्तु तत्रापि राजत्वनिमित्तकव्यवहारादिदर्शनेऽशौचाभाव परमपि 'नाशौचं राज्ञां राजकर्मणि' इति विष्णुसूत्रानुरोधात्। यत्तु दत्तानां भर्तृगृहावस्थानेऽप्यौ काहे दशपिण्ड

दानमुक्तं हारलताकृद्भिस्तच्च प्रमाणं न विद्मः किन्तु दत्ता-नामित्यत्र ता इत्यनेन सम्प्रदत्तामात्राणां वाग्दत्तानाञ्च त्र्यहाशौचं प्रतीयते त्र्यहेणैव पिण्डदानमुक्तम् । 'पित्रोरुप-रमे स्त्रीणामूढ़ानान्तु कथं भवेत् । त्रिरात्रेणैव शुद्धिः स्यादि-त्याह भगवान्मनुः' इत्युक्तेर्दत्तानामित्यनेन पितुर्यत्त्रिरात्रं विहितं तत् पिण्डदातृत्वेनैव अन्यथा दत्तानां भर्त्तुरेवहीत्य-नेन विशेषवचनाभावे पितृपक्षेऽशौचनिवृत्त्यनुपपत्तेः अशौचा-न्तदिनकृत्यमशौचसङ्करे प्रसङ्गादुक्तमिति नेह वितन्यते ।

अथाशौचान्तान्तद्वितीयदिनकृत्यम् । देवलः । 'अघाहःसु निवृत्तेषु सुस्नाताः कृतमङ्गलाः । आशुच्याद्विप्रमुच्यन्ते ब्राह्म-णान् स्वस्तिवाच्य च' । मङ्गलं स्वशाखोक्तशान्त्युदकगोहिरण्या-दिस्पर्शमाह मनुः । 'विप्रः शुद्ध्यत्यपः स्पृष्ट्वा क्षत्रियो वाहना-युधम् । वैश्यःप्रतोदं रश्मीन् वा यष्टिं शूद्रः कृतक्रियः' । कृतक्रियोऽशौचकालोत्तरं कृतस्नान इति मिताक्षरा । समाप्त-दशाहकृत्यमिति हारलता । अघाहःस्वित्यनेन एकादशा-हादेरशौचान्तद्वितीयाहत्वं सूचितम् एवम् एकादशाहादौ स्नानादेः पूर्वमशौचान्तरपाते न साङ्कर्य्यार्थञ्च। अतएव तत्रान्त-दशाह इत्युक्तं सुस्नाता इत्यादिना विप्रः शुद्ध्यत्यपः स्पृष्ट्वेत्यादिना यथाशक्ति समुच्चयविकल्पाभ्यां तत्तत्करणेन वैदिककर्मार्ह-तेति । ततश्च सशिरस्कमज्जनमाचं कृत्वाचम्य मङ्गलं कृत्वा वर्णक्रमेण जलादिकं स्पृष्ट्वा वैधस्नानादि कुर्य्यात् । 'अशौचे तु व्यतिक्रान्ते स्नातः प्रयतमानसः । उदङ्मुखान् भोजयेच्च आसी-नान् सुसमाहितान् । मन्त्रोहश्चात्र कर्त्तव्यस्तथैकवचनेन च' इति विष्णुधर्मोत्तरात् । यत्तु संवर्त्तवचनं 'दशाहात्तु परं सम्यक् विप्रोऽधीयीत धर्मवित् । दानञ्च विधिवद्देयमशुभात्तारकं हि तत्' इत्यत्राशुभं नाशौचं तस्य कालादिना निवृत्तत्वात् ।

किन्तु अशौचकालोत्पन्नपञ्चशूनाजन्यपापपरं पञ्चशूना च 'पञ्चशूना गृहस्थस्य चुल्लीपेषण्युपस्करः। कण्डनी चोदकुम्भश्च बध्यते याश्च वाहयन्' इत्यनेनोक्ता। मत्स्यपुराणे। 'अशौचान्तद्वितीयेऽह्नि शय्यां दद्यात् विलक्षणाम्। काञ्चनं पुरुष तद्वत् फलवस्त्रसमन्वितम्। संपूज्य द्विजदाम्पत्यं नानाभरण भूषणैः। वृषोत्सर्गश्च कर्त्तव्यो देया च कपिला शुभा'। अशौचान्तादित्यत्राविशेषाद्दाहमरणतच्छ्रवणजन्याशौचानां ग्रहण नानाभरणभूषणैरित्यत्र भूषणपदं क्रियापरम्। अतो न पौन रुक्त्यम्। द्विजदम्पती पूजयित्वा काञ्चनं प्रेतप्रतिकृतिरूप पुरुषं कृत्वा फलवस्त्रयुतं शय्यायामारोप्य भूषितद्विजदम्प तीभ्यां शय्यां दद्यादिति हारलताकृतः। तेषामयमाशयः सम्भवत्येकवाक्यत्वे वाक्यभेदो हि नेष्यते इत्युपस्थितं द्विज विहाय पात्रान्तरकल्पने गौरवात्। न च तद्वदित्यनेन काञ्चन पुरुषदानस्यापि स्वतन्त्रकर्मत्वं स्यादिति वाच्यम्। तस्य प्रेतवदित्यर्थात्। न च तस्यानुपस्थितिरिति वाच्यं प्राकर णिकत्वेन शीघ्रोपस्थितेः। अशौचान्तादित्यत्रापि तथा। अन्यथा अन्याशौचान्ते अन्यस्यापि कर्म स्यात्। अतएवोक्त प्रेतप्रतिकृतिरूपमिति। तेनैतद्विशिष्टमेकं कर्म। अथ व्युत् क्रमयोजनेति चेत् 'श्वः कर्त्तास्मीति निश्चित्य दाता विप्रान्नि मन्त्रयेत्। निरामिषं सकृद्भुक्त्वा सर्वसुप्तजने गृहे' इतिवद्भवतु स्पष्टमाह पद्मपुराणम्। 'संपूज्य द्विजदाम्पत्यं नानाभरण भूषणैः' इत्यन्तं मत्स्यपुराणेन तुल्यमभिधाय 'उपवेश्य च शय्यायां मधुपर्कं ततो ददेत्' इति भविष्योत्तरेऽपि। 'कार्य्यस्तु पुरुषो हैमस्तस्यां संस्थापयेच्च तम्। पूजयित्वा प्रदातव्या मृतशय्या यथोदिता'। अतएव कर्मत्रयभेदाय चकारद्वय मुत्तरार्द्धेऽभिहितम्। ततः शय्यादानकाञ्चनपुरुषप्रदानद्विज

दम्पती·पूजा-वृषोत्सर्ग-कपिलागवी-दानरूप-कर्मपञ्चकाभिधानं मैथिलानां हेयम्। एवञ्च दम्पतीपूजनं विनापि अशौचान्ते वृषोत्सर्गाचरणं शिष्टानां सङ्गच्छते। तथाच 'अहन्येकादशे प्राप्ते यस्य चोत्सृज्यते वृषः। प्रेतलोकाद्विमुक्तस्तु स्वर्गलोकं समश्नुते'। इति मैथिलधृतवचने केवलं वृषोत्सर्गः श्रूयते। कालविवेकेऽग्निपुराणम्। 'एकादशाहे प्रेतस्य यस्य चोत्सृज्यते वृषः। प्रेतलोकं परित्यज्य स्वर्गलोकं स गच्छति। आद्यश्राद्धे त्रिपक्षे वा षष्ठे मासि च वत्सरे। वृषोत्सर्गस्तु कर्त्तव्यो यावन्न स्यात् सपिण्डता। सपिण्डीकरणादूर्द्ध्वं कालोऽन्यः शास्त्रचोदितः'। त्रिपक्षस्यान्यश्राद्धे तथा दर्शनात्। तथा श्राद्धप्रदीपे जातूकर्णः। ऊर्द्ध्वं त्रिपक्षाद् यत् श्राद्धं मृताहन्येव तद्भवेत्'। इत्यत्र पूर्वमृततिथिमादाय त्रिपक्षगणना इति निर्णयामृतेऽपि मासिकानां मृततिथौ विधानात् त्रिपक्षश्राद्धमपि मृताहे कार्य्यम्। अत्र वत्सर इत्युपादानात् विष्णुधर्मोत्तरीयमृताह इति पदं पूर्णसंवत्सरमृततिथिपरम्। तद् यथा वृषोत्सर्गमधिकृत्य विष्णुः 'विषुवद्दितये चैव मृताहे बान्धवस्य च। मृताहो यस्य यस्मिन् वा तस्मिन्नहनि कारयेत्'। यस्य बान्धवस्य पित्रादेर्यस्मिन्नहनि मृताहे तत्तिथौ कर्त्तव्यमित्यर्थः। अतएव छन्दोगपरिशिष्टमपि। अथ वृषोत्सर्गविधिं व्याख्यास्यामः। 'कार्त्तिक्यां पौर्णमास्यां रेवत्याश्वयुज्यां दशाहे गते संवत्सरेऽतीते वेति' अत्र मृततिथिमादाय संवत्सरगणना दशाहवदित्यविरोधः। शय्यादानं वृषोत्सर्गश्च शक्तेनाशौचान्ते मलमासेऽपि अवश्यं कर्त्तव्यम्। मत्स्यपुराणे। एकादशाहश्राद्धतुल्याभिधानादित्यपि हारलता। परिशेषखण्डे हेमाद्रिरपि वृषोत्सर्गस्यैकादशाहिकस्य मलमासे न निषेधः। षोड़शश्राद्धवत्तस्यापि

प्रेतोपकारकत्वादित्याहुः। एतद्दशनं भविष्ये 'नैऋतान हितार्थाय जगत्कर्त्ता नृणां प्रभुः। निर्ममे मलिनं मा प्रेतानाञ्च हिताय च। अतः प्रेतक्रियाः सर्वाः कार्य्या मलि म्लुचेऽपि च'। समयप्रकाशे ज्योतिषम्। 'वत्सरान्तर्गत पापो यज्ञानां फलनाशकृत्। नैऋतैर्यातुधानाद्यैः सम क्रान्तोऽधिमासकः'। मलमासे वृषोत्सर्गनिषेधस्तु काम्य ए च न तु एकादशाहे क्रियमाणे इति पाश्चात्यनिर्णयामृतेऽपि अत्र केचित् काम्यत्वात् मलमासे न कर्त्तव्यमेव शय्या दानादि। न च अशौचान्तद्वितीयदिनस्यान्यत्राप्राप्तेरिदमपि निरवकाशमिति वाच्यम्। क्षतादिना अनधिकार इवा करणे वस्तुक्षतेरभावात्। 'देवव्रतवृषोत्सर्गचूड़ाकरणमेखलाः माङ्गल्यमभिषेकञ्च मलमासे विवर्जयेत्' इत्यनेन ऋष्यशृङ्ग शाह्निकतया वृषोत्सर्गस्य निषेधाच्चेत्याहुः। तच्चिन्त्यम्। क्षता दिना अनधिकारे प्रतिप्रसवाभावान्मा भवतु वृषोत्सर्गादि प तु 'अधिमासके विवाहं यात्रां चूड़ां तथोपनयनादिकम् कुर्य्यान्नसावकाशमङ्गल्य न तु विशेषेज्याम्' इति भीमपरा क्रमवचनेऽपि सावकाशस्य निषेधात् पर्य्युदासाद्वा निरव काशस्य कर्त्तव्यत्वमायाति। अत्राशौचान्तद्वितीयदिनस्या न्यत्रानुपलभ्यमानत्वेन निरवकाशत्वमिति। सद्यः शौचेऽपि तद्दिने शय्यादानादिकमिति भ्रमो दूरीकार्य्यः। अशौचान्त द्वितीयदिनत्वेनैवास्य विधानात्। वस्तुतो विष्णूक्तयावदशौच पिण्डदानानुरोधेन 'अर्थात् प्रकरणाल्लिङ्गादौचित्याद्देश कालतः। शब्दार्थास्तु विभिद्यन्ते न रूपादेव केवलात्' इति न्यायात्। अत्र सद्यःपदमहोरात्रपरम्। 'सद्यःपरुत् परारि' इत्यादिसूत्रे समानेऽहनि सद्यः इति व्युत्पत्तेः। 'द्वे सन्ध्ये सद्यः इत्याहुस्त्रिसन्ध्यैकाह्निकः स्मृतः। द्वावह्नावेक

रात्रिश्च पक्षिणीत्यभिधीयते'। इति भट्टनारायणवचनात्। 'द्वे सन्ध्ये सद्य इत्याहुस्त्रिसन्ध्यैकाह उच्यते। दिनद्वयैकरात्रिस्तु पक्षिणीत्यभिधीयते' इति नव्यवर्द्धमानधृतवचनाच्च सद्य एकाहेनाशौचमिति पारिजाते सद्य एकाहेनेति स्मृतिसारे। एकमहःसद्य इति शुद्धिपञ्जर्यां दर्शनाच्चेति तच्चाहं दिनमात्रं रात्रिमात्रञ्च एतदेव क्वचित् स ज्योतिःपदेन व्यपदिश्यते। यथा राजनि प्रेते सज्योतिरित्यादौ ज्योतिषा सह वर्त्तते यदशौचं तत्तथा ज्योतिरपि सौरनक्षत्रभेदात् द्विविधम्। तेन यावदेकतरस्य तेजसो निवृत्तिस्तावत् कालव्यापकमिति। अतएव दिवामृते दिनमात्रं रात्रिमृते रात्रिमात्रमिति हारलतारत्नाकरादयः। एवञ्च 'यस्य यस्य तु वर्णस्य यद् यत् स्यात् पश्चिमन्त्वहः। स तत्र वस्त्रशुद्धिञ्च गृहशुद्धिं करोत्यपि' इत्यादि प्रागुक्तादिपुराणीयाशौचान्तदिनकृत्यं शुद्धिहेतुकं सद्यःशौचे हि तद्दिनस्य तथात्वविवक्षया क्रियते। तथाऽशौचाहःस्वतीतेष्वित्यशौचान्तद्वितीयेऽह्नीति श्वोभूते एकोद्दिष्टमित्यादि च सङ्गच्छते। अन्यथा तत्र तत्तत्कर्म न स्यात्। एवञ्चाद्यश्राद्धविधायक विष्णूक्ताशौचव्यपगमे इति सूत्रं ध्वंसानन्तत्वेऽपि अशौचान्तद्वितीयदिनमात्रपरम्। तेन सद्यःशौचं तथैकाह इति दक्षवचने पौनरुक्त्यभिया सद्यःशौचं स्नानापनेयाशौचमात्रपरमिति व्याख्यानं हेयम्। एकाहपदस्याहोरात्रपरत्वेन द्विसन्ध्यावच्छिन्नकालवाचिसद्यःपदादपि भिन्नार्थत्वात्। यत्र तु पिण्डादिकं नास्ति तत्र सद्यःपदं क्षणमात्रवाचि। सद्यः सपदि तत्क्षणे इत्यमरकोषात्। यथा 'बालस्त्वन्तर्दशाहे तु प्रेतत्वं यदि गच्छति। सद्य एव विशुद्धिः स्यान्नाशौचं नैव सूतकम्' इति। तस्माद् यत्र रात्रौ दिवा सद्यःशौचमुत्पन्नं तत्रापि परदिने वृषोत्सर्गादिकम-

विकल्पम्। यद्यपि अभिहितं विहितशुद्धिप्रथमदिने शय्यादानादौ निमित्तं तदपि प्रमाणशून्यम्। दिवापि यत्र पिण्डदानादिना मध्याह्नोऽतिक्रान्तस्तत्र शय्यादानाद्येकोद्दिष्टान्तानां सर्वेषां करणासामर्थ्ये कानिचित् पूर्वदिने कानिचित् परदिने सर्वाणि वा परदिने कार्य्याणीत्यत्रोक्त विवक्षयापि न गतिः। अतएवाशौचान्तात् द्वितीयेऽह्नीति सर्वैरेव प्रमाणिकैः षड्‌ति-क्रद्भिर्निमित्तत्वेनाभिलापलिखितमिति। तथाशौचान्तात् द्वितीयेऽह्नीत्यस्य निमित्तत्वे किं मानमिति चेत्। तस्य कालत्वेन निमित्तत्वं 'निमित्तं कालमादाय वृत्तिर्विधिनिषेधयोः' इति कालमाधवीयधृतवृद्धगार्ग्यवचनम्। आदायेत्यत्राश्रित्येति कल्पतरुतिथिविवेकयोः पाठः। अनेन वचनेन कालो निमित्तमित्युक्तम्। अशौचान्तद्वितीयदिनस्यापि कालत्वेनेति सुतरां निमित्ततेति अतएवावश्यकत्वेन कालस्य निमित्तत्वेन पर्वादिक्रियमाणस्य नित्यनैमित्तिकत्वमाह मार्कण्डेयपुराणम्। 'नित्यनैमित्तिकं ज्ञेयं पर्वश्राद्धादिपण्डितैः'। एवञ्च वैदिकक्रियानिमित्तस्य कालविशेषस्य तत्कालजीवित्वेनाधिकारिविशेषणीभूतस्य परतो या सप्तमी सा नाधिकरणे यो जटाभिः सभुङ्क्ते इतिवत् कालस्य विशेषत्वेन तद्बाधकतृतीयाप्राप्तेः किन्तु कालभावयोः सप्तमीत्यनेन तद्बाधिका पुनः सप्तमी विधीयते। शरदि पुष्प्यन्ति सप्तच्छदा इति वत् अतःकर्त्तृविशेषणीभूतस्यापि कालस्य वैदिकक्रियानिमित्ततया निमित्तानाञ्च सर्वश इत्यनेनोल्लेख इति। पूर्वाह्नादेस्तु गुणफलत्वेनानियतनिमित्ततया नोल्लेखः क्रियैवकाल इति मते सुतरां नाधिकारणता सूर्य्यादिक्रियायाः कर्त्तव्यस्य कर्मणो अधिकरणतानुपपत्तेः। 'देवव्रतवृषोत्सर्गचूड़ाकरणमेखलाः। मङ्गल्यमभिषेकञ्च मलमासे विवर्जयेत्। बाले वा यदि वा वृद्धे शुक्रे चास्तमुपागते।

मलमास इवैतानि वर्जयेद्देवदर्शनम्' इति ज्योतिःपराशरी-शेन निषेधः सावकाशवृषोत्सर्गविषयः। अतएव बालादि-शुक्रेऽपि मलमास इवैतानि वर्जयेदित्यनेन सावकाशवृषोत्सर्ग-निषिद्धो न निरवकाशः। तस्यापि तत्र निषेधे सकलशिष्टा-चारविरुद्धेन सामान्यनिषेधेऽपि मलमासातिदेशो व्यर्थः स्यादिति। स च सावकाशवृषोत्सर्गः पित्रादिगतफलोद्देशेन 'कार्त्तिक्यामयने चैव फाल्गुन्यामष्टकासु च'। इत्यादिना विहितः। देवतोद्देशेनापि 'कार्त्तिक्यान्तु वृषोत्सर्गं कृत्वा नक्तं समाचरेत्। शैवं पदमवाप्नोति शिवव्रतमिदं स्मृतम्' इति समयप्रकाशधृतमत्स्यपुराणवचनात्। 'देवव्रतवृषोत्सर्ग-चूडाकरणमेखलाः। मङ्गल्यमभिषेकञ्च मलमासे विवर्जयेत्' इति व्यासवचनाच्च। देवमुद्दिश्य व्रतरूपवृषोत्सर्गो देवव्रत-वृषोत्सर्गः। यथा देवीपुराणे। देव्याः क्रमपूजायां 'गवोत्-सर्गश्च कर्त्तव्यो नीलं वा वृषमुत्सृजेत्' इति नव्यवर्द्ध-मानप्रभृतयः। एवञ्च विशेषनिषेधेन शेषाभ्यनुज्ञानादपि प्रेतवृषोत्सर्गोऽस्तीति प्रतीयते। अनुर्ऽपि विशेषोऽध्यव-सायकर इति न्यायात्। न च सूतकान्तद्वितीयदिने-ऽपि शय्यादानादीनां मलमासे काम्यत्वान्न निषेध इति वाच्यम्। 'नैमित्तिकानि काम्यानि निपतन्ति यथा तथा। यथा तथैव कार्य्याणि न कालस्तु विधीयते'। इति दक्षवचनेन। 'रोगे चालभ्ययोगे च सीमन्ते पुंसवेऽपि च। यद्ददाति समुद्दिष्टं पूर्वत्रापि न दुष्यति' इति काल-माधवीये मरीचिना प्रतिप्रसवात् अलभ्ययोगे पुनरप्राप्य-सम्बन्धनिमित्ते अशौचान्तद्वितीयदिवसादौ पूर्वत्र मलमासे। तथाच विशारदप्रभृतिभिः पठन्तीति कृत्वा लिखितम्। अशौचान्तेऽपि कर्त्तव्यं वृषोत्सर्गादिकं सुतैः। मलिम्लुचादि

दोषस्तु न ग्राह्यस्तत्र कश्चन'। कालमाधवीयधृतकालादर्श-वाक्यं मलमासे कर्त्तव्यतानिषेधमुपक्रम्य 'आश्रमस्वीकृतिः काम्यवृषोत्सर्गश्च निष्क्रमः' इत्यत्र काम्यविशेषणमिति अशौचान्तद्वितीयदिनमुपक्रम्य रामायणे। 'ततश्चोद्दिश्य पितरं ब्राह्मणेभ्यो धनं ददौ। महार्हाणि च रत्नानि गाश्च वाहन-मेव च। यानानि दासीर्दासांश्च वेश्मानि सुमहान्ति च'। विष्णुपुराणे सामान्यतः पितृगाथा च 'वस्त्ररत्नमहीयान सर्व-भोगादिकं वसु। विभवे सति विप्रेभ्यो योऽस्मानुद्दिश्य दास्यति'। आद्यश्राद्धेति कर्त्तव्यतायां वराहपुराणम्। 'आस-नञ्चोपकल्पेत मन्त्रेण विधिपूर्वकम्'। मन्त्रश्च 'अत्रासने देव-राजाभ्यनुज्ञातो विश्राम्यतां द्विजवर्य्यानुग्रहाय प्रसादये त्वामनं गृह्य पूतं ज्ञानाग्नि पूतेन करेण विप्रः' इति। तथाच 'आवरणार्थं तच्छत्रं ब्राह्मणाय प्रदीयते। पश्चादुपानहौ दद्यात् पादस्पर्शकरे शुभे। संतप्तवालुकां भूमिं मसिकण्ट-किताम्तथा। सन्तारयति दुर्गाणि प्रेतं ददद्दुपानहौ। तिलोप-चारं कृत्वा तु विप्रस्य नियतात्मनः। नामगोत्रमुदाहृत्य प्रेताय तदनन्तरम्। गोप्रभावाहयेद्भूमिं दर्भहस्तोऽथ भूतले'। तच्छत्रं प्रेताय दत्तं छत्रं प्रदीयते उत्तरप्रतिपत्तिः क्रियते। प्रेतमित्यस्य दददित्यभिसम्बन्धात् सति प्रदानत्वेऽपि सम्भावयतीत्यभिसम्बानात् कर्मतैव। 'अपादानं सम्प्रदानं तथाधिकरणं पुनः। करणं कर्मकर्त्ता च द्वयोर्मध्ये परं भवेत्' इत्युक्तेः। भूमि इति पृथिव्याः सम्बोधनम्। अत्र श्राद्धप्रयोगमध्येऽपि वचनात् दानादिक्रिया। तथाच नैक-स्मिन् कर्मणि तते कर्मान्यत् श्रूयते यतः। इत्यनेन न विरोध इति तिलोपचारमित्यनेनार्घ्यदानमुक्तम्। मन्त्रस्तु इहलोकं परित्यज्य गतोऽसि परमां गतिम्। अयञ्च स्त्रीश्राद्धेऽप्यविकृत

एव पठनीयः। 'एवमाघ्राणि ते गन्धपुष्पादीनि समर्पयेत्'। गन्धमन्त्रस्तु सर्वः सुगन्धः इति पुष्पमन्त्रस्तु श्रिया देव्या इति धूपमन्त्रस्तु वनस्पतिरस इत्यादि इदञ्च गन्धादिसमर्पणम्। प्रेताय गन्धादिदानानन्तरं ब्राह्मणे कार्य्यं लघुहारीतः। 'सपिण्डीकरणं यावत् प्रेतश्राद्धानि षोड़श। पक्वान्नेनैव कार्य्याणि सामिषेण द्विजातिभिः'। वृहस्पतिः 'वस्त्रालङ्कार-शय्याद्यं पितुर्यद्वाहनायुधम्। गन्धपुष्पैः समभ्यर्च्य श्राद्ध-भोक्त्रे निवेदयेत्। भोजनञ्चानेकविधं कारयेद्व्यञ्जना दिभिः'।

अथ दानम्। देवलः 'अर्थानामुदिते पात्रे श्रद्धया प्रति-पादनम्। दानमित्यभिनिर्दिष्टं व्याख्यानन्तस्य वक्ष्यते' अर्थो द्रव्यम्। उदिते शास्त्रकथिते श्रद्धा देवलोक्ता। 'यथा सत्क्रतिश्चानसूया च सदा श्रद्धेति कीर्त्तिता'। अतएव भगवद्गीतासु। 'अश्रद्धया हुतं दत्तं तपस्तप्तं क्रतन्तु यत्। असदित्युच्यते पार्थ न च तत् प्रेत्य नेह च'। हरिवंशे वलिं प्रति भगवद्वाक्यम्। 'अश्रोत्रियं श्राद्धमधीतमव्रतं त्वदक्षिणं यज्ञमनृत्विजाहुतम्। अश्रद्धया दत्तमसंस्कृतं हविर्भागाः षड़ेते तव दैत्यपुङ्गव'। प्रतिपादनं स्वीकरणं पात्रायत्तीकरणमिति यावत्। तेन शास्त्रोक्तसम्प्रदानस्वत्वावच्छिन्नद्रव्यत्यागो दानम्। ततश्च उद्देश्य पात्रविशेषो यदि न स्वीकरोति तदा सोपाधित्यागविशेषस्यानिर्वाहान्न दातुः स्वत्वं निवर्त्तते इति रत्नाकरप्रभृतयः। वस्तुतस्तु प्रदानं स्वाम्यकारणमिति मनूक्ते-र्दानमात्रात् सम्प्रदानस्य तद्विषयज्ञानाभावदशायामपि स्वत्व-मुत्पद्यते। पितुः स्वत्वोपरमात्तद्धने गर्भस्थस्येव। तेन शास्त्रोक्तसम्प्रदानस्वत्वापादकद्रव्यत्यागो दानम्। तथाच दत्तस्य प्रतिग्रहो न तु प्रतिग्रहघटितं दानमिति। व्यक्तमाह

कात्यायनः। 'पित्रा दत्तामादाय गृहीत्वा निष्क्रामयति आदाय प्रतिगृह्य ततो हस्तं गृहीत्वा वक्ष्यमाणमन्त्रेण निष्क्रामयतीत्यर्थः। 'दत्त्वान्ते स्वस्तिवाचयेत्' इति वक्ष्यमाणवचनाच्चेति। अतएव मरीचिः। 'बहुगोषु यथानष्टां मातरं लभते सुतः। मनसा यस्य यद्दत्तं तद्धि तस्योपतिष्ठते'। न चैतत्तर्पणमात्रपरं बहुगोषु इति दृष्टान्ताभिधानेन च यस्य यदिति सामान्याभिधानेन होलाधिकरणन्यायात् सामान्यपरं तेन श्राद्धादावपि तथा एकत्र निर्णीत इति न्यायाच्च। अतएव दत्तस्योद्दिश्य पात्राभावेऽपि इतरधनवत्तद्धनस्वामिकुले प्रतिपत्तिमाह हेमाद्रिधृतधौम्यः। 'परोक्षे कल्पितं दानं पात्राभावे कथं भवेत्। गोत्रजेभ्यस्तथा दद्यात् तदभावेऽस्य बन्धुषु'। दानकल्पतरौ नारदः। 'ब्राह्मणस्य च यद्दत्तं सान्वयस्य न चास्ति सः। सकुल्ये तस्य निनयेत्तदभावेऽस्य बन्धुषु। यदा तु न सकुल्यः स्यान्न च सम्बन्धिबान्धवाः। दद्यात् सजातिशिष्येभ्यस्तदभावेऽप्सु निक्षिपेत्'। अतएव श्राद्धीयान्नस्य पात्राभावे जले प्रक्षेपः। अतएव 'मनसा पात्रमुद्दिश्य भूमौ तोयं विनिक्षिपेत्। विद्यते सागरस्यान्तो दानस्यान्तो न विद्यते'। इति नारदीयोक्तदानानन्तरमेव स्वीकारात् पूर्वं दक्षिणा क्रियते। यत्र तु पात्रविशेषानुद्देश्यकदानं तत्र दातुः प्रतिपत्त्युपदेशात् तदधीनसम्प्रदानविशेषनिरूपितस्वत्वं त्यागादेव जायते। तत्र प्रतिपादनमाह मत्स्यपुराणम्। 'न चिरं धारयेद्गेहे हेमसंप्रोक्षितं बुधः तिष्ठद्भयापहं यस्मात् शोकव्याधिकरं नृणाम्। शीघ्रं परस्वीकरणाच्छ्रेयः प्राप्नोति पुष्कलम्'। संप्रोक्षितं पात्रमुद्दिश्य त्यक्तमिति हेमाद्रिः। अतएव विष्णुपुराणे। 'तस्मात् सर्वात्मना पात्रे दद्यात् कनकमुत्तमम्। अपात्रे पातयेद्दा

सुवर्णं नरकार्णवे। प्रमादतस्तु तन्नष्टं तावन्मात्रं नियोजयेत्।
अन्यथा स्तेययुक्तः स्याद्धेमादत्ते विनाशिनि'। तत्रेम ब्राह्म-
णायोत्सृष्टं ब्राह्मणसादकृतम्। यदि चौरादिनापह्रियते
तदा तावदेव पुनरुत्सृज्य देयमिति दानसागरः। 'द्रव्य-
मर्जयन् ब्राह्मणः प्रतिगृह्णीयात् याजयेदध्यापयेत्' इति श्रुतौ
याजनाध्यापनसाहचर्य्यात् प्रतिग्रहस्य स्वत्वमजनयतोऽप्यर्जन-
रूपता न विरुद्धा याजनाध्यापनादौ दक्षिणादानादेव स्वत्वा-
दिति दायभागः। न तु प्रतिग्रहात् स्वत्वं प्रागुक्तमनुधौम्य-
नारदीयवचनविरोधात्। सम्प्रदानस्वीकारात् पूर्वं त्यक्त-
द्रव्यस्यान्येन ग्रहणे ब्रह्मस्वानपहारापत्तेश्च इति। एवञ्च दाने
सम्प्रदानस्य कारणतोद्देश्यत्वात्। न तु अनुमतिद्वारा माना-
भावात्'। मनसा पात्रमुद्दिश्येत्यत्र व्यभिचाराच्च। एवञ्च
त्यागान्निवृत्तमपि दातुः स्वत्वं संप्रदानाग्रहणादसम्यक्त्वेन
तस्यादानत्वच्युतदातुः पुनः स्वत्वमुत्पद्यते। तथाच नारदः।
'दत्वा दानमसम्यग् यः पुनरादातुमिच्छति। दत्वाप्रदानिकं
नाम व्यवहारपदं हि तत् असम्यक्त्वञ्च दानस्यादेयद्रव्य-
दानाद्वा अयथादानाद्वा सम्प्रदानभ्रान्त्यादिना वा पित्राद्य-
सम्मत्यादिना वा दातुरेव शुद्धाद्यवस्थाभेदाद्वा इति वाचस्पति-
मिश्राः। तथाच देवलः। 'दाता प्रतिग्रहीता च श्रद्धा-
देयञ्च धर्मयुक्। देशकालौ च दानानामङ्गान्येतानि
षड्विदुः'। धर्मयुक् न्यायार्जितं द्रव्यं तथाच विष्णुधर्मोत्तरं
'देशकाले तथा पात्रे धनं न्यायागतं तथा। यद्दत्तं ब्राह्मण-
श्रेष्ठास्तदनन्तं प्रकीर्त्तितम्'। प्रतिग्रहाभावे प्रतिग्रहीतृ-
रूपाङ्गाभावादसम्यक्त्वम्। दत्तस्याप्रदानं पुनर्हरणं यस्मिन्
व्यवहारपदे तत्तथेति विज्ञानेश्वरः। अतएव यज्ञाद्यर्थं
याचकाय धनं दत्तमपि तेन तदकरणे पुनस्तद् ग्रहणमाह

मनुः 'धर्मार्थं येन दत्तं स्यात् कस्मैचिद् याचते धनम्। पश्चाच्च च तथा यत् स्यान्न देयन्तस्य तद्भवेत्'। दत्तस्य गृहीतस्य भुक्तस्यापि पुनरादानश्रुतेः सुतरां पात्रस्योपेक्षायां तथेति। उपेक्षया स्वत्वहानिमाह बृहस्पतिः। 'ग्राममात्रं येन भुक्तं स्वीकृत्यापरिपन्थिनम्। तस्य तत् सिद्धिमाप्नोति हानिश्चोपेक्षया तथा'। अतएव प्रतिग्रहीतुस्त्यागात् फलं वक्ष्यते। अन्यत्र हारीतः। 'प्रतिश्रुत्याप्रदानेन दत्तस्य छेदनेन च। विविधान् नरकान् याति तिर्य्यग्योनौ च जायते। वाचा यच्च प्रतिज्ञातं कर्मणा नोपपादितम्। तद्धनम् ऋणसंयुक्तम् इह लोके परत्र च'। दत्तस्योच्छेदनं स्वयं दत्तस्य द्रव्यस्य प्रतिग्रहीतुर्दानविक्रयादिकं विनाच्छेदं बलात् स्वीकरणं न तु तद्विक्रीतादेर्ग्रहणम्। तथाच आश्वमेधिके पर्व्वणि युधिष्ठिरं प्रति व्यासवाक्यं 'दत्तैषा भवता मह्यं तान्च भूमिं ददाम्यहम्। अरण्यं दीयतां मेऽद्य आसीत् पूर्व्वन्तु ते यतः' इति कात्यायनः 'स्वस्थेनार्त्तेन वा दत्तं श्रावितं धर्मकारणात्। अदत्त्वा तु मृते दाप्यस्तत्सुतो नात्र संशयः'। आर्त्तेन जन्मप्रभृति महारोगिव्यतिरिक्तरोगिणेत्यर्थः। महारोगिणां दाने 'तेषां मध्ये तु यः कुष्ठी गर्हितः सर्व्वकर्मसु'। इति प्रागुक्तभविष्यपुराणीयनिषेधात्। एवञ्च मुमूर्षुदत्तस्य यद्दानोपसर्गत्वाभिधानं तद्धर्मार्थेतरदानपरम्। स्मृतिः। 'स्नात्वा शुद्धे समे देशे गोमयेनोपलेपिते। वसित्वा वसनं शुद्धं दानं दद्यात् सदक्षिणम्'। अत्र आह्वलेपितदेशाभिधानात्। 'यज्ञो दानं तपो जप्यं श्राद्धञ्च सुरपूजनम्। गङ्गायान्तु कृतं सर्व्वं कोटिकोटिगुणं भवेत्' इति स्कान्दे गङ्गायामिति गङ्गातीरपरमिति गङ्गावाक्यावली। पाद्मे 'शिवस्य विष्णोरग्नेश्च सन्निधौ दत्तमक्षयम्'। लिङ्गपुराणे। शालग्रामशिला यत्र

त्तीर्थं योजनद्वयम्। तत्र दानञ्च होमश्च सर्वं कोटिगुणं भवेत्'। यत्र भूर्लोके भूर्लोकमाह विष्णुपुराणम्। 'पाद-गम्यञ्च यत् किञ्चिद्वस्त्वस्ति पृथिवीमयम्। स भूर्लोकः समाख्यातो विस्तारोऽस्य मयोदितः' पृथिवीमयं पार्थिवं ततश्च शालग्रामस्य पात्राद्यवस्थानेऽपि तीर्थत्वमतएव केवलभूमौ शालग्रामावस्थानं तीर्थाय मैथिलानां दुराचरणमेव। शङ्खलिखितौ 'आहारं मैथुनं निद्रां सन्ध्याकाले विवर्जयेत्। कर्म चाध्ययनञ्चैव तथा दानप्रतिग्रहौ'। स्मृतिः 'गत्वा यद्दीयते दानं तदनन्तफलं स्मृतम्। सहस्रगुणमाहूय याचिते तु तदर्द्धकम्'। विष्णुधर्मोत्तरम्। 'सीदते द्विजमुख्याय योऽर्थिने न प्रयच्छति। सामर्थ्ये सति दुर्बुद्धिर्नरकायोपपद्यते'। यमः 'आशां दत्वा ह्यदातारं दानकाले निषेधकम्। दत्त्वा सन्तप्यते यस्तु तमाहुर्ब्रह्मघातकम्। मात्स्ये 'अनित्यं जीवितं यस्मात् वसु चातीव चञ्चलम्। केशेष्विव गृहीतस्तु मृत्युना धर्ममाचरेत्'। भारते 'एकां गां दशगुर्दद्यात् दश दद्याच्च गोशती। शतं सहस्रगुर्दद्यात् सहस्रं बहुगोधनः'। व्यासः 'ग्रामादर्द्धमपि ग्राममर्थिभ्यः किन्न दीयते। इच्छानुरूपो विभवः कदा कस्य भविष्यति'। तथा 'भुक्त्वा दानं न शस्यते'। अतएव अग्निपुराणम्। 'घासमुष्टिं परगवे सार्द्धं दद्यात्तु यः सदा। अकृत्वा स्वयमाहारं स्वर्गलोकं स गच्छति'। देवलः। 'अपापरोगी धर्मात्मा दित्सुरव्यसनः शुचिः। अनिन्द्याजीवकर्मा च षड्भिर्दाता प्रशस्यते' अनिन्द्याजीवकर्मा अगर्हितजीवनोपायः तथा 'अपराबाधमक्लेशं प्रयत्नेनार्जितं धनम्। अल्पं वा विपुलं वापि देयमित्यभिधीयते'। अपराबाधं परपीड़ारहितम् अक्लेशं पालकक्लेशाजनकम्। तथा 'यत् यच्च दुर्लभं द्रव्यं यस्मिन् कालेऽपि वा पुनः। दानार्हौ देशकालौ

तौ स्यातां श्रेष्ठौ न चान्यथा'। देवलः। 'इष्टं दत्तमधीतं वा विनश्यत्यनुकीर्त्तनात्। श्लाघानुशोचनाभ्याञ्च भग्नतेजो विभिद्यते। तस्मादात्मकृतं पुण्यं वृथा न परिकीर्त्तयेत्' इष्टं यजनम् अनुकीर्त्तनं कथनं श्लाघा प्रशंसा अनुशोचनं धनव्ययेन पश्चात्तापः भग्नतेजः फलजननशक्तिहीनं वृथा रक्षादिप्रयोजनं विना। देवलः 'पात्रेभ्यो दीयते नित्यमनपेक्ष्यप्रयोजनम्। केवलं धर्मबुद्ध्या यत् धर्मदानं प्रचक्ष्यते'। प्रयोजनमिह लौकिकमभिहितम्। याज्ञवल्क्यः 'न विद्यया केवलया तपसा वापि पात्रता। यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रचक्ष्यते'। वृत्तमाचारः विष्णुधर्मोत्तरे 'पतनात् त्रायते यस्मात् पात्रं तस्मात् प्रचक्ष्यते'। महाभारते। 'पात्राणामपि तत् पात्रं शूद्रान्नं यस्य नोदरे'। अत्र साक्षाच्छूद्रदत्तघृततण्डुलाद्यनुपयोगीति दानसागरः। शूद्रस्वत्वाश्रयान्नभोजीति रत्नाकरः। वस्तुतस्तु मुमूर्षुप्रकरणाभिहितशूद्रान्नानुपयोगीत्यर्थः। याज्ञवल्क्यः। 'दातव्यं प्रत्यहं पात्रे निमित्तेषु विशेषतः। निमित्तेषु गङ्गातीरादिसंक्रान्त्यादिषु। वृद्धमनुः। 'सहस्रगुणितं दानं भवेद् दत्तं युगादिषु कर्मश्राद्धादिकञ्चैव तथा मन्वन्तरादिषु'। विवादचिन्तामणौ वशिष्ठः। 'शुक्रशोणितसम्भवः पुत्रो मातापितृनिमित्तकः। तस्य प्रदा[illegible]यपरित्यागे तु मातापितरौ प्रभवतः न त्वेकं पुत्रं दद्यात् प्रतिगृह्णीयात् वा स हि सन्तानाय पूर्वेषामिति'। कात्यायनः। 'विक्रयञ्चैव दानञ्च न नेयाः स्युरनिच्छवः। दाराः पुत्राश्च सर्वस्वमात्मन्येव तु योजयेत्। आपत्काले तु कर्त्तव्यं दानं विक्रय एव च। अन्यथा न प्रवर्त्तेत इति शास्त्रार्थनिश्चयः'। एवं भरणासामर्थ्य एव परित्यागः। मनुः 'सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः। प्रयोगः क

ोगश्च सत्प्रतिग्रह एव च। दायोऽन्वयागतः लाभो निध्यादेः
ाय:संग्रामप्रयोगः कुसीदं कर्मयोगः कृषिवाणिज्यपुत्रकन्यादि।
ृहस्पतिः। 'कुटुम्बभक्तवसनाद् देयं यदतिरिच्यते। मध्वा-
वादो विषं पश्चाद्दातुर्धर्मोऽन्यथा भवेत्'। कीर्त्तिनरकाभ्या-
मत्यर्थः। अस्यापवादमाह स एव। कुटुम्बं पीड़यित्वा तु
ाह्मणाय महात्मने। दातव्यं भिक्षवे चान्नमात्मनो भूति-
मिच्छता'। अतएव भविष्यपुराणे 'स्वल्पे महति वा तुल्यं
फलमाढ्यदरिद्रयोः'। विष्णुधर्मोत्तरे। 'यस्योपयोगि यद्-
्व्यं देयं तस्मै च तद्भवेत्'। हारीतः 'तामसेन तु द्रव्येण
ऋत्विग्भिस्तामसैस्तथा। तामसं भावमास्थाय तामसो यज्ञ
उच्यते। तामसेन तु यज्ञेन दानेन तपसा तथा। निरये जन्म-
ोदाहुर्वृद्धिं विद्याच्च तामसीम्'। तामसी वृद्धिः म्लेच्छाधि-
पत्यरूपा इति रत्नाकरः। 'राजसेन तु द्रव्येण ऋत्विग्भीराजसै-
तथा। राजसं भावमास्थाय राजसो यज्ञ उच्यते। राजसेन
तु यज्ञेन दानेन तपसा तथा। निरयस्वर्गयोर्जन्म क्रूरराज्यं
श्रिया युतम्। सात्त्विकेन तु द्रव्येण ऋत्विग्भिः सात्त्विकै-
स्तथा। सात्त्विकं भावमास्थाय सात्त्विको यज्ञ उच्यते।
सात्त्विकेन तु यज्ञेन दानेन तपसा तथा। देवलोके ध्रुवं
वासो देवसायुज्यमेव च'। मत्स्यपुराणञ्च 'येषां पूर्वकृतं कर्म
सात्त्विकं मनुजोत्तम। पौरुषेण विना तेषां केषाञ्चिद् दृश्यते
फलम्। कर्मणा प्राप्यते लोके राजसस्य तथा फलम्। कृच्छ्रेण
कर्मणा विद्धि तामसस्य तथा फलम्'। द्रव्याणापि तत्तद्भेद-
माह नारदः। 'पार्श्विकद्यूतचौर्य्यार्त्तिप्रतिरूपकसाहसैः। व्याजे-
नोपार्जितं यद्यत्तत्कृष्णं समुदाहृतम्'। पार्श्विक पात्रतया
योजयतीति प्रायश्चित्तविवेकः। आर्त्या परपीड़या प्रतिरूप-
ेण कविमरत्नादिना साहसेन समुद्रयानगिर्य्यारोहणादिना

व्याजेन ब्राह्मणवेशेन शूद्रादिना। कष्टं तामसं इति रत्नाकरः। 'कुशीदकृषिवाणिज्यशुल्कशालानुवृत्तिभिः। कृतोपकारादाप्तञ्च राजसं समुदाहृतम्' अनुवृत्तिः सेवा। 'श्रुतशौर्य्यतपःकन्याशिष्ययाज्यान्वयागतम्। धनं सप्तविधं शुद्धं मुनिभिः समुदाहृतम्'। श्रुतेनाध्ययनेन शौर्य्येण जयादिना तपसा जपहोमदेवार्चनादिना कन्यागतं कन्यया सहागतं श्वशुरादेर्लब्धं शिष्यागतं गुरुदक्षिणादिना याज्यागतम् आर्त्विज्यलब्धं अन्वयागतं दायादिभ्यो लब्धं शुद्धं सात्त्विकम्। अत्र स्वत्वहेतुभूतव्यापाररूपार्जनगणे चौर्य्यस्यापि निर्देशात् चौर्य्योपात्तद्रव्येऽपि यथेष्टविनियोज्यत्वेन शास्त्रगम्यस्वत्वरूपस्वत्वमस्तीति प्रतीयते भवदेवभट्टसम्मतोऽयं पक्षः यत्तु 'द्रव्यमस्वामिविक्रीतं पूर्वस्वामी समाप्नुयात्'। इति याज्ञवल्कीयेन चौर्य्यविक्रीतस्यास्वामिविक्रीतत्वमुक्तं तत्रास्वामिपदमप्रशस्तस्वामिपरम् 'अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः' इति प्रागुक्तत्वात्र तु स्वामित्वाभावपरं प्रागुक्तनारदवचनविरोधात्। 'ब्राह्मणस्वं न हर्त्तव्यं क्षत्रियेण कदाचन। दस्युनिष्क्रिययोस्तु स्वमजीवन् हर्त्तुमर्हति' इत्यनेन चौरस्वत्वाभिधानाच्च अतएव याज्ञवल्क्यः। 'बुभुक्षितस्त्र्यहं स्थित्वा धान्यमब्राह्मणाद्धरेत्'। मनुरपि 'तथैव सप्तमे भक्ते भक्तानि षड़नश्नता। अश्वस्तनविधानेन हर्त्तव्यं हीनकर्म्मणा' इत्याभ्यां त्र्यहोपवासषड़ुपवासानन्तरं धान्यचौर्य्येण जीवनाभिधानात्तदन्नस्य बलिवैश्वदेवार्हता प्रतीयत इति। व्यक्तं हरिवंशीयसप्तव्याधोपाख्याने। 'ते नियोगाद्गुरोस्तस्य गां दोग्ध्रीं समपालयन्। क्रूरा बुद्धिः समभवत्तां गां वै हिंसितुं तदा। पितृभ्यः कल्पयित्वैनामुपभुञ्जीत भारत। स्मृति प्रत्यवमर्षश्च तेषां जात्यन्तरेऽभवत्'। अत्र गुरोर्गां हत्वा श्राद्धेन चौराणां

अपि जातिस्मरत्वदर्शनाच्चौर्य्येण स्वत्वं प्रतीयते। एतत्तु अत्यन्ता-शक्तानाम्। अशक्तानां मत्स्यपुराणे 'गामग्निं ब्राह्मणं शास्त्रं काञ्चनं सलिलं स्त्रियः। मातरं पितरञ्चैव ये निन्दन्ति नरा-धमाः। न तेषामूर्द्ध्वगमनमेवमाह प्रजापतिः। परस्वं हरते यस्तु पश्चाद् दानं प्रयच्छति। न स गच्छति वै स्वर्गं दातारो यत्र भागिनः'। इति सात्त्विकराजसिकवत् फलाभावपरम् अन्यथा प्रागुक्तहारीतादिवचनाविरोधापत्तेः। शातातपपराशरौ। 'सन्निकृष्टमधीयानं ब्राह्मणं यो व्यतिक्रमेत्। भोजनेश्चैव दाने च दहत्यासप्तमं कुलं' वशिष्ठव्यासपराशराः 'यस्य चैक गृहे मूर्खो दूरे चैव बहुश्रुतः। बहुश्रुताय दातव्यं नास्ति मूर्खे व्यतिक्रमः'। शातातपः 'मन्त्रपूर्वञ्च यद्दानमपात्राय प्रदीयते। दातुर्निश्छिद्य हस्तं तद्भोक्तुर्जिह्वां निकृन्तति। न ददस्वेति यो ब्रूयात् देवाग्नौ ब्राह्मणेषु च। तिर्य्यग्योनिशतं गत्वा चाण्डाले-ष्वभिजायते'। वशिष्ठः 'परिभुक्तमवज्ञातमपर्य्याप्तमसंस्कृतम्। यः प्रयच्छति विप्रेभ्यस्तद्भस्मन्यवतिष्ठते'। अपर्य्याप्तं स्वकार्य्या-क्षमम्। यमः 'सुवर्णं रजतं ताम्रं यतिभ्यो न प्रयच्छति। न स तत् फलमाप्नोति तत्रैव परिवर्त्तते'। अत्रैव दृष्टफल एवा-वतिष्ठते न स्वर्गादिफलमाप्नोतीत्यर्थः। महाभारते 'पङ्ग्वन्ध-बधिरा मूका व्याधिनोपहताश्च ये। भर्त्तव्यास्ते महाराज न तु देयः प्रतिग्रहः'। व्याधिना यक्ष्मादिना। व्यासः। 'माता-पितृभ्यां यद्दत्तं यद् दत्तं भ्रातृबन्धुषु। आत्मजेषु च यद् दत्तं सोऽनन्तस्वर्गसंक्रमः। पितुः शतगुणं दानं सहस्रं मातुरेव च। अनन्तं दुहितुर्दानं सोदर्य्ये दत्तमक्षयम्'। विशेषयति नारदः 'साक्षित्वं प्रतिभाव्यञ्च दानं ग्रहणमेव च। विभक्ता भ्रातरः कुर्य्युर्नाविभक्ताः परस्परम्। योऽसक्तः प्रतिगृह्यापि पुनः सक्तः प्रयच्छति। आत्मानं संक्रमं कृत्वा परांस्तारयते

हि सः' धनस्वामिनमात्मानं सन्तारयति दुस्तरमिति शेषार्द्धं स्कान्दे विशेषः। गोतमः 'मन्त्रजानुकरं कृत्वा सकुशन्तु तिलोदकम्। फलांशमभिसन्धाय प्रदद्याच्छ्रद्धयान्वितः'। उदकस्तुतिमभिधायाह हारीतः 'तस्मादद्भिरवोक्ष्यैतद् दद्या-दालभ्य एव च' इति अवोक्ष्य प्रोक्ष्येति रत्नाकरः अत्र यद्यपि 'उत्तानेन हस्तेन प्रोक्षणं समुदाहृतम्। न्युब्जताभ्युक्षणं प्रोक्तं तिरश्चावोक्षणं स्मृतम्' इति वर्द्धमानधृतेन विरुद्धम्। अतएव कुसुमाञ्जलौ प्रोक्षणाभ्युक्षणादिभिरिति भेदेनोक्तं तथापि 'यस्य यद् दीयते वस्त्रमलङ्कारादिकाञ्चनम्। तेषां देवतमुच्चार्य्य कृत्वा प्रोक्षणपूजने। उत्सृज्य मूलमन्त्रेण प्रतिनाम्ना प्रतर्प-येत्' इति कालिकापुराणादव्याख्यानेऽपि न शास्त्रविरोधः वस्तुतस्तु उभयदर्शनाद्वैकल्पिकम् आलभ्य पाणिना स्पृष्ट्वा। आपस्तम्बः 'सर्वाण्युदकपूर्वाणि दानानि यथा श्रुतिर्वीहारे' इति अन्वाहार्य्यदानादौ यथा श्रुतिः यावदेव श्रूयते तावदेव कुर्य्यात् वीहारे यज्ञे। नोदकपूर्वतानियमः इति कल्पतरु-रत्नाकरौ अन्वाहार्य्यममावास्याश्राद्धम् एवञ्चापस्तम्बसूत्रैक-वाक्यत्वात् यथाश्रुतिवीहारः इति जैमिनिसूत्रेऽपि श्रुतिः शाब्दी व्युत्पत्तिः तेनोत्पत्तिवाक्ययोरर्थः श्रुतः स एव विनि-योगवाक्ये ग्राह्य इति सूत्रार्थः। न तु श्रुतेरेव शब्दैर्वाक्य-रचना कार्य्येत्यर्थः मूलभूतश्रुत्यन्तरकल्पनापत्तेरदृष्टार्थता-पत्तेश्च। ततश्च सङ्कल्पादिवाक्ये सङ्कल्पविषयीभूतस्यार्थ-स्याभिलप्यमानत्वादभिलापे तु तत् वाचकसर्वशब्दानां साम-र्थ्यात् श्रुतशब्दस्य नियमो नास्ति अन्यथा विश्वजिता यजेतेत्यादौ स्वर्गकाम इत्यभिलापो न स्यादश्रुतत्वात् तथा 'कपिला-कोटिदानात्तु गङ्गास्नानं विशिष्यते' इति ब्रह्माण्डपुराणात् कपिलाकोटिदानजन्यफलाधिकफलप्राप्तिकाम इति शिष्टाङ्-

मताभिलापो न स्यात्। अतएव ग्रहादीनां नानामुनिभि- र्नानानामान्युक्तानि तेषां यत्किञ्चिन्नामैवोल्लेखाय तथाच मत्स्यपुराणम्। 'सूर्य्यः सोमस्तथा भौमो बुधजीवसितार्कजाः। राहुः केतुरिति प्रोक्ता ग्रहालोकहितावहाः'। याज्ञवल्क्यः। 'सूर्य्यः सोमो महीपुत्रो सोमपुत्रो बृहस्पतिः। शुक्रः शनैश्चरो- राहुः केतुश्चेति ग्रहाः स्मृताः'। यत्र तु एकस्य देवस्य पूजादौ विशिष्य नानानामोपादानं तत्र तत एव तान्येवा- भिलाप्यानि न तु नामान्तराणि एवं यत्र बहुभिर्मुनिभिर्येन्ना- माभिधीयते तत्र तदेव वक्तव्यं तथाभिधानेन श्रुतिस्तत्रैव तात्पर्य्यं प्रतीयते। एवञ्च विधिशब्दस्य मन्त्रत्वे भावः स्यादिति न्यायेनापि विधिशब्दस्य विधिवाक्यस्थदेवताप्रतिपादकमात्रस्य मन्त्रसम्पादकत्वं बोध्यं योगियाज्ञवल्क्येन। 'मित्रो धाता- भगस्त्वष्टा पूषार्य्यमांशुरेव च। पर्य्यायनामभिश्चैव एक एव निगद्यते' तथा। 'वाचकेऽपि च विज्ञाते वाच्य एव प्रसी- दति'। अतएव मनुः। 'वाग्दैवत्यैश्च चरुभिर्यजेरंस्ते सरस्वतीम्। अनृतस्यैनसस्तस्य कुर्वाणा निष्कृतिं पराम्'। अत्र वाग्देवता सरस्वतीति श्रुतेर्वाक् सरस्वत्योरेकार्थत्वात् वाग्दैवत्यचरुणा सरस्वतीयजनं सङ्गच्छते। अन्यथा नाम- भेदाद् देवताभेदे विरुद्धं स्यात् ते सत्यवचने सम्भाव्यमाने शूद्र- विट् क्षत्रियविप्रवधविषयानृतादिसाक्षिणः। स्मृतिः 'नाम- गोत्रे समुच्चार्य्य प्राङ्मुखो देवकीर्त्तनात्। उदङ्मुखाय विप्राय दत्त्वान्ते स्वस्तिवाचयेत्'। देवकीर्त्तनादिति ल्यप्लोपे पञ्चमी देवकीर्त्तनं कृत्वेत्यर्थः। ततश्च दाचामुकदैवतं विष्णुदैवतं वा वक्तव्यमिति। विष्णुधर्मोत्तरे 'अभयं सर्वदैवत्यं भूमिर्वै विष्णुदेवता। कन्यादासस्तथा दासी प्राजापत्या प्रकीर्त्तिता प्राजापत्यो गजः प्रोक्तस्तुरगो यमदैवतः। तथाचैकशफं सर्वं

कथितं यमदैवतम्। महिषश्च तथा याम्य उष्ट्रो वै नैर्ऋतो भवेत्। रौद्री धेनुर्विनिर्दिष्टा छाग आग्नेय उच्यते। मेषस्तु वारुणं विद्याद्वराहो वैष्णवः स्मृतः। आरण्याः पशवः सर्वे कथिता वायुदेवताः। जलाशयानि सर्वाणि वारिधानी कमण्डलुः। कुम्भश्च करकश्चैव वारुणानि विनिर्दिशेत्। समुद्रजानि रत्नानि सामुद्राणि तथैव च। आग्नेयं कनकं प्रोक्तं सर्वलौहानि वाप्यथ। प्राजापत्यानि शस्यानि पक्वान्नमपि च द्विजाः। ज्ञेयानि सर्वगन्धानि गान्धर्वाणि विचक्षणैः। वार्हस्पत्यं स्मृतं वासः सौम्यानि रजतानि च। पक्षिणश्च तथा सर्वे वायव्याः परिकीर्त्तिताः। विद्या ब्राह्मी विनिर्दिष्टा विद्योपकरणानि च। सारस्वतानि ज्ञेयानि पुस्तकाद्यानि पण्डितैः। सर्वेषां शिल्पभाण्डानां विश्वकर्मा तु दैवतम्। द्रुमाणामथ-पुष्पाणां शाकानां हरितैः सह। फलानामपि सर्वेषां तथा ज्ञेयो वनस्पतिः। मत्स्यमांसे विनिर्दिष्टे प्राजापत्ये तथैव च। छत्रं कृष्णाजिनं शय्यां रथमासनमेव च। उपानहौ तथा यानं तथा यत् प्राणवर्जितम्। औत्तानाङ्गिरसं त्वेतत् प्रतिगृह्णीत मानवः। पर्य्यस्त्राय तथोशीरं वर्मशस्त्रध्वजादिकम्। व्रतोपकरणं सर्वं कथितं सर्वदैवतम्। गृहन्तु सर्वदैवत्यं यदनुक्तं द्विजोत्तमाः। तज्ज्ञेयं विष्णुदैवत्यं सर्वं वा विष्णुदैवतं' देवकीर्त्तनादित्यत्र देयकीर्त्तनात् षट्त्रिंशन्मते पाठः व्याख्यातश्च हेमाद्रिणा। देवकीर्त्तनोत्तरकालं दद्यादित्यर्थः। विष्णुधर्मोत्तरेऽपि 'द्रव्यस्य नाम गृह्णीयाद्ददानीति ततो वदेत्। तोयं दद्यात्तथा दाता दाने विधिरयं स्मृतः'। व्यासः 'नामगोत्रे समुच्चार्य्य प्रदद्यात् श्रद्धयान्वितः। परितुष्टेन भावेन तुभ्यं संप्रददे इति'। सम्प्रदानवाक्येऽहं प्रयोगमाह कात्यायनः। 'अहमस्मै ददानीति एवमाभाष्य दीयते'। एवञ्च सम्प्रददे ददानीत्येतयो-

विकल्पः स च व्यवस्थितः आत्मगामिफले संप्रदद्दे परगामिफले ददानीति उभयपदित्वात् दाधातोः फलवति कर्त्तर्य्यात्मनेपदं दृश्यते अफलवति कर्त्तरि परस्मैपदमिति पाणिनिसूत्रात्। अतएवात्मनेपदपरस्मैपद इत्येतयोरात्मनेपरस्मै इत्याभ्यां समाख्या सङ्गच्छते। ददानीत्यस्य दद इतिवत् वर्त्तमानार्थतेति। अतएव सकृदाद्द ददानीति सननाप्युक्तं सङ्गच्छते अनुमत्यर्थे तु सकृत्वाभिधानमप्रयोजकमिति। आद्यादौ फलभागिनां गोत्राद्युल्लेखदर्शनात्। तदितरत्रापि तथोल्लेखाचारः। हारीतः। 'अथासद्व्यदानमस्वर्ग्यं यच्च दत्त्वा परितप्यते तद्दानमफलं यच्चोपकारिणे ददाति तन्मात्रं परिक्लिष्टं यच्च सोपधं ददाति अन्यश्रावितमल्पं यच्चापात्राय ददाति अनिष्टदानं भवति यच्चादत्त्वा प्रकीर्त्यते स्मयदानं यच्चाश्रद्धया ददाति क्रोधाद्दानसं यच्चाकृष्य ददाति दत्त्वा वा क्रोशति असतकृतं पैशाचं यच्चावज्ञातं ददाति दत्त्वा वावजानीते समूर्षो स्तामसं यच्चापकृतो ददाति'। एते दानोपसर्गायैरुपसृष्टं दानमपमितमस्वर्ग्यमयशस्यमधन्यफलं भवत्यल्पफलं वेति। तच्चि त्यागानन्तरकाले हस्तार्पणमभावेऽपि अदानमसमर्पणम उपकारिणि व्यसनोपकारिणि तदितरोपकारिणि तु दत्तः 'मातापित्रोर्गुरौ मित्रे विनीते चोपकारिणि दीनानाथविशिष्टेभ्यो दत्तन्तु सफलं भवेत्'। तन्मात्रं यथोक्तोपकरणरहितम्। सोपधं सकृद्म अन्यश्रावितं लोकसम्भावनार्थं प्रकाशितम्। अनिष्टदानं शवे दानें स्मयो मानभेदः अप्रकृतोभयादिमान्। तथाच नारदः 'अदत्तन्तु भयक्रोधकामशोकरुमन्वितैः। बालमूढास्वतन्त्रार्त्तमत्तोन्मत्तापवर्जितैः कर्त्ता ममेदं कर्म्मेति प्रतिलाभेच्छया च यत्'। प्रतिलाभेच्छया सोपाधिदत्तमुपाध्यसिद्धाविति विवादचिन्तामणिः। एतच्च

परमेव हारीतेन सोपधमित्युक्तम्। ब्रह्माण्डपुराणे। 'शुचिः पवित्रपाणिश्च गृह्णीयादुत्तरामुखः। अभीष्टदेवतां ध्यायन् मनसा विजितेन्द्रियः। कृतोत्तरीयको नित्यमन्तर्जानुकरस्तथा। दातुरिष्टमभिध्यायन् प्रतिगृह्णादलोलुपः'। पवित्रं व्याकरोति कात्यायनः। 'अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च। प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित्'। अनन्तर्गर्भिणम् अन्तर्गर्भस्य भेदरूपाभावः अनन्तगर्भं तद् अस्यास्ति तत्तथेति अनन्तर्गर्भशून्यमित्यर्थः। तथाच शौनकः। 'अनन्तस्तरुणौ यौ तु कुशौ प्रादेशमम्मितौ। अनखच्छेदिनौ साग्रौ तौ पवित्राभिधायकौ'। प्रचेताः। 'दक्षिणहस्तमध्ये ब्राह्मणस्याग्नेयं तीर्थम् आग्नेयेन प्रतिगृह्णीयात्'। आदित्यपुराणे। 'ओङ्कारमुच्चरन् प्राज्ञा द्रविणं शक्तुमोदनम्। गृह्णीयाद् दक्षिणे हस्ते तदन्ते स्वस्ति कीर्त्तयेत्'। ओङ्कारस्यात्र स्वीकारार्थत्वात् तेनैवात्र ग्रहणं युक्तम्। तथाचो मित्यभ्युपगम इति शाब्दिकाः। स्वस्तीति क्षेमार्थम्। तथाचामरः। 'स्वस्त्याशीः क्षेमपुण्यादौ' इति। व्यासः। 'दक्षिणाभिरुपेतं हि कर्म सिध्यति मानवे। सुवर्णमेव सर्वासु दक्षिणासु विधीयते'। कर्मोपदेशिन्यां जैमिनिः। 'सुवर्णे दीयमाने तु रजतं दक्षिणोच्यते'। गृह्यपरिशिष्टे 'अलाभे फलमूलानां भक्ष्याणां दक्षिणां ददाति' इति। अलाभे विहितदक्षिणालाभे। वृहस्पतिः 'हतमश्रोत्रियं दानं हतो यज्ञस्त्वदक्षिणः। तस्मात् पणं काकिणीं वा फलपुष्पमथापि वा। प्रदद्याद् दक्षिणां यज्ञे तया स सफलो भवेत्'। नारदः 'काकिणी च चतुर्भागो मासकस्य पणस्य च'। दक्षिणा तु सम्प्रदानब्राह्मणाय देयैव। एतेभ्योऽपि द्विजाग्रेभ्यो देयमन्नं सदक्षिणम्'। इति मनुवचनात्। रोगी प्रतिमादाने व्यक्तमाह

शातातपः 'पूर्वाभिमुखमाचार्य्यमभ्यर्च्य प्रतिमान्तु ताम्। प्रदद्याद् दक्षिणां तस्मै मध्याह्ने समुपस्थिते'। प्रतिग्रहविधानमाह विष्णुधर्मोत्तरम्। 'भूमेः प्रतिग्रहं कुर्य्याद्भूमेः कृत्वा प्रदक्षिणम्'। प्रदक्षिणं न सर्वस्या भूमेः किन्तु तत्रस्थस्याः प्रदक्षिणावर्त्तमात्रं भूमेरसन्निधाने तामुद्दिश्य प्रदक्षिणम्। 'करे गृह्य तथा कन्यां दासदास्यौ द्विजोत्तमाः। करन्तु हृदि विन्यस्य धर्म्मो ज्ञेयः प्रतिग्रहः'। धर्म्मो धर्म्मविषयस्तायम्। 'आरुह्य च गजस्योक्तः कर्णे चाश्वस्य कीर्त्तितः। तथाचैकशफानान्तु सर्वेषामविशेषतः। प्रतिगृह्णीत गां पुच्छे पुच्छे कृष्णाजिनं तथा। आरण्याः पशवश्चान्ये ग्राह्याः पुच्छे विचक्षणैः। प्रतिग्रहमथोष्ट्रस्य आरुह्य च तथाचरेत्। बीजानां मुष्टिमादाय रत्नान्यादाय सर्वतः। वस्त्रं दशान्तमादद्यात् परिधाय तथा पुनः। आरुह्योपानहौ यानमारुह्यैव च पादुके। ईशायान्तु रथं ग्राह्य छत्रं दण्डे च धारयेत्। आयुधानि समादाय तथा भूष्यविभूषणम्। वर्म्मध्वजौ तथा स्पृष्ट्वा प्रविश्य च तथा गृहम्। अवतीर्य्य च सर्वाणि जलस्थानानि वै द्विजाः। द्रव्याण्यन्यान्यथादाय स्पृष्ट्वा यो ब्राह्मणः पठेत्। प्रतिग्रहीता सावित्रीं सर्वत्रैव प्रकीर्त्तयेत्। ततस्तु सार्द्धं द्रव्येण तस्य द्रव्यस्य दैवतम्'। भूमिर्विष्णुदेवताकेत्यादि कीर्त्तयेदित्यर्थः। 'समापयेत्ततः पश्चात् कामस्तुत्या प्रतिग्रहम्। विधिं धर्म्ममथो ज्ञात्वा यस्तु कुर्य्यात् प्रतिग्रहम्। दात्रा सह तरत्येव नानादुर्गाण्यसौ द्विजः'। ब्रह्मपुराणे। 'ब्राह्मणः प्रतिगृह्णीयाद् वृत्त्यर्थं साधुतस्तथा। अत्यन्तमपि मातङ्गतिललौहांश्च वर्जयेत्। कृष्णाजिनद्वयग्राही न भूयः पुरुषो भवेत्। शय्यालङ्कारवस्त्रादि प्रतिगृह्य मृतस्य च। नरकान्न निवर्त्तन्ते धेनुं तिलमयीं तथा'। तथा 'ब्रह्महत्या

सुरापानमपिस्तेयं तरिष्यति। आतुराद् यद् गृहीतन्तु तत् कथं वै तरिष्यति'। एतदादिद्रव्यदानं ग्रहीतुर्दोषजनकम्। तद्दनिच्छवे विद्यारहितत्वेनासमर्थाय च दातुरपि दोषजनकमाह दक्षः 'न केवलं हि तद्याति शेषमस्य च नश्यति'। तत् द्रव्यं शेषं द्रव्यस्य अतएव याज्ञवल्क्यः। 'विद्यातपोभ्यां हीनेन न तु ग्राह्यः प्रतिग्रहः। गृह्णन् प्रदातारमधो नयत्यात्मानमेव च'। अधो नरकम्। एतद्दानप्रतिग्रहणोत्तरं तपो जपादिभिरात्मतारणक्षमाय स्वेच्छया प्रतिग्रहीते दानं न दोषायेत्याह विष्णुः 'एतानि यदि गृह्णाति स्वेच्छयाभ्यर्थितो न तु। तस्मै दाने न दोषोऽस्ति यस्त्वात्मानन्तु तारयेत्'। तारणप्रकारमाह हारीतः। 'मणिवासो गवादीनां प्रतिग्रहे सावित्र्यष्टसहस्रं जपेत् पञ्चमध्यमे दशोत्तमे द्वादशरात्रं पयो व्रतं शतसहस्रमसत्प्रतिग्रहेष्विति' अष्टसहस्रमष्टाधिकसहस्रम् असत्प्रतिग्रहेषु उभयतो मुख्यादिप्रतिग्रहेषु तथाचादिपुराणे 'किंकरिष्यत्यसौ मूढो गृह्णात्युभयतो मुखीम्। सहस्रवारुणाः पाशाः क्षुरधारोऽग्निसन्निभाः। पूर्णे वर्षसहस्रे तु पाश एकः प्रमुच्यते'। अतएव देवलः। 'प्रतिग्रह समर्थो हि कृत्वा विप्रो यथाविधि। निस्तारयति दातारमात्मानञ्च स्वतेजसा'। स्कान्दे। 'वेदाङ्गपारगो विप्रो यदि कुर्य्यात् प्रतिग्रहम्। न स पापेन लिप्येत पद्मपत्रमिवाम्भसा'। एवं 'तीर्थे न प्रतिगृह्णीयात् पुण्येष्वायतनेषु च। निमित्तेषु च सर्वेषु न प्रमत्तो भवेन्नरः'। इति महाभारतवचनम्। प्रतिग्रहोक्तदोषजनकगङ्गातीरादिदेशग्रहणादिकाले दानेऽपि बोध्यम्। किन्तु इदानीं तथाविधपात्राभावात्। मनसा पात्रमुद्दिश्य इत्यादि प्रागुक्तवचनात् तत्तद्देशकालयोरतत्त्वस्य देशान्तरे कालान्तरे च प्रतिपादना

चार: सर्वथा समीचीन:। गङ्गावाक्यावल्यप्येवं याज्ञवल्क्य: 'प्रतिग्रहसमर्थो हि नादत्ते य: प्रतिग्रहम्। ये लोकादानशीलानां स तानाप्नोति पुष्कलान्'। अपवादमाह स एव। 'कुशा: शाकं पयो मत्स्या गन्धा: पुष्पं दधि क्षिति:। 'मांसशय्यासनं धाना: प्रत्याख्येयं न वारि च'। चकाराद् गृहादि 'शय्यागृहान् कुशान् गन्धानप: पुष्पं मणीन् दधि। मत्स्यान् धाना: पयो मांसं शाकञ्चैव न निर्नुदेत्' इति वचनात्। मणीन् विषादिनिवारकान्। तथा 'एधोदकं फलं मूलमन्नमभ्युद्यतञ्च यत्। सर्वत: प्रतिगृह्णीयात् मध्वथाभयदक्षिणाम्'। अभयदक्षिणाम् अभयदानम् अभयप्रद इति वक्ष्यमाणवचनात्। अभ्युद्यतम् अभ्यर्थ्य दत्तं किमिति न प्रत्याख्येयम् इत्याह। तथाच मनु: 'अयाचिताहृतं ग्राह्यमपि दुष्कृतकर्मण:। अन्यत्र कुलटाषण्डपतितेभ्यस्तथा द्विष:'। एतद्वचनं याज्ञवल्क्यस्येति मिताक्षराकुल्लूकभट्टमाधवाचार्य्या:। मनोरिति शूलपाणि:। भरद्वाज:। 'अयाचितोपपन्ने तु नास्ति दोष: प्रतिग्रहे। अमृतं तद्विदुर्देवास्तस्मात्तं नैव निर्नुदेत्'। अपवादान्तरमाह स एव। 'देवातिथ्यर्चनकृते गुरुभृत्यार्थमेव च। सर्वत: प्रतिगृह्णीयादात्मवृत्त्यर्थमेव च'। भृत्या भरणीया: भार्य्यापुत्रादय:। तथा मनु:। 'वृद्धौ च मातापितरौ साध्वी भार्य्या सुत: शिशु:। अप्यकार्य्यशतं कृत्वा भर्त्तव्या मनुरब्रवीत्'। आत्मवृत्त्यर्थं जीवनमात्रम्। 'न तु तृप्येत् स्वयं तत:' इति मनुस्मृते:। प्रयोगसारे। 'प्रतिग्रहं न गृह्णीयादात्मभोगोपलिप्सया। देवतातिथिपूजार्थं धनं यत्नादुपार्जयेत्'। अङ्गिरा: 'कुटुम्बार्थे द्विज: शूद्रात् प्रतिगृह्णीत याचितम्। क्रत्वर्थमात्मने चैव न हि याचेत कर्हिचित्'। अतएव यज्ञार्थे याचकत्वे निन्दामाह याज्ञवल्क्य:।

'चाण्डालो जायते यज्ञकरणाच्छूद्रभिक्षणात्'। शूद्रस्यापि अयाचितदातृत्वमाह नृसिंहपुराणम्। 'अयाचितप्रदाता स्यात् क्षषिं वृत्त्यर्थमाश्रयेत्। पुराणं शृणुयान्नित्यं नरसिंहस्य पूजनम्'। मनुः। 'वैश्यवृत्तिमनातिष्ठन् ब्राह्मणः स्वे पथि स्थितः। अवृत्तिकर्षितः सीदन्निमं धर्मं समाचरेत्। सर्वतः प्रतिगृह्णीयात् ब्राह्मणस्त्वनयं गतः। पवित्रं दुष्यते इत्येतद्धर्मतो नोपपद्यते। नाध्यापनाद् याजनाद्वा गर्हिताद्वा प्रतिग्रहात्। दोषो भवति विप्राणां ज्वलनाम्बुसमाहिते'। ज्वलनाम्बुसमा अग्निजलसमा इति कुल्लूकभट्टः प्राचीन प्रायश्चित्तविवेके तथा पाठः। व्यासः। 'अक्षत्रियाश्च राजानो विप्राः शूद्रोपजीविनः। शूद्राश्च ब्राह्मणाचाराभविष्यन्ति युगक्षये। याजयिष्यन्त्ययाज्यांश्च तथाभक्ष्यस्य भक्षिणः। ब्राह्मणाधनलब्धार्था युगान्ते समुपस्थिते'। पाद्मे। 'परान्नं परवासञ्च नित्यधर्मरतस्त्यजेत्। सर्वतः प्रतिगृह्णीयात् भोजनं न समाचरेत्'। स्कान्दे। 'दुर्भिक्षे दारुणे प्राप्ते कुटुम्बे सीदति क्षुधा। असतः प्रतिगृह्णीयात् प्रतिग्रहमतन्द्रितः'। मनुः। 'यद्यदिष्टतमं लोके यच्चापि दयितं गृहे। तत्तद् गुणवते देयं तदेवाक्षयमिच्छता'। तेनेदं वाक्यम् अक्षयधान्यप्राप्तिकामो ब्राह्मणाय धान्यमहं सम्प्रददे। एवं सर्वत्र नन्दिपुराणे 'आत्मविद्या च पौराणी धर्मशास्त्रात्मिका तथा। एता विद्यास्त्रयो मुख्याः सर्वदानक्रियाफलैः'। आत्मविद्या उपनिषत् त्रयस्त्रिंशः। तथा 'पुराणविद्यादातारस्त्वनन्तफलभागिनः'। हरिवंशे। 'शताश्वमेधस्य यदत्र पुण्यं चतुःसहस्रस्य शतक्रतोश्च। भवेदनन्तं हरिवंशदानात् प्रकीर्त्तितं व्यासमहर्षिणा च। यद्वाजपेयेन च राजसूयाद् दृष्टं फलं हस्तिरथेन चान्यत्। तल्लभ्यते व्यासवचः प्रमाणं गीतञ्च

वाल्मीकिमहर्षिणा च'। तेन शताश्वमेधयज्ञचतुःसहस्रशत-क्रतुजन्यपुण्यसमानन्तपुण्यवाजपेयराजसूयहस्तिरथदानजन्य-फलसमफलप्राप्तिः फलम्। मत्स्यपुराणम्। 'यत्राधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तरः। वृत्रासुरवधोपेतं तद्भाग-वतमुच्यते। लिखित्वा तच्च यो दद्याद्धेमसिंहसमन्वितम्। प्रौष्ठपद्यां पौर्णमास्यां स याति परमां गतिम्। अष्टादश-सहस्राणि पुराणं तत् प्रकीर्त्तितम्'। लिखित्वा लेखयित्वेति दानसागरः। पद्मपुराणम्। 'शालग्रामशिलाचक्रं यो दद्याद् दानमुत्तमम्। भूचक्रं तेन दत्तं स्यात् स शैलवनकाननं' सर्वदानं विष्णुप्रीत्यर्थम् आह विष्णुपुराणम्। 'देयानि विप्रमुख्येभ्यो मधुसूदनतुष्टये'। इत्युपक्रम्य 'यद्यदिष्टतमं लोके यच्चाप्यस्ति गृहे शुचि। तत्तद्धि देयं प्रीत्यर्थं देवदेवस्य चक्रिणः'। देवसम्प्रदानकदानमाह विष्णुपुराणम्। 'पात्रा-ख्याध्यात्मिका मुख्या विशुद्धाश्चाग्निहोत्रिणः। देवताश्च तथा मुख्या गोदानं ह्येतदुत्तमम्। यश्चोभयमुखीं दद्याद्गां विप्रे वेदपारगे। देवाय वाप्यभीष्टाय सकुल्यान्येकविंशतिम्। समुद्धृत्य नरस्तिष्ठेन्नरकाद् ब्रह्मणोऽन्तिके। युगानि रोम-तुल्यानि यदि श्रद्धापरो नरः'। तत् प्रतिपत्तिमाह दानसागरे स्कन्दपुराणम्। यत्किञ्चिद्देयमीशानमुद्दिश्य ब्राह्मणे शुचौ। दीयते विष्णवे चाथ तदनन्तफलं स्मृतम्'। यत्किञ्चिद्देयं दानार्हं वस्तु ईशानमुद्दिश्य त्यक्तम्। विष्णवे वा दत्तं पश्चाद्वा ब्राह्मणाय प्रदीयते प्रतिपाद्यते। तत्सर्वमनन्तफलम्। तथाच मत्स्यसूक्तम्। 'देवे दत्त्वा तु दानानि देवे दद्याच्च दक्षिणाम्। तत् सर्वं ब्राह्मणे दद्यादन्यथा निष्फलं भवेत्'। इति दत्त्वेत्यत्र देयानीति वाराहीतन्त्रे पाठः। वृहस्पतिः। 'षष्टिवर्षसहस्राणि स्वर्गे वसति भूमिदः। उच्छेत्ता चानुमन्ता

च तावन्ति नरके वसेत्'। तथा 'भूमिं दत्त्वा तु यः पत्रं कुर्य्याच्चन्द्रार्ककालिकम्। अनाच्छेद्यमनाहार्य्यं दानलेख्यन्तु तद्विदुः'। महाभारते। 'अपि पापकृतो राज्ञः प्रतिगृह्णन्ति साधवः। पृथिवीं नान्यदिच्छन्ति पावनीं जननीं यतः। नामास्याः प्रियदत्तेति गुह्यं देव्याः सनातनम्। दानं वाप्यथ वा दानं नामास्याः परमं प्रियम्'। दानादानकाले यत् प्रियदत्तानामास्याः परमं प्रियमित्युक्तम्। तेन प्रियदत्तामुच्चार्य्य दातव्या गृहीतव्या च विष्णुः। 'तैजसानां हि पात्राणां प्रदानेन पात्रो भवति कामानामिति'। मनुः। 'वारिदस्तृप्तिमाप्नोति सुखमक्षय्यमन्नदः। तिलप्रदः प्रजामिष्टां दीपदश्चक्षुरुत्तमम्। भूमिदः सर्वमाप्नोति दीर्घमायुर्हिरण्यदः। गृहदोऽग्र्याणि वेश्मानि रूप्यदो रूपमुत्तमम्। वासोदश्चन्द्रसालोक्यमश्विसालोक्यमश्वदः। अनडुहः श्रियं पुष्टां गोदो ब्रध्नस्य पिष्टपम्। यानशय्याप्रदो भार्य्यामैश्वर्य्यमभयप्रदः। धान्यदः सर्वसौख्यन्तु ब्रह्मदो ब्रह्मसाष्टिताम्' सर्वमिति यस्य यदपेक्षितम्। ब्रध्नस्य पिष्टपं सूर्य्यलोकम् अभयप्रदः शरणागतरक्षकः। तथाच रामायणम्। 'पर्य्याप्तदक्षिणस्यापि नाश्वमेधस्य तत् फलम्। यत् फलं याति संत्रासे रक्षिते शरणागते'। अकरणे निन्दामाह महाभारते। 'प्राणिनं बध्यमानं हि यः शक्तः समुपेक्षते। स याति नरकं घोरमिवमाहुर्मनीषिणः'। ब्रह्मदो वेदाध्यापयिता ब्रह्मसाष्टितां ब्रह्मसमानगतिताम्। अत्र जलादिमात्रदाने तु तत्तत्फलं तैजसपात्रदाने तु बहुकामपात्रो भवनं फलम् न तु जलादियुक्ततैजसपात्रदाने विशेषफलमुक्तं ततश्च 'नानाविधानि द्रव्याणि धनानि विविधानि च। आयुष्कामैर्देयानि स्वर्गमक्षयमिच्छता'। इति यमदेवलवचनात्

स्वर्गकामनयैव तैजसपात्रयुक्तद्रव्यदानं तथैवंभूतदाने विष्णु-दैवतं वक्तुं युक्तम्। स्कान्दे। 'आसनं यः प्रयच्छेत्तु संवीतं ब्राह्मणाय वै। राज्यस्थानमवाप्नोति स्वर्गं प्राप्नोत्यनुत्तमम्'। संवीतं वस्त्राच्छादितम्। अत्रासनकन्यागोदानेषु सवस्त्रत्व-श्रुतेरन्यत्रापि तथा व्यवहरन्ति। संवर्त्तः। 'ताम्बूलञ्चैव यो दद्यात् ब्राह्मणाय विचक्षणः। मेधावी सुभगः प्राज्ञो दर्श-नीयश्च जायते'। वशिष्ठः। 'सुपूगञ्च सुपर्णञ्च सुचूर्णेन समन्वितम्। अदत्त्वा द्विजदेवेभ्यस्ताम्बूलं वर्जयेद्बुधः'। आग्नेये। 'घर्मवातातपसहं छत्रं दद्यात् द्विजातये। सर्व-व्याधिविनिर्मुक्तः श्रियं पुत्रांश्च विन्दति'। विष्णुधर्मोत्तरे। 'छत्रोपानहदातारस्ते नराः स्वर्गगामिनः'। नारदीये। 'गन्धदः पुष्पफलदः प्रयाति ब्रह्मणः पदम्'। याज्ञवल्क्यः। 'गृहधान्याभयोपानच्छत्रमाल्यानुलेपनम्। यानं वृक्षं प्रियं शय्यां दत्त्वात्यन्तं सुखी भवेत्'। प्रियं यद् यस्य हर्म्यादि। संवर्त्तः। 'फलमूलानि यानानि शाकानि विविधानि च। दानानि दत्त्वा विप्रेभ्यो मुदायुक्तः सदा भवेत्'। ब्रह्मपुराणम्। 'काष्ठस्य पादुकादीनि पीठकाद्यासनानि च। यैर्दत्तानि द्विजातिभ्यः स्वर्गं यान्ति यथासुखम्'। याज्ञवल्क्यः। 'हेम-शृङ्गी शफैरूप्यैः सुशीला वस्त्रशोभिता। सकांस्यपात्रा दातव्या क्षीरिणी गौः सदक्षिणा। दातास्याः स्वर्गमाप्नोति वत्सरांल्लोमसम्मितान्। कपिला चेत्तारयति भूयश्चासप्तमं कुलम्। सवत्सा लोमतुल्यानि युगान्युभयतोमुखी। दातास्याः स्वर्गमाप्नोति पूर्वेण विधिना ददत्'। उभयतो मुखीमाह याज्ञवल्क्यः। 'यावद्वत्सस्य पादौ द्वौ मुखं योनौ प्रदृश्यते। तावद्गौः पृथिवी ज्ञेया यावद्गर्भं न मुञ्चति। यथाकथञ्चित् दत्त्वा गां धेनूं वा धेनुमेव वा। अरोगामपरिक्लिष्टां दत्त्वा

स्वर्गे महीयते'। अङ्गिराः 'बहुभ्यो न प्रदेयानि गौर्गृहं शयनं स्त्रियः। विभक्तदक्षिणा एता दातारं तारयन्ति हि एकाप्येकस्य दातव्या न बहुभ्यः कथञ्चन। सा तु विक्रयमापन्ना दहत्यासप्तमं कुलम्', अन्यदेकमपि बहुभ्यो दातव्यम्। तथाच स्कन्दपुराणं 'राजतं यः प्रयच्छेत्तु द्विजेभ्यो भाजनं शुभम्। स गन्धर्वपदं प्राप्य उर्वश्या सहमोदते'। विष्णुधर्मोत्तरे। 'तथौषधप्रदानेन विरोगस्त्वभिजायते'। नन्दिपुराणम्। 'यश्च वेश्म शुभ दद्यात् सर्वोपकरणान्वितम्। विप्राय नियमस्थाय स पूतः सर्वपातकात्'। उपकरणं धान्यादि नियमस्थाय उपवासादिव्रतशीलाय इति दानसागरः। नन्दिपुराणं 'योऽश्वं रथं गजं वापि ब्राह्मणे प्रतिपादयेत्। स शक्रस्य वसेल्लोके शक्रतुल्यो युगान् दश। प्राप्यन्ते चैव मानुष्यं राजा भवति बुद्धिमान्। उपानहौ च यो दद्यात् ब्राह्मणाय प्रवासिने। स गजैस्तुरगैर्याति यानं पथि यथासुखम्'। याज्ञवल्क्यः 'भूदीपांश्चान्नवस्त्राम्भस्तिलसर्पिः प्रतिश्रयान्। नैवेशिकं स्वर्णधुर्य्यं दत्त्वा स्वर्गे महीयते'। प्रतिश्रयो गृहाद्याश्रयः। नैवेशिकं विवाहोचितद्रव्यम्। धुर्य्याः बलीवर्द्दादयः। महाभारते। 'अग्निर्वै सकलादेवाः सुवर्णञ्च तदात्मकम्। तस्मात् सुवर्णं ददता दत्ताः स्युः सर्वदेवताः'। यमः। 'इन्धनानां प्रदानेन दीप्ताग्निर्जायते भुवि'। तथा 'गन्धौषधमथाभ्यङ्गमाचिक्कं लवणं तथा। यः प्रयच्छति विप्राय सौभाग्यं स तु विन्दति'। मत्स्यपुराणम्। 'पायसं मधुसंयुक्तं भक्ष्याणि विविधानि च। यथाशक्त्या तु राजेन्द्र भोजयेच्च सदक्षिणम्। ततश्चोद्दिश्य पितरम्' इति रामायणवचनात्। अशौचान्तद्वितीयदिनेऽपि दानानि कार्य्याणि। तत्र स्मृतिः। प्रेतमुद्दिश्य यो दद्यात्

हेमगर्भांस्तिलान्नृप। यावन्तस्ते तिलाः स्वर्गे तावत् कालं स मोदते'। महाभारते 'कल्यमुत्थाय यो विप्रः स्नातः शुक्लेन वाससा। तिलपात्रं प्रयच्छन् वै सर्वपापैः प्रमुच्यते'। एताभ्यां वचनाभ्यां मिलितदानं प्रत्येकवचनोक्तदानं वा प्रतीयते यदि मरणात् प्राक् वैतरणी न दत्ता तदेदानीं दातव्या। 'कृष्णां वैतरणीं धेनुं यः प्रयच्छेत् द्विजातये। सर्वपापविनिर्मुक्तो वैतरणीं तरते सुखम्' इति स्मृतेः वैदिककर्ममात्रे तु ओम् तत्सदित्युच्चार्य्य दद्यादित्याह। भगवद्गीता। 'ओम् तत्-सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः। ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा। तस्मादोमित्युदाहृत्य यज्ञदान-तपःक्रिया। प्रवर्त्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम्। तदिति अभिसन्धाय यज्ञदानतपःक्रिया। दानक्रियाश्च विविधा क्रियन्ते मोक्षकाङ्क्षिभिः। सद्भावे साधुभावे च सदित्येतत् प्रयुज्यते। प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते'। ओम् तत्सदिति त्रिप्रकारो ब्रह्मणो जगदीश्वरस्याभिधानं मुनिभिश्चिन्तितम्। यस्यायं त्रिविधो निर्देशः तेन परमा-त्मना ब्राह्मणादयो निर्मिताः। यस्मादेवं ब्रह्मणो निर्देश-स्तस्मादोमित्युदाहृत्य उच्चार्य्य कृता यज्ञाद्याः सततम् अङ्ग-वैकल्येऽपि प्रकर्षेण प्रवर्त्तन्ते साङ्गा भवन्ति। व्यक्तं योगि-याज्ञवल्क्यः। 'वाच्यः स ईश्वरः प्रोक्तो वाचकः प्रणवः स्मृतः। वाचकेऽपि च विज्ञाते वाच्य एव प्रसीदति'। तथा 'यन्न्यून-ञ्चातिरिक्तञ्च यच्छिद्रं यदयज्ञियम्। यदमेध्यमशुद्धञ्च यातया-मञ्च यद्भवेत्। तदोङ्कारप्रयुक्तेन सर्वञ्चाविकलं भवेत्'। तदित्युदाहृत्य इत्यनुषङ्गः। अनभिसन्धाय यज्ञादिकर्मणः फलमिति शेषः। फलाभिसन्धानं विना मुमुक्षुणा कर्म कर्त्तव्यमित्यर्थः। यतः सतो विद्यमानस्य भावे जन्मनि साधु-

भावे उत्कृष्टचरिते च सदिति प्रयुज्यते। अतो यज्ञादौ कर्मणि प्रथमतः सच्छब्दः प्रयुज्यत इति षोड़शदानक्रममाहुः साम्प्रदायिकाः। 'भूम्यासनं जलं वस्त्रं प्रदीपोऽन्नं ततः परम्। ताम्बूलच्छत्रगन्धाश्च माल्यं फलमतःपरम्। शय्या च पादुका गावः काञ्चनं रजतं तथा। दानमेतत् षोड़शकं प्रेतमुद्दिश्य दीयते'। अत्र प्रयोगः। अशौचान्तद्वितीयदिने सूर्य्योदयानन्तरं स शिरस्कमात्रं स्नात्वा माङ्गल्यं घृतादि स्पृष्ट्वा स्वशाखोक्तशान्तिं कृत्वा ब्राह्मणान् स्वस्ति वाच्य विप्रो जलं क्षत्रियो वाहनं वैश्यो प्रतोदं शूद्रो यष्टिं स्पृष्ट्वा शुद्धः सन् वैधस्नानादिनित्यक्रियां कुर्य्यात्। ततो हेमगर्भतिलदानं तत्र क्रमः। प्राङ्मुख उदङ्मुखं ब्राह्मणं गन्धपुष्पाभ्यां संपूज्य। ओम् सवस्त्रतैजसाधारहेमगर्भतिलेभ्यो नमः। इति गन्धपुष्पाभ्यां तान् पूजयित्वा एतदधिपतये विष्णवे नम इति संपूज्य ब्राह्मणहस्ते जलं दत्त्वा सवस्त्रतैजसाधारहेमगर्भतिलांश्च संप्रोक्ष्य वामहस्तेन धृत्वा तिलकुशजलान्यादाय। ओम् तत्सदित्युच्चार्य्य अमुके मासि अमुकपक्षे अमुकतिथौ अमुकगोत्रस्य प्रेतस्य अमुकदेवशर्मणोऽशौचान्ताद्वितीयेऽह्नि अमुकगोत्रस्य प्रेतस्य अमुकदेवशर्मणः स्वर्गकाम एतान् सवस्त्रतैजसाधारहेमगर्भतिलान् विष्णुदैवतान् अमुकगोत्राय अमुकदेवशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददानि इति सम्प्रदानब्राह्मणहस्ते जलं दद्यात्। एवमेव पितृदयितादानसागरयोः। स्वर्गामिफले तु सम्प्रददे इति। तिलानां मुष्टिमादाय हेमतैजसपात्रयोः करमध्यात्मकाग्नेय तीर्थेन वस्त्रस्य दशान्तग्रहणपरिधानाभ्यां ओमित्युक्त्वा प्रतिगृह्य स्वस्ति इत्युक्त्वासावित्रीं पठित्वा एते सवस्त्रतैजसाधारहेमगर्भतिला विष्णुदैवताका इति वदेत्। ततो यथाशाखं कामस्तुतिं पठेत्।

यथा ऋग्वेदी 'ओम् क इदं कस्मा अदात् कामः कामाया-दात् कामो दाता कामः प्रतिग्रहीता कामः समुद्रमाविशत्। कामेन त्वा प्रतिगृह्णामि कामैतत्ते वृष्टिरसि द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णातु'। १। यजुर्वेदे तु। ओम् द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णातु कोऽदात् कस्मा अदात् कामः कामायादात् कामो दाता कामः प्रतिग्रहीता कामै-तत्ते तव कामसता भुञ्जामहे'। २। सामवेदे तु 'ओम् क इदं कस्मा अदात्' कामः कामायादात् कामो दाता कामः प्रति-ग्रहीता कामः समुद्रमाविशत् कामेन त्वा प्रतिगृह्णाति कामैतत्ते'। ३। अथर्ववेदे तु। 'क इदं कस्मा अदात् कामः कामादायात् कामो दाता कामः प्रतिग्रहीता कामः समुद्र-माविशत् कामेन त्वा प्रतिगृह्णात्वन्तरीक्षमिदं महोत्साहं दाणेनेति'। ततो दाता ओम् अद्येत्यादि कृतैतत् अमुक-दानप्रतिष्ठार्थं दक्षिणामिदं काञ्चनम् अग्निदैवतं तन्मूल्यं वा विष्णुदैवतं तुभ्यमहं सम्प्रददानि इति ब्राह्मणाय दद्यात्। ब्राह्मणासन्निधाने यथासम्भवगोत्रनाम्ने ब्राह्मणायेति विशेषः। तुभ्यमिति न देयं भूमौ त्यागजलप्रक्षेपः। एवमन्यत्रापि यथायोग्यमूहनीयम्। 'सुवर्णं परमं दानं सुवर्णं दक्षिणा परा। सर्वेषामेव दानानां सुवर्णं दक्षिणेष्यते' इति वचनात् काञ्चनं दक्षिणा देया। तत्तत् फलकामनायान्तु हेमगर्भ-तिलानां तत्तत्तिलसमसंख्यवर्षावच्छिन्नस्वर्गलोकमोदनं फलम्। वैतरण्या रुद्रो देवता सर्वपापविनिर्मुक्तिपूर्वकवैतरणीसुख-सन्तरणं फलम्। अन्यत्र ओम् 'यमद्वारे महाघोरे तप्ता वैतरणी नदी। तान्तु तर्त्तुं ददाम्येनां कृष्णां वैतरणीञ्च गाम्'। इत्युच्चार्य्य उत्सृजेत्। प्रतिग्रहे पुच्छधारणं भूमेः पूजायां दानवाक्ये च प्रियदत्तेति विशेषणम्। भूमेर्देवता-

विष्णुः। षष्टिवर्षसहस्रावच्छिन्नस्वर्गवासफलम्। प्रतिग्रहे तद्भूमेः प्रदक्षिणीकरणं भूमेरसन्निधाने तामुद्दिश्य प्रदक्षिणम्। १। आसनस्य उत्तानाङ्गिरसो देवता राज्यस्थानानुत्तमस्वर्गप्राप्तिः फलम्। तत्र विशेषानुपदेशात् करमध्यात्मकाग्नेयेन तीर्थेन प्रतिग्रह एवमन्यत्रापि आग्नेयं करतलम्। २। जलस्य वरुणो देवता तृप्तिप्राप्तिः फलम्। ३। वस्त्रस्य बृहस्पतिर्देवता चन्द्रमालोक्यप्राप्तिः फलं प्रतिग्रहे दशान्तग्रहणपरिधाने। ४। दीपस्याग्निर्देवता उत्तमचक्षुःप्राप्तिं फलम्। ५। अन्नस्य प्रजापतिर्देवता अक्षयसुखप्राप्तिः फलं प्रतिग्रहे मुष्टिग्रहणम्। ६। ताम्बूलस्य वनस्पतिर्देवता मेधावित्वसुभगत्वप्राज्ञत्वदर्शनीयत्वप्राप्तिः फलम्। ७। छत्रस्य उत्तानाङ्गिरो देवता सर्वव्याधिविनिर्मुक्तत्वश्रीमत्त्वबहुपुत्रत्वप्राप्तिः फलम्। प्रतिग्रहे दण्डधारणम्। ८। गन्धस्य गन्धर्वो देवता ब्रह्मपदप्रयाणं फलम्। ९। माल्यस्य वनस्पतिर्देवता अत्यन्तसुखित्वभवनं फलम्। १०। फलस्य वनस्पतिर्देवता मुदायुक्तत्वं फलम्। ११। शय्याया उत्तानाङ्गिरो देवता अत्यन्तसुखित्वभवनं फलं प्रतिग्रहे आरोहणम्। १२। पादुकायुगलस्य उत्तानाङ्गिरो देवता स्वर्गलोकसुखगमनं फलं प्रतिग्रहे आरोहणम्। १३। धेनो रुद्रदेवता सूर्य्यलोकप्राप्तिः फलम्। तत्र धेनुं प्राङ्मुखीमात्मसमीपमानीय। ओम् 'या लक्ष्मीः सर्वभूतानां या च देवेष्ववस्थिता। धेनुरूपेण सा देवी मम शान्तिं प्रयच्छतु'। ओम् 'देवस्था या च रुद्राणी शङ्करस्य च या प्रिया। धेनुरूपेण सा देवी मम शान्तिं प्रयच्छतु'। ओम् 'विष्णोर्वक्षसि या लक्ष्मीर्या लक्ष्मीर्धनदस्य च। या लक्ष्मीः सर्वभूतानां सा धेनुर्वरदास्तु मे'। ओम् 'चतुर्मुखस्य या लक्ष्मीः स्वाहा चैव विभावसोः। चन्द्रार्क-

लक्ष्मीर्या धेनुरूपास्तु सा श्रियै'। श्रोम् 'स्वधात्वं पितॄणानां स्वाहा यज्ञभुजां यतः। सर्वपापहरा धेनुस्तस्माच्छान्ति' प्रयच्छ मे'। श्रोम् 'सर्वदेवमयीं देवीं सर्ववेदमयीं तथा। सर्वलोकनिमित्ताय सर्वलोकमपि स्थिरम्। प्रयच्छामि महाभागामक्षयाय सुखाय च'। इत्युच्चार्य्य उत्सृजेत् प्रतिग्रहे पुच्छधारणम् ।१४। हिरण्यस्याग्निर्देवता दीर्घायुःप्राप्तिः फलम्।१५। रजतस्य चन्द्रमा देवता उत्तमरूपप्राप्तिःफलम्।१६। एवमन्यानि तत्तत्कामनया देयानि। वस्तुतोऽत्र जलादिमात्रदाने तत्तत्फलं तैजसपात्रदाने वसुकामपात्रो भवनं फलम्। न तु जलादियुक्तं तैजसपात्रदाने विशिष्टफलमुक्तम्। ततश्च 'नानाविधानि द्रव्याणि धनानि विविधानि च। आयुष्कामेन देयानि स्वर्गमक्षयमिच्छता'। इति यमदेवलवचनात्। स्वर्गकामनयैव पात्रयुक्ततथाविधद्रव्यदानं युक्तम्। तथैवम्भूतदाने विष्णुदैवतमिति वक्तुमुचितम्। 'तज्ज्ञेयं विष्णुदैवत्यं सर्वं वा विष्णुदैवतम्'। इति विष्णुधर्मोत्तरवचनात्। ततो विलक्षणां शय्यां दद्यात्। तत्र स्वर्गफलं नानाभरणैर्द्विजदम्पती भूषयित्वा फलवस्त्रसमन्वितं प्रेतप्रतिकृतिरूपं काञ्चनपुरुषं शय्यायामारोप्य तां गन्धपुष्पाभ्यां संपूज्य ताभ्यां द्विजदम्पतीभ्यां दद्यात्। ततश्च तस्यां तावुपवेशयेत्। ततो दक्षिणां दद्यात्। एवं कान्त्यादौ स्वर्गामिफले तु ददानीत्यत्र संप्रददे इत्यभिलापे विशेषः। एवञ्चैकशो मिलितं वा पात्रादिद्रव्यं काञ्चनादिधनं वा आयुष्कामेण स्वर्गकामेन वा एकैकशो द्रव्यं तत्तत्फलकामेन वा देयमिति। ततो वृषोत्सर्गः। स्वगृह्योक्तविधिना कार्य्यः तत्र प्रेतलोकपरित्यागपूर्वकस्वर्गलोकगमनं फलम्। ततश्च पूर्वोक्तविधिना कपिलां दद्यात्। तत्र

रुद्रदेवता स्वर्गः फलम्। ततश्च स्वगृह्योक्तविधिना एकोद्दिष्टं कुर्य्यात्।

अथ वृषोत्सर्गविचारः। तत्रोपादानिकर्त्तृत्वनिरासाय कामधेनुकल्पतरुधृतब्रह्मपुराणम्। 'अथ वृत्ते वृषोत्सर्गे दाता वक्ष्योक्तिभिः पदैः। ब्राह्मणानाह यत्किञ्चिन्मयोत्सृष्टन्तु निर्जने। तत्कश्चिदन्यो न नयेत् न विभाज्यं यथाक्रमम्। न वाह्यं न च तत् चीरं पातव्यं केनचित् क्वचित्' इति। कृत्यप्रदीपेऽप्येवं वक्ष्योक्तिभिः काकूक्तिभिः। स्वामित्वाजनकहोमाङ्गकवेदमेयत्यागरूपत्वादस्य यज्ञरूपत्वं युक्तं तत्तु भाक्तं देवतोद्देश्यकत्वाभावात्। तथाच यज्ञं व्याख्यास्यामो द्रव्यदेवता त्यागस्तदङ्गमितरदिति स्मृतेः। देवतोद्देशेन द्रव्यत्यागो यज्ञपदार्थः सर्वमन्यत्तदङ्गमिति हरिशर्मव्याख्यातं तथाच हारीतः। 'मन्त्रद्रव्याग्निसंयोगं यज्ञमाहुर्मनीषिणः'। मन्त्रस्यापि देवताविग्रहरूपत्वात्। पूर्ववचनेनास्य विरोधः। तथाच देवीपुराणीयवास्तुयागे प्राजेशं मन्त्रविग्रहमित्युक्तम्। अतएव मिताक्षरायां विवाहोत्सवयज्ञेषु इत्यत्र यज्ञे वृषोत्सर्गादावित्युक्तम्। द्वैतनिर्णयेऽपि। आभ्युदयिकश्च वृषोत्सर्गे इष्टित्वेनावश्यकम्। एकादशाहे तु तद्विधेर्निरवकाशतयाऽगत्यैवाभ्युदयिकाभावेऽपि वृषोत्सर्गसिद्धिरित्युक्तम्। उशनसापि 'नार्वाक् संवत्सराद्वृद्धिर्वृषोत्सर्गं विधीयते। सपिण्डीकरणादूर्द्ध्वं वृद्धिश्राद्धं विधीयते' इत्युक्तं पारस्करेण शूलगवमभिधाय एतेनैव गोयज्ञो व्याख्यात इत्यादिना गोयज्ञमभिधायान्ते तस्य तुल्यवया गोर्दक्षिणा इत्युक्त्वाथ वृषोत्सर्गो गोयज्ञेन व्याख्यात इत्युक्तम्। तेन वृषोत्सर्गस्य शूलगवतुल्यगोयज्ञातिदेशात् यागत्वमिति। यद्यपि गोयज्ञे उपदिष्टपायसेन शूलगवातिदिष्टपशुनिवृत्तौ

त्वस्य तुल्यवया गौरित्यनुपपन्नं तथापि अत्र तच्छब्देन प्रक्रान्तशूलगवप्रक्रंस्यमाणवृषोत्सर्गौ पशुः परामृश्यते। अत-स्तयोर्दक्षिणेयं गोयज्ञप्रकरणपाठात् तत्रापि यथासम्भववयस्का गौर्दक्षिणेति हरिशर्माऽपि एवम्। एवञ्च वृषोत्सर्गेऽपि वृष-तुल्या गौर्दक्षिणा। छन्दोगपरिशिष्टेऽपि 'अथ वृषवत्सतरी-णामलङ्कारं वाससी च अथाचार्य्याय प्रयच्छेत् गाश्चेति'। अत्र वृषवत्सतर्य्यलङ्कारवस्त्रयुग्मस्य परिधाप्याहृते शुक्ले वाससी हेमपट्टकमिति छन्दोगपरिशिष्टवचनान्तरोक्तान्तभूतोपयो-ग्यस्य प्रतिपत्तिमाचार्य्याय पूर्वमभिधाय गाश्चेति पृथगुपादानं तस्मै दक्षिणार्थमिति व्यक्तमाह भविष्ये। 'वृषतुल्यवयो वर्णो वृषः स्याद्दक्षिणाद्विजाः। वृषोत्सर्गे तु पुंसां वै स्त्रीणां स्त्री गौर्विधीयते'। एतेन दक्षिणाशून्यमिदमिति ब्रह्मपुराणे-ऽपि। स्वधापितृभ्य इत्याद्यभिधाय 'दद्यादनेन मन्त्रेण तिला-ज्ञतयुतं जलम्। पितृभ्यश्च समासेन ब्राह्मणेभ्यश्च दक्षिणाम्' इति अत्र ब्राह्मणेभ्यो ब्रह्महोत्राचार्य्येभ्य इति प्रतीयते। अत्र वृषोत्सर्गमात्रे तन्मन्त्रकरणकतिलयवयुक्तजलदानश्रुतेः। प्रेतवृषोत्सर्गेऽपि तत्करणं तदङ्गत्वात्। न च शूलगवातिदिष्ट-गोयज्ञातिदेशात् वृषोत्सर्गेऽपि आवसथ्याग्निमात्रलाभान्निरग्ने-र्नाधिकार इति वाच्यम्। मध्ये गवां सुसमिद्धमग्निं कृत्वाज्यं संस्कृत्य इह रतिरिति षड़ाज्याहुतीर्जुहोति। इति पारस्कर-रीयसूत्रेऽग्निं कृत्वेत्यनेन लौकिकाग्नेर्लाभात् अन्यथा तदभि-धानं व्यर्थं स्यात् अतएव कृष्णानाम्यन्त्यजन्मनाम् इति सङ्ग-च्छते। वाचस्पतिमिश्रास्तु आज्यं संस्कृत्य इह रतिरित्या-नन्तर्य्याभिधानादाज्यसंस्कारानुपदमेव अत्र इत्यादिषड़ा-हुतयः। तत आघाराज्यभागौ ततश्च पायसाहुतयो अथ ततः पूषा गा इति मन्त्रेण पौष्णहोम इत्याहुः। तत्र गोयज्ञाति-

देशेन पायसद्रव्यप्राप्तौ तदपोह्याज्यप्राप्तये आज्यं संस्कृत्य इह रतिरित्यभिधानस्य फलवत्त्वात्। आघाराज्यभागानन्तरं प्रकृतहोमस्य उत्तरमाग्नेयं दक्षिणे सौम्यं मध्येऽन्याहुतय इति सांख्यायनोक्ताज्यभागहोमदेशान्तरालदेशस्याज्यहोमस्य च बाधापत्तेः। आज्यसंस्कारानन्तरप्राप्तोपयमनकुशान् समिदाधानग्निपर्य्युक्षणानां षडाहुतेः पूर्वं बाधापत्तेश्च। तानि च तेनापि पूर्वमुक्तानि। यत्तु पौष्णस्य श्रपणानुपदेशात्। अन्यत्र सिद्धस्यैवासादनमित्याहुस्तदपि न युक्तं पौष्णस्य जुहोतीति पृथगुपादानस्य पिष्टचर्वर्थत्वाच्च। अन्यथा छन्दोगानामिव। तण्डुलचरुः स्यात्। यथा 'यद्यप्यदन्तकः पूषा पैष्टमत्ति सदा चरुम्। अग्नीन्द्रेश्वरसामान्यात्तण्डुलोऽत्र विधीयते'। इति छन्दोगपरिशिष्टात्। पैष्टचरुमित्यत्र चरुशब्दस्य संस्कारविशेषसंस्कृतान्नवाचित्वेन चरुपरिभाषाप्राप्ते बाधस्यायुक्तत्वाच्च। अतएव श्रपणमाह विष्णुः 'अग्निं परिस्तीर्य्य पौष्णं श्रपयित्वा पूषा गा इति' न चैतत् कठशाखिमात्रपरम्। अन्योक्तस्यापि। आकाङ्क्षितत्वेनान्वयात्। तथाच छन्दोगपरिशिष्टम्। 'यन्नाम्नातं स्वशाखायां परोक्तमविरोधि च। विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत्'। एवमेव हरिशर्मप्रभृतयः। चरुविधौ विद्याकरवाजपेयीशास्त्रावधारणवेलायां हि यत्र प्रयोजनाभावादिनिश्चयस्तत्रैव तदुपादानादिलोपः शास्त्रार्थः। यथा कृष्णलेऽवघातादिलोपः। यत्र तदनुष्ठानवेलायामेव पुरुषदोषेण प्रयोजनाभावो ज्ञायते तदा प्राक् तद्विषयाच्छास्त्रप्रापितः पदार्थो नियमापूर्वमात्रार्थमनुष्ठेयमेव। अतएव प्रकृतावपि आलस्यादिना शौद्रादिस्थाने तण्डुलादिषु गृहीतेषु आघातादि समाचरन्ति याज्ञिकाः। 'घाते न्यूने तथा छिन्ने शास्त्रार्थं मान्त्रिके तथा। यत्र मन्त्रा

प्रयोक्तव्या मन्त्रा यज्ञार्थसाधकाः'। साकाय्ये हविषि मान्त्रिके मन्त्रसाध्ये अवघातादौ तत्काले मन्त्रपाठाभावेऽपि मन्त्राः प्रयोक्तव्याः। अस्मिंस्तु कल्पे मन्त्रार्थज्ञानस्य नास्त्युपयोगः। इत्थमेवेदानीं प्रयोगानुष्ठानमित्याह। यत्त्वपरं अग्नेः प्रागग्रैर्दर्भैरैशानात् सौम्यान्तम्। यजुर्वेदिकपरिस्तरणमाह तदपि न युक्तं सर्वाण्यावृतो दक्षिणतः प्रवृत्तय उदकसंस्था भवन्ति इति सांख्यायनविरोधात्। ततश्चाग्नेयादैशानान्तं ब्रह्मणेऽग्निपर्य्यन्तं नैरृताद्वायव्यान्तम् अग्नेः प्रणीतापर्य्यन्तं परिस्तरणं रामदत्ताद्युक्तम्। आचार्य्यलक्षणञ्च छन्दोगपरिशिष्टे 'उदाहरति वेदार्थान् यज्ञविद्याः स्मृतीरपि। श्रुतिस्मृतिसमापन्नम् आचार्य्यं तं विदुर्बुधाः'। श्रुतिस्मृत्युक्त कर्मयुक्तम्। आहतवस्त्रमाह वशिष्ठः। 'ईषद्धौतं नवं शुक्लं सदशं यन्न धारितम्। आहतं तद्विजानीयात् सर्वकर्मसु पावनम्'। ईषत् सूत्रतन्तुकम्। न च ब्रह्मैव ऋत्विक् पाकयज्ञे स्वयं होतेति गोभिलसूत्रात्। 'ब्राह्मणे दक्षिणा देया यत्र या परिकीर्त्तिता। कर्मान्तेऽनुच्यमानायां पूर्णपात्रादिका भवेत्'। इति छन्दोगपरिशिष्टात्। ब्रह्मणे वृषोत्सर्गदक्षिणा देया इति वाच्यं होमदक्षिणामात्रब्रह्मसंप्रदानकत्वात्। अतएव दर्शादियागमात्रमभिधाय गोभिलेनापि पूर्णपात्रो दक्षिणा तत् ब्रह्मणे दद्यात् इत्युक्तम्। पात्र इति क्लीवेऽपि पुंस्त्वं छान्दसम् एतदनुसारात् कर्मान्त इति ब्रह्मसाध्यहोमान्तपरम्। न तु परिशिष्टप्रकाशोक्तनामकरणादिप्रधानकर्मान्तपरम्। अतएव तद्दक्षिणापात्रान्तरेऽपि देया। न च पाकयज्ञे स्वयं होतेति श्रवणात्। वृषोत्सर्गे नान्यो होतेति वाच्यम्। 'निःक्षिप्याग्निं स्वदारेषु परिकल्प्यर्त्विजं तथा। प्रवसेत् कार्य्यवान् विप्रो वृथैव न चिरं क्वचित्'। इति छन्दोगपरि-

शिष्टेन गोभिलेन च जुहुयाद्वाचयेद्वापि इत्यनेनारभ्य तस्य विधानेनाप्यकर्त्तृत्वलाभात्। किन्तु 'स्वयं होमे फलं यत्तु तदन्येन न जायते' इति दक्षोक्तफलातिशयार्थं होतृत्वाचरणमिति न स्वयं नियमार्थमिति। अन्यथा ब्राह्मणेनाप्यमन्त्रकमन इति मत्स्यपुराणीयेन प्रतिपन्नशूद्रकर्त्तृकवृषोत्सर्गो न स्यात् एवञ्च शूद्रकर्त्तृकवृषोत्सर्गेऽपि मन्त्रपाठवत् होतृनिष्पाद्यत्वाद्यदुपपद्यते। यत्तु विष्णुपुराणे 'दानञ्च दद्याच्छूद्रोऽपि पाकयज्ञैर्यजेत च। पित्र्यादिकञ्च वै सर्वं शूद्रः कुर्वीत तेन वै'। अत्र तेनेत्यनेन शूद्रकर्त्तृकपाकाभिधानं तत् कलीतरपरम्। 'ब्राह्मणादिषु शूद्रस्य पक्वतादिक्रियापि च' इति प्रागुक्तादिपुराणे निषेधात्। अतएव 'आमं शूद्रस्य पक्वान्नं पक्वमुच्छिष्टमुच्यते'। इति स्वयं करण एव वैश्वदेवहोमादौ बोध्यं यत्तु 'त्रिषु वर्णेषु कर्त्तव्यं पक्वभोजनमेव च। शुश्रूषामभिपन्नानां शूद्राणाञ्च वरानने' इति गङ्गावाक्यावल्याम्। देवनैवेद्याय यद्वाराहपुराणं तत् शूद्रपाकविधायकं तदपि कलीतरपरम्। 'शूद्रेषु दासगोपालकुलमित्रार्द्धसीरिणाम्। भोज्यान्नता गृहस्थस्य तीर्थसेवातिदूरतः'। इति प्रागुक्तादित्यपुराणे। 'शुश्रूषकत्वेन प्रतिप्रसूतस्य गोपालादेः कलौ निषेधात्। यत्तु भविष्यपुराणे। उपक्षेपणधर्मेण शूद्रान्नं यः पचेद्द्विजः। अभोज्यं तद्भवेदन्नं स विप्रो यात्यधोगतिम्'। उपक्षेपणधर्मः शूद्रस्वामिकान्नस्य पाकार्थं ब्राह्मणगृहे समर्पणमिति कल्पतरुव्याख्यानम्। तत् द्विजशुश्रूषकेतरशूद्रान्नपरम्। तदितरपाके तु 'कन्दुपक्वानि तैलेन पायसं दधिसक्तवः। द्विजैरेतानि भोज्यानि शूद्रगेहकृतान्यपि' इति कूर्मपुराणवचनेन प्रतिप्रसवात्। एवं 'कृष्णं वत्सतरीयुक्तमैशान्यां चालयेद्द्विजः। होतुर्वस्त्रयुगं दद्यात् सुवर्णं कांस्यमेव च। अयस्काराय दातव्यं वेतनं मनसेप्सितम्'।

इति विष्णुवचनादपि होतृस्वरप्रतीतेः। एतेन वृषोत्सर्गे विष्णूक्तदक्षिणा स्वयं कर्तृकहोमपक्षे ब्रह्मणे देया अन्यकर्तृक-होमपक्षे तु 'विदध्याद्धौत्रमन्यश्चेत् दक्षिणार्द्धहरो भवेत्। स्वयञ्चेदुभयं कुर्य्यादन्यस्मै प्रतिपादयेत्'। इति छन्दोगपरि-शिष्टादर्द्धं ब्रह्मणेऽर्द्धं होत्रे देयमिति परिशिष्टप्रकाशोक्तं निरस्तम्। वृषोत्सर्गदक्षिणाचार्य्याय देयेति प्राक्प्रतिपादि-तम्। विष्णूक्ता होतृदक्षिणा या सा कथं ब्रह्मणे देयेति। तस्मात् ब्रह्मदक्षिणा पूर्णपात्रादिका होतृदक्षिणा विष्णूक्ता। वृषोत्सर्गदक्षिणा च गोरूपैवेति सिद्धम्। स्वयं कर्तृकहोमे तु वस्त्रयुग्मादिका होमदक्षिणा ब्रह्मणे देया। 'ब्रह्मणे दक्षिणा देया यत्र या परिकीर्त्तिता' इति प्रागुक्तात् यत्तु होतृदक्षिणा वस्त्रयुगसुवर्णकांस्यरूपा होत्रे देया। होतुर्वस्त्रयुगम् इति विष्णूक्तेः। सा च कातीयकल्पेऽप्यन्वेति सर्वशाखाप्रत्ययमेकं कर्म इति न्यायात्। एवं यजमान एव होतेति पाश्चात्यमत-मपास्तम्। सत्रवद्दक्षिणाबाधापत्तेरिति पितृभक्तितरङ्गिण्यामुक्तं तच्चिन्त्यम्। सत्रे य एव यजमानास्त एव ऋत्विज इति श्रुतेः। ऋत्विक्कार्य्ये यजमानबाधावानतिलक्षणस्य दृष्टस्याभावा-दतिदेशागतदृष्टार्थदक्षिणायाः सत्रे बाधो नादृष्टार्थाया बाधः। 'हतमश्रोत्रियं श्राद्धं हतो यज्ञस्त्वदक्षिणः। तस्मात् पर्णं काकिणीं वा फलपुष्पमथापि वा। प्रदद्याद्दक्षिणां यज्ञे तया स सफलो भवेत्'। इति बृहस्पतिनावश्यकत्वेन फलपुष्पा-देरप्युक्तेः। स्वयं होतृपक्षेऽपि विदध्यादित्यादिना दक्षि-णाया उक्तत्वाच्च। श्राद्धविवेकोऽप्येवं न तु वृषोत्सर्गीयहोमे होत्रे दक्षिणोपदेशात् न स्वयं होतेति वाच्यम्। तद्वचनस्या-न्ययज्ञविषयत्वात्। अन्यथा 'अन्यैः शतकृताद्धोमादेकः पुत्र-कृतो वरः। पुत्रैःशतकृताद्धोमादेको ह्यात्मकृतो वरः। इति

श्रुतेः स्वयं होम इति प्रागुक्तश्रुतेश्च निर्बीजसङ्कोचापत्तेः। यद्यपि तत्तत्शाखोक्तावगतौ दक्षिणाभेदस्तथापि आकाङ्क्षितत्वात् सर्वशाखाप्रत्ययमेकं कर्म इति न्यायात् सर्वत्राप्यन्वेति। तर्हि विदध्याच्चौत्रमन्यथेदित्यस्य का गतिरिति चेत्। यत्र होमे विशेष्य नाभिहिता तत्र अन्नहोतृभ्यां होमदक्षिणा विभाज्य याज्ञा चयस्काराय इति त्रिशूलचक्रस्रष्टीकर्त्रे गोपालाय। तथा छन्दोगपरिशिष्टम्। 'ततोऽरुणेन गन्धेन मानस्तोक इतीरयन्। वृषस्य दक्षिणे पार्श्वे त्रिशूलाङ्कं समुल्लिखेत्। वृषोऽग्रसीति सव्येऽस्य चक्राङ्कमपि दर्शयेत्। तप्तेन पश्चादयसा स्पष्टौ तावेव कारयेत्। अङ्कनन्तु स्फिग्द्वये। स्फिचोरङ्कनमिति वक्तृ च पक्षतो लिखनात्। यत्तु वाचस्पतिमिश्रेण वृषभोऽयं हरिहरमूर्त्तिश्चक्रत्रिशूलधारित्वात्। तत्रापि दक्षिणभागो हरेरुत्तरभागे हरस्येति युक्तः तथाच दक्षिणहस्ते चक्रं वामहस्ते त्रिशूलम् इति सिद्ध्यति न हि पादेनास्त्रधारणं युज्यत इत्युक्तम्। तत्र वाचनिकेऽर्थे युक्तेरनवकाशात्। अत्र 'गोयज्ञे सूर्य्यनामेति विवाहे योजकः स्मृतः' इति कपिलेन गोयज्ञेऽग्नेः सूर्य्यनामाभिधानात्तद्धर्मग्राहित्वात् वृषोत्सर्गहोमेऽपि तथा इति केचित्। तन्न उपदेशेनातिदेशस्य बाधात्। वृषोत्सर्गहोमस्य पाकसाध्यत्वात् तत्राग्नेः साहसनामत्वं 'प्रायश्चित्ते विधुश्चैव पाकयज्ञे तु साहसः'। इति गोभिलपुत्रकृतगृह्यासंग्रहवचनात्। प्रायश्चित्ते प्रायश्चित्तात्मकहोमे विधुनामाग्निः। ततश्च प्रकृतहोमानन्तरं तद्देशगुणजन्यपापक्षयकामस्तत्तद्देशोक्तप्रायश्चित्तं समाचरेत्। तथाचाहतुः शङ्खलिखितौ। 'प्रत्येकं नियतं कालमात्मनो व्रतमादिशेत्। प्रायश्चित्तमुपासीनो वाग्व्रतत्रिषवनं स्पृशेत्' इति। प्रत्येकं नियतं कालमिति तत्तद्

व्रतकालसंख्याम् आत्मनो व्रतम् आत्मसम्बन्धित्वेन आत्मकर्तृकत्वेनेति यावत् आदिशेत् उल्लेखं कुर्य्यात्। भवदेवभट्टेनापि तथा लिखितं यदप्युक्तम्। अद्येत्याद्यमुककामो रुद्रदैवतं वृषमेनं युवानमित्यादि लौकिकपदमन्त्राभ्यां वृषोत्सर्गवाक्यमिति तन्न वचनं विना परस्परान्वयबोधाय लौकिकपदविशिष्टमन्त्रोल्लेखे मानाभावात्। तथाचानुषङ्गाधिकरणे पार्थसारथिमिश्राः। 'वेदेन लौकिकः शेषो न सम्यो निष्प्रमाणकः'। माधवाचार्य्यः। 'वेदाकाङ्क्षा पूरणीया वेदेनेत्यनुषञ्जनम्। अन्यशेषोऽपि बुद्धिस्थो लौकिकस्तु न तादृशः'। तस्मादाकाङ्क्षितत्वेनापि वैदिकमेवानुषज्यते। न तु लौकिकमध्याह्रियते इति वदतापि वैदिकमन्त्रस्य वचनाभावे लौकिकवाक्येनान्वयः। अन्यथा भूःस्वाहेत्यादौ तथात्वापत्तेः। 'अष्टाभिर्धेनुभिर्युक्तस्सतस्त्रभिरनुक्रमात्। त्रिहायणीभिर्धन्याभिः सुरूपाभिः सुशोभितः। सर्वोपकरणोपेतः सर्वशस्यचरो महान्। उत्स्रष्टव्यो विधानेन श्रुतिस्मृति निदर्शनात्'। इति ब्रह्मपुराणोक्तधेनुयुक्तत्वसर्वोपकरणोपेतत्वाद्युल्लेखापत्तेः। अत्र धेनुपदं वक्ष्यमाणगुर्विण्य इति विशेषणञ्च शाखान्तरीयं कात्यायनसूत्रे वत्सतरीश्रुतेः। यथा पयस्विन्याः पुत्रो यूथे च रूपवान् स्यात्। तमलङ्कृत्य यूथमुख्याश्चतस्रोवत्सतर्य्यस्ताश्चालङ्कृत्य एनं युवानं पतिं वो ददानि तेन क्रीडन्तीश्चरथ प्रियेण मानः साप्तजनुषासुभगारायष्पोषेण समिषा मदेम इत्येतयैव ऋचोत्सृजेरन्निति। न चैतदनुसारेण वत्सतरीचतुष्टययुक्तमिति वृषविशेषणं वाच्यम्। तथात्वे तादृशं वृषमिति विशिष्टे वो युष्माकं वत्सतरीणां पतिमित्यनेनान्वयापत्तेः। प्रागुक्तदोषाच्च। न च कात्यायनीय एवकारश्रुतेः केवलमन्त्रेणोत्सर्गः न तु वाक्येन इति वाच्यम्।

एतयैवेत्युक्तैवकारैण सजातीयत्वेन सर्वशाखाप्रत्ययमेकं कर्म इति न्यायप्राप्तस्य कामधेनुमैयतकालिककल्पतरुष्टृतविष्णूक्तस्य ऋगन्तरस्य निवृत्तिः। न वाक्यस्य अतएव पितृदयितापरिशिष्टप्रकाशशूलपाणिकृतपरिशिष्टदीपकलिकाप्रभृतिषु मन्त्राभिधानपूर्वकवाक्येन वृषोत्सर्ग इत्युक्तम्। एवञ्चेन्मन्त्रस्य करणत्वमुपपन्नम्। अन्यथा ददानीत्यनेन मन्त्रान्तरेणोत्सर्गात् तथात्वम्। मन्त्रान्ते कर्मसन्निपात इति न्यायस्याप्यबाधः। यन्मान्ते सम्प्रदानमिति सरलाधृतकाठकश्रुतेरप्यबाधः। व्यक्तमाहापस्तम्बः। 'मन्त्रान्ते कर्मादीनि सन्निपातयेदिति'। समग्रं मन्त्रं पठित्वा कर्म कारयेदित्यर्थः। इति कर्मविपाकः। एवञ्चामुकाकम इति। सोपकरणवत्सतरीचतुष्टययुक्तं वृषमिति चाभिलप्य उत्सर्गः सङ्गच्छते। ततश्च ब्राह्मणेन पठिते मन्त्रे शूद्रस्यापि वाक्येनोत्सर्ग इति। एवं प्रधाने स्वामिफलयोगाद् गुणे प्रतिनिधिः परार्थत्वादिति परिभाषापि सङ्गच्छते। एवं वर्षासु रथकारा आदधीत इति प्रत्यक्षश्रुत्या रथकारस्य मन्त्रपाठपूर्वकाग्निस्थापनरूपाधाने बोधिते तत्र विद्याप्रयुक्तिरस्तु इह तु स्मार्त्ते कर्मणि प्रत्यक्षश्रुत्यभावात्। न तथा किन्तु कृष्णेनाप्यन्त्यजन्मन इति स्मृत्या शूद्रस्य प्रधाने वृषत्यागेऽधिकाराय श्रुतिरबाधितविषयैकैव कल्प्यते न तु मन्त्रपाठायापि कल्प्यते। यथा पितृभ्यो दद्यादित्यत्र बहुवचनेन साहित्यप्रतीतावपि न चतुर्थ्या सहितानां देवतात्वं कल्प्यते। किन्तु अत्र पितरो देवता इत्यापस्तम्बवचने देवता इति बहुत्वस्य पृथक्निर्देशितत्वेन प्रत्येकदेवतात्वस्य प्रतीतस्य अबाधेन पितॄणां प्रत्येकं देवतात्वं कल्प्यते। पितृभ्य इति साहित्यन्त्वभिधानक्रियापेक्षयेत्युक्तम्। तद्वदत्रापि। 'अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्णाति'। इत्याभाषयैनैव प्रधानाधिकारतार्थं

हृश्यते। मनुरपि शूद्रस्य मन्त्रवर्जनकर्मानुष्ठानमाह। 'धर्मे-
प्सवस्तु धर्मज्ञाः सतां वृत्तिमनुष्ठिताः। मन्त्रवर्जं न दुष्यन्ति
प्रशंसां प्राप्नुवन्ति च। ये पुनः शूद्राः स्वधर्मं वेदिनो धर्मं-
प्रासिकामास्त्रैवर्णिकाचारमनिषिद्धमाश्रितास्ते नमस्कारेण
मन्त्रेण पञ्चयज्ञानहापयेत्' इति याज्ञवल्क्यवचनात्। नम-
स्कारमात्रेण मन्त्रेण मन्त्रान्तररहितेन पञ्चयज्ञादिकुर्वाणान्
प्रत्यवायमाप्नुवन्ति ख्यातिञ्च लोके प्राप्नुवन्ति इति कुल्लूकभट्टः।
वत्सतरीयुक्तवृषोत्सर्गस्य प्रधानत्वादादित्यपुराणेऽपि मन्त्रं
विना तावन्मात्रमुक्तम्। यथा 'मुञ्चन्ति वृषभं ये च नील-
मेव सुशोभनम्। लाङ्गूलाकर्षसर्वाङ्गं शृङ्गयुक्तं सुशोभनम्।
कार्त्तिक्यां मुच्यते यस्तु दत्त्वा पापान्नसंशयः। त्रिवर्षास्तथ
गुर्विण्यो दद्यान्नावो वृषस्य च'। एवञ्च ब्राह्मणद्वारा मन्त्र-
पाठोपपत्तेः। 'न स्त्रीणामधिकारोऽस्ति श्राद्धेषु पार्वणादिषु।
कन्यादाने वृषोत्सर्गे ह्यधिकारो भवेद्ध्रुवम्'। इति वचनात्
ब्राह्मणादि स्त्रीणामप्यधिकारः। शिवपुराणे 'स्त्रियः शूद्राश्च
म्लेच्छाश्च ये चान्ये पापयोनयः। नमस्कारेण मन्त्रेण तदेव
फलमाप्नुयुः' इत्यादि छन्दोगपरिशिष्टादौ कर्तृविशेषानभि-
धानेन सर्वाधिकारित्वप्रतीतेः। एवमेव सुमतिसोपानप्रभृ-
तयः। कृष्णेनाप्यन्त्यजन्मन इति वर्णप्रशंसामात्रपरम्।
वृषोत्सर्गेऽनुपनीतस्याप्यधिकारः। 'न ह्यस्य विद्यते कर्म
किञ्चिदामौञ्जिबन्धनात्। अन्यत्रोदककर्मस्वधापितृसंयुतेभ्यः'
इति कल्पतरुधृतवशिष्ठवचनेन प्रतिप्रसवात् ऋगर्थस्तु हे वत्-
सतर्यो वो युष्माकम् एनं युवानं पतिं स्वामिनं ददामीत्युक्तं
पार्थयामि तेन वृषेण सह क्रीडन्तीः खेलयन्त्यश्चरथ भ्रमथ
हे वत्सतर्यो यूयमपि मानः नास्मत् सत्वविषया करिष्यथ
किन्तु मया त्यक्तव्याः। वयं वृषस्य वत्सतरीणाञ्च त्यागेन

रायण्योषेण धनसमृद्धग्रा सामजनुषा समजन्माध्यापकेन देवा भवेन च सम्मदेम हृष्टा भवाम सुभगा लोकस्य प्रिया इति सम्मदेम इति भविष्यत् सामीप्ये वर्त्तमान इति पाणिनिस्मर- णाद्भविष्यदर्थे वर्त्तमानः। नीलवृषलक्षणमाह मत्स्यः। 'लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः। श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते'। वत्सतरीर्विशेषयति स्मृतिः। 'चरतो लोहिता पत्नी पार्श्वाभ्यां नीलपाण्डुरे। पृष्ठतस्तु भवेत् कृष्णा वृषभस्य तु मोक्षणे'। यूपमाह स एव। 'चतुर्हस्तो भवेद् यूपो यज्ञवृक्षसमुद्भवः। वर्त्तुलः शोभनः स्थूलः कर्त्तव्यो वृषमौलिकः'। भविष्ये। 'विल्वस्य वकुलस्यैव काली यूपः प्रशस्यते। शुक्लवासाः शुचिर्भूत्वा ब्राह्मणान् स्वस्तिवाच्य च। कौसंयेद्भारतञ्चैव तथा स्यादक्षयं हविः' इति दानधर्म- स्वर्णवृषोत्सर्गप्रकरणीयवचनात्। अक्षयहविष्कामेन स्वस्ति- वाचनानन्तरं भारतनामोच्चार्य्यम्। 'यद्रात्रौ कुरुते पापं ब्राह्मणस्त्विन्द्रियैश्चरन्। महाभारतमाख्याय पूर्वां सन्ध्यां विमुञ्चति' इति आदित्यपुराणोक्तप्रातर्महाभारतोच्चारणवत्। राढ़देशीयप्रभृतयस्तु विराटपर्व्वाच पाठयन्ति। अत्र ब्रह्मा- दिवरणेऽमुककर्मकर्त्तुं त्वामहं वृणे इति न युक्तम्। एक- कर्त्तृक एव तुमो विधानात्। एवं कृताकृतावेक्षण ब्रह्मकर्म कर्त्तुं ब्रह्मत्वेन इति मैथिलानां वाक्यरचना सर्व्वथा दुष्टा। उपवेशन विशेषस्य ब्रह्मकर्मणोऽनुक्तत्वात् ब्रह्मत्वेनेत्यस्य वैयर्थ्यात्। भिन्नकर्त्तृकत्वेन तुमोऽसम्भवाच्च। तस्मात् ब्रह्म- कर्म्मकरणाय इत्येव वरणे निर्देश्यम्। अत्र सर्व्वशाखाधिकार- न्यायेन गुणोपसंहारन्यायेन च अविरुद्धसकलाङ्गोपसंहारः कर्त्तव्य इति।

अथ प्रेतक्रियाधिकारिणः। धर्मप्रदीपसंवत्सरप्रदीपयोः

'आद्यः क्षतचूडस्तु कुर्वीत उदकं पिण्डमेव च'। एतच्च पुत्रेतरपरम्। 'असंस्कृतः सुतः श्रेष्ठो नापरो वेदपारगः'। इति दायभागधृतात्। अन्यथा सुतत्वेन विशेषोपादानं व्यर्थं स्यात्। श्राद्धेऽनुपनीतस्य मन्त्रपाठाधिकारमाह मनुः। 'नाभिव्याहारयेद् ब्रह्म स्वधानिनयनादृते। शूद्रेण हि समस्तावद् यावद्वेदे न जायते'। अभिव्याहारयेत् वदेदिति यावत्। सार्थे णिच् अत्र प्रथमतो ज्येष्ठपुत्रः। यथा मरीचिः। 'मृते पितरि पुत्रेण क्रिया कार्य्या विधानतः। बहवः स्युर्यदा पुत्राः पितुरेकत्र वासिनः। सर्वेषान्तु मतं कृत्वा ज्येष्ठेनैव तु यत् कृतम्। द्रव्येण चाविभक्तेन सर्वैरेव कृतं भवेत्'। तदभावे यथाक्रमं कनिष्ठपुत्रपौत्रप्रपौत्राः। तथाच विष्णुपुराणम्। 'पुत्रः पौत्रः प्रपौत्रो वा तद्वद्वा भ्रातृसन्ततिः। सपिण्डसन्ततिर्वापि क्रियार्हो नृप जायते'। एतच्च षोड़शश्राद्धपर्य्यन्तम्। तथाच छन्दोगपरिशिष्टम्। 'पितामहः पितुः पश्चात् प्रेतत्वं यदि गच्छति। पौत्रेणैकादशाहादि कर्त्तव्यं श्राद्धषोड़शम्। नैतत् पौत्रेण कर्त्तव्यं पुत्रवांश्चेत् पितामहः'। सपिण्डीकरणपर्य्यन्तमपृथक्कर्त्तव्यमाह लघुहारीतः 'सपिण्डीकरणान्तानि यानि श्राद्धानि षोड़श। पृथक् नैव सुताः कुर्य्युः पृथक्द्रव्या अपि क्वचित्'। एषामभावे पत्नी तथाच शङ्खः। 'पितुः पुत्रेण कर्त्तव्या पिण्डदानोदकक्रिया। तदभावे तु पत्नी स्यात्तदभावे सहोदरः। भार्य्यापिण्डं पतिर्दद्यात् भर्त्रे भार्य्या तथैव च'। इति अपुत्रधनं पत्न्यभिगामि तदभावे दुहितृगामीत्यादिविष्ण्वादिवचनेन धनाधिकारश्रुतेः। तदभावे इति प्रपौत्रपर्य्यन्ताभावपरं पार्वणपिण्डदातृत्वेन धनाधिकारित्वेन च तेषां बलवत्त्वात्। 'अपुत्रा स्त्री यथा पुत्रः पुत्रवत्यपि भर्त्तरि। पिण्डं दद्यात् जलञ्चैव जन्ममात्रस्तु पुत्रिणी

इति विमूलं समूलत्वेऽपि बालदेशान्तरितपुत्रसद्भावविषय-मिति श्राद्धविवेकप्रभृतयः। पत्न्यभावे कन्या। 'अपुत्रस्य तु या पुत्री सैव पिण्डप्रदा भवेत्। तस्य पिण्डान् दशैवैता-नेकाहेनैव निर्वपेत्' इति ऋष्यशृङ्गवचनात् 'गोत्ररिक्थानुगः पिण्डः' इति मनुवचनेन दत्ताद्यपेक्षया तस्यावलम्बत्वात्। कन्याभावे यथाक्रमं वाग्दत्तादत्तादौहित्राः 'दत्तानां चाप्यदत्तानां कन्यानां कुरुते पिता। चतुर्थेऽहनि तास्तेषां कुर्वीरन् सुसमाहिताः'। इति ब्रह्मपुराणवचनात्। ननु 'दुहिता पुत्रवत् कुर्य्यान्मातापित्रोश्च संस्कृता। अशौचमुदकं पिण्डमेकोद्दिष्टं सदा तयोः' इति शङ्खवचनात्। पुत्रानन्तरमेव दुहितृधिकारश्रुतेः। इति चेन्न पत्न्याः प्रथमं धनाधिकारश्रुतेः। यथा याज्ञवल्क्यः। 'पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा। तत्सुतो गोत्रजो बन्धुः शिष्यः सब्रह्मचारिणः। एषामभावे पूर्वेषां धनभागुत्तरोत्तरः' इति। तथा 'मातामहानां दौहित्राः कुर्वन्त्यहनि चापरे'। इति ब्रह्मपुराणात्। 'पौत्रदौहित्रयोर्लोके न विशेषोऽस्ति धर्मतः। तयोर्हि मातापितरौ संभूतौ तस्य देहतः'। इति मनुवचनेन 'पौत्रदौहित्रसंयुक्ता ये तथा चिरजीविनः। प्रियङ्कराश्च ज्ञातीनां ते नराः स्वर्गगामिनः'। इति विष्णुधर्मोत्तरेण पौत्रतुल्यत्वाभिधानाच्च। तेन यथा पुत्राभावे पौत्रस्तथा-दुहित्रभावे दौहित्रः। न च दत्तकन्यादौहित्राभ्यां प्राक् सगोत्रत्वात् सोदराधिकार इति वाच्यम्। गोत्रवत्त्वापेक्षया पिण्डदानादेर्धनसाध्यत्वात् रिक्थग्राहिणो दुहितृदौहित्रयोः प्राबल्यात्। अतएव दुहितृधनाधिकारे तद्बलेन गृहीतोपकारस्य हेतुरित्याहापस्तम्बः। 'अन्तेवास्यर्थांस्तदर्थेषु धर्मकृत्येषु प्रयोजयेत् दुहिता वेति तदर्थेषु मासिकादिना

तत्प्रयोगार्थं धर्मकृत्येषु प्रदृष्टार्थमिति'। गोत्र ऋक्‌थानुगः पिण्डः इति मनूक्तेः। 'अनंशौ क्लीवपतितौ जात्यन्धबधिरौ तथा। उन्मत्तजड़मूकाश्च ये च केचिन्निरिन्द्रियाः'। इति मनूक्तानां 'पितृद्विट्पतितः षण्ढो यश्च स्यादौपपातिकः। औरसा अपि नैतेऽंशं लभेरन् क्षेत्रजाः कुतः'। इति नारदोक्तानाञ्च भागानधिकारिणां पिण्डदानानधिकारः। जात्यन्धबधिरौ जन्मप्रभृति अन्धबधिरौ निरिन्द्रियाः पङ्ग्वादयः। श्रौतस्मार्त्तकर्मानधिकारिणो गृह्यन्ते इति रत्नाकरः। तथाच वृद्धशातातपः। 'चाण्डालं पतितं व्यङ्गमुन्मत्तं शवहारकम्। सूतिकां सूयिकां नारीं रजसा च परिप्लुताम्। श्वकुक्कुट-वराहांश्च ग्राम्यान् संस्पृश्य मानवः। सचैलं सशिरः स्नात्वा तदानीमेव शुध्यति'। व्यङ्गः पाण्यादिविकलः। व्यङ्गोन्मत्तयोः सदाचारहीनत्वात् अस्पृश्यतेति प्रायश्चित्तविवेकः। श्रौतस्मार्त्त-क्रियानधिकारित्वं सदाचारहीनत्वञ्च मूत्रपुरीषाद्यशौचाप-नयनासमर्थत्वेनेति बोध्यम्। सूयिकां प्रसवकारयित्रीं पितृ-द्विट् पोषणोद्दिष्टैहिकविमुखः। औपपातिकः उपपातकैः संसृष्टः। उपपातकीति प्रकाशकारपाठेऽपि स एवार्थः। अपपात्रित इति पाठे तु राजवधादिदोषेण बान्धवैर्यस्य घटाप-वर्जनं कृतमिति कल्पतरुः। व्यक्तं याज्ञवल्क्येन 'न ब्रह्म-चारिणः कुर्युरुदकं पतिता न च। पाषण्डमाश्रितास्तेनान व्रात्या न विकर्मणः। गर्भभर्त्तृद्रुहश्चैव सुरापाश्चैव योषितः'। पाषण्डं त्रयीवाह्यधर्मः। स्तेनाः सततं चौर्य्यवृत्तयः। व्रात्याः-षोड़शवर्षपर्य्यन्तमप्राप्तोपनयनाः। विकर्मणः आलस्येना-श्रद्धाकृतया स्वधर्माननुष्ठायिनः। व्यङ्गत्वादिना स्वधर्मानु-ष्ठानासमर्थाश्च बोध्या इति 'कश्चित् क्षिपति सत्पुत्रो दौहित्रो वा सहोदरः। गृहीत्वास्थीनि तत्रस्थ नीत्वा तोये विनिः-

निपेत्'। इत्यादिपुराणे क्रमदर्शनादत्रापि दौहित्राभावे सोदरः पूर्वोक्तशङ्खवचनेऽप्येवं क्रमो बोध्यः। अत्र ज्येष्ठः कनिष्ठयाविशेषात् नानुजस्य तथाग्रज इति छन्दोगपरिशिष्टं कनिष्ठभ्रातृसद्भावविषयं तयोरभावे तथाविधौ वैमात्रेयौ। 'भ्रातुर्भ्राता स्वयं चक्रे तद्भार्य्या चैव विद्यते। तस्य भ्रातृसुतश्चक्रे यस्य नास्ति सहोदरः'। इति ब्रह्मपुराणाद्वैमात्रेयस्यापि एकजातत्वेन भ्रातृत्वात्। देशान्तरस्थक्लीवैकवृषणान् सहोदरानित्यादि छन्दोगपरिशिष्टेन परिवेदने वैमात्रेयस्य भ्रातृत्वप्रसक्तावसहोदरानित्यनेन प्रतिप्रसवाच्च। पितृव्यपुत्रादौ भ्रातृपदप्रयोगो गौणः। गुणश्च वीजिपुरुषापेक्षया समानसंख्यजनकजन्यत्वमिति। धनिपुत्रादिपिण्डत्रयदातुः सोदरपुत्रस्य धनिपित्रादिपिण्डत्रयदातृत्वाद्वैमात्रेयस्य धनाधिकारित्वेन बलवत्त्वाच्च। ततश्च सहोदर इति पूर्व्वार्द्धानुरोधात् वैमात्रेयपरमपि अन्यथा सहोदराभावे वैमात्रेयसत्त्वे वैमात्रेयपुत्राधिकारापत्तेः। तेन वैमात्रेयाभावे सोदरवैमात्रेयभ्रातृक्रमवत् सोदरपुत्रस्तदभावे वैमात्रेयपुत्रः। तस्यात्मभोग्यपिण्डदातृतया धनाधिकारित्वेन बलवत्वात् तस्यातिदिष्टपुत्रत्वाच्च। तदभावे पिता। 'पुत्रो भ्राता पितावापि मातुलो गुरुरेव च। एते पिण्डप्रदा ज्ञेयाः सगोत्राश्चैव बान्धवाः' इति प्रचेतो वचनात्। 'न पुत्रस्य पिता दद्यात्' इति छन्दोगपरिशिष्टम्। भ्रातृपुत्रपर्य्यन्तसद्भावविषयम्। तदभावे माता। 'पुत्रो भ्रातापिता वापि इत्यत्रापिशब्देन मातुः समुच्चयात्। पितरौ भ्रातरस्तथेत्यादौ धनाधिकारे तथा दर्शनाच्च। अत एव श्राद्धविवेके पितुरभावे तुल्यन्यायतया मातापीत्युक्तमिति। तदभावे पुत्रवधूः। तथाच शङ्खः। भार्य्यापिण्डं पतिर्दद्यात् भर्त्रे भार्य्या तथैव च। श्वश्र्वादेश्च स्नुषा चैव तदभावे द्विजो

त्तमः'। पत्न्यादिपदात् श्वशुरादेरपि परिग्रहः। तत्र सुपात्वा-भावात् द्विजोत्तम इत्यत्र सपिण्डक इति मैथिलानां पाठः। स च सपदोपात्तसपिण्डविशेषाभावे 'अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं भवेत्' इति धनाधिकारे तथा दर्शनादत्रापि सन्नि-धितारतम्येन मातृपुत्रवधूः पौत्रीपौत्रवधूः प्रपौत्रीप्रपौत्रवधूः पितामहः पितामही पितृव्यादयः सपिण्डाश्चाधिकारिणः। पुत्राभावे सपिण्डा इति वक्ष्यमाणवचनात्। मनुवचनस्य मैथि-लपाठाच्च तदभावे समानोदकाः। सपिण्डसन्ततिर्वापि इति वक्ष्यमाणात्। सपिण्डसन्ततिः समानोदका इत्यर्थः। तदभावे सगोत्राः सगोत्रास्त्वेवेति गोत्र ऋक्थानुमः पिण्ड इत्युक्तत्वात्। एषामभावे सर्वेषां समानोदकसन्ततिरिति वक्ष्यमाणाच्च। तदभावे मातामहः। 'मातामहानां दौहित्राः कुर्वन्त्यहनि चापरे। तेऽपि तेषां प्रकुर्वन्ति द्वितीयेऽहनि सर्वदा' इति ब्रह्मपुराणात्। तदभावे मातुलः तदभावे भागिनेयः 'मातुलो भागिनेयस्य स्वस्रीयो मातुलस्य च' इति शातातपीय-पाठक्रमात् तदभावे सन्निधिक्रमेण मातामहसपिण्डाः। तदभावे मातामहसमानोदकाः। तथाच विष्णुपुराणम्। 'सपिण्डसन्ततिर्वापि क्रियार्हा नृप जायते। एषामभावे सर्वेषां समानोदकसन्ततिः। मातृपक्षस्य पिण्डेन सम्बन्धा ये जलेन वा' इति वचनात्। तदभावे श्वशुरः तदभावे जामाता 'जामातुः श्वशुरास्तेषां तेऽपि च संयताः' इति ब्रह्म-पुराणपाठक्रमात् तदभावे पितामहीभ्राता। 'भागिनेय-सुतश्चैव सर्वेषामपरेऽहनि। श्राद्धं कार्यञ्च प्रथमे स्नात्वा दत्त्वा जलक्रियाम्' इति ब्रह्मपुराणात्। अपरेऽहनि इत्यत्रा-शौचान्त्यदिनस्येति शेषः। तदभावे यथाक्रमं शिष्यर्त्विगा-चार्याः। गौतमेन 'पुत्राभावे सपिण्डाश्च मातृसपिण्डा वा

शिष्या वा दद्युः तदभावे ऋत्विगाचार्य्यौ' इत्युक्तत्वात्। तदभावे सुहृत्पितृसुहृदो मित्राणां तदपत्यानामिति ब्रह्मपुराणपाठक्रमात् तदभावे एकग्रामवासी। 'संहतानसमर्ते-र्वापि कार्य्या प्रेतस्य सत्क्रिया' इति विष्णुपुराणात् तदभावे तद्धनं गृहीत्वा यः कश्चित् सवर्णः। 'उच्छन्नबन्धु ऋक्थाद्वा कारयेदवनीपतिः' इति विष्णुपुराणात्। शौद्रदैहिकमधिकृत्य विष्णुपुराणं 'ब्राह्मणस्त्वन्यवर्णानां न करोति कदाचन। कामाल्लोभाद्भयान्मोहात् कृत्वा तज्जातितामियात्'। स्त्रियास्तु यथाक्रमं पुत्रपौत्रप्रपौत्राः विष्णुपुराणे पुत्रः पौत्रः प्रपौत्रो वेत्यविशेषश्रुतेः। तदभावे कन्या। अपुत्रस्य च या पुत्री तस्योद्देश्यगतलिङ्गाविवक्षया स्त्रीपुंसाधारणत्वात् धनाधिकारित्वाच्च तदभावे वाग्दत्ता दत्तानामपि अदत्तानामित्यत्रापि पितृपदस्य मातृपदोपलक्षणत्वात्। तदभावे दत्ता 'दुहिता पुत्रवत् कुर्य्यान्मातापित्रोश्च संस्कृता' इति मनुवचनात्। तदभावे दौहित्रः प्रागुक्तब्रह्मपुराणे तथा दर्शनात्। पौत्रदौहित्रयोर्लोके न विशेषोऽस्तिधर्मतः। तयोर्हि मातापितरौ सम्भूतौ तस्य देहतः'। इत्यनेन यथा पुत्राभावे पौत्रः तथा दुहित्रभावे दौहित्रः इति प्रागेव उक्तत्वात्। 'मातुलो भागिनेयस्य स्वस्रीयो मातुलस्य च। श्वशुरस्य गुरोश्चैव सख्युर्मातामहस्य च। एतेषां चैव भार्य्याभ्यः स्वसुर्मातुः पितुस्तथा। पिण्डदानन्तु कर्त्तव्यमिति वेदविदां स्थितिः' इति वृद्धशातातपवचनेन मातामहस्य साक्षात् दौहित्रेण पिण्डदानश्रुतेः धनाधिकारित्वाच्च। दौहित्राभावे सपत्नीपुत्रः। तस्य पुत्रत्वस्मरणात्। यथा मनुः। 'सर्वासामेकपत्नीनामेका चेत् पुत्रिणी भवेत्। सर्वास्तास्तेन पुत्रेण प्राह पुत्रवतीर्मनुः'। एकपत्नीनामिति एकः पति-

र्येषामिति अत्र सपत्नीपुत्रस्य पुत्रत्वातिदेशात् तत्सत्त्वेऽपि स्त्रीणां सपिण्डनं मैथिलैरुक्तं तन्न 'पुत्रेणैव तु कर्त्तव्यं सपिण्डीकरणं स्त्रियाः। पुरुषस्य पुनस्त्वन्ये भ्रातृपुत्रादयोऽपि ये'। इति लघुहारीतवचने एवकारेणातिदिष्टपुत्रनिषेधात्। अतएवोत्तरार्द्धे भ्रातृपुत्रोपादानं सङ्गच्छते। अन्यथा पुंसां तत्रपुत्रत्वातिदेशात् पुत्रत्वेनैव प्राप्तेः भ्रातृपुत्रोपादानं व्यर्थं स्यात्। तमाह मनुः। 'भ्रातॄणामेकजातनामेकश्चेत् पुत्रवान् भवेत्। सर्वे ते तेन पुत्रेण पुत्रिणो मनुरब्रवीत्'। एकजातानामेकपितृमातृजातानां तथाच बृहस्पतिः। 'यद्येकजाता बहवो भ्रातरः स्युः सहोदराः। एकस्यापि सुते जाते सर्वे ते पुत्रिणो मताः'। एतन्न्यायमूलं तदिति चेन्न आदिपदग्राह्येषु। 'भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्य एव वा। सहपिण्डक्रियां कृत्वा कुर्य्यादभ्युदयं ततः'। इति लघुहारीतोक्तेषु न्यायानुपपत्तेः। भ्राता वेति वाशब्दात् तत् पूर्वेषां दौहित्रान्तानां तदपेक्षया प्रधानाधिकारिणां समुच्चयः। अतएव सपिण्डत्वेनैव भ्रातृवत् पुत्रयोरधिकारसिद्धौ पृथगुपादानं प्राधान्यस्थापनार्थम्। पुत्रत्वातिदेशफलन्तु पुन्नामनरकनिस्तारः। अतस्तत्सत्त्वे चैत्रजाद्यकरणञ्च। तथाहि 'पुन्नाम्नो नरकाद् यस्मात्त्रायते पितरं सुतः। मुखसन्दर्शनेनापि तदुत्पत्तौ यतेत सः'। इति मनुवचने पुन्नामनरकत्राणाय पुत्रोत्पादनं विहितम्। तच्च फलं यद्यतिदिष्टपुत्राभ्यां भ्रातृसपत्नीजाभ्यां निष्पन्नं तदासिद्धे इच्छाविरहात् तदुपायान्तरपुत्रप्रतिनिधीभूतचैत्रजादेर्नोपादानम्। पुत्रोत्पादनन्तु तदापि कार्य्यं पुत्रसत्त्वेऽपि पुत्रान्तरेच्छाविधानेन तत्कर्त्तव्यताप्रतीतेः। यथा मत्स्यपुराणम्। 'एष्टव्या बहवः पुत्रा यद्यप्येको गयां व्रजेत्। यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत्'।

एवमेव कल्पतरुपारिजातशूलपाणिमहामहोपाध्यायरत्नाकर-वाचस्पतिमिश्रादयः। स्त्रीणामपि पुत्रात् पुन्नामनरक-निस्तारणमाहतुः रत्नाकरे शङ्खलिखितौ। 'आत्मा पुत्र इति प्रोक्तः पितुर्मातुरनुग्रहात्। पुन्नाम्नस्त्रायते पुत्रस्तेनापि पुत्र-संज्ञितः'। पूर्वोक्तलघुहारीतवचने पुत्रेणेति तत्सत्त्वमात्र-विवक्षितम्। 'सपिण्डीकरणन्तासां पुत्राभावे 'न विद्यते'। इति मार्कण्डेयपुराणैकवाक्यत्वात्। 'यानि पञ्चदशाद्यानि अपुत्रस्येतराणि च। एकस्यैव तु दातव्यमपुत्रायाश्च योषितः'। इति छन्दोगपरिशिष्टेन अपुत्राया एकाद्यपञ्चदशश्राद्धैः प्रेतत्व-परिहारोक्तत्वाच्च एतत् पत्युरभावे द्रष्टव्यम्। 'अपुत्रायां मृतायान्तु पतिः कुर्य्यात् सपिण्डनम्। श्वश्र्वादिभिः सहैवास्याः सपिण्डीकरणं भवेत्' इति पैठीनसिवचनात्। ततश्च शिशौ पुत्रेऽन्येनापि सपिण्ड्यते। एवं पतिसत्त्वेऽपि। अत एव मैथिलैरवीवायाः सपिण्डनं नास्तीत्युक्तम्। तदभावे पतिः 'भार्य्यां पिण्डं पतिर्दद्यात्' इति शङ्खवचनात्। न जायायाः पतिः कुर्य्यादपुत्राया अपि क्वचित्' इति छन्दोगपरिशिष्ट-वचनम्। सपत्नीपुत्रपर्य्यन्तसद्भावविषयम्। पत्यभावे स्नुषा 'श्वश्र्वादेश्च स्नुषा चैव' इति यमवचनात्। सान्निध्यक्रमेण सपिण्डाः। शङ्खवचने। तदभावे सपिण्डक इति मैथिल-पाठात्। तदभावे सपिण्ड इति पूर्वोक्त गोतमवचने सामान्यतः श्रुतेश्च। तदभावे समानोदकाः। सपिण्डसन्ततिर्वेत्यविशेषश्रुतेः। तदभावे सगोत्राः। समानोदकसन्ततिरिति वक्ष्यमाणात्। श्राद्धविवेकेऽप्येवम्। एषामभावे पिता 'दत्तानाञ्चाप्यदत्तानां कन्यानां कुरुते पिता'। इत्युक्तत्वात् तदभावे भ्राता। 'पुत्रो भ्राता पिता वापि'। इत्यविशेष श्रुतेः। तदभावे यथाक्रमम्। दायभागोक्तोपकारतारतम्येन

'मातुलो भागिनेयस्य स्वस्रीयो मातुलस्य च। श्वशुरस्य गुरोश्चैव सख्युर्मातामहस्य च। एतेषाञ्चैव भार्य्याभ्यः स्वसुर्मातुः पितुस्तथा। पिण्डदानन्तु कर्त्तव्यमिति वेदविदां स्थितिः' इति शातातपवचनात्। भगिनीपुत्रभर्त्तृभागिनेयभ्रातृपुत्र-जामातृभर्त्तृमातुलभर्त्तृशिष्याः पत्न्यपेक्षया पौत्रादिवत् पिण्ड-दानतारतम्येन क्रमेणाधिकारिणः। तथाहि तत्पिण्डतत्पुत्र-देयतत्पित्रादिपिण्डत्रयदातृत्वात् भगिनीपुत्रः। तदभावे भर्त्तृ-भागिनेयः। पुत्राद्भर्त्तुर्दुर्बलत्वेन तत् स्थानपातिनोरपि बला-बलस्य न्याय्यत्वेन तद्भर्त्तृदेयपुरुषत्रयपिण्डतत्भर्त्तृपिण्ड-दत्वात्। तदभावे भ्रातृपुत्रः। तत्पिण्डतत्पुत्रदेयतत्-पित्रादिपिण्डद्वयदत्वात्। तदभावे जामाता। 'मातृस्वसा मातुलानी पितृव्यस्त्री पितृस्वसा। श्वश्रूः पूर्वजपत्नी च मातृतुल्याः प्रकीर्त्तिताः'। इति बृहस्पतिवचनेन मातृष्वस्रा-दीनां मातृतुल्यत्वाभिधानात्। स्वस्रीयाद्यैः सह जामातुः पुत्रतुल्यत्वप्रतीतेः। अतएव तेषां धनभागित्वमाह बृह-स्पतिः। 'यदासामौरसो न स्यात् सुतो दौहित्र एव वा। तत्सुतो वा धनं तासां स्वस्रीयाद्याः समाप्नुयुः'। धन-ग्राहित्वेनापि पिण्डदातृत्वमाह मनुः। 'गोत्र क्रथानुगः-पिण्डः' इति। तदभावे भर्त्तृमातुलभर्त्तृशिष्याः क्रमेणाधि-कारिणः। शातातपीयपाठक्रमानुरोधात्। प्रातिस्विका-नामभावे पितृवंश्यमातृवंश्यौ। 'पितृमातृसपिण्डैश्च समान-सलिलैर्नृप' इति ब्रह्मपुराणेऽविशेषश्रुतेः। तयोरभावेऽसम्बन्धी द्विजोत्तमः। पूर्वोक्तशङ्खवचने द्विजोत्तम इति गौड़ीयपाठात्। संघातान्तर्गतेर्वापीति अविशेषश्रुतेः। त्रिधाक्रियाकर्त्तृत्व-माह विष्णुपुराणम्। 'पुत्रः पौत्रः प्रपौत्रो वा तद्वद्वा भ्रातृ-सन्ततिः। सपिण्डसन्ततिर्वापि क्रियार्हा नृप जायते।

एषामभावे सर्व्वेषां समानोदकसन्ततिः। मातृपक्षस्य पिण्डेन सम्बन्धा ये जलेन वा। कुलद्वयेऽपि चोत्सन्ने स्त्रीभिः कार्य्या क्रिया नृप। संघातान्तर्गतैर्वापि कार्य्या प्रेतस्य सत्क्रिया। उत्सन्नबन्धु रिक्थाद्वा कारयेदवनीपतिः। पूर्व्वाः क्रिया मध्यमाश्च तथा चैवोत्तराः क्रियाः। त्रिप्रकाराः क्रिया ह्येता-स्तासां भेदान् शृणुष्व मे। आदाहवार्य्यायुधादिस्पर्शाद्यन्ताश्च याः क्रियाः। ताः पूर्व्वा मध्यमा मासिमास्येकोद्दिष्टसंज्ञिताः। प्रेते पितृत्वमापन्ने सपिण्डीकरणादनु। क्रियन्ते याः क्रिया पित्र्याः प्रोच्यन्ते तानृपोत्तराः। पितृमातृसपिण्डैश्च समान-सलिलैर्नृप। संघातान्तर्गतैर्वापि राज्ञा वा धनहारिणा। पूर्व्वक्रियास्तु कर्त्तव्याः पुत्राद्यैरेव चोत्तराः। दौहित्रैर्वा नर-श्रेष्ठ कार्य्यास्तत्तनयैस्तथा। मृताहनि तु कर्त्तव्याः स्त्रीणा-मप्युत्तराः क्रियाः। प्रतिसंवत्सरं राजन् एकोद्दिष्टं विधा-विधानतः'। आदाहेति दाहावधेरशौचान्तविहितवार्य्यायु-धादिस्पर्शाद्यन्तास्ताः पूर्व्वा मासिमासौत्येकादशाहादि सपि-ण्डनान्तप्रेतक्रियोपलक्षणम्। सपिण्डनोत्तराः पार्व्वणादि-क्रिया उत्तराः। अत्र पुत्रादिसपिण्डादयः पूर्व्वाः क्रिया अवश्यं कुर्य्युः। मध्यमक्रियायामनियमः। उत्तरक्रियायां पुत्रादयो भ्रातृसन्ततिपर्य्यन्ता नियताः। श्राद्धविवेकेऽप्येवम्। दौहित्रैर्व्वेति वाशब्दः समुच्चयार्थः तेन दौहित्रोऽप्युत्तरक्रियायां नियताधिकारी। उत्तमैर्दौहित्रतनयैरिति पुत्रिकापुत्रविषय-मिति कल्पतरुः। कर्त्तृप्रकरणात् स्त्रीणामिति वा कर्त्तरि क्त्य इति कर्त्तरि षष्ठी। उत्तरक्रियायां प्रतिसंवत्सरमेको-द्दिष्टविधाननियमात्। न पार्व्वणवृद्धिश्राद्धादौ स्त्रीणामधि-कारः। मार्कण्डेयपुराणम्। 'सर्व्वाभावे स्त्रियः कुर्य्युः स्वभर्त्तॄणाममन्त्रकम्। तदभावे च नृपतिः कारयेत् स्वकुटु

न्मवत्। स्त्रीणामप्येवमेवैतदेकोद्दिष्टमुदाहृतम्। मृताहनि यथान्यायं नृणां यद्वदिहोदितम्’। स्त्रियोऽत्रासवर्णोढ़ाऽपरिणीता वेति श्राद्धविवेकः। सवर्णोढ़ायाः पुत्रपौत्रपर्य्यन्ताभाव एव विधानात्। स्त्रीणामिति तु संप्रदानपरम्। एवमेवामन्त्रकमिति श्राद्धविवेकः। अत्र स्त्रिय इत्यस्यासवर्णोढ़ापरिणीतापरत्वव्याख्यानात्। स्त्रीणां मन्त्रनिषेधोऽपि तत् संप्रदानकश्राद्ध एवावगम्यते। न तु स्त्रीमात्रसंप्रदानके। एतच्च विप्रेतरपरं तस्य हीनवर्णश्राद्धनिषेधात्। कल्पतरौ तु स्त्रीणामपि एवमिति यादृशेन सम्बन्धेन पितृव्यत्वादिना पुरुषाणामेकादशाहादिश्राद्धं तादृशेनैव सम्बन्धेन स्त्रीणामेतत् कर्त्तव्यमिति। एतद्व्याख्याने स्त्रीसम्प्रदानकश्राद्धे सुतरां मन्त्राः पाठ्याः। याज्ञवल्क्येनापि समन्त्रकमेकोद्दिष्टं सपिण्डनञ्चोक्ता एतत् सपिण्डीकरणमेकोद्दिष्टं स्त्रिया अपि इत्यनेन स्त्रीया अपि तथैवेत्युक्तम्। ‘मातुः सपिण्डीकरणं पितामह्या सहोदितम्। यथोक्तेनैव कल्पेन पुत्रिकाया न चेत् सुतः’। इति छन्दोगपरिशिष्टेनापि यथोक्तेनैव कल्पेनेत्यनेन मन्त्रादिकमतिदिष्टम्। व्यवहारोऽपि तथेति।

तदयं संक्षेपः। ज्येष्ठपुत्रकनिष्ठपुत्रपौत्रप्रपौत्र अपुत्रपत्नीकर्मासमर्थपुत्रयुक्तपत्नी-कन्या वाग्दत्तादत्त कन्यादौहित्रकनिष्ठसहोदरज्येष्ठसहोदर-कनिष्ठवैमात्रेयज्येष्ठवैमात्रेयकनिष्ठसहोदरपुत्र ज्येष्ठसोदरपुत्र कनिष्ठवैमात्रेयपुत्रज्येष्ठवैमात्रेय-पुत्रपितृमातृपुत्रवधूपौत्रीदत्तापौत्रीपौत्रवधू-प्रपौत्री-दत्ताप्रपौत्रीपितामह पितामही पितृव्यादिसपिण्डसमानोदकसगोत्रमातामहमातुलभागिनेय मातृपक्षसपिण्डतत्समानोदक असवर्णाभार्य्या अपरिणीतास्त्रीश्वशुरजामातृपितामहीभ्रातृशिष्यर्त्विमाचार्य्यमित्रपितृमित्र एकग्रामवासीगृही-

तवेतनसजातीयाः षट्चत्वारिंशत्प्रकाराः क्रमेणाधिकारिणः
स्त्रियास्तु ज्येष्ठपुत्रकनिष्ठपुत्रपौत्रप्रपौत्रकन्यावाग्दत्तादत्ता-
दौहित्रसपत्नीपुत्रपतिस्नुषासपिण्डसमानोदकसगोत्र-पितृभ्रातृ-
भगिनीपुत्रभर्त्तृभागिनेय भ्रातृपुत्रजामातृभर्त्तृमातुलभर्त्तृ-
शिष्यपितृसमानोदकपितृवंश्याः मातृसमानोदकमातृवंश्या-
द्विजोत्तमाश्चतुर्विंशतिप्रकारा अपि इति यत्र तु कतिचित्
श्राद्धानि कृत्वा कश्चिन्मृतस्तदवशिष्टानि प्रेतश्राद्धानि तदन-
न्तराधिकारिणा कार्य्याणि न तु सर्वाणि 'सपिण्डीकरणा-
न्तानि यानि श्राद्धानि षोड़श। पृथङ्नैव सुताः कुर्य्युः पृथग्-
द्रव्या अपि क्वचित्' इत्युक्तत्वात् यत्तु श्राद्धचिन्तामणौ।
'एकोद्दिष्टन्तु कर्त्तव्यं पाकेनैव सदा स्वयम्। अभावे पाक-
पात्राणां तदहः समुपोषणम्' इति लघुहारीतवचनात्। पाक-
पात्राभावः पाकसामग्र्यभावोपलक्षकः। तदापि नामश्राद्धं
किन्तूपोषणमेव श्राद्धस्थानीयमित्यर्थः। स्वयमित्यभिधानाद-
पाटवादिनापि नान्यद्वारा कारयितव्यम्। अतएव उपवासेनैव
श्राद्धस्थानीयेन तदकरणप्रायश्चित्तेनैव कृतकृत्यतया श्राद्ध-
विघ्न इति वचनादपि नैकादश्यामनुष्ठानमिति तन्न षोड़श-
श्राद्धाधिकारिणां कदाचित्तथात्वे। 'यस्यैतानि न दीयन्ते
प्रेतश्राद्धानि षोड़श। पिशाचत्वं ध्रुवं तस्य दत्तैःश्राद्धशतै-
रपि'। इति यमवचनेन षोड़शश्राद्धाभावे प्रेतत्वपरीहारो
न स्यात्। तस्मादुपवासो न श्राद्धार्थः किन्तु तदानीन्तना-
करणप्रायश्चित्तार्थः। यथा स्वकालाकृतसंस्कारे प्रायश्चित्तं
कृत्वा कालान्तरे तत्करणम्। तथात्रापि तद्दिने उपवासं
कृत्वा एकादश्यां श्राद्धं कर्त्तव्यमिति। एकोद्दिष्टं नान्यद्वारा
कार्य्यमित्यत्रापि गोत्रजेतरत्वेनेति विशेषणीयम्। 'न कदा-
चित् पयोत्राय श्राद्धं कार्य्यमगोत्रजैः' इति प्रेतश्राद्धे तत्र-

पुराणात्। अत्र हि नागोत्रजस्य साक्षात् कर्त्तृत्वं निषिध्यते। स्वगोत्रायेत्यत्र सम्बन्धापत्तेः। तस्मात् अगोत्रजैर्द्वारभूतैः सगोत्राय श्राद्धं न कार्य्यमित्यस्यार्थः। तथाच पर्य्युदासपक्षे सगोत्रजद्वारा कर्त्तव्यमिति सुव्यक्तमेव प्रसज्यपक्षे तु अगोत्रजविशेषणस्वरसात् सगोत्रजलाभः प्रेतश्राद्धधर्मग्राहित्वात्। सांवत्सरिकमपि तथेति श्राद्धविवेकः। कल्पतरुरत्नाकरयोस्तु सगोत्रायेति पठितम्। स्वम् आत्मीयं गोत्रं यस्य स स्वगोत्रः विद्यमानगोत्र इत्यर्थः। तस्मै श्राद्धं कर्त्तव्यं तस्य गोत्रे विद्यमाने अन्यगोत्रेण संस्तालाम्सगतेन राज्ञा वा श्राद्धं न कर्त्तव्यमिति व्याख्यातञ्च एतन्मतेऽप्यूढदुहित्रादीनां असपिण्डत्वेऽपि न निषेधः। वस्तुतस्तु तत्पाठेऽपि कर्मधारयापेक्षया बहुव्रीहेर्जघन्यत्वात् स्वम् आत्मीयञ्च तत् गोत्रञ्चेति तस्मै अन्य गोत्रद्वारा श्राद्धं न कार्य्यमित्यर्थः। अत्र गोत्रं कुलं 'सन्ततिर्गोत्रजननकुलान्यभिजनान्वयौ' इत्यमरकोषात् ततो लघुहारीतवचने स्वयं पदं स्वगोत्रपरम्। अन्यथा ब्रह्मपुराणे अगोत्रजपदवैयर्थ्यापत्तेः। न च पाकस्याङ्गत्वेन प्रधानतिथिकर्त्तव्यतानियम इति वाच्यम्। 'व्रतोपवासनियमे घटिकैका यदा भवेत्। सा तिथिः सकला ज्ञेया पित्र्यर्थे चापराह्णिकी' इति देवलवचनेन मुहूर्त्तमात्रलाभेऽपि कर्त्तव्यतोपदेशात् तदानीं पाके तदसम्भवात्। एवं उद्दीच्याङ्गशेषभोजनेऽपि न तन्नियम इति। पाके सपिण्डाधिकारमाह देवलः। 'तथैवामन्त्रितो दाता प्रातः स्नातः सहाम्बरः। आरभेत नवैः पात्रैरन्वारब्धं सबान्धवाः'।

अथ सपिण्डादिविचारः। मत्स्यपुराणे। 'लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः। पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम्'। नन्वेवं भ्रात्रादिभिः सह पिण्ड-

तल्लेपभोक्तृत्वासम्भवात् कथं सपिण्डत्वमिति चेदुच्यते। तेषा-मपि पिण्डलेपयोः सम्बन्धोऽस्ति तथाच बौधायनः। 'प्रपिता-महः पितामहः पिता स्वयं सोदर्य्यभ्रातरः सवर्णायाः पुत्रः पौत्रः प्रपौत्रो वा एतानविभक्तदायादान् सपिण्डानाचक्षते। विभक्तदायादान् सकुल्यानाचक्षते सत्स्वङ्गजेषु तद्गामी ह्यर्थो भवति' इति अस्यार्थः पित्रादिपिण्डत्रयेषु सपिण्डनेन भोक्तृत्वात्। पुत्रादिभिस्त्रिभिस्तत्पिण्डदानात्। यश्च जीवन् यस्य पिण्डदाता स मृतः सन् सपिण्डनेन तत्पिण्डभोक्ता एवं सति मध्यस्थितः पुरुषः पूर्वेषां जीवन् पिण्डदाता मृतः सन् तत्पिण्डभोक्ताऽपरेषां जीवतां पिण्डसम्प्रदानभूत आसीत्। मृतैश्च तैः सह दौहित्रादिदेयपिण्डभोक्ता अतो येषामयं पिण्डदाता ये चास्य पिण्डभोक्तारस्तेऽविभक्तं पिण्ड-रूपं दायमश्नन्तीति अविभक्तदायादाः सपिण्डा इति। इदञ्च सपिण्डत्वं सकुल्यत्वञ्च दायग्रहणार्थम् अशौचाद्यर्थन्तु पिण्ड-लेपभुजामपि 'लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः'। इति प्रागुक्तमत्स्यपुराणात्। वक्ष्यमाणकूर्मपुराणशङ्खलिखित-वचनाच्च। पिण्डे यथा परस्परं भोक्तृत्वं तथा लेपे तुल्य-न्यायात्। हारलतायां कूर्मपुराणम्। 'सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते। समानोदकभावस्तु जन्मनाम्नोरवेदने। पिता पितामहश्चैव तथैव प्रपितामहः। लेपभाजश्चतुर्थाद्याः सापिण्ड्यं साप्तपौरुषम्'। लेपभागिभ्यस्तूर्द्ध्वं यावज्जन्मनाम्नो-रवेदनं यावदमुकनाम्नोऽस्मात् पूर्वपुरुषादयं जात इति विशेषः अयमस्मत् कुले जात इति सामान्यतो वा ज्ञायते तावत्समा-नोदकत्वमिति हारलता। अत्र परवचनेनैव साापिण्ड्यसिद्धौ पूर्ववचनपूर्वार्द्धं जीवत्पितृकत्वादिना अधिकपुरुषेषु पिण्ड-लेपसम्बन्धेऽपि सपिण्डतानिवृत्तिज्ञापनाय। सर्वदेशीया-

[illegible] तथा। यथा श्राद्धविवेकेऽपि [illegible] नित्यश्राद्धे विचार्य उक्तः। मार्कण्डेयपुराणम्। 'नित्यक्रियां पितृणान्तु केचिदिच्छन्ति सत्तमाः। न पितृणान्तथैवान्ये शेषं पूर्ववदाचरेत्'। अत्र पूर्वोक्तात् पितृणां प्राप्तौ न पितृणामित्यत्र पुनः पितृणां ग्रहणं सनकादीनामशोत्सर्गाभ्यनुज्ञानार्थमिति फलान्तरमुक्तं हरिशर्मणापि अन्यार्थं पुनर्वचनमिति लिखितम्। अथ यः खलु पिण्डान् दत्त्वैव मृतः परतश्चाप्राप्तपितृभावः स कथं सपिण्डः। एकपिण्डदातृत्वभोक्तृत्वलक्षणसम्बन्धाभावादिति चेत् तद्योग्यतयेति ब्रूमः। योग्यताप्रयोजकञ्च सामान्यशास्त्रविषयत्वम्। ततश्चात्मतिवृद्धप्रपितामहावधिकाधस्तनानां षण्णां पुंसां प्रत्येकापेक्षया सप्तानामेकगोत्राणां स्वावधिपरतनानां सप्तानाञ्च सापिण्ड्यं पिण्डलेपयोर्दातृत्वभोक्तृत्वसम्बन्धादिति स्त्रीणान्तु भर्तृसापिण्ड्येन सापिण्ड्यम्। प्रत्तानां भर्तृसापिण्ड्यमिति वचनात्।

नन्वेवं कन्यायाः कथं सपिण्डतेति चेत् आदिपुराणवचनात् त्रैपुरुषं सापिण्ड्यम्। यथा 'सपिण्डता तु कन्यानां सवर्णानां त्रिपौरुषी'। अत्र कन्यानामनूढानां अप्रत्तानां त्रिपौरुषमिति वशिष्ठवचनात्। तेन आत्मपञ्चमे वृद्धप्रपितामहे सापिण्ड्यं निवर्त्तते इति प्रतिपादितम्। अतएव कन्यायाः प्रपितामहभ्राता तत् सन्ततिभिः सह सापिण्ड्याभावात् कन्यामरणजननयोस्तेषां सपिण्डाशौचं नास्ति किन्तु समानोदकनिमित्तमेवाशौचमिति एवं तेषामपि जननमरणयोः कन्यानामिति शूलपाणिमहामहोपाध्यायाः। यत्तु कूर्मपुराणम्। 'अप्रत्तानां तथा स्त्रीणां सापिण्ड्यं साप्तपौरुषम्। प्रत्तानां भर्तृसापिण्ड्यं प्राह देवः पितामहः'। इति रत्नाकरधृतम्। तद्विवाहे पितृपक्षविषयं [illegible] यथा विष्णुपुराणे



'सप्तमीं पितृपक्षाच्च मातृपक्षाच्च पञ्चमीम्। उद्वहेत द्विजो भार्य्यां न्यायेन विधिना नृप'। सप्तमीं पञ्चमीं हित्वेति शेषः। भर्त्तृसापिण्ड्यमित्यत्र साप्तपौरुषमित्यनुषज्यते। तेन भर्त्तृसमानसापिण्ड्यमित्यर्थः। शङ्खलिखितौ। 'सपिण्डता तु सर्वेषां गोत्रतः साप्तपौरुषी। पिण्डश्चोदकदानञ्च शौचाशौचं तदानुगम्'। गोत्रतः गोत्रैक्ये तेन मातामहकुले कदाचित् षट्पुरुषपर्य्यन्तं पिण्डसम्बन्धेऽपि न सपिण्डता। तान् सप्तपुरुषान् आसमन्तात् कारेण पिण्डादिकमनुगच्छतीति तदानुगम्। एतेन सपिण्डता एकशरीरावयवान्वयेन भवति तथाहि पितुः शरीरावयवान्वयेन पित्रा सह एवं पितामहादिभिरपि पितृद्वारेण तच्छरीरावयवान्वयात्। एवं मातृशरीरावयवान्वयेन मात्रादिभिरिति। एवं पत्या सह पत्न्या एकशरीरारम्भकतया सापिण्ड्यम्। तथाच गर्भोपनिषदि 'एतत् षाट्कौषिकं शरीरं त्रीणि पितृतः त्रीणि मातृतः अस्थिस्नायुमज्जानः पितृतः त्वङ्मांसरुधिराणि मातृतश्चेति' तत्र तत्रावयवान्वयप्रतिपादनात् निर्वाप्य पिण्डान्वये तु सापिण्ड्ये भ्रातृपितृव्यादिसापिण्ड्यं न स्यात्। अतिप्रसङ्गस्तु सप्तान्यतमत्वेन प्रयोगोपाधिना निरसनीयः। यद्येवं मातामहादीनामपि मरणे सपिण्डत्वेन दशाहाशौचं प्राप्नोति स्यादेतत् यदि मातामहादीनां मरणे त्रिरात्रं स्यादशौचकम् इत्यादि विशेषवचनं न स्यात्। यत्र तु विशेषवचनं नास्ति तत्र दशाहमिति मिताक्षरारत्नाकरादिमतमपास्तं लेपभाज इत्यादि वाचनिकेऽर्थे सापिण्ड्ये एकशरीरावयवान्वयरूपस्वकपोलरचितार्थानवकाशात् निर्वाप्य पिण्डसम्बन्धेन भ्रात्रादीनां सापिण्ड्यस्य मत्स्यपुराणबौधायनाभ्यां पूर्व्वमुक्तत्वात् कामधेनुहारलताकल्पतरुपारिजातकारादिभिस्तथैव व्याख्या-

त्वाच्च। रेतःशोणितपरिणामरूपत्वादपत्यशरीरस्य भवतु वा तथा पत्या सह पत्न्या एकशरीरारम्भकतया प्रत्यक्षबाधितत्वात् कथं साविण्ड्यं मातामहादीनां विशेषवचनाभावात् सपिण्ड-त्वेन दशाहाद्यशौचप्रसङ्गाच्च मातामहादौ साविण्ड्यस्य लोकविरुद्धत्वाच्च भवतु वा तथा शरीरद्वारा साविण्ड्यं तथापि वचनात् यथासप्ताम्तर्गतत्वं तन्न तथा गोत्रतः साप्त-पौरुषीति वचनात् गोत्रैकमपि प्रागुक्तवचनात् कन्यायाः त्रिपौरुषम् ऊढायाश्च भर्तृसपिण्डनेन साविण्ड्यमिति चेत् यदेतन्मतेऽपि व्यवस्थायां न क्षतिरिति अतएव सुमन्तुवच-नाभिहितं यद्दशमपुरुषपर्य्यन्तमशौचं तत्सप्तमपुरुषाभ्यन्तरा-शौचाद्यूनं त्रिरात्रं यथा ब्राह्मणानामेकपिण्डस्वधानामादश-माद्धर्म्मविच्छित्तिर्भवति आसप्तमात् ऋक्‌थविच्छित्तिर्भवति आतृतीयात् स्वधाविच्छित्तिर्भवति अन्यथा पिण्डाशौचक्रिया-व्युच्छेदात् ब्रह्महत्यातुल्यो भवतीत्यस्यार्थः। एकासमाना-पिण्डस्वधा येषां ते तथा यथैकोद्दिष्टस्य पिण्डे तु अनुशब्दो न युज्यते इत्यत्रानुशब्देनानुशब्दयुक्तमन्त्रो लक्ष्यते अनुयुक्त-मन्त्रस्तु ये चात्रत्वा मनुयांश्च त्वमनु तस्मै ते स्वधा इति तथा पिण्डस्वधाशब्देन पिण्डसम्बन्धिस्वधाशब्दयुक्तमन्त्रकरणकदेय-त्वं लक्षितम्। तथाच ऊर्ज्जं वहन्तीरमृतं घृतं पयःकीलालं परिस्रुतं स्वधास्थ तर्पयत मे पितॄन् इत्यनेन पिण्डान् सिञ्चे-दित्युक्तम्। ततश्च एकपिण्डस्वधानां समानोदकानामित्यर्थः। अतएव मनुः। 'जन्मन्येकोदकानान्तु त्रिरात्रात् शुद्धिरिष्यते'। विष्णुपुराणं 'मातृपक्षस्य पिण्डेन सम्बन्धा ये जलेन वा। मातृ-पक्षस्य मातामहपक्षस्य पिण्डेन सम्बन्धाः जलेन सम्बन्धाः समानोदका इति' श्राद्धविवेकेऽपि व्याख्यातम्। 'असम्बन्धा भवेद् या तु पिण्डेनैवोदकेन वा' इति विवाहेऽप्युक्तम् अत्र

दुहितायाः पार्वणे पिण्डोदकयोः सम्बन्धात् कन्यामात्रेऽपि तद्द्वयोग्यतायाः सत्त्वात् । कन्यापिण्डोदकसम्बन्धोच्यते एतदनुसारादपि तस्याः सपिण्डता बोद्धव्या तस्मादेकपिण्डस्वधाना-मित्यनेन समानोदकभावः समाख्यातः न तु दशमपर्य्यन्तं पित्रादिजीवनादिना सापिण्ड्यसम्बन्धेऽपि सापिण्ड्यं विहितं प्रागुक्तयुक्तेः स्वधेत्यस्य तदनुपयुक्तत्वेन वैयर्थ्यापत्तेः । अपुत्र-धनाधिकारस्तु सन्निहिततराभावे सप्तमपुरुषपर्य्यन्तं मृतपितृकस्य स्वधोपलक्षितश्राद्धाधिकारः पुरुषत्रयपर्य्यन्तमिति अत्र स्वधाशब्दो मन्त्रपरः पितृपक्षपरोऽपि । तथाच गुणविष्णुधृता श्रुतिः 'स्वधा वै पितृणामन्नमिति' । दशमपुरुषपर्य्यन्तं समानो-दकत्वेऽपि न त्रिरात्रं किन्तु पक्षिण्यादि तथाहि उदकक्रिया-मधिकृत्य पारस्करः । 'सर्वे ज्ञातयो भावयन्ति । आसप्तमा-द्दशमाद्वा समानग्रामवासेन यावत् सम्बन्धमनुस्मरेयुर्वा' इति भावयन्ति निष्पादयन्ति अत्र यावत् सम्बन्धमनुस्मरेयु-रेककुलजातावयमिति स्मरणं भवतीत्यनेनैव सर्वेषामुदकदाने प्राप्ते यदा सप्तमाद्दशमादुक्तं तत्सन्निकर्षतारतम्येनाशौचभेदे-ऽप्युदककर्म समानार्थमिति । अशौचभेदस्तु सप्तमपुरुषपर्य्यन्तं सपिण्डत्वाद्दशाहः । ततश्च दशमपुरुषपर्य्यन्तं त्र्यहः । तथाच विष्णुबृहस्पती । 'दशाहेन सपिण्डास्तु शुध्यन्ति मृतसूतके । त्रिरात्रेण सकुल्यास्तु स्नात्वा शुध्यन्ति गोत्रजाः' । ततः चतुर्दशपुरुषपर्य्यन्तं पक्षिणी ततश्च जन्मनामस्मृतिपर्य्यन्त-मेकाहः । तथाच मिताक्षराविवादचिन्तामण्योर्वृहन्मनुः 'सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते । समानोदकभावस्तु निवर्त्तेत चतुर्दशात् । जन्मनामस्मृतेरेके तत्परं गोत्रमुच्यते' अत्र समानोदकत्वे द्विविधे पूर्वत्र गोतमः पक्षिणीमसपिण्डे परत्र हारीतः । 'मातामहे त्रिरात्रं स्यादेकाहस्त्वसपिण्डं

इति। अत्रैव गोत्रजानामङ्गःस्पृतमिति जावालवचनं ततः परं सर्वथा समानोदकतानिवृत्तेः। स्नानमात्रमिति स्नात्वा शुद्ध्यन्ति गोत्रजा इति वृहस्पत्युक्तत्वादिति।

अथ अशौचसंक्षेपः। जननाशौचमध्ये जननाशौचान्तरपाते पूर्वाशौचकालेन शुद्धिः। पूर्णाशौचान्तदिने पूर्णाशौचान्तरपाते अन्तिमदिनोत्तरदिनद्वयेन शुद्धिः। अन्तिमदिवसोत्तरप्रभाते सूर्य्योदयात् पूर्वं तत्पाते सूर्य्योदयावधि दिनत्रयेण शुद्धिः। एवं मरणाशौचेऽपि वर्द्धितदिनद्वयत्रयाभ्यन्तरे अशौचान्तरपाते पूर्वेणैव शुद्धिः। अशौचत्रितयान्तकृत्यमेकदैव। तत् द्वितीयदिनकृत्यं तत्परदिने अत्र दशमदिनतत्प्रभातयोः पितृमातृभर्तृमरणे तु न दिनद्वयत्रयाच्छुद्धिः किन्तु स्वावध्येव सम्पूर्णाशौचमिति ज्ञातिजननाशौचमध्ये स्वपुत्रजनने पूर्वार्द्धे पूर्वेण परार्द्धे परेण शुद्धिः। एवं ज्ञातिमरणमध्ये पितृमातृभर्तृमरणे पूर्वार्द्धे पूर्वाशौचकालेन परार्द्धे पराशौचकालेन शुद्धिः। स्वपुत्रजननाशौचान्तिमदिनतत्प्रभातयोर्ज्ञातिजनने पितृमातृभर्तृमरणाशौचान्तिमदिनतत्प्रभातयोर्ज्ञातिमरणेऽपि न दिनद्वयत्रयवृद्धिः। स्वपुत्त्रयोऽस्तु तथा जनने मातापित्रोस्तु परस्परं तथा मरणे च द्विनद्वयत्रयवृद्धिः। जननाशौचयोस्तु सन्निपाते पूर्वजातो यदाशौचाभ्यन्तरे मृतस्तदा सपिण्डानां सद्यःशौचेन पूर्वाशौचस्य नाशः तन्नाशादेव परजातमातृपितृव्यतिरिक्तानां परजननाशौचस्य निवृत्तिः। परजातमरणे तु न तथा तस्य पूर्वजननावधिस्थायित्वादिति गुरुचरणाः। एवं द्वितीयजातपित्रोऽस्तु पूर्वार्द्धजातमरणे पूर्वाशौचकालावधि अङ्गास्पृश्यत्वयुक्तमशौचं परार्द्धजातमरणे तु स्वावधि जननाशौचमङ्गास्पृश्यत्वयुक्तमिति औत्सर्गिकसमसंख्यदिवसीय जननमरणाशौचयोः

सन्निपाते मरणाशौचकालेन शुद्धिः। तदन्यकालयोस्तु दीर्घकालाशौचकालेन शुद्धिः। ततश्च पुत्त्रवत्या विंशतिरात्राशौचान्तदिने पत्युर्मरणे बहुकालीनाशौचकालेन शुद्धिः। तथा सति सपिण्डद्वयजननजातद्वादशाहान्तदिने पितृमातृभर्त्तृमरणेऽपि बहुकालीनाशौचकालेन शुद्धिः। एकाहमरणद्वये यावदशौचं सर्वगोत्रास्पृश्यत्वम् एवं समानोदकमरणेऽङ्गास्पृश्यत्वमेकरात्रं विद्युदादिमरणेऽपि तथा। तेनैतन्निरात्रं गुरु विदेशमरणे त्रिरात्रं लघु स्नानेनैवाङ्गास्पृश्यत्वनिवृत्तेः। ततश्चोभयोः सन्निपाते गुरुणैव शुद्धिः। एवं विदेशमृतज्ञातित्रिरात्राद्विदेशस्थमृतपितृमातृभर्त्तृत्रिरात्रं गुरु संपूर्णाशौचे तु अशक्तानामपि यावदशौचम् अक्षारलवणाशित्वदर्शनात्। अत्रापि तावत् कालं तथासिद्धत्वात्तत्रापि गुरुणैव शुद्धिः तुल्य त्रिरात्रयोस्तु सन्निपाते पूर्वेणैव शुद्धिः। तथा कन्यापुत्त्रयमजोत्पत्तौ मातुर्मासेन शुद्धिः। तयोरशौचमध्ये मातुः कन्यामरणे सद्यःशुद्धिर्न पुत्त्रमरणात् अन्येषान्तु प्रथमजातमरणात् शुद्धिः। न परजातमरणात् एवमन्यद्वाच्यं सुधीभिरित्यशौचसङ्करः।

अथ विदेशस्थाशौचम्। अशौचकालाभ्यन्तरे विदेशस्थाशौचश्रवणे शेषाहैः शुद्धिः। अशौचकालोत्तरश्रवणे तु ज्ञातिजननाशौचं नास्त्येव पुत्त्रजनने तु सचेलस्नानात् शुद्धिः। मरणाशौचे तु वर्षाभ्यन्तरश्रवणे त्र्यहेण शुद्धिः। सचेलस्नानादङ्गास्पृश्यत्वनिवृत्तिः। वर्षोत्तरश्रवणे स्नानेन शुद्धिः। सपिण्डानां पुत्त्रादीनान्तु मातृपितृभर्त्तृमरणे तु वर्षोत्तरमेकाहेन शुद्धिः द्वितीयवर्षे श्रवणे सद्यः संपूर्णाशौचातिक्रमे त्र्यहाशौचं न बालाद्यशौचातिक्रमे खण्डाशौचातिक्रमेऽपि। इति विदेशस्थाशौचम्।

अथ गर्भस्रावाशौचम्। गर्भस्रावे तु स्त्रीणामेव षण्मासाभ्यन्तरेऽशौचं तच्च लौकिके कर्मणि माससमसंख्यदिनव्यापकं द्वितीयमासावधिमाससमसंख्यदिनाधिकैकदिनात् परं ब्राह्मण्या वैदिककर्माधिकारः क्षत्रियाया दिनद्वयात् वैश्याया दिनत्रयात् शूद्रायास्तु षष्ठदिनादिति हारलताप्रभृतयः। सप्तमाष्टममासीयगर्भपतने स्त्रीणां संपूर्णाशौचं निर्गुणसपिण्डानामहोरात्रं यथेष्टाचरणसपिण्डानां त्रिरात्रं तत्र जातस्य तद्दिन एव मरणे ज्ञेयं द्वितीयदिनादौ तु मरणे नवमादिमासजातबालकवत्। इति गर्भस्रावाशौचम्।

अथ स्त्र्याशौचम्। कन्यायाः जन्मप्रभृतिद्विवर्षाभ्यन्तरमरणे सद्यःशौचं तदुपरि वाग्दानपर्य्यन्तमेकाहः। वाग्दानोत्तरविवाहपर्य्यन्तं भर्तृकुले पितृकुले च त्रिरात्रम्। विवाहोत्तरन्तु भर्त्तृकुल एव संपूर्णाशौचम्। सोदरभ्रातुस्तु कन्याया आदन्तजन्ममरणे सद्यःशौचम्। आचूडादेकरात्रकम् आप्रदानात्त्रिरात्रं स्यादिति विशेषः दत्तकन्यायाः पितृगृहे प्रसवमरणयोः पित्रोः शयनादिसंसर्गशून्येऽपि त्रिरात्रं तथाविधबन्धुवर्गाणामेकरात्रम्।

अथ बालाद्यशौचम्। नवमादिमासजातबालकस्याशौचकालाभ्यन्तरमरणे मातापित्रोरस्पृश्यत्वयुक्तं तदेव जननाशौचं ज्ञातीनान्त्वशौचं नास्ति नवमादिमासमृतजातयोस्तु कन्यापुत्रयोः पित्रादिसपिण्डानां जननाशौचम्। तच्च ब्राह्मणानां दशाहं शूद्राणां मासम्। पुत्रजन्मनि मुखदर्शनात् पूर्वं सचेलस्नानं कृत्वा पुत्रजन्ममुखदर्शननिमित्तवृद्धिश्राद्धं कृत्वा अशक्तौ तदकृत्वा ब्राह्मणेभ्यश्च यथाशक्ति दत्त्वा बालकाय काञ्चनं दत्त्वा मुखं पश्येत्। ततः पुनः सचेलस्नानम्। अन्याशौचमध्येऽपि जातकर्मषष्ठीपूजे कर्त्तव्ये। पुत्रजन्म-

निमित्तकं वृद्धिश्राद्धं नाड़ीच्छेदात् पूर्वम् अशौचान्ते वा कर्त्तव्यं स्नानादिप्रमाणमशौचसङ्करे द्रष्टव्यम्। पुत्रकन्याजनने स्त्रीणां दशाहेन लौकिककर्माधिकारः। पुत्रजनने वैदिककर्माधिकारो विंशतिरात्रोत्तर स्नानात्। कन्याजनने तु मासोत्तरस्नानात् ब्राह्मण्याः शूद्रयास्तूभयत्रैव मासोत्तरस्नानात् शुद्धिः। एतत् सर्वं पुत्रकन्ययोर्विद्यमानत्वे बोध्यम्। जननाशौचकालोत्तरं षण्मासाभ्यन्तरमजातदन्तमरणे पित्रोरेकाहः। एवं निर्गुण सोदरस्य सपिण्डानान्तु सद्यः। षण्मासाभ्यन्तरेऽपि जातदन्तस्य मरणे पित्रोस्त्र्यहः सपिण्डानामेकाहः षण्मासोपरि द्विवर्षपर्य्यन्तं पित्रोस्त्र्यहः। सपिण्डानामकृतचूड़े एकाहः कृतचूड़े त्र्यहः। द्विवर्षोपरि सर्वेषामनुपनीतस्य मरणे मासत्रयाधिकषड्वर्षं यावत् त्र्यहः। पञ्चवर्षोपनीतस्य तदानीमपि दशाहः। मासत्रयाधिकषड्वर्षोपरि सर्वेषां दशाहः। शूद्रस्य षण्मासाभ्यन्तरेऽनुत्पन्नदन्तस्य त्रिरात्रम् उत्पन्नदन्तस्य पञ्चाहः। षण्मासोपरि द्विवर्षाभ्यन्तरे पञ्चाहः। अत्रापि कृतचूड़स्य द्वादशाहः। द्विवर्षोपरि षड्वर्षाभ्यन्तरे द्वादशाहः। अत्रापि दैवात् कृतोद्वाहेऽपि मासो व्यवह्रियते। षड्वर्षोपरि मासः। अत्र मासवर्षपरिगणना सावनेन। 'सूतकादिपरिच्छेदो दिनमासाब्दपास्तथा। मध्यमग्रहभुक्तिश्च सावनेन प्रकीर्त्तिता' इति सूर्य्यसिद्धान्तात् इति बालाद्यशौचम्।

अथ सपिण्डाद्यशौचं जनने मरणे च सप्तमपुरुषपर्य्यन्तं विप्रस्य दशाहः शूद्रस्य मासः दशमपुरुषपर्य्यन्तं सर्वस्य त्र्यहः। चतुर्दशपुरुषपर्य्यन्तं पक्षिणी जन्मनामस्मृतिपर्य्यन्तमेकाहः। अतःपरं सगोत्रे स्नानमात्रम् शौचं प्रति कन्यायास्त्रिपुरुषं सापिण्ड्यम्।

अथ असपिण्डाशौचं मातामहमरणे त्रिरात्रं भगिनी-मातुलानी मातुलपितृस्वसृमातृस्वसृगुर्वङ्गनामातामहीमरणे पक्षिणी। श्वश्रूश्वशुरयोर्भिन्नग्रामस्थयोर्मरणेऽहोरात्रम्। आचार्य्यपत्नीपुत्रयोरुपाध्यायस्य मातृवैमात्रेयस्य श्यालकस्य सहाध्यायिनः शिष्यस्य च मरणेऽहोरात्रं मातृस्वस्रीयपितृ-स्वस्रीयमातुलपुत्रभागिनेयमरणे पक्षिणी। पितामहभगिनीपु-त्रपितामहीभ्रातृपुत्ररूपपितृबान्धवत्रयमरणे पक्षिणी। माता-महीभगिनीपुत्रमातामहभगिनीपुत्र-मातामहीभ्रातृपुत्र-रूप-मातृबान्धवत्रयमरणेऽहोरात्रम्। एकग्रामवासिगोत्रजमरणेऽहो-रात्रम् औरसव्यतिरिक्तपुत्रजननमरणयोः परपूर्वभार्य्याप्रसव-मरणयोस्त्रिरात्रम्। स्वजातीयपुरुषान्तरसंगृहीतस्वभार्य्यामरणे त्रिरात्रम्। मातृस्वसृपितृस्वसृमातुलभगिनीपुत्राणां गृहस्थि-तानां मरणे त्रिरात्रम्। श्वश्रूश्वशुरयोः सन्निधिमरणे त्रिरात्रं श्वश्रूश्वशुरयोरेकग्रामस्थितयोर्मरणे पक्षिणी। प्रथममन्येनोढ़ा तेनैव जनितपुत्रा पुत्रसहितैवान्यमाश्रिता पश्चात्तेनापि जनित-पुत्रा तयोः पुत्रयोर्यथासम्भवं प्रसवमरणयोर्द्वितीयपुत्रपितु-स्त्रिरात्रं तत् सपिण्डानामेकरात्रं तथाविधपुत्रयोः परस्पर-प्रसवमरणयोर्मातृजात्युक्तमशौचम्। दौहित्रमरणे पक्षिणी पितृमातृमरणे ऊढ़ानां कन्यानां त्रिरात्रम्। यदि मातृ-स्वसृप्रभृतीनां दहनवहने करोति तदा त्रिरात्रं मातामहा-दीनां त्रिरात्राभ्यन्तरमरणश्रवणे तच्छेषेण शुद्धिः। तत्कालो-त्तरश्रवणे तु नाशौचं किन्तु आचारात् स्नानम्। इति सपिण्डाद्यशौचम्।

अथ मृत्युविशेषाशौचम्। शास्त्राननुमतबुद्धिपूर्वकात्मघा-तिनो नाशौचादि शास्त्रानुमत्याऽनशनादिमृतस्य प्रमादाद-नशनाशनिवह्निजलोच्चदेश-प्रपतनसंग्राम शृङ्गिदंष्ट्रिनखिव्याल-

विषचाण्डालचौरहतस्य त्रिरात्रं शृङ्गारादिभिःस्त्रिया च क्रीड़ां कुर्वतः प्रमादमृतस्यापि नाशौचादि नागविप्रियकारित्वेन ठहतस्य मरणोद्देशेन प्रवृत्तं विद्युद्धतस्य च चौर्य्यादिदोषेण राज्ञा हतस्य च कलहं कृत्वा चाण्डालाद्यैरसमानैर्हतस्य च व्याधिजनकौषधस्य विषस्य वह्नेश दातुर्मरणे पाषण्डाश्रितस्य च नित्यं परापकारिणश्च क्रोधात् स्वयं प्रायो विषवह्निशस्त्रो-द्बन्धनजलगिरिवृक्षप्रपातैर्मृतस्य चर्मास्थ्यादिमयपात्रनिर्मातु-र्विप्रादेश्च मनुष्यवधस्थानाधिकारिणश्च कण्ठदेशोत्पन्नभग-रोगस्य पुंस्कर्माशक्तनपुंसकस्य च ब्राह्मणविषयापराधकर-णान्निहतस्य च बुद्धिपूर्वक ब्राह्मणहतस्य च महापातकिनश्च एवंविधपतितानां न दाहादिकं कार्य्यम् । तत्कृत्वा तप्त-कृच्छ्रद्वयं कुर्य्यात् । म्लेच्छतस्करादिभिर्युद्धे स्वाम्यर्थं हतस्य विप्रादेर्दाहादिकमस्त्येव । अकृतप्रायश्चित्तस्य गलत्कुष्ठिनो न दाहादिकं कार्य्यं शस्त्रेणाभिमुखहतस्य सद्यःशौचं दाहादि च गवार्थे ब्राह्मणार्थे वा दण्डेन युद्धहतस्याहोरात्रमशौचम् । नृपतिरहितयुद्धे लगुड़ादिहतस्य पराङ्मुखहतस्य त्रिरात्रम् । गोविप्रपालनेऽभिमुखपराङ्मुखत्वाभ्यां हतस्य सद्यस्त्रिरात्रे । शस्त्रघातेतरक्षते सप्ताहादूर्द्ध्वं शस्त्रघाते सम्पूर्णे त्र्यहादूर्द्ध्वं मरणे च प्रकृताशौचम् ।

अथ शवानुगमनाशौचम् । ब्राह्मणशवस्यानुगमने ब्राह्मणस्य सचेलस्नानाग्निस्पर्शघृतप्राशनैः शुद्धिः । क्षत्रियशवस्यै-काहेन वैश्यशवस्य द्व्यहेन शूद्रस्य प्राणायामशतेन दिनत्रयेण च शुद्धिः । प्रमादाच्छूद्रशवानुगमने जलावगाहाग्निस्पर्श-घृतप्राशनैः शुद्धिः । अनाथब्राह्मणस्य धर्मबुद्ध्या दहनवहनयोः स्नानघृतप्राशनाभ्यां सद्यःशौचं लोभेन सजातीयदाहे स्वजा-त्युक्ताशौचम् । असजातीयशवस्य दहनवहनस्पर्शे शवजा-

स्पृश्याशौचम्। स्नेहादसम्बन्धिदाहकविप्रस्य तद्गृहवासे त्रिरात्रं तत् कुलान्नभोजने दशरात्रं तद्गृहवासे तदन्नाभोजने च अहोरात्रं विशेषवचनाभावे सम्बन्धिनो मातुलादेरन्ने हे-नापि अदाहे त्रिरात्रं चिताधूमसेवने सचेलस्नानं मृते शूद्रे-ऽस्थिसञ्चयनकालाभ्यन्तरे तद्गृहं गत्वाऽश्रुपातने विप्रस्य त्रिरात्रमशौचं स्थानान्तरे विशेषवचनाभावेऽहोरात्रं तद्गृहे तदूर्द्धं मासाभ्यन्तरेऽहोरात्रं सचेलस्नानञ्च। स्वजातेर्दिवसे-नैव क्षत्रियवैश्ययोर्द्व्यहेन ब्राह्मणः शुध्यति। शूद्रस्तु स्पर्शं विनानुगमने सर्वत्र नक्तेन मृतस्य शूद्रस्य बान्धवैः सह रोदन-रहितविलापमात्रेऽहोरात्रम्। अस्थिसञ्चयनकालश्च ब्राह्मणस्य चतुरहः शूद्रस्य दशाहः। त्र्यहाशौचे द्वितीयाहः मरणाशौचे विप्रस्य चतुर्थाहेऽस्पृश्यतानिवृत्तिः। शूद्रस्य दशमदिने सर्वस्य खण्डाशौचकाले त्रिभागकालेन अतिक्रान्ताशौचे सचेल-स्नानेन जनने तु सपिण्डानां स्पृश्यतैव। पुत्रोत्पत्तौ स्नानात् पितुः स्पृश्यत्वम् एवं विमातॄणामपि। एवं सूतिकास्पर्शे पितुर्विमातॄणाञ्च सूतिकातुल्यकालास्पृश्यत्वम्। अन्येषां स्नानमात्रं कन्या पुत्रजनने मातुर्दशरात्रमङ्गास्पृश्यत्वं शूद्रा-यास्तु त्रयोदशरात्रमस्पृश्यत्वम्। इति शवानुगमनाशौचम्।

अथ अन्त्येष्टिपद्धतिः। गतप्राणं ज्ञात्वा पुत्रादिः स्नात्वा-ऽलंकृत्वा स्नापयेत् ततो गतप्राणं स्नापयित्वा वाससा सर्वशरी-रमाच्छाद्यास्तीर्णकुशायां भूमौ दक्षिणशिरसं स्थापयेत् ततो घृतेनाभ्यज्य। ओम् 'गयादीनि च तीर्थानि ये च पुण्याः शिलोच्चयाः। कुरुक्षेत्रञ्च गङ्गाञ्च यमुनाञ्च सरिद्वराम्। कौशिकीं चन्द्रभागाञ्च सर्वपापप्रणाशिनीम्। भद्रावकाशां गण्डकीं सरयुं पनसान्तथा। वैनवञ्च वराहञ्च तीर्थपिण्डारकन्तथा। पृथिव्यां यानि तीर्थानि सरितः सागरां स्तथा' इति चिन्त-

यित्वा पुनः स्नापयेत्। वस्त्रान्तरं परिधाप्य उत्तरीयमुपवीतञ्च दत्त्वा चन्दनादिनोपलिप्य कर्णनासिकानेत्रद्वयमुखात्मकेषु सप्तच्छिद्रेषु सप्तस्वर्णखण्डिकाः प्रक्षिपेत्। तदभावे कांस्यादिखण्डिकाः ततो वस्त्रान्तरेणाच्छाद्य वहेयुर्वहनकाले आमपात्रस्थं तदन्नार्द्धं वर्त्मनि क्षिपेत् अर्द्धं पिण्डार्थमवशेषयेत्। ततोऽग्निदाता पुत्रादिश्चिताभूमौ गत्वा तदन्नार्द्धं सतिलं पिण्डदानेति कर्त्तव्यतयोत्सृजेत्। सा यथा गोमयेनोपलिप्तायां भूमौ पातितवामजानुः। प्राचीनावीती कुशमूलेन ओम् अपहता सुरा रक्षांसि वेदिसद इत्यनेन दक्षिणाग्ररेखां कुर्य्यात्। तदुपरि कुशानास्तीर्य्य 'एहि प्रेत सौम्य गम्भीरेभिः पथिभिः पूर्विणेभिर्देह्यस्मभ्यं द्रविणेह भद्रं रयिञ्च नः सर्ववीरं नियच्छ' इत्यावाह्य सतिलजलपात्रं वामहस्ताद्दक्षिणहस्तेन गृहीत्वा ओम् अमुकगोत्र प्रेतामुकदेवशर्म्मन्नवनेनिक्ष्व स्वधेत्यवनेजयेत्। ओम् अमुकगोत्र प्रेतामुकदेवशर्म्मन्नेतत्तेऽन्नमुपतिष्ठतामिति। वामहस्तगृहीतामपात्रादन्नार्द्धं सतिलं दक्षिणहस्तेन गृहीत्वा कुशोपरि दद्यात् पिण्डप्रक्षालनजलेन तदुपरि पुनरवनेजनं तूष्णीं गन्धादिदानं सामगेतरेषान्तु नावाहनमिति विशेषः। ततः पुत्रादिः स्नानं कृत्वा चितां रचयित्वा तत्र दारुचयं कुर्य्यात् तदुपरि वस्त्रद्वयसहितं दक्षिणाशिरसं सामगमधोमुखं पुमांसं न्यसेत्। नार्य्यास्तूत्तानदेहत्वम्। सामगेतरेषाम् उत्तरशिरस्त्वं ततो देवाश्चाग्निमुखाः सर्वे हुताशनं गृहीत्वा एनं दहन्तु पठित्वा। ओम् 'कृत्वा तु दुष्करं कर्म्म जानता वाप्यजानता। मृत्युकालवशं प्राप्य नरं पञ्चत्वमागतम्। धर्म्माधर्म्मसमायुक्तं लोभमोहसमावृतं दहेयं सर्वगात्राणि दिव्यान् लोकान् स गच्छतु' इति पठित्वा प्रदक्षिणं कृत्वा दक्षिणामुखः शिरःस्थाने दद्यात्

श्रीदाहे नरमित्येव पाठः। न नारीमित्यूहः। ततो दाहे वृत्ते प्रादेशप्रमाणाः सप्त काष्ठिका गृहीत्वा चिताग्निं सप्तवारान् प्रदक्षिणीकृत्य सप्त काष्ठिका एकैकक्रमेण चिताग्नौ प्रक्षिपेत्। ततः कुठारेण ओम् क्रव्यादाय नमस्तुभ्यमिति मन्त्रं सकृत् पठित्वा चितास्थज्वलद्दारूपरि सप्त प्रहारा देयाः। तमग्निमपश्यद्भिर्वामावर्त्तेन स्नातुं नदी गन्तव्या नग्नं शवं न दहेत्। शवसम्बन्धिवस्त्रादिश्मशानवासिचाण्डालादिभ्यो दद्यात् सूतिकां रजस्वलाञ्च सतिलपञ्चगव्यजलपूर्णकुम्भमापोहिष्ठेति वामदेव्यादिभिरभिमन्त्र्य स्नापयित्वा दहेदिति शेषः। गर्भवत्यास्तु गर्भं निःसार्य्य तस्या दाहः कर्त्तव्यः जलसमीपं गत्वा पुत्त्रादयः प्रयोगदानाभिज्ञं श्यालकादिकं प्रार्थयेयुः। उदकं करिष्यामः। तेन कुरुध्वं मा चैवं पुनरित्यूने वर्षे प्रेते कुरुध्वमेवेतरस्मिन्नित्युत्तरे दत्ते वृद्धपुरःसरमवतरणं जले ततः परिहितवस्त्रं प्रक्षाल्य तदेव परिधाय प्राचीनावीतिनो दक्षिणामुखा ओम् अपनः शोशुचदघम् इत्यनेन मन्त्रेण वामहस्तानामिकया अप आलोड्य एकवस्त्राः सकृन्निमज्य चाचम्य दक्षिणामुखास्तर्पयेयुः अमुकगोत्रं प्रेतममुकदेवशर्म्माणं तर्पयामीति सामगानां प्रयोगः। यजुर्वेदिनान्तु। ओम् अमुकगोत्र अमुकदेवशर्म्मन्नेतत्ते तिलोदकं तृप्यस्वेति सामगेतरेषाम् एकाञ्जलिदानमावश्यकम् अञ्जलित्रयदाने फलातिशयः ततः पुनः स्नात्वा जलादुत्थाय बालपुरःसरं कार्य्यं ततः शाद्वले उपविश्य 'मानुष्ये कदलीस्तम्भे निःसारे सारमार्गणम्। यः करोति स संमूढो जलबुद्बुदसन्निभे। पञ्चधा सम्भृतः कायो यदि पञ्चत्वमागतः। कर्म्मभिः स्वशरीरोत्थैस्तत्र का परिवेदना। गन्त्री वसुमतीनाशमुदधिर्दैवतानि च। फेनप्रख्यः कथं नाशं मर्त्यलोको न यास्यति। श्लेष्माश्रु बान्धवै-

मुंश्च प्रेतो भुङ्क्ते यतोऽवशः। अतो न रोदितव्यन्तु क्रिया कार्य्या विधानतः'। इति चिन्तयित्वा गृहद्वारं समागत्य निम्बपत्राणि दन्तैः खण्डयित्वा द्योगिति मन्त्रेण द्वारमपि स्पृष्ट्वा आचम्य पापं शमयत्विति शमीं स्पृष्ट्वाऽश्मेव स्थिरो भूया-समित्यश्मानं स्पृष्ट्वा अग्निर्नः शर्म यच्छत्वित्यग्निं वृषच्छाग-योर्मध्ये स्थित्वा द्योगिति मन्त्रेण द्वावपि स्पृष्ट्वा उदकं गोमयं गौरसर्षपं स्पृष्ट्वा बालपुरःसरमेव गृहं प्रविशेयुर्दिवा चेद्दाह-स्तदा रात्रौ रात्रौ चेद्दाहस्तदा दिवसे ग्रामप्रवेशः। अशक्तौ ब्राह्मणानुमतिं गृहीत्वा कालप्रतीक्षणं विना प्रविशेयुः। ततः पिण्डदानं तत्र क्रमः। तण्डुलप्रसृतिद्वयं त्रिः प्रक्षाल्य ऐशान्यां दिशि सुखिन्नं पचेत् ततः पवित्रपाणिः प्राचीनावीती पातित-वामजानुर्दक्षिणामुखो हस्तप्रमाणं चतुरङ्गुलोच्छ्रायं दक्षिण-प्लवां पिण्डिकां कृत्वा तदुपरि रेखां कृत्वा दर्भानास्तीर्य्य तिलान् प्रक्षिप्य। ओम् अमुकगोत्र प्रेत अमुकदेवशर्म्मन्नवने-निक्ष्व इत्यास्तीर्णकुशोपरि सतिलजलेनावनेजयेत्। तत-स्तिलमधुघृतादिमिश्रं तप्तपिण्डं गृहीत्वा अद्य अमुकगोत्रस्य प्रेतस्य अमुकदेवशर्म्मण एतत् प्रथमं पिण्डं पूरकम् इत्यवनेजन-स्थाने दद्यात्। ततः पिण्डपात्रक्षालनजलेन पुनरवनेजयेत्। ओम् अमुकगोत्र प्रेत अमुकदेवशर्म्मन्नेतत्ते ऊर्णातन्तुमयं वासः। तत आममृण्मयपात्रे जलाञ्जलिं पिण्डसमीपे स्थापयेत्। गन्धं माल्यञ्च यथाशक्ति दद्यात् वासःपर्य्यन्तपिण्डं पश्यं स्तिष्ठेत् ततः पिण्डादिकं जले प्रक्षिपेत्। कालेऽप्यकृतचूड़ोपनयनानाम् अनूढ़कन्यानाञ्च कुशास्तरणं विनेति शेषः एवं कृतचूड़ाना-मुपनयनकालात् प्राक् दर्भोपरि पिण्डदानम् उपनयनकाले आगतेऽकृतोपनयनानां दर्भोपरि पिण्डदानम् एवम् अष्टवर्ष-विवाहकाले आगते ऊढ़स्त्रीणां दर्भोपरि पिण्डदानं रात्रा-

वाचम्य दक्षिणामुखः प्राचीनावीती पातितवामजानुः त्रिकाष्ठिकोपरि मृण्मयपात्रे उदकं तथा पात्रान्तरे क्षीरं निधाय प्रेतात्र स्नाहि पिब चेदं क्षीरमिति ब्रूयात्। तदेकरात्रमावश्यकं दशरात्रं फलभूयस्त्वार्थमिति द्वितीयपिण्डादिषु द्वितीयं पिण्डं पूरकमित्यादिविशेषः। द्वितीयपिण्डे मृण्मयपात्रद्वये जलाञ्जलिद्वयं तृतीयादि पिण्डे पात्रादि वृद्धिः। येन पञ्चपञ्चाशत् पात्राण्यञ्जलयश्च तावन्ति त्र्यहाशौचे प्रथमदिने पिण्डानां त्रयं द्वितीयदिने चतुष्टयं तृतीयदिने त्रयं प्रथममेकं द्वितीये चतुष्टयं तृतीये पञ्चमं वा कल्पः चतुरहाशौचे प्रथमचतुर्थयोर्द्वौ द्वौ द्वितीयतृतीययोस्त्रयः। पञ्चाहाशौचे तु प्रथमपञ्चमदिनयोरेकैकशः पिण्डः द्वितीयचतुर्थयोः द्वौ द्वौ तृतीये चत्वारः। षड़हाशौचे द्वितीयचतुर्थदिनयोस्त्रयः सप्ताहाशौचे तृतीयचतुर्थपञ्चमदिनेषु द्वौ द्वौ शेषेषु एकैकः। अष्टाहाशौचे चतुर्थपञ्चमदिनयोर्द्वौ द्वौ शेषेषु एकैकः। नवाहाशौचे तु पञ्चमदिने द्वौ शेषेषु एकैकः। पक्षिणीदशाहाशौचयोस्तु। आद्य द्वितीयदिनयोः पञ्च पञ्च पिण्डाः। द्वादशाहाद्यशौचे नवदिनेषु नवपिण्डाः शेषदिने दशमः। सद्यःशौचैकाहयोरेकाह एव दश पिण्डाः अशौचान्तमध्ये पिण्डो देयः रात्रावपि। गङ्गाभस्यस्थिप्रक्षेपप्रयोगस्तु। ततः स्नात्वाचम्य उदङ्मुखः कुशत्रयजलान्यादाय ओम् तत्सदित्युच्चार्य्य अद्य अमुकेत्यादि अमुकस्य एतदस्थिसमसंख्यकवर्षसहस्रावच्छिन्नस्वर्गाधिकरणकमहीयमानत्वकामोऽमुकस्यैतान्यस्थिखण्डानि गङ्गायां प्रक्षिपामीति सङ्कल्प्य अपसव्यं कृत्वा अस्थीनि पञ्चगव्येन सिक्त्वा हिरण्यमध्वाज्यतिलैः संयोज्य मृत्तिकापुटे स्थापयित्वा दक्षिणहस्तेन तत्पुटकमादाय दक्षिणां दिशं पश्यन् ओम् नमोऽस्तु धर्मराजायेति वदन् जलं प्रविश्य स मे

प्रीतो भवत्वित्युक्तास्थि प्रक्षिपेत्। ततो मज्जनं कृत्वोत्थाय सूर्य्यं दृष्ट्वा दक्षिणामुत्सृजेत्। पर्णनरदाहे तु शरपत्रैः पुत्तलकं कृत्वा पलाशपत्राणि शिरसि चत्वारिंशत् ग्रीवायां दश वक्षसि त्रिंशत् उदरे विंशतिर्बाह्वोः पञ्चाशत् हस्तद्वयाङ्गुलीषु पञ्च पञ्च अण्डद्वये त्रीणि त्रीणि शिश्ने चत्वारि ऊरुद्वये पञ्चाशत् दक्षिणजानुजङ्घयोः पञ्चदश वामजानुजङ्घयोः पञ्चदश पादाङ्गुलीषु पञ्च पञ्च देयानि। तं पुत्तलकं मेषलोम्ना संवेष्ट्य यवपिष्टेन संलिप्य पूर्ववद्दहेत्।

इति महामहोपाध्याय हरिहरभट्टाचार्य्यात्मज
श्रीरघुनन्दनभट्टाचार्य्यविरचितं शुद्धितत्त्वं
समाप्तम्।

---

## वास्तुयागतत्त्वम्॥

प्रणम्य कमलाकान्तं वागीशं जगतां प्रभुम्।
वास्तुयागकृतेस्तत्त्वं वक्ति श्रीरघुनन्दनः॥

तत्र वास्तुयागप्रमाणं लैङ्गे। 'चतुःषष्टिपदं वास्तु सर्वदेवगृहं प्रति। एकाशीतिपदं वास्तु मानुषं प्रति सिद्धिदम्। अग्रतः शोधयेद्वास्तुभूमिं यस्य पुरोदिताम्। चतुर्हस्तं द्विहस्तं वा जलान्तं वापि शोध्य च। सुसमञ्च तदा कृत्वा सदार्चनं ततो भवेत्'। पुरोदितां ब्राह्मणादिभेदेन प्रशस्तत्वेनोपपादितां तथाच मत्स्यपुराणम्। 'अरत्निमात्रे गर्त्ते वै अनुलिप्ते च सर्वशः। घृतमामशरावस्थं कृत्वा वर्त्तिचतुष्टयम्। ज्वालयेत्तु परीक्षार्थं पूर्णं तत् सर्वदिङ्मुखम्। दीप्त्या पूर्वादि गृह्णी

यात् वास्तूनामनुपूर्वशः। वास्तुः समृद्धिको नाम दीप्यते सर्वतो ह्रियः। शुभदः सर्ववर्णानां प्रासादेषु गृहेषु च'। वास्तुकर्त्तुररत्निमात्रे गर्त्ते तत्रैव स्थापिते आमशरावे पूर्वादिक्रमेण वर्त्तिचतुष्टयं कृत्वा गव्यघृतेनापूर्य्य वर्त्तिचतुष्टयं प्रज्वालयेत्। तत्र प्राच्यां दीपशिखाया उज्ज्वलत्वे तद्वास्तु ब्राह्मणस्य प्रशस्तं एवं दक्षिणादिदिशि। शिखायास्तथात्वे क्षत्रियादेः सर्वशिखासमत्वे सर्ववर्णानां स वास्तुदेशः प्रशस्तः। जलान्तमिति तु मत्स्यपुराणपरिभाषितं प्रासादपरम्। तथाच मात्स्ये 'पुरुषाधःस्थितं शल्यं न गृहे दोषदं भवेत्। प्रासादे दोषदं शल्यं भवेद् यावज्जलान्तिकम्'। मात्स्ये 'प्रासादभवनादीनां निवेशं विस्तराद्वद। कुर्य्यात् केन विधानेन कश्च वास्तुरुदाहृतः' इत्युपक्रम्य वाप्यादीनामभिधानादादिपदात् कूपादयो गृह्यन्ते। 'प्रासादेऽप्येवमेव स्यात् कूपवापीषु चैव हि' इत्यभिधानाच्च कूपादावपि वास्तुपुरुषस्य 'कश्यपस्य गृहिणी तु सिंहिका राहुवास्तुतनयावजीजनत्। पूर्वजो हरिनिकृत्तकन्धरो दैवतैरवरजो निपातितः'। तथा 'चैत्रे व्याधिमवाप्नोति यो गृहं कारयेन्नरः। वैशाखे धनरत्नानि ज्यैष्ठे मृत्युमवाप्नुयात्। आषाढ़े भृत्यरत्नानि पशुवर्जमवाप्नुयात्। श्रावणे मित्रलाभस्तु हानिर्भाद्रपदे तथा। आश्विने पत्नीनाशः स्यात् कार्त्तिके धनधान्यकम्। मार्गशीर्षे तथा भक्तं पौषे तस्करतो भयम्। माघे चाग्निभयं विद्यात् काञ्चनं फाल्गुने सुतान्। शुक्लपक्षे भवेत् सौख्यं कृष्णे तस्करतो भयम्। अश्विनी रोहिणी मूलमुत्तरात्रयमैन्द्रवम्। स्वातीहस्तानुराधा च गृहारम्भे प्रशस्यते। आदित्यभौमवर्जन्तु सर्वे वाराः शुभावहाः। वज्रव्याघातशूले च व्यतीपातातिगण्डयोः। विष्कुम्भगण्डपरिघवर्जं सर्वयोगेषु

कारयेत्। श्वेतमैत्रेयगान्धर्वेष्वभिजिद्रौहिणेऽपि च। तथा विजयसावित्रे मुहूर्त्ते गृहमारभेत्। चन्द्रादित्यबलं लग्नं तथाशुभनिरीक्षितम्। प्रासादेऽप्येवमेव स्यात् कूपवापीषु चैव हि' ऐन्द्वं मृगशिरः। मुहूर्त्ते संवर्त्तः 'रौद्रः श्वेतश्च मैत्रेयस्तथा शानकटः स्मृतः। सावित्रश्च जयन्तश्च गान्धर्वः कुतपस्तथा। रौहिणश्च विरिञ्चिश्च विजयो नैर्ऋतस्तथा। माहेन्द्रो वरुणश्चैव वटः पञ्चदश स्मृताः'। तेन द्वितीयतृतीय-सप्तमाष्टमनवमैकादशपञ्चमान्यतममुहूर्त्ते श्वेतादौ वास्तुकर्म कुर्य्यात् चैत्रादिफलन्तु नरगृहे देवगृहे तु प्रतिष्ठाकालवशात् तत्कालपरिग्रहः तथाच कल्पतरौ देवीपुराणं 'यस्य देवस्य यः कालः प्रतिष्ठाध्वजरोपणे। गर्त्तापूरशिलान्यासे शुभदस्तस्य पूजितः'। यस्य देवस्य प्रतिष्ठाध्वजरोपणे यः कालः शुभद-स्तस्य गर्त्तापूरशिलान्यासे गृहारम्भे स कालः पूजित इति। प्रतिष्ठाकालश्च मत्स्यपुराणे 'चैत्रे वा फाल्गुने वापि ज्येष्ठे वा माधवे तथा। माघे वा सर्वदेवानां प्रतिष्ठा शुभदा भवेत्। प्राप्य पक्षं शुभं शुक्लमतीते चोत्तरायणे। पञ्चमी च द्वितीया च तृतीया सप्तमी तथा। दशमी पौर्णमासी च तथा श्रेष्ठा त्रयोदशी। आसु प्रतिष्ठा विधिवत् कृता बहुफला भवेत्'। प्रतिष्ठासमुच्चये 'माघे वा फाल्गुने वापि चैत्रवैशाखयोरपि। ज्येष्ठाषाढ़कयोर्वापि प्रतिष्ठा शुभदा भवेत्'। कल्पतरौ देवी-पुराणम्। 'महिषासुरहन्त्र्याश्च प्रतिष्ठा दक्षिणायने'। ज्योतिषे 'गुरोर्भृगोरस्तबाल्ये वार्द्धके सिंहगे गुरौ। गुर्वादित्ये दशाहे तु वक्रौ जीवाष्टविंशके। पूर्वराशावनायातातिचारि-गुरुवत्सरे। प्राग्राशिगन्तृजीवस्य चातिचारे त्रिपक्षके। कन्याद्युतसप्ताहे नीचस्थेज्ये मलिम्लुचे। पौषादिक चतु-र्मासे चरणाङ्कितवर्षणे। एकेनाह्ना चैकदिने द्वितीयेन

दिनत्रये। तृतीयेन तु सप्ताहे माङ्गल्यानि विवर्जयेत्। व्रतारम्भप्रतिष्ठे च गृहारम्भ प्रवेशने। प्रतिष्ठारम्भणे देवकूपादेः परिवर्जयेत्'। स्मृतिसागरे 'उल्कापाते च भूकम्पे अकालवर्षगर्जिते। वज्रकेतूद्गमोत्पाते ग्रहणे चन्द्रसूर्य्ययोः। प्रयाणन्तु त्यजेत् शूद्रः सप्तरात्रमतःपरम्। ब्राह्मणः क्षत्रियो वैश्यस्त्यजेत् कर्म त्रिरात्रकम्। शूद्रस्त्यक्त्वा चैकरात्रं ततः कर्म समाचरेत्'। पराशरः 'प्रयाणे सप्तरात्रन्तु त्रिरात्रं व्रतबन्धने। एकरात्रं परित्यज्य कुर्य्यात् पाणिग्रहं ग्रहे' मत्स्यपुराणे। 'नवग्रहमुखं कृत्वा ततः कर्म समाचरेत्। अन्यथा फलदं पुंसां न काम्यं जायते क्वचित्'। नव्यवर्द्धमानवचनधृतवचनं 'पितृभ्यो वृद्धये वृद्धिश्राद्धं दत्त्वा सदक्षिणम्। क्रूरभूतवलिञ्चैव संपूज्य वास्तुदेवताः'। एकदिने वास्तुयागगृहोत्सर्गयोः करणे सकृदेव वृद्धिश्राद्धं करणीयम्। 'गणशः क्रियमाणे तु मातृभ्यः पूजनं सकृत्। सकृदेव भवेच्छ्राद्धमादौ न पृथगादिषु' इति छन्दोगपरिशिष्टात्। मात्स्ये 'ऊहापोहार्थतत्त्वज्ञो वास्तुशास्त्रस्य पारगः। आचार्य्यश्च भवेन्नित्यं सर्वदा दोषवर्जितः'। देवीपुराणं 'प्रासादे चतुःषष्टिरेकाशीतिपदं गृहे। 'चतुरस्त्रीकृते क्षेत्रे चाष्टधा नवधा कृते। कोणे रेखान्ततो दत्त्वा नवभागान् प्रकल्पयेत्। ईशकोणार्द्धतो ज्ञेयः पर्जन्यपदसंस्थितः। द्विपदस्थो जयन्तश्च शक्रः स्यादेककोष्ठगः। भास्करश्च पदो ज्ञेयो द्विपदः सत्य उच्यते। भृशः पदस्थो ज्ञातव्यो व्योम चैव पदार्द्धकम्। हुताशनः पदार्द्धे तु पूषा च पदसंस्थितः। वितथो द्विपदो ज्ञेयः पदैकस्थो गृहक्षतः। वैवस्वतः पदैकस्थो गन्धर्वो द्विपदस्थितः। भृङ्गश्चैकपदो ज्ञेयो मृगश्चार्द्धपदस्थितः। पितरो द्विपदे ज्ञेयाः पदे दौवारिकस्तथा। सुग्रीवो द्वि पदे ज्ञेयः

पदस्थः पुष्पदन्तकः। पयसां पतिरेकस्थोऽसुरो द्विपदसं-स्थितः। शोषश्चैकपदो ज्ञेयः पापोऽर्द्धपद उच्यते। रोगश्चार्द्ध-पदो ज्ञेयो नागश्चापि पदे स्थितः। द्विपदे विश्वकर्मा तु भल्लाटः पदसंस्थितः। यज्ञेश्वरः पदो ज्ञेयो नागराड्द्विपद-स्थितः। पदस्था श्रीर्महादेवी दितिश्चार्द्धपदस्थिता। आपास्तु पादसंस्थः स्यादापवत्सः पदस्थितः। चतुष्पदस्थो विज्ञेय-श्चार्य्यमा मध्यपूर्वगः। सावित्रस्तु पदो ज्ञेयः सावित्री पद-संस्थिता। ततो विवस्वान् विज्ञेयश्चतुष्कैर्मध्यसंस्थितः। इन्द्र-श्चेन्द्रात्मजश्चोभावेकैकपदसंस्थितौ। मित्रश्चतुष्पदश्चैव पश्चिमे च व्यवस्थितः। रुद्रश्चैकपदो ज्ञेयो राजयक्ष्मा पदस्थितः। धराधरश्च विज्ञेय उत्तरे च चतुष्पदे। चतुष्पदश्चतुर्हस्तो मध्ये ज्ञेयः प्रजापतिः। देवतानुचरा बाह्ये सर्वे चान्तस्तथासुराः। एवं प्रगृह्य कोष्ठानि रजसा पूर्य्य देशिकः। एतेषामेव देवानां बलिं दद्यात्तु कामिकम्'। रजसेति पञ्चवर्णरजोभिः। तथाच शारदायाम् 'उक्तानामपि देवानां पदान्यापूर्य्य पञ्चभिः। रजोभिस्तैर्यथोक्तेभ्यः पायसान्नैर्बलिं हरेत्'। तथा 'पीतं हरिद्राचूर्णं स्यात् सितं तण्डुलसम्भवम्। कुसुम्भचूर्णमरुणं कृष्णं दग्धपुलाकजम्। विल्वादिपत्रजं श्याममित्युक्तं वर्ण-पञ्चकम्'। स्यात् पुलाकस्तुच्छधान्ये इत्यमरोक्तेः तुच्छम् अपकृष्टम्। 'पूज्या मण्डलबाह्ये तु पूर्वाग्नेय्यादिकक्रमात्। स्कन्दश्चैव विदारी च अर्य्यमा पूतना तथा। जम्भका पाप-राक्षसी पिलिपिच्छश्चरक्यपि'। मण्डलकरणासामर्थ्ये शाल-ग्रामसमीपे सर्वे पूज्याः 'शालग्रामशिलारूपी यत्र तिष्ठति केशवः। तत्र देवासुराः यक्षा भुवनानि चतुर्दश'। इति पद्मपुराणवचनात्। तत्रावाहनविसर्जने न स्तः। 'शालग्रामे स्थावरे च नावाहनविसर्जने' इति वचनात् तदसम्भवे घटादि-

ग्ले 'प्रतिमास्थानेष्वप्सु आवाहनविसर्जनवर्जम्' इति बौधा-
ायनवचनात्। एषां विशेषबलिर्मत्स्यपुराणदेवीपुराणाभ्या-
मुक्तोऽपीदानीन्तनैर्न व्यवह्रियते इति न लिखितः किन्तु
मत्स्यपुराणोक्त पायसबलिर्दीयते। तथाच 'पायसं वापि
दातव्यं स्वनाम्ना सर्वतः क्रमात्। नमस्कारेण मन्त्रेण प्रण-
वाद्येन सर्वतः'। अतएव प्रागुक्तशारदावाक्ये पायसमात्र-
मुक्तं तेन एष पायसबलिः ओम् ईशानाय नमः इत्यादिना
प्रयोगः। न च वाचस्पतिमिश्रोक्त अमुकदेवतायै एष पायस-
बलिर्नम इत्यादि प्रणवादिनमस्कारान्तस्वनामरूपमन्त्रमध्ये
देय प्रवेशस्यायुक्तत्वात्। तथाच ब्रह्मपुराणम् 'ओङ्कारादि-
समायुक्तं नमस्कारान्तकीर्त्तितम्। स्वनामसर्वसत्त्वानां मन्त्र
इत्यभिधीयते'। देवीपुराणम् 'एवम्भूतगणानान्तु बलिर्देयस्तु
कामिकः। एतान् प्रपूजयेद्देवान् कुशपुष्पाक्षतैर्बुधः। एवं
सम्पूजिता देवाः शान्तिपुष्टिप्रदा नृणाम्। अपूजिता विनिघ्नन्ति
कारकं स्थापकं तथा। एतान् प्रपूजयेद्देवान् कुशपुष्पाक्षते-
स्तथा'। अत्र प्रपूजाया नित्यत्वाद्वक्ष्यमाण मत्स्यपुराणवचने
होमानन्तरं बलिदानाच्च बलेः काम्यत्वात् पूजाहोमानन्तरं
बलिदानाचारः। तथाच 'ब्रह्मस्थाने तथा कुर्य्याद्वासुदेवस्य
पूजनम्। श्रियाश्च पूजनं कुर्य्याद्वासुदेवगणस्य च। गन्धा-
द्यं पुष्पनैवेद्यधूपाद्यैः सुरसत्तम। ततः सम्पूजयेत्तस्मिन्
सर्वलोकधरां महीम्। सुरूपां प्रमदारूपां दिव्याभरणभूषि-
ताम्। ध्यात्वा तामर्चयेद्देवीं परितुष्टां स्मिताननाम्। ततः
स्वनाममन्त्रेण सर्वदेवमयं हरिम्। ध्यात्वा समर्चयेत्तत्र
यजेद्वास्तु नरं परम्। ब्रह्मस्थाने ततो विद्वान् कुर्य्यादाधार-
मच्युतेः। तस्मिन् संस्थापयेत् कुम्भं वह्निन्या सह पूरितम्।
हैमं वा राजतं पात्रं ताम्रमयं वा दृढं शुभम्। सर्वबीजौषधीयुक्तं

सुवर्णरजतान्वितम्। ब्रह्मस्थाने ततो मन्त्री कलसं स्थाप्य
पूजयेत्। तस्मिंश्चतुर्मुखं देवं प्राजेशं मन्त्रविग्रहम्। गन्धैः
पुष्पैश्च धूपैश्च नैवेद्यैः सुमनोहरैः। ततो मण्डलवाह्ये तु
प्रतीच्यां प्राङ्मुखः स्थितः। आचार्य्यो गृह्यसम्भारं ब्रह्मादीं-
स्तर्पयेत् सुरान्। प्राजेशं तर्पयेद्विद्वान् आहुतीनां शतेन
च। इतरान् दशभिर्देवानाहुतिभिः प्रतर्पयेत्। ततः प्रणम्य
विज्ञाप्य कृत्वा वै स्वस्तिवाचनम्। प्रगृह्य कर्करीं सम्यङ्मण्ड-
लान्तः प्रदक्षिणम्। सूत्रमार्गेण देवेन तोयाधारेण कारयेत्।
पूर्ववत् तेन मार्गेण सप्तवीजानि वापयेत्। आरभ्य तेन
मार्गेण तस्य खातस्य कारयेत्। ततो गर्त्तं खनेन्मध्ये हस्त-
मानप्रमाणतः। चतुरङ्गुलमात्रं तदधः खन्यात् सुसम्मितम्।
गोमयेन प्रलिप्याथ चन्दनेन विलेपितम्। मध्ये दत्त्वा तु
पुष्पाणि शुक्लान्यक्षतमेव च। आचार्य्यः प्राङ्मुखो भूत्वा
ध्यायेद्देवं चतुर्मुखम्। तूर्य्यमङ्गलघोषेण ब्रह्मघोषरवेण च।
अर्घ्यं दद्यात् सुरश्रेष्ठ कुम्भतोयेन मन्त्रवित्। प्रगृह्य कर्करीं
तान्तु तत् खातं पूरयेज्जलैः। सर्वरत्नसमायुक्तैर्विमलैश्च सुग-
न्धिभिः। तस्मिन् पुष्पाणि शुक्लानि प्रक्षिपेदोमिति स्मरन्।
सदावर्त्तं परीक्षेत दधिभक्तान्वितं क्षिपेत्। शुभं स्याद्दक्षिणा-
वर्त्तेऽशुभं वामे भवेत्ततः। वीजैः शालियवादीनां गर्त्त-
न्तं पूरयेत्ततः। क्षेत्रजाभिः पवित्राभिर्मृद्भिर्गर्त्तं प्रपूरयेत्।
एवं निष्पाद्य विधिना वास्तुयागं सुरोत्तम। सुवर्णं गाश्च
वस्त्रञ्च आचार्य्याय निवेदयेत्'। इतरानीशादीन्। होमस्तु
प्रणवादि स्वाहान्तैस्तत्तन्नामभिः। तथाच विष्णुधर्मोत्तरे
'एकैकां देवतां राम समुद्दिश्य यथाविधि। चतुर्थ्यन्तेन
धर्मज्ञो नाम्ना च प्रणवादिना। होमद्रव्यमथैकैकं शत
संख्यन्तु होमयेत्'। शतसंख्यमिति पूर्वोक्तवचनानुसारे

वास्तुयागेतरपरं स्मृतिः 'स्वाहावसाने जुहुयात् ध्यायन् वै मन्त्रदेवताम्'। होमदक्षिणासम्प्रदानमाह छन्दोगपरिशिष्टं 'ब्राह्मणे दक्षिणा देया यत्र या परिकीर्त्तिता। कर्मान्तेऽनुच्यमानायां पूर्णपात्रादिका भवेत्। विदध्याद्धौत्रमन्यश्चेद् दक्षिणार्द्धहरो भवेत्। स्वयञ्चेदुभयं कुर्य्यादन्यस्मै प्रतिपादयेत्'। अन्यो यजमानभिन्नः। उभयं ब्रह्मकर्म होतृकर्म च। उपसंहारे वास्तुयागमिति श्रुतेः सङ्कल्पवाक्ये तेनैवोल्लेखमाचरन्ति। अत्र मिलितामिलितदक्षिणादानात् फलतारतम्यम्। मात्स्ये 'ततः सर्वौषधिस्नानं यजमानस्य कारयेत्'। देवीपुराणे 'कालज्ञस्थपती पूज्यौ वैष्णवान् शक्तितोऽर्चयेत्। ब्राह्मणान् भोजयित्वा तु नृत्यगीतादि कारयेत्। प्रासादं कारयेद्विद्वान् गृहं वापि मनोहरम्। कार्य्यस्तु पञ्चभिर्विल्वैर्विल्ववीजैरथापि वा। होमान्ते भक्ष्यभोज्यैश्च वास्तुयागे वलिं हरेत्' इति मत्स्यपुराणे होमान्ते वलिविधानात् अत्रापि होमं कृत्वा वस्त्रादिप्रागुदितसर्वकर्मकरणाचारः। अत्र प्रजापतिनाम्निः 'प्रतिष्ठायां लोहितश्च वास्तुयागे प्रजापतिः। जलाशयप्रतिष्ठायां वरुणः समुदाहृतः'। इति मत्स्यसूक्तवचनात्। एकाशीतिपदवास्तुयागे मत्स्यपुराणं भूम्यधिकारे 'पञ्चगव्यौषधिजलैः परीक्षित्वा तु सेचयेत्। एकाशीतिपदं कृत्वा रेखाभिः कनकेन तु। पश्चात्पिष्टेन चालिप्य सूत्रेणालोक्य सर्वतः। दश पूर्वायता रेखा दश चैवोत्तरायता। सर्ववास्तुविभागे तु विज्ञेया नवका नव'। पञ्चगव्यमन्त्रमाह शङ्खः 'गायत्र्यादाय गोमूत्रं गन्धद्वारेति गोमयम्। आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि। तेजोऽसीति घृतञ्चैव देवस्य त्वा कुशोदकम्'। औषधीनाह कात्यायनः। 'व्रीहयः शालयो मुद्गा गोधूमाः सर्षपास्तिलाः। यवाश्चौषधयः सप्त

विपदो घ्नन्ति धारिताः'। ब्रीहिः शरत्पक्वधान्यं षष्टिकाख्यं ग्राजयो हैमन्तिकाः दशेति वास्तुमण्डलवायव्ये उपविश्य पूर्वाभिमुखो गुरुः उत्तरस्यामारभ्य दश रेखाः प्रागुदीर्यथा दक्षिणं कुर्य्यात्। एवं नैरृत्यामुपविश्य पश्चिमतः पूर्वापरगा दशोत्तरायता रेखाः कुर्य्यात् कनकशलाकादिना। रुद्रयामले तासां नामानि 'शान्ता यशोवती कान्ता विशाला प्राणवाहिनी। शची सुमनसा नन्दा सुभद्रा सुरथा तथा'। इत्याद्या दश रेखाः 'हिरण्या सुव्रता लक्ष्मीर्विभूतिर्विमला प्रिया। जया कला विशोका च इड़ा संज्ञा दशोत्तरा' इत्यन्तदशरेखाः। 'एकाशीतिपदं कृत्वा वास्तुज्ञत् सर्ववास्तुषु। पदस्थान् पूजयेद्देवान् त्रिंशत् पञ्चदशैव तु। द्वात्रिंशद्वाह्यतः पूज्याः पञ्चाशान्तस्त्रयोदश। नामतस्तानि वक्ष्यामि स्थानानि च निबोध मे। ईशानकोणादिषु तान् पूजयेच्च विधानतः। शिखी चैवाथ पर्जन्यो जयन्तः कुलिशायुधः। सूर्य्यः सत्यो भृशश्चैव आकाशो वायुरेव च। पूषा च वितथश्चैव गृहक्षेत्रयमावुभौ। गन्धर्व्वो भृङ्गराजश्च मृगः पितृगणस्तथा। दौवारिकोऽथ सुग्रीवः पुष्पदन्तो जलाधिपः। असुरः शोषपापी च रोगोऽतिमुख्य एव च। भल्लाटः सोमसर्पौ च अदितिश्च दितिस्तथा। वहिर्द्वात्रिंशदेते च तदन्तश्चतुरः शृणु। ईशानादिचतुष्कोणसंस्थितान् पूजयेद् बुधः। आपश्चैवाथ सावित्रो जयो रुद्रस्तथैव च। मध्ये नवपदे ब्रह्मा तस्याष्टौ च समीपगाः। सर्व्वानेकान्तरान् विद्यात् पूर्व्वाद्याद्यामतः शृणु। अर्य्यमा सविता चैव विवस्वान् विबुधाधिपः। मित्रोऽथ राजयक्ष्मा च तथा पृथ्वीधरः क्रमात्। अष्टमश्चापवत्सश्च परितो ब्रह्मणः स्मृताः। आपश्चैवापवत्सश्च पर्ज्जन्योऽग्निर्दितिस्तथा। पादिकानाञ्च वर्गोऽयमेवं कोणेष्व-

श्रितः। तन्मध्ये तु बहिर्विंशाद्दिपदास्ते तु सर्वतः। अर्य्यमा च विवस्वांश्च मित्रं पृथ्वीधरस्तथा। ब्रह्मणः परितो दिक्षु त्रिपदास्ते तु सर्वतः'। एवमिति ईशानादिकोणे कोण-चतुष्टये पवस्थितैककोष्ठसहिते देवतापञ्चकमेवाग्नेयादिकोणेषु अपीत्यर्थः। दिक्षु पूर्वादिदिक्षु। 'विंशानिदानीं वक्ष्यामि ब्रह्मनपि पृथक् पृथक्। वायुं यावत् यथा रोगात् पितृभ्यः शिखिनः पुनः। मुख्याद्भृशमथो शोषाद्वितथं यावदेव तु। सुग्रीवाददितिं यावद्भृङ्गाज्जयन्तमेव च। एते विंशाः समाख्याताः क्वचिज्जठर एव च। एतेषां चैव सम्पातः पदमध्ये समस्तथा। मर्म चैतत् समाख्यातं त्रिशूलि कोणगं चरेत्। स्तम्भन्यासेषु वक्ष्यामि तुलाविधिषु सर्वदा। कीलोच्छिष्टोप-घातानि वर्जयेद् यत्नतो नरः। सर्वत्र वास्तुनिर्दिष्टं पितृ-वैश्वानरायतः। मूर्द्ध्न्यग्निः समाधिष्टो मुखे चापः समा-श्रितः। पृथ्वीधरोऽर्य्यमा चैव स्तनयोस्तावधिष्ठितौ। वक्ष-स्थले चापवत्सः पूजनीयस्तथा बुधैः। नेत्रयोर्दितिपर्जन्यौ श्रोत्रे दितिजयन्तकौ। सर्पेन्द्रावंशसंस्थौ च पूजनीयौ प्रय-त्नतः। सोमसूर्य्यादयस्तद्वद्बाह्वोः पञ्च च पञ्च च। रुद्रश्च राजयक्ष्मा च वामहस्तसमाश्रितौ। सावित्रः सविता तद्व-द्धस्तं दक्षिणमाश्रितौ। विवस्वानथ मित्रश्च जठरे संव्यव-स्थितौ। पूषा च पापयक्ष्मा च हस्तयोर्मणिबन्धके। तथैवा-सुरशेषौ च वामपार्श्वं समाश्रितौ। पार्श्वे तु दक्षिणे तद्व-द्वितथः स गृहक्षतः। ऊर्वोर्यमाम्बुकौ ज्ञेयौ जान्वोर्गन्धर्व-पुष्पकौ। जङ्घयोर्भृङ्गसुग्रीवौ कट्यां दौवारिको मृगः। जयः शक्रस्तथा मेढ्रे पादयोः पितरस्तथा। मध्ये नवपदो ब्रह्मा हृदये स तु पूज्यते। चरकीञ्च विदारीञ्च पूतनां पापराक्ष-सीम्। ईशाग्नेयादिकोणेषु मण्डलाद्बाह्यतो यजेत्'। पिलिप्स

इति पितृगणादारभ्य वह्निं यावत् वंशः प्रसारितस्तद्दायतो वास्तुपुरुषः। अम्बुपो वरुणः पुष्पकः पुष्पदन्तः। तथा 'प्रदक्षिणन्तु कुर्वीत वास्तोः पदविलेखनम्'। कोष्ठानां लिखनं प्रदक्षिणं कार्य्यम्। तथा 'तर्जनी मध्यमा चैव तथाङ्गुष्ठश्च दक्षिणः। प्रवालरत्नकनकं फलपिष्टाक्षतोदकम्। सर्वञ्च वामभागेषु शस्तं पदविलेखने'। तथा 'वास्तौ परीक्षिते सम्यग्वास्तुदेहे विचक्षणः। वास्तूपशमनं कुर्य्यात् समिद्भिर्बलिकर्मणा। जीर्णोद्धारे तथोद्याने तथा गृहनिवेशने। द्वाराभिबन्धने तद्वत् प्रासादेषु गृहेषु च। वास्तूपशमनं कुर्य्यात् पूर्वमेव विचक्षणः। एकाशीतिपदं लेख्यं लेखकैर्वास्तुपिष्टकैः। होमस्त्रिमेखले कार्य्यः कुण्डे हस्तप्रमाणके'। विश्वकर्मा 'खाताधिके भवेद्रोगी हीने धेनुधनक्षयः। वक्रकुण्डे तु सन्तापो मरणं छिन्नमेखले। मेखलारहिते शोको ह्यधिके वित्तसंक्षयः। भार्य्याविनाशनं कुण्डं प्रोक्तं योन्या विना कृतम्। अपत्यध्वंसनं प्रोक्तं कुण्डं यत् कण्ठवर्जितम्'। वशिष्ठसंहितायां 'तस्मात् सम्यक् परीक्ष्यैवं कर्त्तव्यं शुभवेदिकम्'। एवंविधकुण्डसम्भवे क्रियासारः। 'कुण्डमेवंविधं न स्यात् स्थण्डिलं वा समाश्रयेत्'। मत्स्यपुराणं 'यवैः कृष्णतिलैस्तद्वत् समिद्भिः क्षीरसम्भवैः। पलाशैः खादिरैरपामार्गोडुम्बरसम्भवैः। कुशदूर्वायवैर्वापि मधुसर्पिःसमन्वितैः। कार्य्यस्तु पञ्चभिर्बिल्वैर्बिल्ववीजैरथापि वा। होमान्ते भोज्यभक्ष्येश्च वास्तुदेशे बलिं हरेत्'। अत्र होमे मन्त्रानाह विष्णुधर्मोत्तरं 'वास्तोष्पतेन मन्त्रेण यजेच्च गृहदेवताम्'। वास्तोष्पतेन वास्तोष्पतिदैवतेन पञ्चमन्त्रेण। बलिद्रव्यञ्च पायसं प्रागेव लिखितम्। 'ब्रह्मस्थाने ततः कुर्य्याद्वासुदेवस्य पूजनम्' इत्यादि। सुवर्णं गां वस्त्रयुग-

माचार्य्याय निवेदयेत् इत्यन्यसमत्रापि बोध्यम् । कल्पतरौ मत्स्यपुराणं 'ततः सर्व्वौषधिस्नानं यजमानस्य कारयेत् । द्विजांश्च पूजयेत्तस्या ये चान्ये गृहमागताः । एतद्वास्तूपशमनं कृत्वा कर्म समाचरेत् । प्रासादभवनोद्यानप्रारम्भे परिवर्त्तने । पुरवेश्मप्रवेशेषु सर्व्वदोषापनुत्तये । इति वास्तूपशमनं कृत्वा सूत्रेण वेष्टयेत्' । इति मत्स्यपुराणे उपक्रमोपसंहारयोर्वास्तूपशमनत्वेनाभिधानात् वास्तूपशमनं कर्म्मणो नामधेयम् इति तेनैव उल्लेखः सर्व्वदोषापनुत्तये इति श्रुतेश्च वास्तुसर्व्वदोषापनोदनं फलं सङ्कल्पे तु तदुल्लेखः कार्य्यः । एतत्तु प्रारम्भप्रवेशान्यतरस्मिन्नवश्यं कर्त्तव्यम् आवश्यकत्वे प्रमाणं प्रागेवोक्तम् ।

इति श्रीरघुनन्दनभट्टाचार्य्यविरचितं वास्तुयाग-
प्रमाणतत्त्वं समाप्तम् ।

---

## कृत्यतत्त्वम् ।

प्रणम्य कामदं रामं भक्तानुग्रहकारकम् । कृत्यतत्त्वानि तत्प्रीत्यै वक्ति श्रीरघुनन्दनः । तिथितत्त्वेऽनुसन्धेयं प्रमाणञ्चास्य कोविदैः । वैशाखादिक्रमेणैव प्रयोगोऽत्र विलिख्यते । तत्र वैशाखकृत्यम् । तत्र पद्मपुराणम् । 'तुलामकरमेषेषु प्रातःस्नानं विधीयते' । वैष्णवामृते 'गवामर्बुदप्रसूतानां लक्षं दत्त्वा तु यत् फलम् । तत् फलं लभते राजन् मेषे स्नात्वा तु जाह्नवीम्' । पितामहः । 'कार्त्तिकस्य तु यत् स्नानं माघे मासि विशेषतः । कृच्छ्रादिनियमानाञ्च चान्द्रमानप्रमाणतः' । आभ्यां कार्त्तिकादिस्नाने सौरचान्द्रयोर्विकल्पेनानुष्ठानम् ।

तत्र चान्द्रमपि द्विविधम्। तथाच विष्णुः। 'दर्शं वा पौर्ण-मासीं वा आरभ्य स्नानमाचरेत्। पुण्यान्यहानि त्रिंशत्तु मकरस्थे दिवाकरे'। दर्शान्तयागसम्बन्धिनीं प्रतिपदं पौर्ण-मासीं तदिष्टिसम्बन्धिनीं प्रतिपदमारभ्य त्रिंशत्तिथिं नारा-यणोपाध्यायस्तु दर्शपौर्णमासीति पूर्वदिनसङ्कल्पपरमिति तत्र सौरकल्पे राश्युल्लेखः कार्य्यः 'संक्रान्तिविहिते कार्य्ये संक्रान्तिः परिकीर्त्तिता। मासोल्लेखस्तेतरस्मिन् रविराशिस्थितिस्तथा'। इति गरुड़ात्। ततश्चारुणोदयकाले मज्जनं कृत्वा आच-म्योदङ्मुखः ओम् तत्सदित्युचार्य्य अद्य वैशाखेमासि अमुकपक्षे अमुकतिथौ आरभ्य मेषस्थरविं यावत् प्रत्यहममुकगोत्रः श्रीअमुकदेवशर्मा विष्णुप्रीतिकामः प्रातःस्नानमहं करिष्ये इति। गङ्गायान्तु अर्द्धप्रसूतगवीलक्षदानजन्यफलसमफल-प्राप्तिकामो विष्णुप्रीतिकामो वा इति सङ्कल्प्य यथोक्तविधिना स्नायात्। प्रतिदिनसङ्कल्पे तु आरभ्य मेषस्थरविं यावत् प्रत्यहमिति न वक्तव्यं किन्तु मासीत्यनन्तरं मेषस्थरवावित्य-धिकं वक्तव्यं चान्द्रे तु मासि अनन्तरं शुक्लपक्षे प्रतिपदि तिथौ आरभ्य दर्शपर्य्यन्तमित्यूहनीयं प्रतिदिनसङ्कल्पे तु आरभ्य प्रत्यहमित्यस्तं न वक्तव्यम्। एवं कृष्णप्रतिपदारम्भे ऊह-नीयम् एवं मासान्तरे चोहनीयम्। सङ्कल्पाकरणे फलहानि-माह भविष्यपुराणं 'सङ्कल्पेन विना राजन् यत्किञ्चित् कुरुते नरः। फलञ्चाल्पाल्पकं तस्य धर्मस्यार्द्धक्षयो भवेत्'। महा-भारते 'यो ददाति हि मेषादौ शक्तूनम्बुघटान्वितान्। पितॄनु-द्दिश्य विप्रेभ्यः सर्वपापैः प्रमुच्यते। विप्रेभ्यः पादुकां छत्रं पितृभ्यो विषुवे शुभम्'। पितृभ्यः पितॄनुद्दिश्य अत्र विष्णुरहस्यम् 'अयने कोटिगुणितं लक्षं विष्णुपदीषु च। षड़शीतिसहस्रन्तु षड़शीत्यामुदाहृतम्। शतमिन्दुक्षये पुण्यं सहस्रन्तु दिनक्षये।

विषुवे शतसाहस्रमाकामावेष्वनन्तकम्' इति मत्स्यपुराणोक्त-शतसहस्रगुणिततत्कर्मफलजनकत्वेन विवक्षणीयत्वात्शेषादावि-त्यपि विषुवसंक्रान्तिपुण्यकालपरः अन्यथा कालद्वयकल्पनापत्तेः व्यवहारोऽपि तथा। संक्रमणपुण्यकालस्तु दिनसंक्रमणे कृत्स्नं दिनं षड़शीतिमुखेऽतीते वृत्ते च विषुवद्वये। भविष्यत्ययने पुण्यमतीते चोत्तरायणे' इति तु पुण्यतरकालपरं दिनवृत्तोत्त-रायणादिविहितविंशतिदण्डादीनां रात्रिप्रविष्टभागस्यापि पुण्यत्वम्। रात्रिसंक्रमणे तु दण्डन्यूनप्रथमयामाभ्यन्तरे तद्दिव-सीयशेषयामद्वयं पुण्यं दण्डद्वयात्मकमध्यरात्रे तद्दिवसीय तिथेरभेदे तु तद्दिवसीयशेषयामद्वयं पुण्यं भेदे तु तद्दिवसीय-शेषयामद्वयं पुण्यं परदिवसीयाद्ययामद्वयञ्च तिथ्यभेदभेदयो-र्दक्षिणायने तद्दिवसीयशेषयामद्वयम् उत्तरायणे परदिवसी-याद्ययामद्वयं दण्डाधिकशेषार्द्धरात्रिसंक्रमणे परदिनाद्ययाम-द्वयं सन्ध्यासंक्रमणे तु दिनदण्डे दिनस्य रात्रिदण्डे रात्रेर्व्यव-स्थेति संक्रान्त्यां स्नानमावश्यकम् अनिष्टसंक्रमणे तु तद्दोष-शान्त्यर्थं 'धुस्तूरबीजसलिलेन सर्वौषधिजलेन च स्नानं विष्णुपूजनं जन्मलग्नजपसंक्रान्तिपुण्यकाल एव स्त्रीतैलमांस-वर्जम् इन्दुक्षयेऽमावास्यायां दिनक्षये, तिथित्रये आकामावेषु आषाढ़कार्त्तिकवैशाखपौर्णमासीषु ततः कृतस्नानादि प्राङ्मुख उदङ्मुखं ब्राह्मणं गन्धपुष्पाभ्यां पूजयित्वा जलघटान्वित-शक्तूंश्च ओम् जलघटान्वितशक्तुभ्यो नमः इति पूजयित्वा ब्राह्मणहस्ते जलं दत्त्वा घटं संप्रोक्ष्य वामहस्ते स्पृष्ट्वा कुश-त्रयतिलजलान्यादाय ओम् तत्सदित्युच्चार्य्य ओम् अद्य अमुक-मासि अमुकपक्षेऽमुकतिथौ महाविषुवसंक्रान्त्याम् अमुकगोत्रस्य पितुः अमुकदेवशर्मणः सर्वपापविमुक्तिकामः एतान् जल-घटान्वितशक्तून् विष्णुदेवताकान् अमुकगोत्राय अमुकदेव-

शर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददानीति ब्राह्मणहस्ते जलं दद्यात्। ब्राह्मणस्तु दक्षिणहस्ततलमध्यभागाग्नेयतीर्थेन ओम् इत्यनेन गृहीत्वा स्वस्तीत्युक्त्वा गायत्रीं कामस्तुतिञ्च पठेत् जलघटान्विताः शक्तवो विष्णुदेवताका इति वदेत् ततो दक्षिणां दद्यात् यथा ओम् अद्येत्यादि कृतैतज्जलघटान्वित-शक्तुदानकर्मणः प्रतिष्ठार्थं दक्षिणां किञ्चित् काञ्चनमूल्यं ब्राह्मणाय अहं ददानीति। ततोऽच्छिद्रावधारणं ब्राह्मण-विशेषानुद्देशे यथासम्भवगोत्रनाम्ने ब्राह्मणायेति विशेषः तत्र ब्राह्मणासन्निधाने तुभ्यमिति न देयं भूमौ त्यागजल-प्रक्षेपः एवमन्यत्रापि सम्प्रददे इति वाक्ये विशेषः सत्पात्राभावे तत्सत्त्वेऽपि तत्तत्कामो विष्णुप्रीतिकामो वा विष्णवे दत्त्वा ब्राह्मणाय पश्चात् प्रतिपादयेत्। 'देवे दत्त्वा तु दानानि देवे दत्त्वा तु दक्षिणाम्। तत् सर्वं ब्राह्मणे दद्यादन्यथा निष्फलं भवेत्' इति मत्स्यसूक्तात्। दत्त्वेत्यत्र देयानीति वाराहीतन्त्रे पाठः। वैशाखे यो घटं पूर्णं सभोज्यं वै द्विजन्मने। ददात्यभुक्त्वा राजेन्द्र स याति परमां गतिम्'। अत्रापि यथायोग्यं संपूज्य पूर्ववद्वाक्येन मनोरथफलार्थिना सभोज्य घटो देयः। स्मृतिः 'मेषादौ शक्तवो देया वारिपूर्णा च गर्गरी' अत्रापि यथायोग्यं संपूज्य पूर्ववद्वाक्यं कृत्वा पठेत्। ओम् 'एष धर्मघटो दत्तः ब्रह्मविष्णुशिवात्मकः। अस्य प्रदानात् सफला मम सन्तु मनोरथाः। इति मन्त्रलिङ्गान्मनोरथफलत्वं ज्ञेयम्। कृत्यचिन्तामणौ 'मसूरं निम्बपत्राभ्यां योऽत्ति मेषगते रवौ। अपि रोषान्वितस्तस्य तक्षकः किं करिष्यति। उत्तरार्द्धे तु 'मेषस्थे च विधौ तत्र नास्त्यङ्के विषजं भयम्' इति संवत्सरप्रदीपे पाठः। ततश्च मेषस्थरविस्थितिकाले मसूरं निम्बपत्रद्वयञ्च भक्षयेत्। भविष्ये 'या शुक्ला नरशार्दूल

वैशाखेमासि वै तिथिः। तृतीया साक्षया ख्याता गीर्वाणै-
रपि वन्दिता। योऽस्यां ददाति करकान् वारिवाजसमन्वि-
तान्। स याति पुरुषो वीर लोकान् वै हेममालिनः'।
वाजमन्नम्। हेममालिनः सूर्य्यस्य। ततो जलमन्नसमन्वि-
तदाने सूर्य्यलोकगमनं फलं दानानुष्ठानं पूर्ववत्। ब्रह्मपुराणं
'वैशाखे शुक्लपक्षे च तृतीयायां कृतं युगम्। कार्त्तिके शुक्ल-
पक्षे च त्रेता च नवमेऽहनि। अथ भाद्रपदे मासि त्रयोदश्यान्तु
द्वापरम्। माघे तु पौर्णमास्यान्तु घोरं कलियुगं स्मृतम्।
युगारम्भास्तु तिथयो युगाद्यास्तेन विश्रुताः'। तत्र वैशा-
खादयः पौर्णमास्यन्ता एव तथैव तिथिकृत्याभिधानात् मुख्य-
वाचित्वे कार्त्तिकनवमेऽहनीति सिद्धौ शुक्लपक्ष इति व्यर्थं
स्यात् आसां प्रशंसामाह विष्णुपुराणं 'एता युगाद्याः कथिताः
पुराणैरनन्तपुण्यास्तिथयश्चतस्रः। उपप्लवे चन्द्रमसोरवे-
स्त्रिष्वप्यष्टकास्वप्ययनद्वये च। पानीयमप्यत्र तिलैश्च मिश्रं
दद्यात् पितृभ्यः प्रयतो मनुष्यः। श्राद्धं कृतं तेन समाः सहस्रं
रहस्यमेतत् पितरो वदन्ति'। उपप्लवे ग्रहणे देवीपुराणं
'युगाद्या वर्षवृद्धिश्च सप्तमी पार्वती प्रिया। रवेरुदयमीक्षन्ते
न तत्र तिथियुग्मता'। अक्षयतृतीयामधिकृत्य ब्रह्मपुराणम्।
'तस्यां कार्य्यो यवैर्होमो यवैर्विष्णुं समर्चयेत्। यवान् दद्यात्
द्विजातिभ्यः प्रयतः प्राशयेद् यवान्। पूजयेच्छङ्करं गङ्गां
कैलासञ्च हिमालयम्। भगीरथञ्च नृपतिं सगराणां सुखा-
वहम्'। स्कान्दे 'वैशाखस्य सिते पक्षे तृतीयाक्षयसंज्ञिता।
तत्र मां लेपयेद् गन्धैर्लेपनैरतिशोभनैः'। मां जगन्नाथम्।
अन्यत्रापि तथाच गङ्गास्नानमधिकृत्य भविष्ये 'संवत्सरफलं
राजन् नवम्यां कार्त्तिके तथा। मन्वादौ च युगादौ च मास-
त्रयफलं लभेत्'। मन्वादयस्तु भविष्यमात्स्ययोः। 'अश्वयुक्-

शुक्लनवमीद्वादशी कार्त्तिकी तथा। तृतीया चैत्रमासस्य तथा भाद्रपदस्य च। फाल्गुनस्याप्यमावास्या पौषस्यैकादशी तथा। आषाढ़स्यापि दशमी तथा माघस्य सप्तमी। श्रावणस्याष्टमी कृष्णा तथाषाढ़स्य पूर्णिमा। कार्त्तिकी फाल्गुनी चैत्री ज्यैष्ठी पञ्चदशी सिता:। मन्वन्तरादयस्त्वेता दत्तस्याक्षयकारका:’। अमावास्याष्टमी व्यातिरिक्ता: शुक्ला: उपक्रमोपसंहारयो: शुक्लत्वकीर्त्तनात् नारदीये। ‘वैशाखे शुक्लपक्षे तु द्वादशी वैष्णवी तिथि:। तस्यां शीतलतोयेन स्नापयेत् केशवं शुचि:’। इयं पिपीतकद्वादशी नात्र युग्मादरापेक्षा अत्र विष्णुपूजने उपवासोत्तरविधानात्।

अथ यवश्राद्धं तत्र वैशाखशुक्लपक्षे कुजशनिशुक्रेतरवारे नन्दारिक्तात्रयोदशीतरतिथौ जन्मचन्द्राष्टमचन्द्रजन्मतिथिजन्मनक्षत्रत्रयपञ्चमतारात्रयेतरेषु पूर्वफल्गुनी पूर्वभाद्रपदपूर्वाषाढ़ा मघाभरण्यश्लेषार्द्रेतरनक्षत्रेषु यवश्राद्धं कर्त्तव्यम्। तच्छेषभोजनञ्च एतादृशनिषिद्धायां विषुवसंक्रान्तौ अक्षयतृतीयायाञ्च विशेषत: कर्त्तव्यम्। वैशाखाकरणे ज्यैष्ठशुक्लपक्षे आषाढ़शुक्लपक्षे च हरिशयनेतरत्र कर्त्तव्यम्।

अथ एकादशीव्रतम्। गृहस्थादीनामुभयपक्षैकादश्यामुपवासाधिकार:। कृष्णैकादश्यां पुत्त्रवतो गृहस्थस्य नाधिकार: हरिशयनाभ्यन्तरे तस्याप्यधिकार:। वैष्णवपुत्त्रवतो गृहस्थस्य सर्वकृष्णायामधिकार:। शुक्रवारादावप्येकादश्युपवासे फलाधिक्यं विधवायास्तु सर्वत्राधिकार:। अत्राष्टाब्दादधिकापूर्णाशीतिवर्षमानवो नित्याधिकारी एकादशीव्रतं नित्यम्॥ पारणदिने द्वादशीलाभे सर्व एव पूर्णां त्यक्त्वा खण्डामुपवसेत् तदलाभे गृही पूर्वां तदन्य: परां विधवापि यदा पूर्वदिने दशम्या उत्तरदिने द्वादशीयुतैकादशी तदा उत्तरामुपोष

द्वादश्यां पारणं कुर्य्यात्। पारणदिने द्वादशीनिर्गमे तु त्रयोदश्यामपि। यदा तु सूर्य्योदयानन्तरं दशमीयुतैकादशी अथ च परदिने न निःसरति तदा तां विहाय परदिने द्वादशीमुपवसेत्। यदा तु सूर्य्योदयकालीनदशमीविद्धैकादशी परदिने न निःसरति तदा तामुपवसेत्। यदा तु तथाविधा सती परदिनेऽपि निःसरति तत्परदिने च द्वादशी तदा तां विहाय खण्डामुपोष्य द्वादश्यां पारयेत्। यदा तु उभयदिने तद्विद्धैकादशी तदा पुष्टिदण्डात्मिकाम् विद्धामुपोष्य परदिने द्वादश्याद्यपादमुत्तीर्य्य पारयेत्। वैष्णवस्तु तत्रापि शुक्लपक्षे परामुपोष्य त्रयोदश्याम् एकादश्यामुपवासः सूतकादावपि कार्य्यः ततः पूर्व्वदिने संयमं विधाय परदिने प्रातःकृतस्नानादिः ओम् सूर्य्यः सोम इति तद्विष्णोरिति च पठित्वा ओम् तत्सदित्युच्चार्य्य वारिपूर्णं ताम्रपात्रं गृहीत्वा उदङ्मुखः ओम् अद्य अमुके मासि अमुकपक्षे एकादश्यान्तिथौ अमुकगोत्रः श्री अमुकदेवशर्म्मा पुरुषार्थचतुष्टयप्राप्तिकाम एकादशीव्रतमहं करिष्ये इति सङ्कल्प्य 'एकादश्यां निराहारो भूत्वा चैव परेऽहनि। भोक्ष्येऽहं पुण्डरीकाक्ष शरणं मे भवाच्युत' इति पठेत्। 'उपवासे तु सङ्कल्प्य मन्त्रपूतं जलं पिबेत्' इति स्कन्दपुराणादष्टाक्षरेण मन्त्रेण त्रिर्जपेनाभिमन्त्रितम्। 'उपवासफलं प्रेप्सुः पिबेत् पात्रगतं जलम्' इति कात्यायनवचनाच्च। ओम् नमो नारायणायेति त्रिरभिमन्त्र्य किञ्चित् तोयं पिबेत्। आचमनजलपानवत्त्रादूषणम् ओम् 'इदं व्रतं मया देव गृहीतं पुरतस्तव। निर्विघ्नां सिद्धिमाप्नोतु त्वत्प्रसादाज्जनार्दन' इति प्रार्थयेत्। ततो विष्णुं संपूज्य उपोष्य परदिनेऽपि प्रातर्विष्णुं संपूज्य 'अज्ञानतिमिरान्धस्य व्रतेनानेन केशव। प्रसीद सुमुखो नाथ ज्ञानदृष्टिप्रदो भव।

कृष्ण कृष्ण कृपालुस्त्वमगतीनां गतिर्भव। संसारार्णव-मग्नानां प्रसीद मधुसूदन'। इत्याभ्यां प्रार्थ्य द्वादशीप्रथम-पादमुत्तीर्य्य पारणं कुर्य्यात् 'द्वादश्याः प्रथमः पादो हरिवासर-संज्ञितः। तमतिक्रम्य कुर्वीत पारणं विष्णुतत्परः' इति वचनात् उपवासासामर्थ्ये वायुपुराणम्। 'नक्तं हविष्यान्नम-नोदनं वा फलं तिलाः क्षीरमथाम्बु चाज्यम्। यत् पञ्चगव्यं यदिवाथ वायुः प्रशस्तमत्रोत्तरमुत्तरञ्च'। हविष्यान्नं कार्त्तिक-कृत्ये वक्ष्यते।

अथ ज्यैष्ठकृत्यम्। तत्र वैशाख्याः पौर्णमास्या ऊर्द्ध्व कृष्णचतुर्दश्यां सावित्रीव्रतमवैधव्यकामा कुर्य्यात्। तत्र यद्दिने मुहूर्त्ताधिकचतुर्दशीलाभः प्रदोषे तत्रैव व्रतम्। उभयदिने तथाविधलाभे परदिने व्रतम् उभयदिने तथाविधालाभे पूर्व-दिने प्रदोषेतरत्रापि व्रतं तद्दिने सत्यवन्तं सावित्रीञ्च संपूज्योपोष्य कथां श्रुत्वा परदिने फलेन पारणं कुर्य्यात् रजस्वलादेः कायिकमुपवासो दैहिकं स्वयं कुर्य्यात् पूजनमन्य-द्वारा कारयितव्यं गर्भिण्यादिना तु उपवासासामर्थ्ये तु स्वयं नक्तं भोजनं कार्य्यं सर्वदासामर्थ्ये पत्या पुत्रेण वा कारयि-तव्यम् एवमन्यव्रतेषु अपि।

अथारण्यषष्ठी। तत्र ज्यैष्ठशुक्लषष्ठ्यां शुभसन्ततिकामो विन्ध्यवासिनीस्कन्दषष्ठीपूजनमहं करिष्ये इति सङ्कल्पयेत्। राजमार्त्तण्डे 'ज्यैष्ठे मासि सिते पक्षे षष्ठी चारण्यसंज्ञिता। व्यजनैककरास्तस्यामटन्ति विपिने स्त्रियः। तां विन्ध्यवासिनीं स्कन्दषष्ठीमाराधयन्ति च। कन्दमूलफलाहारा लभन्ते सन्ततिं शुभाम्'। कन्दो मृणालादिरिति श्रीधरस्वामि-व्याख्यानमत्र ग्राह्यम्। मूलादि परत्वे मूलेत्यनेनैव पौन-रुक्त्यापत्तेः। तत्रोभयदिने पूर्वाह्णे षष्ठीलाभे परदिने व्रतं

पूजने तु। ओम् विन्ध्यवासिन्यै षष्ठ्यै नम इत्यादिना पूजयेत्। 'जय देवि जगन्मातर्जगदानन्दकारिणि। प्रसीद मम कल्याणि नमस्ते षष्ठि देवि ते' इत्यनेन नमस्कृत्य 'रूपं देहि यशो देहि भाग्यं भगवति देहि मे। पुत्रान् देहि धनं देहि सर्वान् कामांश्च देहि मे'। इत्यनेन प्रार्थयेत्। ततः फलाहारं कुर्य्यात्।

अथ दशहरा। तत्र यस्यां कस्याञ्चित्तिथ्यामुदयगामिन्यां ज्यैष्ठशुक्लदशम्याम् ओम् अद्येत्यादि सुमहापातकोपपातकदशविधपापक्षयकामो दर्भकरणतिलतर्पणाङ्कस्नानमहं करिष्ये एवं दानेऽपि गङ्गायान्तु अद्येत्यादि दशविधपापक्षयकामो गङ्गायां स्नानमित्यादि सङ्कल्प्य सामान्यस्नानमन्त्रान्ते मज्जनस्यादौ ओम् 'अदत्तानामुपादानं हिंसा चैवाविधानतः। परदारोपसेवा च कायिकं त्रिविधं स्मृतम्। पारुष्यमनृतञ्चैव पैशुन्यञ्चापि सर्वशः। असम्बद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम्। परद्रव्येष्वभिध्यानं मनसानिष्टचिन्तनम्। वितथाभिनिवेशश्च त्रिविधं कर्म मानसम्। एतानि दशपापानि प्रशमं यान्तु जाह्नवि। स्नातस्य मम ते देवि जले विष्णुपदोद्भवे। विष्णुपादार्घ्यसम्भूते गङ्गे त्रिपथगामिनि। धर्मद्रवीति विख्याते पापं मे हर जाह्नवि। श्रद्धया भक्तिसम्पन्ने श्रीमातर्देवि जाह्नवि। अमृतेनाम्बुना देवि भागीरथि पुनीहि माम्' इति पठित्वा स्नायात्। हस्तायोगे तु हस्तानक्षत्रयुक्तदशम्यां दशजन्मार्जितदशविधपापक्षयकाम इति वाक्ये विशेषः। मङ्गलवारयोगे तु मङ्गलवारयुक्तायां दशम्यां दशविधपापक्षयपूर्वकशतगुणवाजिमेधायुत यज्ञजन्यफलसमफलप्राप्तिकाम इत्यभिलापे विशेषः।

अथ महाज्यैष्ठी। सा ज्यैष्ठायां गुरुचन्द्रावस्थाने रोहिण्यां

सूर्य्यावस्थाने ज्यैष्ठी पौर्णमासी चेत्तदा भवति गुरुवारयो-
स्त्वधिकज्येष्ठां विना अनुराधास्थ गुरावपि तथाविध पौर्णमा-
सीत्यपरा अनुराधास्थ गुरुचन्द्रयोरपि ज्यैष्ठपौर्णमासीत्यपरा
मूलस्थ गुरुसत्त्वेऽपि ज्येष्ठायुक्ता पौर्णमासीत्यपरा। एवं पञ्च-
विधा सा भवति तत्र जगन्नाथदर्शने विष्णुलोकगमनफलं
गङ्गास्नाने मोक्षः तत्र पौर्णमास्यामित्यनन्तरं महाज्यैष्ठ्या-
मित्यभिलापे विशेषः पश्चात्ते स्रोतोजलमात्रस्नाने यमपुर-
गमनाभावः फलम् एवं माससंज्ञकविशाखादिनक्षत्रे गुरुचन्द्र-
योर्महावस्थाने महावैशाख्यादि तस्यां स्नानोपवासयोरक्षय
फलम्। एवं गुरुस्थितिं विना मासर्क्षयुक्तायां पौर्णमास्यां
स्नानदानयोर्दशगुणं फलम्।

अथ ग्रहणम्। राहुभोग्यनक्षत्रपादावधिकचतुष्पादा-
भ्यन्तरे चन्द्रस्थित्या रात्रौ पौर्णमास्यन्ते चन्द्रग्रहणसम्भावना
एवं राहुभोग्यनक्षत्रपादावधिकपादत्रयाभ्यन्तरे सूर्य्यस्थित्या
दिवाऽमावास्यान्ते सूर्य्यग्रहणसम्भावना। तद्दर्शनस्य जन्म-
चतुःसप्ताष्टनवदशद्वादशेतरचन्द्रेषु जन्मसप्तमेतरनक्षत्रेषु ग्रहणं
दृष्ट्वा राहुस्थितिकाले सामान्यजलेऽपि स्नानं कर्त्तव्यं
प्रतिषिद्धकालीनदर्शने तु तद्दोषप्रशमनाय काञ्चनं दद्यात्।
ओम् अद्य अमुके मासि अमुकपक्षेऽमुकतिथौ राहुग्रस्ते
निशाकरे दिवाकरे वा अमुकगोत्रः श्री अमुकदेवशर्मा
गङ्गास्नानजन्यफलसमफलप्राप्तिकामोऽस्मिन् जले स्नानमहं
करिष्ये इति सङ्कल्प्य स्नायात् रात्रौ सन्ध्यावन्दनं विनापि
स्नानोत्तरं तर्पणं कार्य्यम्। सोमवारे चन्द्रग्रहणे रविवारे
सूर्य्यग्रहणे तु चूडामणियोगेऽनन्तगङ्गास्नानजन्यफलसमफल-
प्राप्तिकाम इति वाक्ये विशेषः दानादावप्यनन्तत्वेन फल-
मूहनीयं चूडामणियोगेतरत्र चन्द्रग्रहणेऽमुकद्रव्यदानजन्य-

फललक्षगुणफलप्राप्तिकाम इति रविग्रहणेऽमुकद्रव्यदशलक्ष-दानजन्यफलसमफलप्राप्तिकाम इति विशेषः। एवं स्नानेऽपि गङ्गायान्तु चन्द्रग्रहणे कोटिगुणगङ्गास्नानेनेति रविग्रहणे तु दशकोटिगङ्गास्नानेनेति शेषः। गङ्गातीरचन्द्रग्रहणदाने लक्षेत्यत्र कोटीति रविग्रहणदाने तु दशलक्षेत्यत्र दशकोटीति विशेषः। तत्र मृतपितृकेण सक्तप्रचालितामान्नेन श्राद्धं कर्त्तव्यम्। तत्र जननमरणाशौचिनापि स्नानं कर्त्तव्यम्। दानं श्राद्धञ्च न कर्त्तव्यम्। व्रताशौचवतापि सर्वं कर्त्तव्यम्। पुरश्चरणकारिणा तु ग्रहणारम्भकाले तद्दृष्ट्वा मज्जनमात्रं कृत्वाचम्य तिलकुश-जलान्यादाय ओम् तत्सदित्युच्चार्य्य अद्येत्यादि अमुकदेवताया अमुकमन्त्रसिद्धिकामो ग्रासादिमुक्तिपर्य्यन्तम् अमुकदेव-ताया अमुकमन्त्रजपमहं करिष्ये इति सङ्कल्प्य ऐशान्यां जलं क्षिप्त्वा प्राणायामं कृत्वा तावत् कालं जपेत्। सूर्य्यग्रहणे तु राहुसीतरकाले तद्दिने अन्यथोभयग्रहण एव परदिने प्रातः पूजयित्वा जपदशांशहोमं कुर्य्यात् तदभावे राहुग्रस्तनिशा-करकालीनामुकमन्त्रजपदशांशहोमद्विगुणजपं वैष्णवस्तु चतु-र्गुणजपमहं करिष्ये इति सङ्कल्प्य जपं कृत्वा समर्प्य राहु-ग्रस्तनिशाकरकालीनामुकमन्त्रजपदशांश-होम-तद्दशांशतर्पण-महङ्करिष्ये इति सङ्कल्प्य मन्त्रमुच्चार्य्यामुकदेवतां तर्पयामि नम इति तर्पयेत्। ततश्च राहुग्रस्तनिशाकरकालीनामुक-मन्त्रजपतद्दशांशहोमतद्दशांशतर्पणतद्दशांशाभिषेकमहं करिष्ये इति सङ्कल्प्यात्मानं देवतारूपं ध्यात्वा मूलमन्त्रं नमोऽन्त-मुच्चार्य्यामुकदेवतामभिषिञ्चामि नम इत्यनेन मूर्द्ध्न्यञ्जलिना-भिषिञ्चेत्। गोपालमन्त्रे तु होमदशांशेत्यत्र होमसमसंख्येति निर्दिश्य ततो महतीं पूजां विधाय अभिषेकदशांशब्राह्मण-कर्त्तृकभोजनमहं करिष्ये इति सङ्कल्प्य ब्राह्मणान् भोजयेत्।

ततो गुरुं संपूज्य दक्षिणया तोषयेत्। राहुदर्शने स्नानमावश्यकम्। अदर्शनेऽपि मुक्तौ स्नानमावश्यकं तत आचम्य इमं मन्त्रं पठेत्। 'उत्तिष्ठ गम्यतां राहो त्यज्यतां चन्द्रसङ्गमः। कर्मचण्डालयोगोत्थं कुरु पापक्षयं मम'। राहुदर्शनानधिकारिणापि स्नानमावश्यकं कार्य्यं सूर्य्यग्रहणात् पूर्वं दिवा न भोक्तव्यं चन्द्रग्रहणात् पूर्वं प्रहरत्रयं न भोक्तव्यं ग्रस्तोदयचन्द्रे दिवैव न भोक्तव्यम् अत्यन्तासामर्थ्ये तु ग्रहणात् पूर्वं मुहूर्त्तत्रयं न भोक्तव्यं ग्रहणकाले तु सर्वथा न भोक्तव्यं ग्रहणानन्तरं पाकस्थालीं परित्यज्य पाकान्तरेण भोक्तव्यम्। तत्र ग्रस्तास्तसूर्य्ये परदिने सूर्य्यं दृष्ट्वा मेघमालादिदोषे तददृष्ट्वाऽपि स्नात्वा भोक्तव्यं ग्रस्तास्तचन्द्रेऽपि चन्द्रदर्शनानन्तरं स्नात्वा मेघमालादिदोषे तददर्शनेऽपि भोक्तव्यं ग्रस्तास्त एव त्र्यहमनध्यायः।

अथ आषाढ़कृत्यम्। तत्र यद्वारे यत्काले मिथुनसंक्रमणं भूतं तद्वाराभ्यन्तरे तावत्कालावधिविंशत्यादि दण्डाधिकदिनत्रयमम्बुवाची तत्राध्ययनं वीजवपनं न कार्य्यं सर्पभयोपशमनाय दुग्धं पेयम्।

अथ नवोदकश्राद्धम्। तत्राम्बुवाचीप्रभृत्याद्रौस्थे रवौ त्रयोदशीजन्मतिथिनन्दा जन्माष्टमचन्द्रशुक्रवारेतरजन्मताराकृत्तिकाश्लेषार्द्राज्येष्ठामूलापञ्चमतारा पूर्वात्रयमघाभरणीतरनक्षत्रेषु नवोदकनिमित्तकपार्वणविधिना श्राद्धं कर्त्तव्यं तत्र कृष्णपक्षलाभे चान्द्रेणैव श्राद्धम्।

अथ चातुर्मास्यव्रतम्। तत्र वराहपुराणम्। 'आषाढ़शुक्लद्वादश्यां पौर्णमास्यामथापि वा। चातुर्मास्यव्रतारम्भं कुर्य्यात् कर्कटसंक्रमे। अभावे तु तुलार्केऽपि मन्त्रेण नियमं व्रती। कार्त्तिके शुक्लद्वादश्यां विधिवत्तत्समापयेत्'। मात्स्ये।

'चतुरो वार्षिकान् मासान् देवस्योत्थापनावधि। मधुस्वरो भवेन्नित्यं नरो गुड़विवर्जनात्। तैलस्य वर्जनादेव सुन्दराङ्गः प्रजायते। कटुतैलपरित्यागाच्छत्रुनाशः प्रजायते। लभते सन्तति दीर्घां स्थालीपाकमभक्षणात्। सदा मुनिः सदा योगी मधुमांसस्य वर्जनात्। निर्व्याधिर्निरुगोजस्वी विष्णुभक्तः प्रजायते। एकान्तरोपवासेन विष्णुलोकमवाप्नुयात्। धारणान्नखलोम्नाञ्च गङ्गास्नानं दिने दिने। नमो नारायणायेति जप्याऽनशनजं फलम्। पादाभिवन्दनाद्विष्णोर्लभेद्गोदानजं फलम्'। महाभारते 'चतुरो वार्षिकान् मासान् यो मांसं परिवर्जयेत्। चत्वारि भद्राण्याप्नोति कीर्त्तिमायुर्यशो बलम्'। ततः प्रातःकृतःस्नानादिरुदङ्मुखः कुशफलपुष्पतिलजलान्यादाय ओम् सूर्य्यः सोम इति पठित्वा ओम् तद्विष्णोरित्यादि च पठित्वा ओम् तत्सदित्युच्चार्य्य अद्याषाढ़े मासि शुक्लपक्षे द्वादश्यां तिथौ अमुकगोत्रः श्री अमुकदेवशर्मा अद्यारभ्य कीर्त्त्यायुर्यशो बलावाप्तिकामो विष्णुप्रीतिकामो वा चतुर्मासं यावत् चातुर्मास्यव्रतमहं करिष्ये इति। तथा 'आषाढ़ादि चतुर्मासं प्रातःस्नायी भवेन्नरः। विप्रेभ्यो भोजनं दत्त्वा कार्त्तिक्यां गोप्रदो भवेत्। स च विष्णुपुरं याति विष्णुव्रतमिदं स्मृतम्। एवमादिव्रतैः पार्थ तुष्टिमायाति केशवः'। आरम्भे तु 'इदं व्रतं मया देव गृहीतं पुरतस्तव। निर्विघ्नां सिद्धिमाप्नोतु प्रसादात्तव केशव। गृहीतेऽस्मिन् व्रते देव यद्यपूर्णे त्वहं म्रिये। तन्मे भवतु संपूर्णं त्वत्प्रसादाज्जनार्दन'। इति सनत्कुमारोक्तं पठेत्। समाप्तौ तु उत्थानद्वादश्याम् 'इदं व्रतं मया देव तव प्रीत्यै कृतं विभो। न्यूनं सम्पूर्णतां यातु त्वत्प्रसादाज्जनार्दन' इति पठेत्। ततो दक्षिणां दत्त्वा छिद्रमवधारयेत्। एवं व्रतान्तरेऽपि

जन्यम् एवमाषाढ़पौर्णमास्यां कर्कटसंक्रान्तौ वा आरम्भे च बोध्यम्।

अथ विष्णोः शयनम्। तत्र वामनपुराणम्। 'एकादश्यां जगत्स्वामी शयनं परिकल्पयेत्। शेषाहिभोगपर्य्यङ्कं कृत्वा संपूज्य केशवम्। अनुज्ञां ब्राह्मणेभ्यश्च द्वादश्यां प्रयतः शुचिः। लब्ध्वा पीताम्बरधरं देवं निद्रां समापयेत्'। अनुज्ञां लब्ध्वेत्यर्थः। एकादशीशयने दिवाशयनीयं परिकल्पनं रात्रौ द्वादशीक्षणे निद्रेति। मात्स्ये। 'शेते विष्णुः सदाषाढ़े भाद्रे च परिवर्त्तयेत्। कार्त्तिके परिबुध्येत शुक्लपक्षे हरेर्दिने'। भविष्यनारदीययोः 'मैत्राद्यपादे स्वपितीह विष्णुर्वैष्णव्यमध्ये परिवर्त्तते च। पौष्णावसाने च सुरारिहन्ता प्रबुध्यते मासचतुष्टयेन। मैत्रमनुराधावैष्णवं श्रवणा पौष्णं रेवती। विष्णुधर्मोत्तरे 'विष्णुर्दिवा न स्वपिति न च रात्रौ प्रबुध्यते। द्वादश्यामृक्षसंयोगे पादयोगो न कारणम्। अप्राप्ते द्वादशीमृक्षे उत्थानशयने हरेः। पादयोगे न कर्त्तव्ये नाहोरात्रं विचिन्तयेत्' भविष्ये 'निशि स्वापो दिवोत्थानं सन्ध्यायां परिवर्त्तनम्। अन्यत्र पादयोगे तु द्वादश्यामेव कारयेत्'। ततः कृताह्निकः आषाढ़े शुक्लद्वादश्यामनुराधायुक्तायां निशायां द्वादश्यामृक्षाभावे एकादश्यादि पौर्णमास्यन्ततिथिषु मैत्रपादयोगे तदभावे द्वादश्यां केवलायामपि सन्ध्याकाले वस्त्रादिना पुष्पेण वा शय्यां कृत्वा रात्रौ विष्णुं संपूज्य ओम् नमो नारायणायेत्युच्चार्य्य स्वापयेत्। ओम 'पश्यन्तु मेघानपि मेघश्याममुपागतं सिच्यमानां महीमिमाम्। निद्रां भगवान् गृह्णातु लोकनाथ वर्षास्विमं पश्यतु मेघवृन्दम्। ज्ञात्वा च पश्येव च देवनाथ मासाश्चत्वारो वैकुण्ठस्य तु देवनाथ'। ततश्च 'सुप्ते त्वयि जगन्नाथे जगत् सुप्तं भवेदिदम्। प्रबुद्धे त्वयि

बुध्येत जगत्सर्वं चराचरम्' इत्यनेन पूजयेत् 'उपवासैश्च किं तस्य यज्ञैरन्यैर्महात्मनः। प्रस्वापे च प्रबोधे च पूजितो येन केशवः' आषाढ्यां पौर्णमास्यां दानमावश्यकम्।

अथ श्रावणकृत्यं तत्र देवीपुराणं 'सुप्ते जनार्दने कृष्णे पञ्चम्यां भवनाङ्गने। पूजयेन्मनसादेवीं स्नुहीविटपसंस्थिताम्'। स्नुही सिजुवृक्षः। 'देवीं संपूज्य नत्वा च न सर्पभयमाप्नुयात्। पञ्चम्यां पूजयेन्नागाननन्ताद्यान्महोरगान्। क्षीरं सर्पिश्च नैवेद्यं देयं सर्पविषापहम्'। गारुड़े 'अनन्तं वासुकिं शङ्खं पद्मं कम्बलमेव च। तथा कर्कोटकं नागं धृतराष्ट्रञ्च शङ्खकं कालीयं तक्षकञ्चापि। पिङ्गलं मणिभद्रकं यजेत्तानसितान्नागान् दष्टमुक्तो दिवं व्रजेत्'। पुराणान्तरेऽपि। 'अनन्तो वासुकिः पद्मो महापद्मोऽथ तक्षकः। कुलीरः कर्कटः शङ्खो ह्यष्टौ नागाः प्रकीर्त्तिताः। पाद्मे 'शेषः पद्मो महापद्मः कुलीरः शङ्खपालकः। वासुकिस्तक्षकश्चैव कालीयो मणिभद्रकः। ऐरावतो धृतराष्ट्रः कर्कोटकधनञ्जयौ'। रत्नाकरे 'पिचुमर्दस्य पत्राणि स्थापयेत् भवनोदरे। स्वयञ्चापि तदश्नीयात् ब्राह्मणानपि • भोजयेत्' पिचुमर्दस्य निम्बस्य। तत्र प्रयोगः हरिशयनानन्तरं गौणचान्द्रेण श्रावणकृष्णपञ्चम्यां कृतस्नानादिरुदङ्मुखः। अद्य श्रावणे मासि कृष्णे पक्षे पञ्चम्यान्तिथौ अमुकगोत्रः श्री अमुकदेवशर्मा सर्पभयाभावकामो मनसादेवीपूजामहं करिष्ये इति सङ्कल्प्य स्नुहीवृक्षे पूजयेत्। तदभावे घटे जले वा न्यासादिकं कृत्वा देवीमन्त्रेति ध्यात्वा मनसादेवि इहागच्छेत्यावाह्य एतत् पाद्यम् ओम् मनसादेव्यै नम इत्यनेन यथाशक्ति गन्धपुष्पधूपदीपनैवेद्यानि दद्यात्। ततोऽनन्तादीन्नागान् • पूजयेत्। तत्र

क्षीरसर्पिर्नैवेद्य' प्रधानम् अनन्तादिकं पाद्यादिभिः संपूज्य 'योऽसावनन्तरूपेण ब्रह्माण्डं सचराचरम् । पुष्पवद्धारयेन्मूर्द्धि तस्मै नित्यं नमो नमः' इत्यनेन त्रिःपूजयेत् । एवं प्रणवादि-नमोऽन्तेन स्वस्वनाम्ना पूजयेत् । ओम् वासुकये नमः ओम् शङ्खाय नमः ओम् कम्बलाय नमः ओम् कर्कोटकाय नमः ओम् शङ्खकाय नमः ओम् कालीयाय नमः ओम् तक्षकाय नमः ओम् पिङ्गलाय नमः ओम् महापद्माय नमः ओम् कुलिकाय नमः ओम् मणिभद्राय नमः ओम् धनञ्जयाय नमः ओम् शेषाय नमः । ओम् ऐरावताय नमः अग्रतो गन्धपुष्पाभ्यां पूजयेत् । निम्बपत्राणि गृहे स्थापयेत् । ब्राह्मणेभ्यो दद्यात् स्वयं भक्षयेच्च । उभयदिने पूर्वाह्ने मुहू-र्त्तान्यूनपञ्चमीलाभे पूर्वदिने पूजा युग्मात् । श्रावण्यां पौर्ण-मास्यां श्राद्धमावश्यकम् ।

अथ भाद्रकृत्यम् । तत्र जन्माष्टमीव्रतं प्रमाणन्तु तिथि-तत्त्वेऽनुसन्धेयं श्रावणान्तरितभाद्रकृष्णाष्टम्यां रात्रिमध्यमुहू-र्त्ताष्टमीरोहिणीरूपजयन्तीलाभे तत्रैवोपवासः उभयदिने चेत्तदा परदिने जयन्त्यलाभे तु रोहिणीयुताष्टम्याम् उभयदिने रोहिण्यलाभे तु निशीथसम्बन्धिन्यष्टम्याम् उभयदिने निशीथ-सम्बन्धे तदसम्बन्धे वा परदिने इति । तत्र प्रयोगः । पूर्वदिने संयमं विधाय तद्दिने प्रातःकृतस्नानादिराचान्तः ओम् सूर्य्यः सोम इत्यादि ओम् तद्विष्णोरित्यादि च पठित्वा नारायणं संस्मृत्य ओम् तत्सदित्युचार्य्य उदङ्मुखस्तिलकुशजलान्यादाय ओम् अद्य भाद्रे मासि कृष्णे पक्षे अष्टम्यान्तिथौ अमुकगोत्रः श्री अमुकदेवशर्म्मा श्रीविष्णुलोकप्राप्तिकामः श्रीविष्णुप्रीति-कामो वा श्रीकृष्णजन्माष्टमीव्रतमहङ्करिष्ये । यदि उपवास-दिने प्रातःसप्तमी तदा सप्तम्यान्तिथौ आरभ्येति वक्तव्यम् ओम्

'धर्माय धर्मेश्वराय धर्मपतये धर्मसम्भवाय गोविन्दाय नमो नमः' इत्युच्चार्य्य 'ओम् वासुदेवं समुद्दिश्य सर्वपापप्रशान्तये। उपवासं करिष्यामि कृष्णाष्टम्यां नभस्यहम्। अद्य कृष्णाष्टमीं देवीं नभश्चन्द्रसरोहिणीम्। अर्चयित्वोपवासेन भोक्ष्येऽहमपरेऽहनि। एनसो मोक्षकामोऽस्मि यद्गोविन्दत्रियोनिजम्। तन्मे मुञ्चतु मां त्राहि पतितं शोकसागरे। आजन्ममरणं यावत् यन्मया दुष्कृतं कृतम्। तत्प्रणाशय गोविन्द प्रसीद पुरुषोत्तम' इति पठेत्। तत आह्निकं निर्वर्त्य अर्द्धरात्रे तत्प्रतिमासु आवाहनविसर्जनसहितं शालग्रामे घटादिस्थ जले वा आवाहनविसर्जनरहितं पूजयेत्। तत्र। मातुर्अपि बालकं सुप्तं पर्य्यङ्के स्तनपायिनं श्रीवत्सवक्षः पूर्णाङ्गं नीलोत्पलदलच्छविम्' इति ध्यात्वा ओम् श्रीकृष्ण स्वागतमिति पृच्छेत् इदमासनं श्रीकृष्णाय नम इत्यासनं दत्वा एतत् पाद्यं श्रीकृष्णाय नम इति पाद्यं दत्त्वा ओम् 'यज्ञाय यज्ञेश्वराय यज्ञपतये यज्ञसम्भवाय गोविन्दाय नमो नमः' इदमर्घ्यं श्रीकृष्णाय नमः इति दद्यात्। इदमाचमनीयम् ओम् श्रीकृष्णाय नमः ततो दधिमधुघृतात्मकं मधुपर्कमानीय एष मधुपर्कः श्रीकृष्णाय नमः पुनराचमनीयम् ओम् श्रीकृष्णाय नमः लौकिकषष्ट्यधिकशततोलकपरिमितान्यूनजलमानीय इदं स्नानीयं जलम् ओम् श्रीकृष्णाय नमः ओम् 'योगाय योगेश्वराय योगपतये योगसम्भवाय गोविन्दाय नमो नमः' इदं वस्त्रम् ओम् श्रीकृष्णाय नमः इदं रजताभरणम् एष गन्धः एतत् पुष्पम् एष धूप एष दीपः इदं नैवेद्यम् ओम् 'विश्वाय विश्वेश्वराय विश्वपतये विश्वसम्भवाय गोविन्दाय नमो नमः' पानार्थं जलम् इदमाचमनीयं पुनराचमनीयम् एतत्ताम्बूलम्। जपं कृत्वा समर्प्य स्तुत्वा प्रणमेत् ततः स्वगृह्योक्तविधिनाग्निं

संस्थाप्य घृततिलाभ्याम् ओम् 'धर्माय धर्मेश्वराय धर्मपतये धर्मसम्भवाय गोविन्दाय नमो नमः' स्वाहा इत्यनेनाष्टोत्तर-शतमष्टाविंशतिमष्टौ वा आहुतीर्जुहुयात्। ओम् 'विश्वाय विश्वेश्वराय विश्वपतये विश्वसम्भवाय गोविन्दाय नमो नमः'। इत्यनेन स्नापयेत्। ततः 'पादावमुञ्चयन्ती श्रीदेवक्याश्चर-णान्तिके। निषण्णा पङ्कजे पूज्या नमो देव्यै श्रियै' इत्यनेन श्रियं पूजयेत्। ततो गुड़घृतेन वसोर्धारां दद्यात्। नाड़ी-च्छेदं भावयेत्। ओम् षष्ठ्यै नम इति षष्ठीं पूजयेत्। ततो भगवतः श्रीकृष्णस्य नामकरणान्नप्राशनचूड़ाकरणोपनयो-द्वाहान् भावयेत् ततश्च प्रणवादि नमोऽन्तेन तत्तन्नामभिः देवक्यै वसुदेवाय यशोदायै चण्डिकायै बलदेवाय यज्ञाय गङ्गायै ओम् चतुर्मुखाय इत्येतान् यथाशक्त्युपचारैः पूजयेत्। शङ्खे पुष्प दूर्वाकुशचन्दनान्यादाय भूमौ जानुनौ पातयित्वा ओम् 'क्षीरोदार्णवसम्भूत अत्रिनेत्रसमुद्भव। गृहाणार्घ्यं शशाङ्केदं रोहिण्या सहितो मम'। सोमाय सोमेश्वराय सोमपतये सोमसम्भवाय गोविन्दाय नमो नमः'। इत्यर्घ्यं दद्यात्। ततः प्रणाममन्त्रो ओम् 'ज्योत्स्नायाः पतये तुभ्य ज्योतिषां पतये नमः। नमस्ते रोहिणीकान्त सुधावास नमोऽस्तु ते। नभोमण्डलदीपाय शिरोरत्नाय धूर्जटेः। कला-भिर्वर्द्धमानाय नमश्चन्द्राय चारवे'। ततश्च 'अनघं वामनं शौरिं वैकुण्ठं पुरुषोत्तमम्। वासुदेवं हृषीकेशं माधवं मधु-सूदनम्। वराहं पुण्डरीकाक्षं नृसिंहं दैत्यसूदनम्। दामो-दरं पद्मनाभं केशवं गरुड़ध्वजम्। गोविन्दमच्युतं देवमनन्त-मपराजितम्। अधोक्षजं जगद्वीजं सर्गस्थित्यन्तकारिणम्। अनादिनिधनं विष्णुं त्रिलोकेशं त्रिविक्रमम्। नारायणं चतुर्वाहुं शङ्खचक्रगदाधरम्। पीताम्बरधरं नित्यं वनमाला-

विभूषितम्। श्रीवत्साङ्कं जगत्सेतुं श्रीकृष्णं श्रीधरं हरिम्। प्रपद्येऽहं सदादेवं सर्वकामप्रसिद्धये'। इति स्तुत्वा प्रणमेत् 'प्रणमामि सदादेवं वासुदेवं जगत्पतिम्'। ततः प्रार्थयेत्। ओम् 'त्राहि मां सर्वलोकेश हरे संसारसागरात्। त्राहि मां सर्वपापघ्न दुःखशोकार्णवाद्धरे। सर्वलोकेश्वर त्राहि पतितं मां भवार्णवे। देवकीनन्दन श्रीश हरे संसारसागरात्। दुर्गतां स्त्रायसे विष्णो ये स्मरन्ति सकृत् सकृत्। सोऽहं देवातिदुर्वृत्तस्त्राहि मां शोकसागरात्। पुष्कराक्ष निमग्नोऽहं मायाविज्ञानसागरे। त्राहि मां देव देवेश त्वत्तो नान्योऽस्ति रक्षिता' इति प्रार्थयेत्। 'यद् बाल्ये यच्च कौमारे वार्द्धक्ये यच्च यौवने। तत्पुण्यं वृद्धिमाप्नोतु पापं हर हलायुध' इति वदेत्। ततो नृत्यगीतवाद्यादिभिः शेषकालं नयेत्। परदिने प्रातःस्नानादि कृत्वा श्रीकृष्णं यथाविधि संपूज्य दुर्गायाश्च महोत्सवं कुर्य्यात्। ब्राह्मणान् भोजयेत्। दक्षिणां सुवर्णादि यत्किञ्चिदिष्टतमं श्रीकृष्णो मे प्रीयतामित्युक्त्वा तेभ्यो दद्यात्। ततश्च 'यं देवं देवकीदेवं वसुदेवादजीजनत्। भौमस्य ब्राह्मणो गुप्त्यै तस्मै ब्रह्मात्मने नमः। सुब्रह्मवासुदेवाय गोब्राह्मणहिताय च। शान्तिरस्तु शिवञ्चास्तु इत्युक्त्वा तान् विसर्जयेत्'। इति वचनात् इत्युच्चार्य्य ब्राह्मणांश्च विसर्जयेत्।

ततश्च उपवासपरदिने तिथिनक्षत्रयोरवसाने पारणं यदा तु महानिशायाः पूर्वमेकतरस्यावसानम् अन्यतरस्य महानिशायां तदनन्तरं वा तदेकतरावसाने पारणम्। यदा महानिशायामुभयस्थितिस्तदोत्सवान्ते प्रातःपारणं कुर्य्यात्। तत्र मन्त्रः। ओम् 'सर्वाय सर्वेश्वराय सर्वपतये सर्वसम्भवाय गोविन्दाय नमो नमः'। पारणानन्तरन्तु ओम् 'भूताय

भूतेश्वराय भूतपतये भूतसम्भवाय गोविन्दाय नमो नमः' इत्यनेन व्रतं समापयेदिति।

भाद्रशुक्लपञ्चमीमधिकृत्य भविष्योत्तरे 'तथा भाद्रपदे मासि पञ्चम्यां श्रद्धयान्वितः। सर्पं लिख्य नरो भक्त्या कृष्णवर्णादिवर्णकैः। पूजयेद्गन्धमाल्यैश्च सर्पिर्गुग्गुलुपायसैः। तस्य तुष्टिं समायान्ति पन्नगास्तक्षकादयः। आसप्तमात् कुलात्तस्य न भयं सर्पतो भवेत्। तस्मात् सर्वप्रयत्नेन नागान् संपूजयेन्नरः' इयमेव नागपञ्चमीति वाचस्पतिमिश्राः। आलेख्या नागाः कर्कोटादयः पूर्वलिखिताः पूजा च श्रावणपञ्चमीविहितेति बोध्यम्।

अथ हरेः पार्श्वपरिवर्त्तनं तत्र भाद्रशुक्लद्वादश्यां श्रवणयुक्तायां केवलायां वा कृताह्निकः सायं सन्ध्यायां देवं संपूज्य। ओम् 'वासुदेव जगन्नाथ प्राप्तेयं द्वादशी तव। पार्श्वेन परिवर्त्तस्व सुखं स्वपिहि माधव' इति कृताञ्जलिः पठेत्। 'त्वयि सुप्ते जगन्नाथ जगत्सुप्तं भवेदिदं प्रबुद्धे त्वयि बुध्येत जगत् सर्वं चराचरम्'। इत्यनेन पूजयेत्।

अथ सिंहार्के चतुर्थीचन्द्रदर्शनप्रायश्चित्तम्। 'पञ्चाननगते भानौ पक्षयोरुभयोरपि। चतुर्थ्यामुदितश्चन्द्रो नेक्षितव्यः कदाचन'। सिंहार्कमधिकृत्य ब्रह्मपुराणम्। 'नारायणोऽभिशप्तस्तु निशाकरमरीचिषु। स्थितश्चतुर्थ्यामद्यापि मनुष्याय पतेच्च सः। ततश्चतुर्थ्यां चन्द्रन्तु प्रमादाद्वीक्ष्य मानवः। पठेद्धात्रेयिका वाक्यं प्राङ्मुखो वाप्युदङ्मुखः'। अभिशस्तो मिथ्यापरिवादविषयीभूतः सोऽभिशापः ततश्च प्राङ्मुखः उदङ्मुखो वा तिलकुशजलान्यादाय ओम् अद्येत्यादि सिंहार्कचतुर्थीचन्द्रदर्शनजन्यपापक्षयकामो धात्रेयिकावाक्यमहं पठिष्यामीति सङ्कल्प्य। 'सिंहः प्रसेनमवधीत् सिंहो

जाम्बवता हृतः। सुकुमारक मा रोदीस्तव ह्येष स्यमन्तकः’।
इति विष्णुपुराणोक्तं धात्रेयिकावाक्यं पठेत्। भविष्योत्तरे
भाद्रेमास्यसिते पक्षे अघोराख्या चतुर्दशी। तामुपोष्य नरो
याति शिवलोकमयन्नतः’। त्रयोदश्यां दिवातन मुहूर्त्तलाभे
तत्रैव तदलाभे पद्मपुराणम् ‘एकादश्यष्टमी षष्ठी कृष्णपक्षे
चतुर्दशी। अमावास्या तृतीया च उपोष्याः स्युः परान्विताः’।
एतद्विषय एव ‘शिवा घोरा तथा प्रेता सावित्री च चतुर्दशी।
कुहूयुक्तैव कर्त्तव्या कुहूामेव हि पारणम्’ इति पराशरवचनं
त्रिसन्ध्यव्यापित्वेऽपि तत्रैव ‘चतुर्दशी प्रकर्त्तव्या त्रयोदश्या-
युता विभो। दर्शविद्धा न कर्त्तव्या राकाविद्धा तथा मुने’
इति वचनात् ‘त्रिसन्ध्याव्यापिनी या तु सैव पूज्या सदा
तिथिः। न तत्र युग्मादरणमन्यत्र हरिवासरात्’ इति
वचनात्।

अथ अनन्तव्रतम्। तत्र यद्दिने पूर्वाह्णकाले चतुर्दशी-
लाभस्तद्दिने व्रतम् उभयदिने चेत् परदिने युग्मात् व्रतानु-
ष्ठानविधिस्तत्तत्पद्धतौ ज्ञेयम्।

अथ अगस्त्यार्घ्यदानम्। प्रमाणन्तु तिथितत्त्वेऽनुसन्धेयं
सिंहस्थरविकर्त्तव्यत्वेन सौरमासादरः कन्यार्कसंक्रान्तिपूर्वदिन-
त्रयान्यतमे कृताह्निकस्तिलकुशजलान्यादाय ओम् तत्सदित्यु-
च्चार्य्य ओम् अद्येत्यादि सर्वाभिलषितसिद्धिकामोऽगस्त्यपूजन-
महङ्करिष्ये इति सङ्कल्प्य शालग्रामे जले वा दक्षिणामुख
एतत् पाद्यम् ओम् अगस्त्याय नमः। सितपुष्पाक्षतजलं
शङ्खेन गृहीत्वा इदमर्घ्यम् ओम् ‘काशपुष्पप्रतीकाश अग्नि-
मारुतसम्भव। मित्रावरुणयोः पुत्र कुम्भयोने नमोऽस्तु ते’।
ओम् अगस्त्याय नम एवमाचमनीयगन्धपुष्पधूपदीपनैवेद्यानि
प्रत्येकं दद्यात्। ‘वातापिर्भक्षितो येन वातापिश्च महासुरः।

समुद्रः शोषितो येन स मेऽगस्त्यः प्रसीदतु'। इति प्रार्थयेत्।

अथ आश्विनकृत्यम्। तत्र प्रौष्ठपद्यूर्द्ध्वं कृष्णपक्षे प्रतिपदादिपञ्चदशकषष्ठ्यादिदशक एकादश्यादिपञ्चकत्रयोदश्यादित्रिकतिथिरूपकल्पचतुष्टान्यतमेषु प्रतितिथिषु श्राद्धं कर्त्तव्यम् एकैकस्यास्तिथेः पूर्वदिने पूर्वदिने श्राद्धप्रशस्तकाललाभे श्राद्धं कृत्वा परदिने श्राद्धं न कार्य्यम् एवमेव दिने उभयतिथिलाभे श्राद्धद्वयं कर्त्तव्यम्। तत्र केवलत्रयोदश्यां पूर्वदिने अपराह्ने श्राद्धं कृत्वा परदिने मघायुक्तत्वेन तस्यां श्राद्धं कर्त्तव्यम्। यदि तु एकस्मिन् दिने मघायुक्तत्रयोदशीलाभस्तदा तत्रैव मधुपायसयुक्तेन तदलाभे केवलान्नेनापि श्राद्धं कर्त्तव्यम्। तत्र पुत्रवता पिण्डरहितमेव श्राद्धं कर्त्तव्यं तेनैव श्राद्धेन पक्षश्राद्धसिद्धिः अविभक्तभ्रातृभिरपि मघा त्रयोदशीश्राद्धं पृथक् कर्त्तव्यम्। कन्यास्थकृष्णपक्षत्वेनापि सकृत् श्राद्धं नित्यं तत्र पक्षश्राद्धकरणे तन्त्रत्वादेव सिद्धिः। कन्यास्थ रवौ षोड़शपिण्डदानम् अमावास्यायां कार्य्यम्।

आश्विनकृत्ये दुर्गापूजा नित्या काम्या च॥ अथ दुर्गोत्सवः॥ तत्र बोधनं पौर्णमास्यन्ताश्विनकृष्णपक्षे आर्द्रानक्षत्रयुक्तायां केवलायां वा नवम्यां पूर्वाह्ने दिवामात्रे वा उभयदिने तथाविधलाभे पूर्वदिने युग्मात्। प्रतिपदादिकल्पे उभयदिने पूर्वाह्ने प्रतिपल्लाभे पूर्वदिने षष्ठ्यादिकल्पे तु प्रातःपूजनं षष्ठ्यामारभ्येत्युल्लेख्यम्। सप्तम्यादिकल्पेऽपि तथा। अष्टम्यां पूजाङ्गोपवासः पुत्रवता कार्य्यः किन्तु हविष्यान्नं भोक्तव्यम्। यदि प्रतिमासमष्टम्युपवासः क्रियते तदा पुत्रवता कार्य्यः तस्य धनार्थिना प्रतिमासकर्त्तव्यत्वेनारम्भोऽपि कर्त्तुं शक्यते पारणन्तु मत्स्यमांसनैवेद्यैर्दुर्गां संपूज्य मत्स्यादिना

कर्त्तव्यं यदि तद्दिने नियमान्मांसभोजनं निषिद्धं तदा मांसादिकं विनापि। सन्धिपूजायान्तु अष्टमीशेषदण्डनवमी-प्रथमदण्डात्मकः कालः तत्र महाष्टमीवत् पूजादि बलिदानं नवमीदण्डे न तु अष्टमीदण्डे तत्र यदि षष्टिदण्डात्मिकाष्टमी तदा तद्दिने अष्टमीपूजां विधाय तत्परदिने अष्टमीनवम्योः सन्धिपूजा। यदि तु परदिने मुहूर्त्तान्यूननवम्यलाभस्तदा महानवमीपूजापि तद्दिने तादृग्लाभे तु परदिने यदा महा-ष्टमीदिन एव तिथिक्षयः तदा तद्दिन एव महाष्टमीपूजा सन्धिपूजामहानवमीपूजा कार्य्या। अर्द्धरात्रपूजा तु यद्दिने अर्द्धरात्रे महाष्टमीलाभस्तद्दिने फलभूमार्थिना पूर्ववत् कार्य्यं यदि उभयदिने तथाविधा तदा पूर्वदिन एव विसर्जनन्तु श्रवणयुक्तायामयुक्तायां वा उदयगामिन्यां मुहूर्त्ता-न्यूनायां दशम्यां कुर्य्यात्। उभयदिने तल्लाभे पूर्वदिने यदि षष्टिदण्डात्मिका नवमी तत्परदिने मुहूर्त्तान्यूनापि श्रवण-युक्तदशमी तदा षष्टिदण्डात्मिकायां नवम्यां पूजां विधाय तत्परदिनेऽनुदयगामिन्यां श्रवणरहितायामपि विसर्जन-मिति। आश्विने दुर्गापूजा नित्या काम्या च सा ग्रन्थगौरव-भिया न लिखिता।

अथ कोजागरकृत्यम्। प्रमाणन्तु तिथितत्त्वेऽनुसन्धेयम्। यद्दिने प्रदोषनिशीथोभयव्यापिनी पौर्णमासी तद्दिने कोजा-गरकृत्यम्। उभयव्याप्त्यानुरोधात्। यदा तु पूर्वदिने निशीथव्याप्तिः परदिने प्रदोषव्याप्तिस्तदा पूर्वेद्युस्तत्कृत्यं प्रधानपूजाकालव्याप्त्यनुरोधात् यदा तु पूर्वेद्युर्निशीथव्याप्तिः परेद्युर्न प्रदोषव्याप्तिस्तदा सुतरां पूर्वेद्युस्तत्कृत्यम्। तत्र आश्विनपौर्णमास्यां कृताह्निकः प्रदोषसमये कुशतिलजला-न्यादाय ओम् तत्सत् ओम् अद्येत्यादि द्वारोद्भिन्नत्यादिदेवता-

प्रीतिकामो द्वारोर्द्ध्वभित्त्यादिदेवतापूजनमहं करिष्ये इति सङ्कल्प्य शालग्रामे घटादिस्थजले वा एतत् पाद्यं द्वारोर्द्ध्वभित्तिदेवताभ्यो नमः एवम् अर्घ्याचमनीयगन्धपुष्पधूपदीपनैवेद्यपुनराचमनीयानि दद्यात्। गन्धादीनि वा गन्धपुष्पं वा तत्र पूजने पत्रमपि नैवेद्ये फलमपीति विशेषः एवं प्रणवादिनमोऽन्तैस्तत्तन्नामभिर्हव्यवाहनादिपूजनं यथा हव्यवाहनाय नैवेद्ये तु यवाज्यततण्डुलचूर्णघृतशालितण्डुलाः पूर्व्वं त्वे नैवेद्ये तु दुग्धपायसौ सभार्य्यरुद्राय स्कन्दाय नन्दीश्वराय मुनये गोमान् पुरुषः सुरभये छागवान् हुताशनाय मेषवान् वरुणाय हस्तिमान् विनायकाय अश्ववान् रेवन्ताय सर्व्वैरेव बलिकुश्माय ओम् तत्सत् ओम् अद्येत्यादि विभूतिकामो लक्ष्मीं पूजयिष्ये इति सङ्कल्प्य 'पाशाक्षमालिकाम्भोजसृणिभिर्याम्यसौम्ययोः। पद्मासनस्थां ध्यायेच्च श्रियं त्रैलोक्यमातरम्। गौरवर्णां सुरूपाञ्च सर्व्वालङ्कारभूषिताम्। रौक्मपद्मव्यग्रकरां वरदां दक्षिणेन तु'। पाशेत्यादिदक्षिणे पाशाक्षमालिकाभ्यां वामे पद्माङ्कुशाभ्यां भूषितां वामकरे हेमपद्मं दक्षिणकरे वरं दधतीत्यर्थः इति आदित्यपुराणीयं ध्यात्वा एतत् पाद्यम् ओम् लक्ष्म्यै नमः एवमर्घ्याचमनीयगन्धादि एते मनारिकेलपृथुकाः एतत् पुनराचमनीयं ताम्बूलं वस्त्रं पुनराचमनीयञ्च प्रत्येकं दद्यात्। ओम् 'नमस्ते सर्व्वदेवानां वरदासि हरिप्रिये। या गतिस्त्वत्प्रपन्नानां सा मे भूयात् त्वदर्चनात्'। इति पुष्पाञ्जलित्रयं दत्त्वा प्रणमेत् ओम् 'विश्वरूपस्य भार्य्यासि पद्मे पद्मालये शुभे। सर्व्वतः पाहि मां देवि! महालक्ष्मि नमोऽस्तु ते'। तुलसीभिरष्टौकाञ्चनपुष्पैर्न पूजयेत्। वाद्यान्तरासत्त्वे घण्टां न वादयेत्। ततः चतुर्द्दन्तगजारूढो वज्रपाणिः पुरन्दरः। शचीपतिश्च ध्यातव्यो

नानाभरणभूषितः' इति आदित्यपुराणीयं ध्यात्वा एतत् पाद्यम् ओम् इन्द्रस्तु महसा दीप्तः सर्वदेवाधिपो महान्। वज्रहस्तो महाबाहुस्तस्मै नित्यं नमो नमः' ओम् इन्द्राय नमः ओम् 'शक्रः सुरपतिश्चैव वज्रहस्तो महाबलः। शतयज्ञाधिपो देवस्तुभ्यमिन्द्राय वै नमः' इत्यनेनार्घ्यं दद्यात् एवं पूर्ववदर्घ्यादिना पूजयित्वा। ओम् 'विचित्रैरावतस्थाय भास्वत्कुलिशपाणये। पौलोम्यालिङ्गिताङ्गाय सहस्राक्षाय ते नमः' इत्यनेन पुष्पाञ्जलित्रयं दत्त्वा प्रणमेत्। ततः कुवेरमावाह्य एतत् पाद्यम् ओम् कुवेराय नमः। एवमर्घ्यादिभिः संपूज्य 'धनदाय नमस्तुभ्यं निधिपद्माधिपाय च। भवन्तु त्वत्प्रसादान्मे धनधान्यादिसम्पदः'। इत्यनेन पुष्पाञ्जलिना त्रिःसंपूज्य प्रणमेत्। ततो दक्षिणां दद्यात् प्रणमेत्। तद्दिने बालवृद्धातुरैर्विना दिवा न भोक्तव्यम् आमिषं न भोक्तव्यं नारिकेलचिपिटकादिना ब्राह्मणान् बन्धूंश्च परितोष्य स्वयञ्च तदश्नीयात्। ततश्च गन्धपुष्पाद्यलङ्कृतोऽच्चैः क्रीड़ां कुर्वन् पश्यन् वा जागरणं कुर्य्यात्।

अथ कार्त्तिककृत्यम्। पद्मपुराणे 'तुलामकरमेषेषु प्रातःस्नानं विधीयते'। तत्र सङ्कल्पः अरुणोदयकाले मज्जनं कृत्वा आचम्य ओम् तत्सदद्य कार्त्तिके मासि अमुकपक्षेऽमुकतिथौ आरभ्य तुलास्थरविं यावत् प्रत्यहममुकगोत्रः श्री अमुकदेवशर्मा विष्णुप्रीतिकामः प्रातःस्नानमहं करिष्ये इति सङ्कल्प्य यथोक्तविधिना इतिकर्त्तव्यतां विधाय ओम् 'कार्त्तिकेऽहं करिष्यामि प्रातःस्नानं जनार्दन!। प्रीत्यर्थं तव देवेश दामोदर मया सह' इति स्नायात्। मया लक्ष्म्या प्रतिदिनसङ्कल्पे तु आरभ्य तुलास्थरविं यावत् प्रत्यहमिति न वक्तव्यम्। किन्तु मासीत्यनन्तरं तुलास्थरवावित्यधिकं वक्तव्यम्। चान्द्रस्नान-

वाक्यन्तु वैशाखकृत्येऽनुसन्धेयम् । तथा वायुपुराणे 'यदीच्छे-
द्विपुलान् भोगान् चन्द्रसूर्य्यग्रहोपमान् । कार्त्तिकं सकलं
व्याप्य प्रातःस्नायी भवेन्नरः' । गारुड़े 'गवामयुतदानेन यत्
फलं लभते खग । तुलसीपत्रकेकेन तत् फलं कार्त्तिके
स्मृतम्' । ओम् अद्येत्यादि तुलसीपत्रकैकसमसंख्यायुतधेनु-
दानजन्यफलसमफलप्राप्तिकामः एतानि तुलसीपत्राणि
श्रीविष्णवेऽहं ददे इत्यभिलप्य एतानि तुलसीपत्राणि
श्रीविष्णवे नमः इत्यनेन दद्यात् । ब्रह्माण्डे 'विष्णुवेश्मनि
यो दद्यात् कार्त्तिके मासि दीपकम् । अग्निष्टोमसहस्रस्य
फलमाप्नोति मानवः' । ओम् 'दामोदराय नभसि तुलायां
लोलया सह । प्रदीपन्ते प्रयच्छामि नमोऽनन्ताय वेधसे'
लोलया लक्ष्म्या 'इति मन्त्रेण यो दद्यात् प्रदीपं सर्पिरा-
दिना । आकाशे मण्डपे वापि स चाक्षयफलं लभेत्'
स्नानवत् ओम् अद्येत्यादि अमुकतिथौ आरभ्य तुलास्थरविं
यावत् प्रत्यहम् अमुकगोत्रोऽमुकदेवशर्मा अक्षयदीपदान-
फलप्राप्तिकामः श्रीविष्णुप्रीतिकामो वा आकाशे मण्डपे
वापि श्रीविष्णवे दीपदानमहं करिष्ये इति सङ्कल्प्य दामो-
दरायेत्यादिना दद्यात् द्वितीयादिदिने ओम् दामोदरायेत्यने-
नेति विशेषः । विष्णुगृहे ओम् अद्येत्यादि अमुकतिथिं
आरभ्य तुलास्थरविं यावत् प्रत्यहम् अमुकगोत्रोऽमुकदेवशर्मा
अग्निष्टोमसहस्रजन्यफलसमफलप्राप्तिकामः श्रीविष्णुप्रीति-
कामो वा श्रीविष्णुवेश्मनि श्रीविष्णवे दीपदानमहं करिष्ये
इति सङ्कल्प्य ओम् दामोदरायेत्यादिना दद्यात् । द्विती-
यादिदिने ओम् दामोदरायेत्यनेनेति विशेषः । हविष्यान्नादि
तु ब्रह्मपुराणे 'व्रतोपवासनियमैः कार्त्तिको यस्य गच्छति
देवो वैमानिको भूत्वा स याति परमं पदम्' । तत्र अद्य

स्यादि अमुकतिथौ आरभ्य तुलास्थरविं यावत् प्रत्यहम् अमुकगोत्रोऽमुकदेवशर्मा वैमानिकदेवत्वभवनपूर्वकपरमपदप्राप्तिकामः श्रीविष्णुप्रीतिकामो वा हविष्येतरभोजननिवृत्तिमहं करिष्ये इत्यादिवाक्ये विशेषः। एवं फलाहारादावपि हविष्यद्रव्याणि च 'हैमन्तिकं सितास्विन्नं धान्यमुद्गास्तिला यवाः। कलायकङ्गुनीवारावास्तूकं हिलमोचिका। षष्टिका कालशाकञ्च मूलकं केमुकेतरत्। लवणे सैन्धवसामुद्रे गव्ये च दधिसर्पिषी। पयोऽनुद्धृतसारञ्च पनसाम्रहरीतकी। तिन्तिड़ीजीरकञ्चैव नागरङ्गञ्च पिप्पली। कदली लवली धात्री फलान्यगुड़मैक्षवम्। अतैलपक्वं मुनयो हविष्यान्नं विदुर्बुधाः'। हैमन्तिकमित्यभिधायागस्त्यसंहितायाम्। नारिकेलफलञ्चैव कदलीं लवलीन्तथा। आम्रमामलकञ्चैव पनसञ्च हरीतकीम्। व्रतान्तरप्रशस्तञ्च हविष्यं मन्वते बुधाः'। अत्र च आरब्धव्रतोपवासादौ फलजलादिभक्षणमप्याहतुः उद्योगपर्वबौधायनौ। 'अष्टैतान्यव्रतघ्नानि आपो मूलं फलं पयः। हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम्'। फलाहारादावपि तुलसीरहिते दोषमाह 'तुलसीं विना यत् क्रियते न पूजा स्नानं न तद् यत्तुलसीं विना कृतम्। भुक्तं न तद् यत्तुलसीविवर्जितं पीतं न तद् यत्तुलसीविवर्जितम्'। नारदीये 'न मत्स्यं भक्षयेन्मांसं न कौर्मं नान्यदेव हि। चण्डालो जायते राजन् कार्त्तिके मांसभक्षणात्'। महाभारते। 'कौमुदन्तु विशेषेण शुक्लपक्षे नराधिप!। वर्जयेत् सर्वमांसानि धर्मो ह्यत्र विधीयते'। कौमुदं कार्त्तिकम्। कार्त्तिकमधिकृत्य ब्रह्मपुराणम्। 'एकादश्यादिषु तथा तासु पञ्चसु रात्रिषु। दिने दिने च स्नातव्यं शीतलासु नदीषु च। वर्जितव्या तथा हिंसा मांसभोजनमेव च'। ततश्च

मांसभोजननिषेधे कार्त्तिकमासतच्छुक्लपक्षतदेकादश्यादिपक्ष-दिनानि शक्ताशक्तभेदात् पापतारतम्यत्वात् निषिद्धानि 'कार्त्तिके शौकरं मांसं यस्तु भुञ्जीत दुर्मतिः। षष्टिवर्षसहस्राणि रौरवे परिपच्यते'। श्रीलपटोलकदम्बवृन्ताककांस्यमन्थिजानि वर्जयेत्। 'पटोलानि कदम्बानि वृन्ताकसहितानि च। भुञ्जानः कार्त्तिके मासि यावदाहृतनारकी'।

अथ भूतचतुर्दशी। 'कार्त्तिके कृष्णपक्षस्य चतुर्दश्यां दिनोदये। अवश्यमेव कर्त्तव्यं स्नानं नरकभीरुभिः। अपामार्गस्य पत्राणि भ्रामयेच्छिरसोपरि। ततश्च तर्पणं कार्य्यं धर्मराजस्य नामभिः। नरकाय प्रदातव्यो दीपः संपूज्य देवताः'। नरकाय नरकनिवृत्तये। अपामार्गभ्रामणे मन्त्रः। ओम् 'शीतलोष्णसमायुक्त सकण्टकदलान्वित। हर पापमपामार्ग भ्राम्यमाण पुनः पुनः। ततः प्रदोषसमये दीपान् दद्यात् प्रयत्नतः। ब्रह्मविष्णुशिवादीनां भवनेषु मठेषु च। कूटागारेषु चैत्येषु गुहासु च नदीषु च'। दीपमन्त्रः। ओम् 'नमः पितृभ्यः प्रेतेभ्यो नमो धर्माय विष्णवे। नमो धर्माय रुद्राय कान्तारपतये नमः' इति। भविष्ये 'कार्त्तिके भौमवारे च चित्राकृष्णचतुर्दशी। तस्यामाराधितः स्थाणुर्नयेच्छिवपुरं ध्रुवम्। यां काञ्चित् सरितं प्राप्य कृष्णपक्षे चतुर्दशीम्। यमुनायां विशेषेण नियतस्तर्पयेद् यमान्'। धर्मराजस्य नामानि भविष्ये यथा 'यमाय धर्मराजाय मृतवे चान्तकाय च। वैवस्वताय कालाय सर्वभूतक्षयाय च। औडुम्बराय दध्नाय नीलाय परमेष्ठिने। वृकोदराय चित्राय चित्रगुप्ताय वै नमः। एकैकस्य तिलैर्मिश्रां स्त्रीं स्त्रीं दद्यात् जलाञ्जलीन्। संवत्सरकृतं पापं तत्क्षणादेव नश्यति'। आचाराच्चतुर्दश्यां शाकभोजनं कर्त्तव्यं तत्र निर्णयामृतधृत-

चनम्। 'ओलं केमुकवास्तूकं सर्षपं कालञ्च निम्बं जयां
लिञ्चिं हिलमोचिकाञ्च पटुकं शौल्फं गुडुचीं तथा
ण्टाकीं सुनिषण्णकं शिवदिने खादन्ति ये मानवाः प्रेतत्वं
च यान्ति कार्त्तिकदिने कृष्णे च भूते तिथौ'। जयां
जयन्तीं पटुकं पटोलम्।

अथ दीपान्विताऽमावस्या। एतत् कृत्यप्रमाणं तिथितत्त्वे-
ऽनुसन्धेयम्। तत्र बालातुरवृद्धव्यतिरेकेण दिवा न भोक्तव्यं
तत्र पार्वणश्राद्धं कृत्वा प्रदोषे प्राचीनावीती दक्षिणामुखः
ज्वलदुल्कां गृहीत्वा ओम् शस्त्राशस्त्रहतानाञ्च भूतानां भूत-
दर्शयोः। उज्ज्वलज्योतिषा देहं दहेयं व्योमवह्निना' इत्य-
नेन गृह्णीयात् ओम् 'अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले
मम। उज्ज्वलज्योतिषा दग्धास्ते यान्तु परमां गतिम्'।
इत्यनेन भूमौ स्थापयेत्। ओम् 'यमलोकं परित्यज्य आगता
ये महालये। उज्ज्वलज्योतिषा वर्त्म प्रपश्यन्तो व्रजन्तु ते'
इत्यनेन पितॄन् विसर्जयेत्। यद्येवं पूर्वदिन एव प्रदोषव्या-
पिनी अमावास्या तदा पूर्वदिन एव श्राद्धमकृत्वापि उल्कादानं
कर्त्तव्यम्। आचारात् पञ्चभूतोपाख्यानञ्च श्रोतव्यम्। उभ-
यतः प्रदोषव्याप्तौ परदिन एव युग्मात्। उभयतः प्रदोषा-
प्राप्तावपि उल्कादानं परदिने पार्वणानुरोधात्। अत्र वै पूर्व-
दिने लक्ष्मी रात्रौ पूज्या। 'अमावस्या यदा रात्रौ दिवाभागे
चतुर्दशी। पूजनीया तदा लक्ष्मीर्विज्ञेया सुखरात्रिका' इति
वचनात्। लक्ष्मीपूजाविषयेऽपि एवं व्यवस्था। ततो गृह-
मध्ये उत्तराभिमुखो लक्ष्मीं पूजयेत्। ततः स्वस्तिवाचन-
पूर्वकम् ओम् सूर्य्यः सोम इति पठित्वा ओम् तद्विष्णोरिति च
तिलपुष्पजलान्यादाय ओम् तत्सदित्युच्चार्य्य ओम् अद्येत्यादि
अमुकगोत्रोऽमुकदेवशर्मा परमविभूतिलाभकामो लक्ष्मीपूजन-

महं करिष्ये इति सङ्कल्प्य शालग्रामे घटादिस्थजले वा भूतशुद्ध्यादिकं कृत्वा लक्ष्मीं पूजयेत्। तद् यथा ओम् पाशाक्ष इत्यादिना ध्यात्वा ओम् भूर्भुवः स्वर्महालक्ष्मि इहागच्छेत्या-वाह्य एतत् पाद्यं लक्ष्म्यै नमः एवमर्घ्याचमनीयगन्धपुष्पधूप-दीपनैवेद्यपुनराचमनीयताम्बूलादि प्रत्येकं दद्यात्। ओम् 'नमस्ते सर्वदेवानां वरदासि हरिप्रिये। या गतिस्त्वत् प्रपन्नानां सा मे भूयात्त्वदर्चनात्' इत्यनेन पुष्पाञ्जलित्रयं दत्त्वा प्रणमेत् ओम् 'विश्वरूपस्य भार्य्यासि पद्मे पद्मालये शुभे। सर्वतः पाहि मां देवि! महालक्ष्मि नमोऽस्तु ते'। ततः सुखरात्र्याः प्रदोषे तु कुवेरं पूजयन्ति ये' इति रुद्रवचनात्। कुवेरमपि पाद्यादिभिः पूजयेत्। ओम् 'धनदाय नमस्तुभ्यं निधिपद्माधिपाय च। भवन्तु तत्प्रसादान्मे धनधान्यादि सम्पदः' इति पठित्वा ओम् कुवेराय नम इति त्रिःपूजयेत्। ततो गृहादिषु दीपं दद्यात्। तत्र मन्त्रः ओम् 'अग्निर्ज्योती-रविर्ज्योतिश्चन्द्रर्ज्योतिस्तथैव च। उत्तमः सर्वज्योतीनां दीपोऽयं प्रतिगृह्यताम्'। ततो ब्राह्मणान् बन्धूंश्च भोजयित्वा स्वयं भुञ्जीत तत्र प्रत्यूषे भविष्योक्तं कर्म कर्त्तव्यं गोरोचनाति लकधारणं प्रदीपवन्दनं कृत्वा लक्ष्मीं त्रिः पूजयेत् तत्र मन्त्र ओम् 'विश्वरूपस्य भार्य्यासि पद्मे पद्मालये शुभे। महालक्ष्मि नमस्तुभ्यं सुखरात्रिं कुरुष्व मे। वर्षाकाले महाघोरे यन्मय दुष्कृतं कृतम्। सुखरात्रिप्रभातेऽद्य तन्मे लक्ष्मीर्व्यपोहतु या रात्रिः सर्वभूतानां या च देवेष्ववस्थिता। संवत्सरप्रिय या च सा ममास्तु सुमङ्गला। माता त्वं सर्वलोकानां देवान सृष्टिसम्भवा। आख्याता भूतले देवि! सुखरात्रि नमोस्तु ते' ओम् लक्ष्म्यै नमः इति त्रिः पूजयेत्।

अथ द्यूतप्रतिपत्। तत्र प्रभातेऽक्षक्रीड़ादिकं कर्त्तव्यं

तत्र जये वर्षं शुभं पराजये वर्षम् अशुभम्। ततः सङ्कल्प्य शालग्रामे जले वा एतत् पाद्यं वलये नमः इत्यादि संपूज्य ओम् वलिराज नमस्तुभ्यं विरोचनसुत प्रभो। भविष्येन्द्रसुरा-राते पूजेयं प्रतिगृह्यताम्'। अनेन पुष्पाञ्जलित्रयं दद्यात्। भविष्योत्तरे 'यो यो यादृशभावेन तिष्ठत्यस्यां युधिष्ठिर। हर्षदैन्यादिना तेन तस्य वर्षं प्रयाति हि'। तथा 'महापुण्या तिथिरियं वलिराज्यप्रवर्द्धिनी। स्नानं दानं शतगुणं कार्त्ति-केऽस्यां तिथौ भवेत्'।

अथ भ्रातृद्वितीया। तत्राष्टधा विभक्तदिनपञ्चमयामार्द्ध-प्राप्तायां द्वितीयायाम् उभयदिने तथा चेत् परदिने कृत्यं युग्मात्। ततः ओम् तत्सदित्युच्चार्य्य ओम् अद्येत्यादि अमुक-गोत्रोऽमुकदेवशर्मा स्वरक्षणकामो यमादिपूजनमहं करिष्ये इति सङ्कल्प्य शालग्रामे घटादिस्थजले वा पूजयेत्। एतत् पाद्यं यमाय नमः। एवं क्रमेण संपूज्य 'एह्येहि मार्त्तण्डज पाशहस्त यमान्तकालोकधरामरेश। भ्रातृद्वितीया कृत-देवपूजां गृहाण चार्घ्यं भगवन्नमस्ते' इदमर्घ्यं यमाय नमः तत आचमनीयादिकं दत्त्वा प्रणमेत्। ओम् 'धर्मराज नम-स्तुभ्य नमस्ते यमुनाग्रज। पाहि मां किङ्करैः सार्द्धं सूर्य्य-पुत्र नमोस्तु ते'। ततश्चित्रगुप्ताय नम इत्यनेन पूजयेत्। तत ओम् यमदूतेभ्यो नमः इत्यनेन पाद्यादिभिः पूजयेत् यमुनाञ्च पाद्यादिभिः संपूज्य प्रणमेत्। ओम् 'यमस्वसर्नमस्तेऽस्तु यमुने लोकपूजिते। वरदा भव मे नित्यं सूर्य्यपुत्रि नमोऽस्तु ते'। ततो भ्रातृभोजनकालेऽर्घ्यादिकं दत्त्वा 'भ्रातस्तवानुजाताहं भुङ्क्ष्व भक्तमिदं शुभम्। प्रीतये यमराजस्य यमुनाया विशेषतः'। ज्येष्ठा चेत् तवाग्रजाताहमिति वदेत् ततः पुष्टिकामो भुञ्जीत 'यतस्तु भगिनीहस्तात् भोक्तव्यं पुष्टिवर्द्धनम्।

अथ विष्णूत्थानम्। तत्र दिने रेवत्यन्तयुक्तायां द्वादश्यां रात्रौ रेवत्यन्तपादयोगे तु दिवा तृतीयभागे रेवत्यन्तयुक्तद्वादश्याम् उत्थानम्। विहित तत्तत्पादविशेषाभावे। नक्षत्रयोगाभिशादौ द्वादश्याम्। द्वादश्यामप्यभावे एकादशी प्रभृतिपौर्णमास्यन्तान्यतमतिथौ निशाद्यनादरेण पादविशेषयोगे। तदभावे केवलायां द्वादश्यां सन्ध्यायामेव शयनावर्त्तनादिकम्। ततो विष्णुं संपूज्य श्रोम् 'महेन्द्ररुद्रैरभिनूयमानो भवानृषिर्वन्दितवन्दनीयः। प्राप्ता तवेयं किल कौमुदाख्या जागृष्व जागृष्व च लोकनाथ। मेघा गता निर्मलपूर्णचन्द्रः शारद्यपुष्पाणि च लोकनाथ। अहं ददानीति च पुण्यहेतोर्जागृष्व जागृष्व च लोकनाथ'। ततश्च 'उत्तिष्ठोत्तिष्ठ गोविन्द त्यज निद्रां जगत्पते!। त्वया चोत्थीयमानेन उत्थितं भुवनत्रयम्' इति पठेत्। तत्र एकादश्यादितिथिपञ्चके वकपञ्चकम्। 'वकोऽपि तत्र नाश्नीयान्मत्स्यञ्चैव कदाचन' इति वचनात्। कार्त्तिक्यां गोदानादौ फलाधिक्यं 'कार्त्तिक्यां गोप्रदो भवेत्'।

अथ मार्गशीर्षकृत्यम् आश्विनशुक्लपक्षे नवान्नश्राद्धाकरणे विंशतिदण्डाधिकवयोविंशतिदिनाभ्यन्तरे शुक्लपक्षे तत् श्राद्धं कर्त्तव्यम्। तत्र मार्गशीर्षस्य विंशतिदण्डाधिकप्रथमदिनेतरेषु कुजशनिशुक्रवारेतरेषु नन्दारिक्तात्रयोदशीतरतिथिषु जन्माष्टमचन्द्रजन्मतिथि-जन्मनक्षत्रयपञ्चमतारासप्तमतारात्रयेतरेषु पूर्वात्रयमघाभरणी अश्लेषार्द्रेतरेषु श्राद्धं तच्छेषभोजनञ्च कुर्य्यात् श्राद्धानधिकारिणा तु प्रागुक्तकाले देवादिभ्यो नवान्नं दत्त्वा भोक्तव्यं किन्तु अश्लेषाकृत्तिकाज्येष्ठामूलापूर्वभाद्रपदकेषु अपि नवान्नभोजनं न कर्त्तव्यम्। चन्द्रताराद्यशुद्धौ प्रतीकारमाह देवलः। 'कर्म्म कुर्य्यात् फलावाप्त्यै चन्द्रादिशो-

भने बुधः। सुखकाले त्विदं सर्वं नात्तः कालमपेक्षते। चन्द्रे च मङ्गं लवणञ्च तारे तिथावभद्रे सिततण्डुलांश्च। धान्यञ्च दद्यात् करणेऽर्कवारे योगे तिलान् हेममणिञ्च लग्ने'। राजमार्तण्डे। ताराभेदाल्लवणपरिमाणमाह 'एकत्रिपञ्च सप्त द्विजाय दद्यात् पलानि लवणस्य च क्रमशो जन्मनि विपदि प्रत्यरिमरणाख्यतारासु। पलन्तु लौकिकैर्मानैः साष्टरक्तित्रिमाषकम्। तोलकत्रितयं ज्ञेयं ज्योतिर्ज्ञैः स्मृतिसम्मतम्'। ततो 'एवं दध्याज्यसंयुक्तं नवं विप्राभिमन्त्रितं' मन्त्रानादेशे गायत्रीति गायत्र्याभिमन्त्रितं नवमन्नं ब्राह्मणानुज्ञां गृहीत्वा प्राश्नीयात्। नूतनधान्यासम्भवे पुरातनेनापि श्राद्धं कर्त्तव्यम्। वृश्चिके शुक्लपक्षे तदकरणे हरिशयनात् पूर्वं मीनधनुस्थरवीतरत्र माघादौ कर्त्तव्यम्। वृश्चिकस्थरवौ शुक्लचतुर्दश्यां सौभाग्यकामः पाषाणाकारपिष्टकैर्देवीं पूजयेत् तदपि भक्षयेन्नक्तम्। आग्रहायण्यां पौर्णमास्यां पार्वणविधिना श्राद्धमावश्यकम्। भविष्यपुराणे 'रोहिणीप्रतिपद्युक्ता मार्गे मासि सितेतरा। गङ्गायां यदि लभ्येत सूर्य्यग्रहशतैः समा'।

अथ पौषकृत्यम्। अग्रहायण्याः पौर्णमास्या ऊर्द्धं कृष्णाष्टम्यां पूपोपकरणेनान्नेन श्राद्धं कर्त्तव्यं पार्वणविधिना।

अथ माघकृत्यम्। पाद्मे 'स्वर्गलोके चिरं वासो येषां मनसि वर्त्तते। यत्र क्वापि जले तैस्तु स्नातव्यं मृगभास्करे'। मृगो मृगास्यत्वेन मकरः मकरस्थे भास्करे तत्र सङ्कल्पः। अरुणोदयकाले जले मज्जनं कृत्वा आचम्य उत्तराभिमुखः ओम् तत्सदित्युच्चार्य्य कुशकुसुमतिलजलान्यादाय ओमद्य माघे मासि अमुक पक्षे अमुकतिथावारभ्य मकरस्थरविं यावत् प्रत्यहम् अमुकगोत्रोऽमुकदेवशर्मा स्वर्गलोके चिरकालवासकामो विष्णुप्रीतिकामो वा प्रातःस्नानमहं करिष्ये इति

सङ्कल्प्य गङ्गाव्यतिरिक्तजलमात्रेऽपि स्नानं कर्त्तव्यं प्रतिदिन-सङ्कल्पे तु आरभ्य मकरस्थरविं यावत् प्रत्यहमिति न वक्तव्यं किन्तु मासयनन्तरं मकरस्थे रवावित्यधिकं वक्तव्यम्। चान्द्र-स्नानवाक्यन्तु वैशाखकृत्येऽनुसन्धेयम्। तत्र सङ्कल्पं कृत्वा यथोक्तविधिना स्नानेतिकर्त्तव्यतां विधाय ओम् 'दुःखदारिद्र्य नाशाय श्रीविष्णोस्तोषणाय च। प्रातःस्नानं करोम्यद्य माघे पापप्रणाशनम्। मकरस्थे रवौ माघे गोविन्दाच्युतमाधव स्नानेनानेन मे देव यथोक्तफलदो भव' इत्युच्चार्य्य स्नायात् ततो 'वासुदेवं हरिं कृष्णं श्रीधरञ्च स्मरेत्ततः'। ओम् 'दिवा कर जगन्नाथ प्रभाकर नमोऽस्तु ते। परिपूर्णं कुरुष्वेदं माघ स्नानं महाव्रतम्'। चान्द्रस्नाने मकरार्कास्पृष्टकाले मकरस्थे रवावित्यस्य न पाठः। असमवेतार्थत्वात्। तीर्थे तु 'माघ-मासमिमं पुण्यं स्नाम्यहं देव माधव। तीर्थस्यास्य जले नित्यं प्रसीद भगवान् हरे'। इति पठित्वा दुःखदारिद्र्यनाशाये-त्यादिकं पठितव्यम्। गङ्गायान्तु पद्मपुराणे 'दिने दिने सहस्रन्तु सुवर्णानां विशांपते। तेन दत्तं हि गङ्गायां यो माघे स्नाति माधव'। मानव इत्यपि क्वचित् पाठः। एकदा सङ्कल्पे तु प्रतिदिनसहस्रसुवर्णदानजन्यफलसमफलप्राप्तिकामः श्रीविष्णुप्रीतिकामो वा माघमासं यावत् प्रत्यहं गङ्गायां प्रातःस्नानमहं करिष्ये इति वाक्ये विशेषः प्रतिदिनसङ्कल्पे तु सहस्रसुवर्णदानजन्यफलसमफलप्राप्तिकामो विष्णुप्रीति-कामो वा गङ्गायां प्रातःस्नानमहं करिष्ये इति यथोक्तविधिना स्नानेतिकर्त्तव्यतां विधाय ओम् 'माघमासमिमं पुण्यं स्नाम्यहं देव माधव। तीर्थस्यास्य जले नित्यं प्रसीद भगवन् हरे। दुःखदारिद्र्यनाशाय श्रीविष्णोस्तोषणाय च। प्रातः स्नानं करोम्यद्य माघे पापप्रणाशनम्। मकरस्थे रवौ माघे

गोविन्दाच्युत माधव। स्नानेनानेन मे देव यथोक्तफलदो भव। दिवाकर जगन्नाथ प्रभाकर नमोऽस्तु ते। परिपूर्णं कुरुष्वेदं माघस्नानं महाव्रतम्'। स्कन्दपुराणम्। 'संप्राप्ते मकरादित्ये पुण्ये पुण्यप्रदे शुभे। कर्त्तव्यो नियमः कश्चित् व्रतरूपो नरोत्तमैः'। तत्तत् पुण्यकामः श्रीविष्णुप्रीतिकामो वा इति वाक्ये विशेषः। पौष्याः पौर्णमास्या ऊर्द्धं माघपौर्णमासीपर्य्यन्तं मदिरातुल्यत्वान्मूलकभक्षणं न कर्त्तव्यम्। पौष्या ऊर्द्धं माघकृष्णाष्टम्यां छागमांसान्नेन श्राद्धं कर्त्तव्यं मांसाभावे पायसोपकरणेन तदभावे केवलान्नेन वा श्राद्धं कर्त्तव्यम्।

अथ रटन्तीचतुर्दशी। 'माघे मास्यसिते पक्षे रटन्त्याख्या चतुर्दशी। तस्यामुदयवेलायां स्नाता नावेक्षते यमम्'। उदयवेलायाम् अरुणोदयवेलायाम् 'अनर्काभ्युदिते काले माघे कृष्णचतुर्दशी। सतारव्योमकाले तु तस्यां स्नानं महाफलम्। स्नात्वा सन्तर्प्य तु यमान् सर्वपापैः प्रमुच्यते'। अत्र तिथिकृत्यत्वाद्गौणचान्द्रादरः। तत्र उभयदिनेऽरुणोदयसतारकाले मुहूर्त्तान्यूनचतुर्दशीलाभे पूर्वदिने स्नानं यमतर्पणञ्च एकदिनमात्रे तल्लाभे तद्दिने। माघस्नानकालाभ्यन्तरे तादृशचतुर्दशीलाभे माघप्रातःस्नायिना तन्त्रेण द्वयं कार्य्यम्। तत्र ओम् तत्सत् अद्य माघे मासि कृष्णे पक्षे रटन्त्यां चतुर्दश्यां तिथौ अरुणोदयवेलायाम् अमुकगोत्रः श्री अमुकदेवशर्म्मा यमादर्शनकामो गङ्गायां स्नानमहं करिष्ये इति सङ्कल्प्य यथाविधि स्नानं प्रागुक्तं चतुर्दशयमतर्पणञ्च कुर्य्यात्।

अथ श्रीपञ्चमी। तत्र उभयदिने पूर्वाह्णे श्रीपञ्चमीलाभे पूर्वदिने लक्ष्मीसरस्वत्योः पूजनं युग्मात् एकदिनप्राप्ते तद्दिने एवं षड्वर्षं शुक्लपञ्चमीव्रतेऽपि ततश्च ओम् तत्सदित्युच्चार्य्य ओम् अद्येत्यादि लक्ष्मीप्रीतिकामो लक्ष्मीपूजनमहं करिष्ये

इति सङ्कल्प्य शालग्रामे जले वा पूजयेत् । ओम् 'पाशाक्ष-मालिकाम्भोजसृणिभिर्याम्यसौम्ययोः पद्मासनस्थां ध्यायेच्च श्रियं त्रैलोक्यमातरम् । गौरवर्णां सुरूपाञ्च सर्वालङ्कार-भूषिताम् । रौक्मपद्मव्यग्रकरां वरदां दक्षिणेन तु' । इत्यनेन ध्यात्वा एतत् पाद्यम् ओम् लक्ष्म्यै नमः इत्यादिना नैवेद्या-न्तेन पूजयेत् । ओम् 'नमस्ते सर्वदेवानां वरदासि हरि-प्रिये । या गतिस्त्वत्प्रपन्नानां सा मे भूयात्त्वदर्चनात्' इत्य-नेन पुष्पाञ्जलित्रयेण प्रणमेत् । ओम् तत्सदित्युच्चार्य्य ओम् अद्येत्यादि सरस्वतीप्रीतिकामः सरस्वतीपूजनमहं करिष्ये । इति सङ्कल्प्य शालग्रामे घटादिस्थजले वा पूजयेत् ओम् 'तरुणशकलमिन्दोर्बिभ्रती शुभ्रकान्तिः कुचभरनमिताङ्गी सन्निषण्णा सिताब्जे निजकरकमलोद्यल्लेखनीपुस्तक श्रीः सकल-विभवसिद्ध्यै पातु वाग्देवता नः' । इति ध्यात्वावाह्य एतत् पाद्यम् ओम् सरस्वत्यै नमः इत्यादिना नैवेद्यान्तेन पूजयेत् । ततः ओम् 'भद्रकाल्यै नमो नित्यं सरस्वत्यै नमो नमः । वेद-वेदाङ्गवेदान्तविद्यास्थानेभ्य एव च स्वाहा' इति ब्रह्मपुराणीयेन पुष्पाञ्जलिना त्रिः पूजयेत् । मत्स्यसूक्ते सरस्वतीं संपूज्य ओम् 'यथा न देवीं भगवान् ब्रह्मा लोकपितामहः ।।त्वां परित्यज्य संतिष्ठेत्तथा भव वरप्रदा । वेदाः शास्त्राणि सर्वाणि नृत्य-गीतादिकञ्च यत् । न विहीनं त्वया देवि ! तथा मे सन्तु सिद्धयः । लक्ष्मीर्मेधाधरापुष्टिर्गौरी तुष्टिः प्रभा धृतिः । एताभिः पाहि तनुभिरष्टाभिर्मां सरस्वति' इति मत्स्यपुरा-णीयैः प्रार्थ्य प्रणमेत् । 'बन्धुजीवञ्च द्रोणञ्च सरस्वत्यै न दापयेत्' । आचारात् पुस्तकञ्च पूजयेत् ओम् मस्याधाराय नम इति मस्याधारं पूजयेत् । ओम् लेखन्यै नम इति लेखनीं पूजयेत् ।

अथ माघसप्तमी। तत्र उभयदिने अरुणोदयकाले सप्तमी-
लाभे पूर्वदिने एकदिने तल्लाभे तद्दिने अरुणोदयकाले सामा-
जले ओम् अद्येत्यादि सूर्य्यग्रहणकालीन गङ्गास्नानजन्य-
लसमफलप्राप्तिकामो आयुरारोग्यसम्पत्कामो अरुणोदय-
लायां स्नानमहं करिष्ये। इति सङ्कल्प्य यथाविधिस्नानेति-
र्त्तव्यतां विधाय सप्तवदरपत्राणि सप्तार्कपत्राणि च शिरसि
धाय ओम् 'यद् यज्जन्मकृतं पापं मया सप्तसु जन्मसु।
त्मे रोगञ्च शोकञ्च माकरी हन्तु सप्तमी'। इत्युच्चार्य्य
ायात् ततो यथाकालं सप्तवदरीफलार्कपत्रशालितिलदूर्वा-
ातचन्दनयुक्तजलमादाय ओम् अद्येत्यादि आयुरारोग्यसम्पत्-
ाम: श्रीसूर्य्यायार्घ्यमहं ददे इति सङ्कल्प्य ओम् 'नमो
िवस्वते ब्रह्मन् भास्वते विष्णुतेजसे। जगत्सवित्रे शुचये
ावित्रे कर्मदायिने' इति। अनन्तरम् ओम् 'जननी सर्व-
ूतानां सप्तमी सप्तसप्तिके। सप्तव्याहृतिके देवि नमस्ते
विमण्डले' इति पठित्वा श्रीसूर्य्याय नमः इति पठित्वा अर्घ्यं
द्यात्। ओम् 'सप्तसप्तिवहप्रीत सप्तलोकप्रदीपन। सप्तम्यां
ह नमस्तुभ्यं नमोऽनन्ताय वेधसे'। इत्यनेन प्रणमेत्
ूद्रेणापि स्नाने तूष्णीं विधानात् स्नानमन्त्रं विना अर्घ्यप्रणाम-
न्त्राः पाठ्याः पौराणिकत्वात्। गङ्गायान्तु बहुशतसूर्य्य-
ग्रहणकालीनगङ्गास्नानजन्यफलसमफलप्राप्तिकामो गङ्गायां
स्नानमहं करिष्ये इति वाक्ये विशेषः। अत्र अर्घ्यमङ्गम्
एतत् स्नानादेव माघप्रातःस्नानं तन्त्रेणैव सिद्ध्यति।

अथ विधानसप्तमीव्रतम्। प्रथमतो ब्राह्मणान् स्वस्ति-
ाच्य ओम् सूर्य्यःसोम इत्यादि पठित्वा ताम्रादिपात्रे कुश-
तिलजलान्यादाय ओम् तत्सदित्युच्चार्य्य ओम् अद्य माघे
मासि शुक्ले पक्षे सप्तम्यान्तिथौ आरभ्य प्रतिमासीयशुक्ल-

सप्तम्यां पौषसप्तमीं यावत् आरोग्यसम्पत्कामोऽभीष्टतत्तत्फल-कामो वा अर्काग्रादीतरभोजनविच्छित्तिविधानेन सप्तमीव्रत-मह्नं करिष्ये इति सङ्कल्प्य संयमपारणसहितं तत्तन्मासि तत्त-न्नियमं कुर्यात्। तत्र माघे अर्काग्रमात्रं भुञ्जीत फाल्गुने अन्त-रीचन्द्रष्टीतं यवमात्रं प्रमाणं कपिलाविट् तदभावे अन्य-गोमयमपीति। चैत्रे मरीचमेकम्। वैशाखे किञ्चिज्जलम्। ज्यैष्ठेऽपक्वकदलीफलमध्यकणामात्रम्। आषाढ़े स्वच्छाय-द्विगुणसमये यवप्रमाणं कुशमूलम्। श्रावणे नक्तं कालेऽल्पं हविष्योदनम्। भाद्रे शुक्लोपवासः। आश्विने पञ्चमाक्षेयामि मयूराण्डप्रमाणं हविष्यान्नम्। कार्त्तिके अर्द्धप्रसृतिमात्रं कपिलाक्षीरं तदभावे क्षीरान्तरम्। मार्गशीर्षे प्राङ्मुखो वायुशनम्। पौषे स्वल्पं घृतं तदनन्तरञ्च 'ब्राह्मणान् भक्षयेत् भक्त्या गुड़क्षीरनिरामिषैः। विप्राय दक्षिणा देया विभवस्यानु-रूपतः। अष्टम्यां पारणं कुर्यात् कटुम्लरहितेन च। मुद्ग-माषतिलादीनि घृतञ्चैव विवर्जयेत्। एकस्मिन्नं भक्ष्यमुक्त-मर्कतस्यानुसारतः'। चान्द्रमासविशेषोल्लेखवत् अनन्तादि-व्रतवत् मलमासेतरे तत्तु कर्त्तव्यम्।

अथ आरोग्यसप्तमी। तत्र पूर्ववत् सप्तम्यांन्तिथौ आरभ्य ऐहिकारोग्यधनधान्यपारलौकिकशुभस्थानप्राप्तिकामः संवत्सरं यावत् आरोग्यसप्तमीव्रतमहं करिष्ये इति सङ्कल्प्य प्रतिमास-शुक्लसप्तम्यां शालग्रामे घटादिस्वजले वा पूजयेत्। रक्ता-म्बुजासनमिति ध्यात्वा एतत् पाद्यम् ओम् सूर्य्याय नमः इत्यादिभिः संपूज्य 'आदित्यभास्कररवे भानो सूर्य्य दिवाकर प्रभाकर नमस्तेऽस्तु रोगादस्मान् प्रमोचय' इति त्रिःपूजयेत् एवं संवत्सरे पूर्णे दक्षिणां दद्यात्। ब्राह्मणांश्च भोजयेत् विशेषमासानुद्देशादमावास्याव्रतवत् मलमासेऽपि कर्त्तव्यम्।

अथ भीष्माष्टमी। अष्टम्यां ब्राह्मणः पितृतर्पणं कृत्वा ओम् 'वैयाघ्रपद्यगोत्राय सांकृतिप्रवराय च। अपुत्राय ददाम्येतत् सलिलं भीष्मवर्मणे'। इति पितृवत् भीष्मं तर्पयेत्। ततः कृताञ्जलिः 'भीष्मः शान्तनवो वीरः सत्यवादी जितेन्द्रियः। आभिरद्भिरवाप्नोतु पुत्रपौत्रोचितां क्रियाम्'। इत्यनेन प्रार्थयेत्। यच्चियादिना पितृतर्पणात् पूर्वम् एतत् कर्त्तव्यम्। भैम्यामेकादश्यामुपोष्य द्वादश्यां तिलोद्वर्त्तनमावश्यकं कर्त्तव्यं स्नानतर्पणमहादानभोजनादि यथालाभं कुर्य्यात्। माघपौर्णमास्यां युगाद्यात्वेन पार्वणविधिना श्राद्धं कर्त्तव्यम् अनन्तफलकामनया स्नानदानञ्च कर्त्तव्यं तस्यां दानप्रमाणन्तु तिथितत्त्वेऽनुसन्धेयम्।

अथ फाल्गुनकृत्यम्। तत्र माघ्यनन्तरं फाल्गुनकृष्णाष्टम्यां शाकोपकरणात्वेन केवलान्नेनापि पार्वणविधिना श्राद्धं कर्त्तव्यम्।

अथ शिवरात्रिव्रतम्। यद्दिने प्रदोषनिशीथोभयव्यापिनी चतुर्दशी तद्दिने व्रतम्। यदा तु पूर्वदिने निशीथव्यापिनी तदा पूर्वद्युः। यदा तु न पूर्वद्युर्निशीथव्याप्तिः परदिने प्रदोषव्यापिनी तदा परदिने। पारणन्तु परदिने चतुर्दशीलाभे चतुर्दश्यां तदभावे अमावास्यायामपि। व्रतानुष्ठानविधिस्तत्पद्धत्युक्तो ज्ञेयः। 'शैवो वा वैष्णवो वापि यो वा स्यादन्यपूजकः। सर्वं पूजाफलं हन्ति शिवरात्रिवहिर्मुखः'। इति नृसिंहाचार्य्यधृतवचनेनास्य नित्यत्वम्।

'फाल्गुने शुक्लपक्षे तु पुष्यर्क्षे द्वादशी यदि। गोविन्दद्वादशीनाम महापातकनाशिनी'। तत्र गङ्गायां पद्मपुराणीयो मन्त्रः 'महापातकसंज्ञानि यानि पापानि सन्ति मे। गोविन्दद्वादशीं प्राप्य तानि मे हर जाह्नवि"।

अथ चैत्रकृत्यम्। तत्र संक्रान्त्यां विस्फोटकभयोपशमन-कामो घण्टाकर्णं स्वदिग्वृत्ते पूजयेत्। ओम् 'घण्टाकर्ण महावीर सर्वव्याधिविनाशन। विस्फोटकभये प्राप्ते रक्ष रक्ष महाबल'। इत्यनेन त्रिः पूजयेत्। एवं शीतलादेव्याः पूजादिकं यथाशक्ति विस्फोटकाद्युपशमनकामः। स्तवनमेव कर्त्तव्यं तत्र स्कान्दपुराणम्। 'नमामि शीतलां देवीं रासभस्थां दिगम्बरीम्। मार्जनीकलसोपेतां सूर्पालङ्कृतमस्तकाम्'। स्कन्द उवाच 'भगवन् देव देवेश शीतलायाः स्तवं शुभम्। वक्तुमर्हस्यशेषेण विस्फोटकभयापहम्'। ईश्वर उवाच। 'वन्देऽहं शीतलां देवीं विस्फोटकभयापहाम्। या मासाद्य निवर्त्तेत विस्फोटकभयं महत्। शीतले शीतले चेति यो ब्रूयाद्दाहपीड़ितः। विस्फोटकभवो दाहः क्षिप्रं तस्य विनश्यति। शीतले ज्वरदग्धस्य पूतिगन्धगतस्य च। प्रनष्ट-चक्षुषः पुंसस्त्वामाहुर्जीवनौषधम्। शीतले तनुजान् रोगान् नृणां हरसि दुस्त्यजान्। विस्फोटकविशीर्णानां त्वमेका-मृतवर्षिणी। गलगण्डग्रहा रोगा ये चान्ये दारुणा नृणाम्। त्वदनुध्यानमात्रेण शीतले यान्ति सच्चयम्। न मन्त्रो नौषधं किञ्चित् पापरोगस्य विद्यते। त्वमेका शीतले त्रात्री नान्यं पश्यामि देवताम्। मृणालतन्तुसदृशीं नाभिहृन्मध्यसंस्थिताम्। यस्त्वां सञ्चिन्तयेद्देवि भक्तिश्रद्धासमन्वितः। उप-सर्गविनाशाय परं स्वस्त्ययनं हि तत्। यस्त्वामुदकमध्ये तु ध्यात्वा संपूजयेन्नरः। विस्फोटकभयं घोरं गृहे तस्य न जायते। अष्टकं शीतलादेव्या न देयं यस्य कस्यचित्। दातव्यं हि सदा तस्मै भक्तिश्रद्धान्वितो हि यः' इति श्रीस्कन्द-पुराणे शीतलास्तोत्रं समाप्तम्।

अथ वारुण्यादि। स्कन्दपुराणे। 'वारुणेन समायुक्ता

मधौ कृष्णा त्रयोदशी। गङ्गायां यदि लभ्येत सूर्य्यग्रहशतैः समा। शनिवारसमायुक्ता सा महावारुणी स्मृता। गङ्गायां यदि लभ्येत कोटिसूर्य्यग्रहैः समा। शुभयोगसमायुक्ता शनौ शतभिषा यदि। महामहेतिविख्याता त्रिकोटिकुलमुद्धरेत्'। संज्ञाविधेः सार्थकत्वाय निमित्तत्वेन मासपक्षतिथ्युल्लेखानन्तरं महावारुणीमहामहावारुण्यौ उल्लेखनीये। ओम् तत्सदित्युच्चार्य्य ओम् अद्य चैत्रे मासि कृष्णे पक्षे वारुणनक्षत्रयुक्तत्रयोदश्यान्तिथौ अमुकगोत्रोऽमुकदेवशर्मा बहुशतसूर्य्यग्रहणकालीनगङ्गास्नानजन्यफलसमफलप्राप्तिकामो गङ्गायां स्नानमहं करिष्ये। महावारुण्यान्तु ओम् अद्य चैत्रे मासि कृष्णे पक्षे त्रयोदश्यान्तिथौ महावारुण्यां बहुकोटिसूर्य्यग्रहणकालीनगङ्गास्नानजन्यफलसमफलप्राप्तिकामो गङ्गायां स्नानमहं करिष्ये। एवं महामहावारुण्याम् अमुकगोत्रोऽमुकदेवशर्मा त्रिकोटिकुलोद्धरणकामो गङ्गायां स्नानमहं करिष्ये। इति सङ्कल्प्य यथाविधि स्नायात्। कुलं पुरुषम्। अत्र सधवास्त्र्यादीनां स्नानं रात्रावपि वारुण्यादिस्नानम्।

अथ अशोकाष्टमी। तत्र स्रोतो जले बुधवारे पुनर्वसुनक्षत्रयुक्तशुक्लाष्टम्यां वाजपेययज्ञजन्यफलसमफलप्राप्तिकामः स्नायात्। ब्रह्मपुत्रे तु सर्वपापक्षयपूर्वक सर्वतीर्थस्नानजन्यफलसमफलप्राप्तिकामः स्नायात्। स्नानेति कर्त्तव्यतां विधाय ओम् 'ब्रह्मपुत्र महाभाग शान्तनोः कुलनन्दन। अमोघागर्भसम्भूत पापं लौहित्य मे हर'। इति पठित्वा स्नायात्। केवलशुक्लाष्टम्यां ब्रह्मपदगमनफलम्। पश्चार्द्धप्रहरव्यापिन्यां पुनर्वसुयुक्तायां केवलायां वा उभयदिने शुक्लाष्टम्यां शोकरहितत्वकामः अष्टावशोककलिका अहं पिबे इति संकल्प्य 'त्वामशोकहराभीष्टमधुमाससमुद्भव। पिबामि शोकसन्तप्तो

मामशोकं सदा कुरु'। इति पठित्वा प्राङ्मुखो विष्णुपदजल-मिश्रिता अशोककलिका अष्टौ पिबेत्। स्त्रीशूद्रानुपनीतै-रपि मन्त्रः पठनीयः पौराणिकत्वात्। स्त्रीपक्षे लिङ्गोहो नास्ति प्रकृतेः समवेतार्थत्वात्।

अथ श्रीरामनवमी। तत्र दशमीपारणसत्त्वे सर्वैरेवाष्टमी-विद्धा नोपोष्या तदसत्त्वे अष्टमीविद्धाप्युपोष्या दशम्यां पारणानु-रोधात्। ततश्चैत्रशुक्लनवम्यां पुनर्वसुयुक्तायां केवलायां वा प्रातःकृतस्नानादिः ओम् तत्सदित्युच्चार्य्य सूर्य्यः सोम इति पठित्वा ओम् अद्येत्यादि असुकगोत्रोऽमुकदेवशर्म्मा ब्रह्मत्व-प्राप्तिकामः श्रीरामनवमीव्रतमहं करिष्ये इति सङ्कल्प्य ओम् 'उपोष्य नवमीं त्वद्य यामेष्वष्टसु राघव। तेन प्रीतो भव त्वं भो संसारात्त्राहि मां हरे'। तत्र दशम्यां पारणं करिष्या-मीत्यध्याहारान्वयः। इति निवेदयेत्। ततः शालग्रामे जले वा 'कोमलाङ्गं विशालाक्षमिन्द्रनीलसमप्रभम्। दक्षिणांशे दशरथं पुत्त्रावेक्षणतत्परम्। पृष्ठतो लक्ष्मणं देवं सच्छत्रं कनकप्रभम्। पार्श्वे भरतशत्रुघ्नौ तालवृन्तकरावुभौ। अग्रे व्यग्रं हनूमन्तं रामानुग्रहकाङ्क्षिणम्'। एवं ध्यात्वा एतत् पाद्यम् ओम् श्रीरामाय नमः इत्यादिना पूजयेत् स्नाने तु ओम् 'इन्द्रोऽग्निश्च यमश्चैव नैरृतो वरुणोऽनिलः। कुवेर ईशो ब्रह्माद्याः दिक्पालाः स्नापयन्तु ते'। तत ओम् कौश-ल्यायै नम इत्यनेन पूजयेत्। ओम् 'रामस्य जननी चासि राममयमिदं जगत्। अतस्त्वां पूजयिष्यामि लोकमातर्नमोऽस्तु ते' इत्यनेन त्रिःपूजयेत्। ओम् दशरथाय नम इत्यनेन पूजयेत्। तत ओम् रां हृदयाय नमः रीं शिरसे स्वाहा रू शिखायै वषट् रैं कवचाय हुं रौं नेत्राभ्यां वौषट् रः अस्त्राय फट् इत्यङ्गानि पूजयेत्। ओम् हनूमते नमः ओम् सुग्रीवाय

भरताय विभीषणाय लक्ष्मणाय अङ्गदाय शत्रुघ्नाय जाम्बवते धूम्राय जयन्ताय विजयाय सुराष्ट्राय राष्ट्रवर्द्धनाय अकोपाय धर्मपालाय सुमन्त्राय इन्द्राय अग्नये यमाय नैर्ऋताय वरुणाय वायवे कुवेराय ईशानाय ब्रह्मणे अनन्ताय खड्गाय पाशाय अङ्कुशाय गदायै शूलाय चक्राय पद्माय इति अस्त्राणि पूजयेत्। अत्र अभिजित्पूजामुख्यकालः। 'उच्चस्थे ग्रहपञ्चके सुरगुरौ सेन्दौ नवम्यान्तिथौ लग्ने कर्कटके पुनर्वसुदिने मेषं गते पूषणि। निर्दग्धुं निखिलाः पलाशसमिधो मध्यादयोध्यारणेराविर्भूतमभूदपूर्वविभवं यत्किञ्चिदेकं महः'। इत्यनेन तज्जन्म भावयेत्। पलाशा राक्षसाः ततो वाद्यादीनि वादयेत्। 'फलपुष्पाम्बुसंपूर्णं गृहीत्वा शङ्खमुत्तमम्। अशोकरक्तकुसुमैर्युक्तञ्च तुलसीदलैः'। एवम्भूतमर्घ्यं गृहीत्वा ओम् 'दशाननबधार्थाय धर्मसंस्थापनाय च। दानवानां विनाशाय दैत्यानां निधनाय च। परित्राणाय साधूनां रामो जातः स्वयं हरिः। गृहाणार्घ्यं मया दत्तं भ्रातृभिः सहितो मम'। इत्यनेन अर्घ्यं दद्यात्। ओम् श्रीरामचन्द्राय नम इत्यनेन पुष्पाञ्जलित्रयं दद्यात्। एवमष्टप्रहरेषु यथाशक्ति पूजयेत्। ततः परदिने प्रातःसंपूज्य दशम्यां पारणं कुर्य्यात्।

अथ मदनत्रयोदशी। चैत्रशुक्लत्रयोदश्यां दमनकवृक्षे शालग्रामे जले वा कामदेवं पूजयेत् ओम् अद्येत्यादि अमुकगोत्रोऽमुकदेवशर्मा पुत्त्रपौत्त्रविवर्द्धनसर्वापद्विमुक्तिकामः कामदेवपूजनमहं करिष्ये इति सङ्कल्प्य 'चापेषुधृक्कामदेवो रूपवान् विश्वमोहनः'। इति ध्यात्वा एतत् पाद्यम् ओम् कामदेवाय नम इत्यादिना पाद्यादिभिः संपूज्य 'ओम् पुष्पधन्वन् नमस्तेऽस्तु नमस्ते मीनकेतन। मुनीनां लोकपालानां धैर्य्यच्युतिकृते नमः। माधवात्मज कन्दर्प संवरारे

रतिप्रिय। नमस्तुभ्यं जिताशेषभुवनाय मनोभुवे। श्राधयो मम नश्यन्तु व्याधयश्च शरीरजाः। सम्पाद्यतामभीष्टं मे सम्पदः सन्तु मे स्थिराः। नमो माराय कामाय देवदेवस्य मूर्त्तये। ब्रह्मविष्णुशिवेन्द्राणां मनःक्षोभकराय च' इत्यनेन प्रार्थयेत्।

अथ मदनचतुर्दशी। चैत्रशुक्लचतुर्दश्यां पुत्रपौत्रसमृद्धि-परमपदप्राप्तिकामः पूर्ववत् गीतवाद्याभिः पूजयेत्। तत्प्रीतये जुगुप्सितञ्च ब्रूयात्। एतदकरणे चैत्रमासीयपुण्य-फलं कामः प्राप्नोति।

अथ मङ्गलचण्डिकापूजा। तत्र कालिकापुराणम्। येषा ललितकान्ताख्या देवी मङ्गलचण्डिका। वरदाभयहस्ता च द्विभुजा गौरदेहिका। रक्तपद्मासनस्था च मुकुटकुण्डल-मण्डिता। रक्तकौषेयवस्त्रा च स्मितवक्त्रा शुभानना। नव-यौवनसम्पन्ना चार्वङ्गी ललितप्रभा'। इति ध्यात्वा एतत् पाद्यम् ओम् ह्रीं मङ्गलचण्डिकायै नमः इत्यनेन पाद्यादिभिः पूजयेत्। ओम् ललितचण्डिकायै नमः इति त्रिःपूजयेत्। ततो यथाशक्ति वीजं जप्त्वा ओम् गुह्यातिगुह्यगोप्त्री त्वं इत्या-दिना जपं समर्पयेत्। एवं रोगादिशान्त्यर्थं मङ्गलवार-मारभ्य मङ्गलवारपर्य्यन्तं गीतादिभिः परिपूजयेत्। ततो वलिदानम्। यथा स्वयं उत्तराभिमुखः वलिः पूर्वमुखः ओम् अस्त्राय फडित्यवलोक्य 'ओम् अग्निः पशुरासीत्तेना-जयन्तस एतल्लोकमजयद् यस्मिन्नग्निः स ते लोको भविष्यति तं जेष्यसि पिवेता अपः। ओम् वायुः पशुरासीत्तेनाजयन्तस एतल्लोकमजयद् यस्मिन् वायुः। स ते लोको भविष्यति तं जेष्यसि पिवेता अपः। ओम् सूर्य्यः पशुरासीत्तेनाजयन्तस एतल्लोकमजयद् यस्मिन् सूर्य्यः स ते लोको भविष्यति तं

जैथसि पिबेता अपः। ओम् वाचन्ते शुन्धामि ओम् प्राणन्ते शुन्धामि ओम् श्रोत्रन्ते शुन्धामि ओम् नाभिन्ते शुन्धामि ओम् पायुन्ते शुन्धामि ओम् चरित्रन्ते शुन्धामि ओम् मेढ्रन्ते शुन्धामि ओम् पादन्ते शुन्धामि ओम् यत्ते क्रूरं तत्ते शुन्धामि नमस्तु आप्यायतां प्राणन्ते आप्यायतां श्रोत्रन्ते आप्यायताम् ओम् यत्ते क्रूरं यदधःस्थितं तत्त आप्यायतां तत्ते तिष्ठतु समूहेभ्यः स्वाहा। ततः पशोः कर्णे 'हिलि हिलि किलि किलि बहुरूपधरायै हुँ हुं स्फें स्फें इमं पशुं प्रदर्शय स्वर्गं नियोजय मुक्तिं कुरु कुरु स्वाहा' एभिर्मन्त्रैः कुशोदकैः संप्रोक्ष्य ओम् छागपशवे नम इति गन्धादिभिरभ्यर्च्य 'छाग त्वं बलिरूपेण मम भाग्यादुपस्थितः। प्रणमामि ततः सर्वरूपिणं बलिरूपिणम्। चण्डिकाप्रीतिदानेन दातुरापद्विनाशन। चामुण्डाबलिरूपाय बले तुभ्यं नमो नमः। यज्ञार्थे पशवः सृष्टाः स्वयमेव स्वयम्भुवा। अतस्त्वां घातयिष्यामि तस्माद् यज्ञे वधोऽबधः'। इत्युच्चार्य्य ऐं ह्रीं श्रीं इति मन्त्रेण बलिं शिवरूपिणं विचिन्त्य तस्य मूर्द्धि पुष्पं न्यसेत्। तत ओम् तत्सदद्येत्यादि अमुकगोत्रोऽमुकदेवशर्मा अभीष्टफलकामो ह्रीं चण्डिकायै इमं छागपशुं घातयिष्ये इत्यनेन जलं दद्यात्। ततः 'कृष्णं पिनाकपाणिञ्च कालरात्रिस्वरूपिणम्। उग्रं रक्तास्यनयनं रक्तमाल्यानुलेपनम्। रक्ताम्बरधरञ्चैव पाशहस्तं कुटुम्बिनम्। पिबमानञ्च रुधिरं भुञ्जानं क्रव्यसंहतिम्'। एवं खड्गं ध्यात्वा 'रसना त्वं चण्डिकायाः सुरलोकप्रसाधकः'। इत्यभिमन्त्र्य आं ह्रीं खड्गाय नम इत्यनेन पाद्यादिभिः संपूज्य। ओम् 'असिर्विशसनः खड्गस्तीक्ष्णधारो दुरासदः श्रीगर्भो विजयश्चैव धर्मपाल नमोऽस्तु ते। इत्यष्टौ तव नामानि स्वयमुक्तानि • वेधसा। नक्षत्रं

शक्तिका तुभ्यं गुरुर्देवो महेश्वरः। हिरण्यञ्च शरीरन्ते धाता देवो जनार्दनः। पिता पितामहो देवस्त्वं मां पालय सर्वदा। नीलजीमूतसङ्काशस्तीक्ष्णदंष्ट्रः कृशोदरः। भावशुद्धो मर्षणश्च अतितेजास्तथैव च। इयं येन धृता क्षौणी हतश्च महिषासुरः। तीक्ष्णधाराय शुद्धाय तस्मै खड्गाय ते नमः'। इत्यनेन पुष्पं दद्यात्। तत ओं क्लीं फड़िति खड्गम् आदाय ओम् 'कालि कालि वज्रेश्वरि लौहदण्डाय नम इति पठित्वा बलिं पूर्वाभिमुखं स्वयमुत्तराभिमुखः उत्तराभिमुखं वलिं स्वयं पूर्वाभिमुखो वा छेदयेत्। ततो मृण्मयादिपात्रेण रुधिरमादाय देव्याः पुरतः स्थापयित्वा अभीष्टकामो रुधिरं मांसञ्च दद्यात्। तत ऐं ह्रीं श्रीं कौशिकिरुधिरेण आप्यायतामिति वदेत्। ततश्छागशिरसि ज्वलद्दीपं दत्त्वा एष छागशीर्षवलिः ओम् मङ्गलचण्डिकायै नमः इत्युत्सृजेत्। ओम् 'जय त्वं सर्वभूतेशि सर्वभूतसमावृते। रक्ष मां सर्वभूतेभ्यो वलिं भुङ्क्ष्व नमोऽस्तु ते'। ततः खड्गस्थरुधिरमादाय ओम् 'यं यं स्पृशामि पादेन यं यं पश्यामि चक्षुषा। स स मे वश्यतां यातु यदि शक्रसमो भवेत्'। ओम् ऐं ह्रीं श्रीं क्लिन्ने मदद्रवे स्वाहा इति सर्ववश्यमन्त्रेण स्वीयललाटे तिलकं कुर्य्यात्। ततस्तुत्वा प्रणम्य कर्मकारयित्रे दक्षिणां दद्यात्।

अथ रोगशान्तिः। 'दानैर्दयादिभिरपि द्विजदेवतागोगुर्वर्चनाप्रणतिभिश्च जपैस्तपोभिः। एभिश्च पुण्यनिचयैरुपचीयमानाः प्राक् पापजा यदि रुजः प्रशमं प्रयान्ति। सुवर्णदानं सर्वेषां रोगाणां नाशकारणम्। तस्मात् सर्वप्रयत्नेन कर्त्तव्यं कमलोद्भव'।

अथ अचातिथिकृत्यम्। 'स्वकृते नक्षत्रेशानां मैथुना-

स्नानमेव च। आमिषं कलहं हिंसां वर्षहृद्धौ विवर्जयेत्। मृते जन्मनि संक्रान्तौ श्राद्धे जन्मदिने तथा। अस्पृश्यस्पर्शने चैव न स्नायादुष्णवारिणा'। विष्णुपुराणं गर्गश्च। 'सर्वैश्च जन्मदिवसे स्नातैर्मङ्गलपाणिभिः। गुरुदेवाग्निविप्राश्च पूजनीयाः प्रयत्नतः। स्वनक्षत्रञ्च पितरौ तथा देवप्रजापतिः। प्रतिसंवत्सरञ्चैव कर्त्तव्यश्च महोत्सवः'। स्नातैस्तिलस्नातैस्तथा च तत्तिथिमधिकृत्य 'तिलोद्वर्त्ती तिलस्नायी तिलहोमी तिलप्रदः। तिलभुक् तिलवापी च षट्तिली नावसीदति'। तिलोद्वर्त्तनं तिलयुक्तजलैः स्नानम् ओम् तद्विष्णोरिति मन्त्रेण ततो नववस्त्रपरीधानं कृत्वा कृतनित्यक्रियो दक्षिणपाणौ गुग्गुलुश्वेतसर्षपनिम्बदूर्वागोरोचनात्मकजन्मग्रन्थिबन्धनं कृत्वा स्वस्तिवाचनम् ओम् तद्विष्णोरिति पठित्वा ओम् तत्सदित्युच्चार्य्य ओम् अद्येत्यादि अमुकगोत्रोऽमुकदेवशर्म्मा जन्मदिवसनिमित्तकगुर्वादिपूजनमहं करिष्ये इति सङ्कल्प्य तज्जलम् ऐशान्यां क्षिपेत्। शालग्रामे तदभावे जले वा एतत् पाद्यम् ओम् गुरुभ्यो नमः एवमर्घ्यादिना पूजयेत्। ओम् देवेभ्यः ओम् अग्निभ्यः ओम् विप्रेभ्यः ओम् स्वनक्षत्रनाम्ने ओम् अश्विनीभ्याम् एवं भरणीभ्यां कृत्तिकाभ्यः रोहिणीभ्यः मृगशिरसे आर्द्रायै पुनर्वसवे पुष्याय अश्लेषाभ्यः मघाभ्यः पूर्वफल्गुनीभ्याम् उत्तरफल्गुनीभ्यां हस्तायै चित्रायै स्वात्यै विशाखाभ्यः अनुराधाभ्यः ज्येष्ठायै मूलाय पूर्वाषाढ़ाभ्यः श्रवणाय धनिष्ठाभ्यः शतभिषाभ्यः पूर्वभाद्रपद्भ्यः उत्तरभाद्रपद्भ्यः रेवत्यै एतान् प्रणवादिनमोऽन्तेन पूजयेत्। विशेषनामाम्नाने स्वनक्षत्राय नमः ओम् पितृभ्यां नमः ओम् प्रजापतये नमः ओम् सूर्य्याय नमः ओम् गणेशाय नमः ओम् मार्कण्डेयाय नमः। ध्यानं यथा 'द्विभुजं जटिलं सौम्यं सुवृद्धं

चिरजीविनम्। मार्कण्डेयं नरो भक्त्या ध्यायेत् प्रयतमानसः'। प्रार्थनन्तु 'चिरजीवी यथा त्वं भो भविष्यामि तथा मुने!। रूपवान् वित्तवांश्चैव श्रिया युक्तश्च सर्वदा। मार्कण्डेय महाभाग! सप्तकल्पान्तजीवन। आयुरिष्टार्थसिद्ध्यर्थमस्माकं वरदो भव'। ओम् व्यासाय नमः ओम् परशुरामाय नमः ओम् अश्वत्थाम्ने नमः ओम् कृपाय नमः ओम् बलये नमः ओम् प्रह्लादाय नमः ओम् हनूमते नमः ओम् विभीषणाय नमः ओम् जन्मतिथये नमः। द्विभुजां हेमगौराङ्गीं रत्नालङ्कारभूषिताम्। वरदाभयहस्ताञ्च शरच्चन्द्रनिभाननाम्। पीतवस्त्रपरीधानां पीनोन्नतपयोधराम्। अङ्कार्पितसुतां षष्ठीमम्बुजस्थां विचिन्तयेत्'। इति ध्यात्वा ओम् षष्ठ्यै नमः अस्या नैवेद्यं दधिभक्तमपि दद्यात्। ओम् 'जय देवि जगन्मातर्जगदानन्दकारिणि। प्रसीद मम कल्याणि नमस्ते षष्ठि देवि ते' इत्यनेन नमस्कुर्य्यात्। ओम् 'आयुर्देहि जयं देहि भाग्यं भगवति देहि मे। पुत्रान् देहि धनं देहि सर्वान् कामांश्च देहि मे'। इत्यनेन प्रार्थयेत्। 'त्रैलोक्ये यानि भूतानि स्थावराणि चराणि च। ब्रह्मविष्णुशिवैः सार्द्धं रक्षां कुर्वन्तु तानि मे'। इति मत्स्यपुराणीयेन रक्षां पठेत् ततः सूक्तेन स्वगृह्योक्तविधिना अग्निं संस्थाप्य तिलैर्होमं कुर्य्यात् पूजितदेवनामभिः। प्रणवादिचतुर्थ्यन्तेन नाम्ना स्वाहावसाने जुहुयात्। अष्टोत्तरशतम् अष्टाविंशतिरष्टौ वा। दक्षिणां तिलांश्च दद्यात् ब्राह्मणाय। जन्मतिथौ यदि शनिमङ्गलवारयोगस्तदा तद्योगसूचितदोषोपशमनाय मुक्तां दद्यात्। अत्र नक्षत्रयोगे काञ्चनं दद्यात्। कनिष्ठाङ्गुलिमूलात्मकप्राजापत्यतीर्थेन तिलान् वपेत् ततो भोजनकाले गुड़दुग्धमिश्रितान् तिलान् अञ्जल्यर्द्धमितान् पिबेत्। अत्र मन्त्र

'सतिलं गुड़संमिश्रमञ्जल्यर्द्धमितं पयः। मार्कण्डेय वरं लब्ध्वा पिबाम्यायुष्यहेतवे'।

अथ सूतिकाषष्ठीपूजा। विष्णुधर्मोत्तरे 'सूतिकावासनिलया जन्मदा नाम देवताः। तासां यागनिमित्तन्तु शुद्धिर्जन्मनि कीर्त्तिता। षष्ठेऽह्नि रात्रौ यागन्तु जन्मदानान्तु कारयेत्। रक्षणीया तथा षष्ठी निशा तत्र विशेषतः। रामजागरणं कार्य्यं जन्मदानां तथा बलिः'। रामेति सम्बोधनम्। अत्राशौचमध्ये दोषाभावः। 'अशौचे तु समुत्पन्ने पुत्रजन्म यदा भवेत्। कर्त्तुस्तात्कालिकी शुद्धिः पूर्वाशौचाद्विशुध्यति'। इति प्रजापतिवचनात्। अत्र पुत्रजन्मेति श्रवणात् पितुरेवाशौचाभावः। कर्त्तुरिति पुंस्त्वनिर्द्देशाच्च कारयेदिति अन्यगोत्राभिप्रायेण तत्रादौ विनायकसहितगौर्य्यादिषोड़शमातृकापूजा कार्य्या। तत्र कृत्यचिन्तामणौ व्यासः। 'निशि जागरणं कार्य्यं खड्गो धार्य्यः समीपतः। आवाह्य पूजयेद्देवीं गणेशं मातरं गिरिम्'। देवीं षष्ठीं गिरिं मन्थानमन्दरं कृत्यचिन्तामणिधृतमन्थानमन्दारोऽसीति मन्त्रलिङ्गात्। मातृनामान्याह गृह्यपरिशिष्टम्। 'गौरी पद्मा शची मेधा सावित्री विजया जया। देवसेना स्वधा स्वाहा मातरो लोकमातरः। शान्तिः पुष्टिर्धृतिस्तुष्टिरात्मदेवतया सह। आदौ विनायकः पूज्यो अन्ते च कुलदेवता'। भविष्यपुराणे 'पूज्यास्सिते तथा कार्य्या वरदाभयपाणयः'। तत्र मातर इति सर्वासां विशेषणम्। अतएव एतत् पाद्यम् ओम् गौर्य्यै मात्रे नम इत्यादिप्रयोगः एता लोकमातरो ज्ञेयाः। अतएव तयोर्बहुत्वनिर्द्देशः। षट्कृत्तिकापूजा रुद्रधरधृताः। 'शिवा संभूतिनामा च कीर्त्तिः सन्नतिरेव च। अनसूया क्षमा चैव षड़ेता कृत्तिका मताः'। एतासां पूजनं घटे जले वा आवा-

ह्नविसर्जने विनैव कार्य्यं बौधायनः 'प्रतिमास्थानेष्वप्सग्नौ नावाह्नविसर्जने'। सूतिकागृहस्थापनीय द्रव्याण्याह मार्कण्डेयपुराणम् 'अन्यस्यपशुशून्ये च निर्य्यूपे सूतिकागृहे। प्रदीपशस्त्रमुषलभूतिसर्षपवर्जिते। अनु प्रविश्य जातन्तु अपहृत्यात्मसम्भवम्। क्षणप्रसविनी बालं तत्रैवोत्सृजति द्विज। सा जातहारिणी नाम सुघोरा पिशिताशना। तस्मात् संरक्षणं कार्य्यं यत्नतः सूतिकागृहे'। पशुश्छागः यूपोऽपि अस्यैवोपस्थितत्वात्। पाद्मे पायसं सर्पिषा मिश्रं द्विजेभ्यो यः प्रयच्छति। गृहं तस्य न रक्षांसि धर्षयन्ति कदाचन'।

अथ प्रयोगः। पुत्रे जाते षष्ठदिवसीयरात्रौ कृतस्नानः प्रदोषसमये सूतिकागृहे उपविश्य प्राङ्मुखः स्वस्तिवाचनं कृत्वा ओम् तत्सदित्युच्चार्य्य ओम् अद्येत्यादि अमुकगोत्रस्य मम अभिनवजातकुमारस्य संरक्षणकामः सूतिकागारदेवतापूजनमहं करिष्ये इति सङ्कल्पं कृत्वा सूतिकागृहद्वारे तत्र चेत्रपालमावाह्य पूजयेत् ततो वटपत्रेषु माषभक्तबलिं दद्यात्। एष माषभक्तबलिः ओम् क्षेत्रपालाय नमः इति दत्त्वा ओम् 'क्षेत्रपाल नमस्तुभ्यं सर्वशान्तिफलप्रद। बालस्य विघ्ननाशाय मम गृह्णन्त्विमं बलिम्'। एष माषभक्तबलिः ओम् भूतदैत्यपिशाचादिगन्धर्वयक्षराक्षसेभ्यो नमः। ओम् 'भूतदैत्यपिशाचाद्या गन्धर्वा यक्षराक्षसाः। शुभं कुर्वन्तु ते सर्वे मम गृह्णन्त्विमं बलिम्'। एष माषभक्तबलिः ओम् पूर्वादिस्वस्थानवासिभ्यो नमः ओम् पूर्वादिदिग्भागेषु स्वस्थानप्रतिवासिनः। 'शान्तिं कुर्वन्तु ते सर्वे मम गृह्णन्त्विमं बलिम्'। एष माषभक्तबलिः ओम् योगिनी डाकिनीभ्यो नमः। ओम् 'नानारूपधराः सर्वा मातरो देवयोनयः। बालस्य विघ्ननाशाय मम गृह्णन्त्विमं बलिम्'। एष माषभक्तबलिः ओम् आदित्यादि

ग्रहेभ्यो नमः ओम् 'आदित्यादिग्रहा ये च नित्यं स्वस्थानवासिनः। शान्तिं कुर्वन्तु ते सर्वे मम गृह्णन्त्विमं बलिम्'। एवम् इन्द्रादिलोकपालेभ्यो दद्यात्। ततो द्वारपालेभ्यो नम इति पाद्यादिभिः संपूज्य प्रणमेत्। ओम् 'द्वारपाल नमस्तुभ्यं सर्वोपद्रवनाशन। बालविघ्नविनाशाय पूजां गृह्ण सुरोत्तम'। तत ओम् जम्भाय नम इति संपूज्य प्रणमेत् ओम् 'जम्भासुर महावीर सर्वशान्तिफलप्रद। रक्षस्व मम बलं त्वं पूजां गृह्ण यथा सुखम्'। ततो गृहं प्रविश्य भूतशुद्ध्यादिप्राणायामाङ्गन्यासार्घ्यपात्रादिकं कृत्वा घटं संस्थाप्य तत्र गणपतिं ध्यात्वा संपूज्य प्रणमेत्। ओम् 'सर्वविघ्नहरः श्रीमान् एकदन्तो गजाननः। षष्ठी गृहेऽर्चितः प्रीत्या शिशुं दीर्घायुषं कुरु'। एवं सूर्यादीन् संपूज्य षष्ठीं ध्यायेत्। 'अभयवरदहस्तां कृष्णमार्जारसंस्थां कनकरुचिरगात्रीं सर्वपुत्रैकधात्रीं सुरमुनिगणवन्द्यां दिव्यमाल्याम्बराढ्यां वटविटपिविलासां मौनि षष्ठीं सहासाम्'। अथवा 'द्विभुजां हेमगौराङ्गीं रत्नालङ्कारभूषिताम्। वरदाभयहस्ताञ्च शरच्चन्द्रनिभाननाम्। पीतवस्त्रपरीधानां पीनोन्नतपयोधराम्। अङ्कार्पितसुतां षष्ठीमम्बुजस्थां विचिन्तयेत्'। इति ध्यात्वा स्वशिरसि पुष्पं दत्त्वा मानसोपचारैः संपूज्य पुनर्ध्यात्वा घटस्थे जले एतत् पाद्यम् ओम् षष्ठ्यै नम एवं गन्धपुष्पधूपदीपनैवेद्यवस्त्रादिभिः षष्ठीं संपूज्य ओम् 'गौर्य्याः पुत्रो यथा स्कन्दः शिशुः संरक्षितस्त्वया। तथा ममाप्ययं बालो रक्ष्यतां षष्ठिके नमः'। इत्युत्थाप्य ओम् षष्ठ्यै नम इति त्रिःपूजयेत् इति भोजराजः। तत्र 'कृत्यचिन्तामणौ स्मृतिः। 'जय देवि जगन्मातर्जगदानन्दकारिणि। प्रसीद मम कल्याणि नमस्ते षष्ठि देवि ते'। ओम् 'धात्री त्वं कार्त्तिकेयस्य षष्ठिषष्ठीति विश्रुता। दीर्घायु-

दृष्ट्वा नैरुज्यं कुरुष्व मम बालके। जननी सर्वभूतानां सर्व-
विघ्नभयंकरी। नारायणस्वरूपेण मत्पुत्रं रक्ष सर्वतः।
भूतदैत्यपिशाचेभ्यो डाकिनीभ्योऽपि सङ्कटात्। सुतं मेऽद्य
शुभं दत्त्वा रक्ष देवि नमोऽस्तु ते'। इति प्रणमेत्। तते
वरं प्रार्थयेत्। 'रूपं देहि यशो देहि भाग्यं भगवति देहि
मे। पुत्रान् देहि धनं देहि सर्वान् कामांश्च देहि मे'। इति
रुद्रधरः। मन्थानमन्दरपूजनानन्तरम्। कार्त्तिकेयं संपूज्
प्रणमेत्। 'कार्त्तिकेय महाभाग गौरीहृदयनन्दन!। कुमा
रक्ष मे पुत्रं शक्तिहस्त नमोऽस्तु ते'। ततो जन्मदां पाद्यादिभि
संपूज्य प्रणमेत्। ओम् 'या जन्मदेतिविख्याता शुभदा भु
पूजिता। करोतु भवदा रक्षां बालस्य सूतिकागृहे'। तत
योगिनीडाकिनीराक्षसीजातहारिणीबालघातिनीघोरापिशि
ताशनावसुदेवदेवकीयशोदानन्दान् संपूज्य व्यजने वस्त्रोपरि
बालकं कृत्वा षष्ठ्याः पादे समर्पयेत्। 'जननी सर्वभूता
लोकानां हितकारिणी। व्यजनस्थं रक्ष पुत्रं तव पादे सम
र्पितम्'। तत एभिर्मन्त्रैर्बालस्य सर्वाङ्गं हस्तेन स्पृशेत
'माधुरं मङ्गलं यच्च विष्णोरतुलतेजसः। हरस्य मङ्गलं य
सर्वं भवतु मे सुते। रक्षां करोतु भगवान् बहुरूपी जन
र्दनः। वराहरूपधृग्देवः शिशुं रक्षतु केशवः। नखाग्रै
विदारितवैरिवक्षःस्थलो हरिः। नृसिंहरूपी सर्वत्र स
रक्षतु केशवः। शिरस्ते पातु गोविन्दः गण्डं रक्षतु केशव
गुदं सजठरं पातु जङ्घाश्चैव जनार्दनः। स्कन्धं बाहु प्रबाहु
मनः सर्वेन्द्रियाणि च'। ततो हरेर्द्वादशनामानि व
लिखित्वा शिशोः शिरसि दद्यात्। तद् यथा केशव मधु
पद्मनाभ गोविन्द त्रिविक्रम हृषीकेश पुण्डरीकाक्ष वासु
नारायण नरसिंह हयग्रीव वामन ।१२। ततः त्रिलोच

संपूज्य प्रणमेत्। ततोऽश्वत्थामादिसप्तचिरजीविनः संपूज्य प्रणमेत्। 'अश्वत्थामा बलिर्व्यासो हनूमांश्च विभीषणः। कृपः परशुरामश्च सप्तैते पान्तु मे सुतम्'। ततो गन्धपुष्पाभ्यां ब्राह्मणान् संपूज्य दक्षिणां दद्यात्।

अथ विद्यारम्भः। प्रमाणं ज्योतिस्तत्त्वेऽनुसन्धेयम्। सौरवर्षदिनेषु पञ्चदशदण्डाधिकपञ्चदिनह्रासे सावनवर्षो भवति एतत् पञ्चवर्षाभ्यन्तरे हरिशयनानध्यायदिनषष्ठीरिक्ताशनिभौमदिनकालाशुद्धीतरत्र शुक्लपक्षे पुष्याश्विनी हस्तास्वातीपुनर्वसुश्रवणाधनिष्ठाशतभिषा आर्द्रा मूला अश्लेषाकृत्तिकाभरणीमघाविशाखापूर्वात्रयचित्रारेवतीमृगशिरो नक्षत्रेषु रविबुधगुरुशुक्रवारेषु वृषसिंहतुलाधनुर्मीनलग्नेषु तथाविधलग्नाच्चतुर्थपञ्चसप्तनवमदशमस्थशुभग्रहेषु लग्नस्थरवावपि इन्द्वर्कगुरुतारकशुद्धौ विद्यारम्भं कुर्य्यात्। तत्र प्रयोगः कृतनित्यकृत्यो गुरुःशुचौ देशे आचान्तः प्राङ्मुखः ओम् तत्सदित्युच्चार्य्य अद्येत्यादि अमुकगोत्रस्य श्रीअमुकदेवशर्म्मणो विद्यालाभकामो विष्णुादिपूजनमहं करिष्यामि इति सङ्कल्प्य शालग्रामे जले वा विष्णुं ध्यात्वा एतत् पाद्यम् ओम् श्रीविष्णवे नमः इत्यादिभिः पूजयेत् तत्र पूजामन्त्रः ओम् 'नमस्ते बहुरूपाय विष्णवे परमात्मने स्वाहा' इत्यनेन त्रिःपूजयेत्। प्रणमेच्च एवं लक्ष्मीं नमस्ते सर्वदेवानां वरदासीत्यादिना स्तुत्वा सरस्वतीं ध्यायेत् तद् यथा। ओम् तरुणशकलमिन्दोर्बिभ्रती शुभ्रकान्तिः' इत्यादिना ध्यात्वा एतत् पाद्यम् ओम् सरस्वत्यै नमः एवं पाद्यादिभिः पूजयित्वा ओम् भद्रकाल्यै नमो नित्यं सरस्वत्यै नमो नमः। वेदवेदान्तवेदाङ्गविद्यास्थानेभ्य एव च' स्वाहेति ब्रह्मपुराणीयेन त्रिःपूजयेत् एवं रुद्राय नमः ओम् ब्रह्मणे नमः ओम् सूत्रकारेभ्यो

नमः ओम् सविद्यायै नमः नवग्रहान् पूजयेत्। ततो बालकोऽपि एतान् पुष्पाञ्जलिभिः पूजयेत्। ततस्तु गुरुं प्रणमेत्। ततः प्राङ्मुखो गुरुः पश्चिमाभिमुखं शिष्यम् ओम् तत्सदित्युच्चार्य्य अकारादिक्षकारान्तान् वर्णान् कठिनीं गृहीत्वा तद्धस्तेन लेखयेत् एवं वारत्रयं पाठयेत् लेखयेच्च। ततो गुरुं नत्वा दक्षिणां दद्यात् तद्दिने निरामिषं भुञ्जीत बालकः।

अथ गृहारम्भः। कृत्तिकादिसप्तकान्यतमनक्षत्रस्य पुरुषस्य पूर्वस्यां मघादिसप्तकान्यतमनक्षत्रस्य दक्षिणस्याम् अनुराधादिसप्तकान्यतमनक्षत्रस्य पश्चिमस्यां धनिष्ठादिसप्तकान्यतमनक्षत्रस्य पुरुषस्य उत्तरस्यां दिशि गृहं शोभनम् असम्भवे पूर्वोत्तरयोर्दक्षिणपश्चिमयोरैक्यं भाद्रादिमासत्रये पूर्वस्यां मार्गशीर्षादित्रये दक्षिणस्यां फाल्गुनादित्रये पश्चिमस्यां ज्यैष्ठादित्रये उत्तरस्यां वामपार्श्वशयनेन नागस्य शिरो ज्ञात्वा एकगृहकरणे तत् क्रोडे गृहं कार्य्यं द्वे चेद्दक्षिणपश्चिमयोः एवं चेत् पूर्वहीनम् उत्तरहीनं वा कार्य्यं मेषवृषमिथुनतुलाकर्कटसिंहमकरस्थरवौ पूर्वपश्चिमद्वारम्। तुलामेषवृश्चिकरवौ दक्षिणोत्तरद्वारं गृहं शुक्लपक्षे रविशनिमङ्गलवारेतरवारे रिक्तेतरतिथौ अश्विनीरोहिणीमृगशिरःपुष्योत्तरात्रयहस्ताचित्रास्वात्यनुराधामूलाश्रवणाधनिष्ठाशतभिषारेवतीषु प्रशस्तासु आर्द्रायां मध्यमायां वज्रव्याघातशूलव्यतीपातादिगण्डविष्कुम्भपरिघेतरत्र चन्द्रताराादिव्येषु शुभेषु वृषमिथुनसिंहकन्यातुलवृश्चिकधनुःकुम्भलग्नेषु गृहारम्भः कर्त्तव्यः श्रवणादिषट्के आरम्भानन्तरमेव बन्धनादिकं निषिद्धम्। 'नाहरेत्तृणकाष्ठादि न कुर्य्याद्दृढ़बन्धनम्' इति निषेधात् कृते तु अग्निचौरसर्पादिभयं भवेदिति। तत्र प्रयोगः यजमानः कृतस्नानादिकृत्यः ओम् तत्सदित्युच्चार्य्य ओम् अद्य अमुके मासि अमुके पक्षे

अमुकतिथौ अमुकगोत्रोऽमुकदेवशर्मा एतद्वास्तु सर्वदोषोपशम-नकामो वास्तुपूजनमहं करिष्ये इति सङ्कल्प्य वास्तुदक्षिण-भागे चतुरङ्गुलखातहस्तमात्रे गर्त्ते बहुतरतृणगोमयोपलिप्ते जलपूरिते। शालग्रामे जले वा नवग्रहान् गणेशादीन् प्रणवादिनमोऽन्तेन स्वस्वनाम्ना पूजयेत्। ओम् गणेशाय नमः इत्यादि इन्द्राय सूर्य्याय सोमाय मङ्गलाय बुधाय वृहस्पतये शुक्राय शनैश्चराय राहवे केतवे इन्द्रादिदशदिक्पालेभ्यः स्वस्वनाम्ना चेत्रपालेभ्यः भूतक्रूरग्रहेभ्यः क्रूरभूतेभ्यः ब्रह्मणे वास्तुपुरुषाय शिखिने ईशाय पर्य्यन्याय जयन्ताय सूर्य्याय सत्याय भृशाय आकाशाय अग्नये पूष्णे वितथाय ग्रहनक्षत्राय यमाय गन्धर्वाय मृगाय पितृभ्यः दौवारिकाय सुग्रीवाय पुष्पदन्ताय वरुणाय शेषाय पापाय रोगाय अहये मुख्याय विश्वकर्मणे भल्लाटाय श्रियै दित्यै पापाय सावित्राय सवित्रे विवस्वते इन्द्रात्मजाय मित्राय रुद्राय राजयक्ष्मणे पृथ्वीधराय ब्रह्मणे चरक्यै विदार्य्यै पूतनायै पापराक्षस्यै स्कन्दाय अर्य्यम्णे जम्भकाय पिलिपिच्छाय ओम् 'नमस्ते बहुरूपाय विष्णवे परमात्मने स्वाहा' इत्यनेन पूजयेत्। श्रियै वासुदेवाय पृथिव्यै पृथिव्यर्घ्यमन्त्रः ओम् 'हिरण्यगर्भे वसुधे शेषस्योपरिशायिनि। वसाम्यहं तव पृष्ठे गृहाणार्घ्यं धरित्रि मे'। ततो नत्वा प्रार्थयेत्। 'शुभे च शोभने देवि चतुरस्रे महीतले। सुभगे पुत्रदे देवि! गृहे काश्यपि रम्यताम्। अव्यङ्गे चाक्षते पूर्णे मुनेश्चादिरसः सुते। तुभ्यं कृते मया पूजा समृद्धिं गृहिणः कुरु। वसुन्धरे वरारोहे स्थानं मे दीयतां शुभे। त्वत्प्रसादान्महादेवि कार्य्यं मे सिध्यतां द्रुतम्'। ओम् 'अग्निभ्योऽप्यथ सर्पेभ्यो ये चान्ये तत्समाश्रिताः। तेभ्यो बलिं प्रयच्छामि पुण्यमोदनमुत्तमम्। भूतानि राक्षसा वापि येऽत्र तिष्ठन्ति

केच न। ते गृह्णन्तु बलिं सर्वे वास्तुगृह्णान्यहं पुनः'। इति मन्त्राभ्यां माषभक्तबलिं दद्यात्। ततः 'प्रणमिहयत्नवक्त्रभौ मन्त्रेणानेन भक्षितः। भूतानि यानीह वसन्ति तानि बलिं गृहीत्वा विधिनोपपादितम्। अन्यत्र वासं परिकल्पयन्तु क्षमन्तु तानीह नमोऽस्तु तेभ्यः'। ततस्तस्मिन् गर्त्ते दधि-दूर्वाक्षतपुष्पफलाम्रपल्लवमुखेनाम्बुपूर्णेन घटेन एषोऽर्घ्यं ओम् वास्तोष्पतये नमः इत्यर्घ्यं जानुभ्यां धरणीं गत्वा दद्यात्। ओम् 'शिल्पाचार्य्याय देवाय नमस्ते विश्वकर्मणे' स्वाहा इत्युच्चार्य्य ओम् विश्वकर्मणे नम इति पूजयेत्। ततः कर्मकारयितृब्राह्मणाय दक्षिणां दद्यात्। तत ओम् 'यान्तु देवगणाः सर्वे पूजामादाय याज्ञिकाः। इष्टकामप्रसिद्ध्यर्थं पुनरागमनाय च' ततः क्षमध्वमिति विसर्जयेत् ततस्तदर्घ्य-जलेन पूरितगर्त्ते प्रणवेन पुष्पं क्षिप्त्वा शुभाशुभं पश्येत् तत्र दक्षिणावर्त्ते शुभं वामावर्त्तेऽशुभम्। ततस्तत्र दधिदूर्वादिकं दत्त्वा मृत्तिकया गर्त्तं पूरयेत्। ततः सूत्रपाताय ईशानादि कोणचतुष्टयेषु प्रादक्षिण्याच्चतुरःकीलकान् आरोपयेत् ओम् 'विशन्तु ते तले नागाः लोकपालाश्च कामगाः। गृहे तस्मिंश्च तिष्ठन्तु आयुर्बलकराः सदा'। इति मन्त्रेण चतुष्कोणेषु दृढ़ं रोपयेत्। तत ईशानादिक्रमेण सूत्रेण विवेष्टयेत्। तत आग्नेय्यां गर्त्ते गन्धपुष्पाद्यलङ्कृतं स्तम्भं रोपयेत् तत्र मन्त्रः 'यथाचलो गिरिमेरुर्हिमवांश्च यथाचल शुभारम्भो गृहस्तम्भ-स्तथात्वमचलो भव' ततो बहुतर सच्छिद्रं कारयेत् धनुः-शराभ्यां काकादि वारयेत्।

तत्र प्रवेशविधिः। गृहस्यारम्भवत् प्रवेशेऽपि ज्येष्ठापुन-र्वसुयुक्तः स एव कालः तद्दिने प्रातःकृतस्नानादिकृत्यः शुचि-राचान्तो ब्राह्मणेभ्यः काञ्चनादिकं दत्त्वा ब्राह्मणान् दध्यव-

ताम्रदलपुष्पफलोपेतं जलकुम्भञ्चाग्रतः कृत्वा गोपुच्छं स्पृष्ट्वा चन्दनाद्यनुलिप्तः शिरसि मालां बध्वा यथाविधि वामपार्श्वे स्थितकुम्भाम् आचाराद्वान्यपूर्णसूर्पमस्तकां पत्नीं वामतः कृत्वा तया सह गृहं प्रविशेत् ततः स्वयमाचम्य शालग्रामे जले वा ओम् अद्येत्यादि नवगृहप्रवेशनिमित्तकवास्तुदोषोपशमनकामो वास्तुपूजनमहं करिष्ये इति सङ्कल्प्य गृहारम्भोदितदेवताः पूर्ववत् प्रणामपर्य्यन्तं पूजयित्वा कर्मकारयितृब्राह्मणाय दक्षिणां दद्यात्। ततोऽद्येत्यादिनवगृहप्रवेशनिमित्तकसगणाधिपगौर्य्यादिषोड़शमातृकापूजावसोर्धारासम्पातनायुष्यसूक्तजपाभ्युदयिकश्राद्धकर्माण्यहं करिष्यामीति सङ्कल्प्य यवपुञ्जेषु मातृकापूजादिवृद्धिश्राद्धान्तं कर्म कुर्य्यात् एतानि प्रवेशात् पूर्वमपि स्थानान्तरे कर्त्तव्यानि परे वा। ततः स्वगृह्योक्तविधिना शालाहोमः कार्य्यः।

अथ कृषिकर्म। तत्र हलप्रवाहविधिः। अश्विनीरोहिणीमृगशिरःपूनर्वसुपुष्यामघोत्तरत्रयहस्तास्वातीमूलश्रवणारेवतीनक्षत्राणि प्रशस्तानि विशाखानुराधाज्येष्ठाधनिष्ठाशतभिषानक्षत्राणि मध्यमानि भरणीकृत्तिकार्द्राश्लेषापूर्वात्रयचित्रानक्षत्राणि निषिद्धानि। रिक्ताषष्ठ्यष्टमीद्वादशीदशमीतरतिथयः प्रशस्ताः। मङ्गलशनिवारौ निषिद्धौ। शोभनचन्द्रताराकरणेषु वृषमिथुनकन्यामीनलग्नेषु तत्र तद्दिने कृतस्नानादिनित्यक्रियः आचान्त ओम् तत्सदित्युच्चार्य्य अमुकगोत्रोऽमुकदेवशर्मा शस्यसम्पत्तिकामः पञ्चरेखात्मकहलप्रवाहनमहं करिष्ये इति सङ्कल्प्य क्षेत्रे ऐशान्यां हस्तप्रमाणगर्त्तं कृत्वा जलेनापूर्य्य तत्र प्रजापतिं सूर्य्यादिनवग्रहान् पृथिवीञ्च पूजयेत् 'ओम् हिरण्यगर्भे वसुधे शेषस्योपरिशायिनि। वसाम्यहं तव पृष्ठे गृहाणार्घ्यं धरित्रि मे' इति

मन्त्रेण कौबेरार्घ्यं दत्त्वा ओम् कारादिनमोऽन्तेन श्रीविष्णवे। तत्र ओम् 'नमस्ते बहुरूपाय विष्णवे परमात्मने स्वाहा'। इत्यनेन त्रिःपूजयेत् रुद्राय काश्यपाय वसुभ्य इन्द्राय तदर्घ्यमस्तु 'शक्रः सुरपतिः श्रेष्ठो वज्रहस्तो महाबलः शतयज्ञाधिपो देवस्तुभ्यमिन्द्राय वै नमः'। इति नैवेद्यान्तं दत्त्वा ओम् 'विचित्रैरावतस्थाय भास्वत्कुलिशपाणये। पौलोम्यालिङ्गिताङ्गाय सहस्राक्षाय ते नमः'। इति त्रिःपूजयेत् प्रचेतसे पर्ज्जन्याय शेषाय चन्द्राय अर्काय वह्नये बलदेवाय हलाय भूमये वृषाय वायवे रामाय लक्ष्मणाय सीतायैः स्वर्गाय गगनाय इति द्वाविंशतिदेवताः पूजयेत्। क्षेत्रपालम् अग्निं प्रदक्षिणीकृत्य ब्राह्मणाय दक्षिणां दद्यात्। आम्रपल्लवौदनपायसदधीनि गर्त्ते निक्षिप्य मृत्तिकाभिः पूरयेत् ततो हृष्टौ वृषौ नवनीतैर्घृतेन वा। मुखपार्श्वन्तयोर्लिप्यात् हलवाहकान् गन्धादिना पूजयित्वा हलं मालाभिः पूजयित्वा दधिघृतमधुभिः फालं प्रलिप्य हेम्ना फालाग्रं घर्षयेत् बलीन्द्रपृथुरामेन्दुपराशरबलभद्रान् स्मरेत्। एका तिस्रः पञ्चरेखा वा हलेन कार्य्या अभग्नशृङ्गखुरलाङ्गूलाः कपिलाश्च वृषाश्च योज्याः। हलप्रवाहकाः प्रणताः कर्त्तव्याः हलानि दृढ़ानि कर्त्तव्यानि वृषयुग्मादिकं न शुभदम्। वृषाणां नर्द्दने चतुर्गुणं शस्यं मूत्रपुरीषोत्सर्गे च तथा। उभयत्रैव प्राङ्मुखो जलपूर्णकलसं गृहीत्वा 'ओम् त्वं वै वसुन्धरे सीते बहुपुष्पफलप्रदे। नमस्ते मे शुभं नित्यं कृषिमेधां शुभे कुरु। रोहन्तु सर्वशस्यानि काले देवः प्रवर्षतु। कर्षकास्तु भवन्त्वग्रा धान्येन च धनेन च'। स्वाहेति प्रार्थयेत्।

अथ बीजवपनम्। हलप्रवाहवद्बीजवपनस्यापि कालः। तत्र चित्रापि शुभदा रोपणे तु रोहिण्युत्तरफल्गुनी विशाखा

मूला पूर्वभाद्रपदनक्षत्राणि प्रशस्तानि वृषवृश्चिकसिंहकुम्भ-खजझलग्नमिथुनकन्यातुलाधनुः पूर्वार्द्धलग्नानि प्रशस्तानि। तत्र तद्दिने कृतस्नानादिः ओम् अद्येत्यादि अमुकगोत्रः श्री अमुकदेवशर्मा शस्यसम्पत्तिकामो मुष्टित्रयं बीजवपनमहं करिष्ये इति सङ्कल्प्य हलप्रवाहोक्तगर्त्तपूरणान्तं देवपूजादिकं विधाय प्राङ्मुखः सुवर्णजलसंयुक्तं वीजमुष्टित्रयं शक्रं ध्यायन् स्वयं प्राजापत्यतीर्थेन वपेत् ततो जलपूर्णकलसं गृहीत्वा त्वं वै वसुन्धरे सीते बहुपुष्पफलप्रदे। नमस्ते मे शुभं नित्यं कृषिमेधां शुभे कुरु। रोहन्तु सर्वशस्यानि काले देवः प्रवर्षतु। कर्षकाश्च भवन्त्वग्रा धान्येन च धनेन च'। स्वाहेति प्रार्थयेत्।

अथ धान्यच्छेदनम्। कार्त्तिकपौषेतरमासेषु पौषेऽपि शुभवारे पुष्यनक्षत्रे मङ्गलवारेतरेषु रिक्तेतरतिथिषु भरणीकृत्तिकामृगशिरोऽश्लेषामघोत्तरात्रयहस्ताचित्राज्येष्ठामूलापूर्वाषाढ़ाश्रवणाधनिष्ठापूर्वभाद्रपदरेवतीषु नक्षत्रेषु प्रशस्ततारयोगकरणेषु वृषमिथुनसिंहकन्यातुलावृश्चिकधनुःपूर्वार्द्धमकरकुम्भखजझलग्नेषु धान्यच्छेदनम्। तत्र तद्दिवसे कृतस्नानादिः ओम् अद्येत्यादि अमुकगोत्रः श्री अमुकदेवशर्मा शस्यसम्पत्तिकामः सार्द्धमुष्टिद्वयधान्यच्छेदनमहं करिष्ये इति सङ्कल्प्य हलप्रवाहोक्तदेवतापूजनं विधाय ईशानकोणस्थधान्यानां सार्द्धमुष्टिद्वयं छेदयेत्। शस्यवृद्ध्यर्थं क्षेत्रे वाहकान् भोजयेत्।

अथ धान्यस्थापनम्। भरणीकृत्तिकार्द्रामघाश्लेषापूर्वात्रयेतरनक्षत्रेषु मृगशिरःपुनर्वसुमघोत्तरात्रयेषु सोमबुधगुरुशुक्रवारेषु कुम्भमिथुनसिंहकन्यावृश्चिकधनुर्मकरमीनलग्नेषु प्रशस्तयोगताराचन्द्रकरणेषु धान्यस्थापनं तत्र धान्यगृहे 'ओम् धन-

दाय सर्वलोकहिताय च। देहि मे धान्यं स्वाहा' ओम्
ईशायै नमः 'ईशादेवि लोकविवर्द्धिनी कामरूपिणि देहि मे
धान्यम्' इति लेखयित्वा स्थापयेत्। धान्यगृहाद् बुधवारे
धान्यव्ययो न कर्त्तव्यः। आचारात् सोमवारेऽपि।

अथ अद्भुतशान्तिः। आथर्वणाद्भुतवचनं प्रकृतिविरुद्ध-
मद्भुतमापदः। प्राक् प्रबोधाय देवाः सृजन्ति' इति तेना-
पज्ज्ञानाय पूर्वं भूम्यादीनां स्वभावप्रच्यवो देवकर्तृकोऽद्भुत
इति रजस्वलाभिगमने गोऽश्वभार्य्याभ्यो यमजे जाते विजा-
तीयप्रसवे काककङ्कगृध्रश्येनवनकुक्कुटरक्तपादवनकपोतानां
गृहप्रवेशमनुष्योपरिपतने वा अन्येषु अद्भुतेषु वा श्वेतेन्द्रायुध-
रात्रीन्द्रायुध उल्कापातदिग्दाह-सूर्य्योपमण्डलचन्द्रोपमण्डल-
गन्धर्व-नगर-दर्शन-कृत्तिकाचित्रास्थ-वक्रीभूतमङ्गलापर्वोपराग-
भूकम्पधूमकेतु-रक्तशस्त्रमांसास्थिवसादिनखधान्य-हिरण्य-त्वक्
फलपुष्पाङ्गारपांशुरवनप्रदोषे पेचकवानरगृहपतने अकाल
फलपुष्पोद्गमादिषु सप्ताहाभ्यन्तराद्वृष्टिषु छन्दोगपरिशिष्टोय
शान्तिं कुर्य्यात्। तत्र कृतदेवार्चनाः त्वकृत्यः ओम् तत्सदित्य
स्याथं ओम् अद्येत्यादि अमुकाद्भुतसूचितदोषोपशमनकाम
कात्यायनोक्तशान्तिमहं करिष्ये इति सङ्कल्प्य स्वयं ब्राह्मण
द्वारा वा स्वगृह्योक्तविधिना वरदनामानमग्निं संस्था
घृतेनाद्भुतामग्नये स्वाहा ओम् सोमाय स्वाहा ओम् विष्ण
स्वाहा ओम् वायवे स्वाहा ओम् रुद्राय स्वाहा ओ
वसवे स्वाहा ओम् अमृत्यवे स्वाहा विश्वेभ्यो देवेभ्यः स्वा
पुनरपि पूर्ववत् घृतचरुभ्यां एताभ्यो जुहुयात्। ततो हो
शेषं समाप्य घृतपायसेन ब्राह्मणान् भोजयित्वा ब्राह्मण
गां दक्षिणां दद्यात्। एतत् प्रायश्चित्ताकरणे गृहप
मरणं सर्वस्वनाशो भवति सोमियाप्रवक्तव्योक्तसप्रणयगाय...

च विष्णुसूक्तेन वा अष्टोत्तरशतहोमान् नवग्रहानपि पूजयेत् ब्राह्मणाय काञ्चनं दद्यात्। एवं दुःस्वप्नाद्यनिष्टदर्शनेषु ब्राह्मणस्य घृतं काञ्चनञ्च दद्यात् ततो ब्राह्मणान् ज्ञातींश्च भोजयेदिति।

इति श्रीवन्द्यघटीय श्रीहरिहरभट्टाचार्य्यात्मज
श्रीरघुनन्दनभट्टाचार्य्यविरचितं कृत्यतत्त्वं
समाप्तम्।

---

## यजुर्वेदिश्राद्धतत्त्वम्।

प्रणम्य सच्चिदानन्दं कामदं नन्दनन्दनम्।
यजुर्विदां श्राद्धतत्त्वं वक्ति श्रीरघुनन्दनः॥
एकदाकाङ्क्षितं यद् यच्छन्दोगश्राद्धतत्त्वतः।
तज्ज्ञातव्यं यजुर्विद्भिस्तत्रानुक्तमिहोच्यते॥

अथ पार्वणश्राद्धप्रमाणम्। तत्र कात्यायनगृह्यम् 'अथापरपक्षे श्राद्धं कुर्व्वीतोर्द्ध्वं' वा चतुर्थ्या यदहः सम्पद्यते तदहर्ब्राह्मणामन्त्र्य पूर्वेद्युर्वा स्नातकान् यतीन् गृहस्थान् साधून् श्रोत्रियान् वृद्धान् अनवद्यान् स्वकर्मस्थान् तदभावेऽपि शिष्यान् सदाचरान् द्विर्नग्नशुक्लविक्लिन्नश्यावदन्तविद्धप्रजननव्याधिताधिकाङ्गहीनकुष्ठिकुनखिवर्जम्। अनिन्द्येनोपामन्त्रितो नातिक्रामेत्। आमन्त्रितो वा नान्यदन्नं प्रतिगृह्णीयात्। स्नातान् शुचीनाचान्तान् प्राङ्मुखानुपवेश्य युग्मान् पित्रे यथाशक्ति एकैकस्योदङ्मुखान् द्वौ दैवे त्रीणि पित्र्ये एकैकमुभयत्र वा मातामहानामप्येवं तन्त्रं वा वैश्वदेविकम्। अपवित्रं आसं



कुर्य्यात् शाकेनापि अपरपक्षं न अतिक्रामेत्। मासि मासि वोऽशनम्' इति श्रुतेः। 'तदहः शुचिरक्रोधनोऽत्वरोऽप्रमत्तः सत्यवादी स्यादध्वमैथुन एव स्वाध्यायान् वर्जयेत्। आवाहनादिवाग्यत आ-उपस्पर्शादामन्त्रितास्त्वेवमिति'। अपरपक्षे कृष्णपक्षे शुक्लप्रतिपदादिदर्शान्तमासस्य पक्षद्वयघटितस्य अपरपक्षत्वेन कृष्णपक्षस्यैव अपरपक्षत्वात् तथाच श्रुतिः 'पूर्वः पक्षो देवानामपरः पक्षः पितॄणाम्' इति। ऊर्द्ध्वं वा चतुर्थ्याः पञ्चम्यादिषु यदहः सम्पद्यते तदहरिति कालकर्म। यस्मिन्नहनि सम्पद्यते द्रव्यादिकमिति शेषः। तदहस्तस्मिन्नहनि ब्राह्मणानामन्त्र्य निमन्त्र्य पूर्वेद्युर्वा श्राद्धपूर्वदिने वा। स्नातकान् कृतसमावर्त्तनस्नातान् यतीन् चतुर्थाश्रमिणः साधून् नित्यनैमित्तिकाश्रमधर्मयुक्तान् श्रोत्रियान् श्रुताध्ययनसम्पन्नान् वृद्धान् वयोऽतिरिक्तान् अनवद्यान् उत्तमान् स्वकर्मस्थान् स्वाश्रमकर्मस्थान् निन्द्यानाह द्विलिङ्गेत्यादि द्विलिङ्गो दुश्चर्मा अप्रावृतमेढ्रः गुरुतल्पगमनपापशेषचिह्नयोगित्वाद्वर्ज्यः शुक्लोऽतिगौरः विक्लिन्नो नाभेरधो विचर्चिकादियुक्तः सखिस्त्रीगमनपापशेषयोगित्वाद्वर्ज्यः। श्यावदन्तकः स्वभावतः कृष्णदन्तः प्रधानदन्तद्वयमध्यगतक्षुद्रदन्त इति केचित् सुरापानजन्यपापशेषचिह्नयोगित्वाद्वर्ज्यः विद्धप्रजननः कर्त्तितशिश्नः। व्यङ्गो विकलेन्द्रियः कुनखो संकुचितनखः सुवर्णस्तेयपापचिह्नयोगित्वाद्वर्ज्यः। आमन्त्रितो निमन्त्रितः। नातिक्रामेत् न निमन्त्रणं परित्यजेत् अन्यदन्नम् अन्यश्राद्धीयमामान्नमपि न गृह्णीयात्। शुचीन् सूतकाशौचरहितान् वैश्वदेविकं विश्वदेवब्राह्मणोपवेशनादिकं कर्म तन्त्रं पितृपक्ष मातामहपक्षमुद्दिश्य सकृद्वा कर्त्तव्यं वो युष्माकं पितॄणामिति यावत्। अत्र 'पित्रे रात्र्यहनी मासः प्रतिभागस्तयोः पुनः। कर्म-

चेष्टास्वहःकृष्णः शुक्लः स्वप्नाय शर्वरी' इति विष्णुपुराणेन मनुष्यमासस्य पितॄणामहोरात्रत्वाभिधानात्। तत्रापि कृष्णपक्षस्य दिनत्वाभिधानात् श्राद्धकर्त्तृसम्बन्धिना प्रतिमासीय कृष्णपक्षश्राद्धीयेन पितृणामशनं विधातुमुचितमिति बीजं तदहरिति श्राद्धवासरे यजमानः शुचिः कृतस्नानाचमनादिकृत्यः क्रोधविहीनः त्वरारहितः शान्तः साधुचरितः सत्यवचनशीलश्च भवेत्। आवाहनादिति आवाहनप्रभृतिश्राद्धभोक्तृब्राह्मणाचमनपर्य्यन्तं वाग्यतो भवेत् आमन्त्रिता इति निमन्त्रिताः ब्राह्मणाश्च एवमेव नियमानुष्ठानं कुर्य्युः। कात्यायनगृह्यं 'देवपूर्वकं श्राद्धं कुर्वीत पिण्डपितृयज्ञवदुपचारः पित्र्ये द्विगुणांश्च दर्भान् पवित्रपाणिर्दद्यादासीनः प्रश्नेषु पङ्क्तिमूर्द्धन्यं पृच्छति सर्वान् वा आसनेषु दर्भानास्तीर्य्य विश्वान् देवानावाहयिष्ये' इति पृच्छति आवाहयेत्यनुज्ञातः। विश्वेदेवा स आगत इत्यनया ऋचा आवाह्य अवकीर्य्य विश्वेदेवाः शृणुतेमं हवम् इति जपित्वा पितृनावाहयिष्ये इति पृच्छति आवाहयेत्यनुज्ञातः उशन्तस्त्वे त्यनयावाह्यावकीर्य्य आयान्तु न इति जपित्वा यज्ञीयवृक्षचमसेषु पवित्रान्तर्हितेषु एकैकस्मिन्नप आसिञ्चति शन्नोदेवीति एकैकस्मिन्नेव तिलानावपति। 'तिलोऽसि सोमदैवत्यो गोसवो देवनिर्मितः। प्रत्नवमद्भिः पृक्तः स्वधया पितॄन् लोकान् प्रीणाहि नः स्वाहा' इति सौवर्णराजतौडुम्बरखड्गमणिमयपात्राणामन्यतमेषु यानि वा विद्यन्ते पत्रपुटेषु वा एकैकस्य एकैकेन ददाति। स पवित्रेषु हस्तेषु 'या दिव्या आपः पयसा सम्बभूवुर्या अन्तरीक्षा उत पार्थीवीर्य्या हिरण्यवर्णा यज्ञियास्तान आपः शिवाः संश्योनाः सुहवा भवन्तु' इत्यसावेष तेऽर्घ्य इति प्रथमे पात्रे संस्रवान् समवनीय पितृभ्यः स्थानमसीति न्युब्जं पात्रं करोति अत्र

गन्धपुष्पधूपदीपच्छादनानां सम्प्रदानमिति। एषामर्थः दैवपूर्वं यथा स्यात्तथा सर्वं कर्त्तव्यं पिण्डपितृयज्ञवदुपदेशेन पित्र्यकर्मणि अपराह्नकालप्राचीनावीतित्वदक्षिणामुखत्वा प्रादक्षिण्यलाभः। द्विगुणा एव दर्भाः प्रकृतत्वात् पित्र्य एव दैव पित्र्योर्यद्दीयते तत् पवित्रपाणिरुपविष्ट एव दद्यात् दर्भाः पवित्रमित्युक्तमिति छन्दोगपरिशिष्टात्। प्रश्ने प्राप्ते पंक्तिश्रेष्ठं पृच्छेत् आसनेषु कुशानास्तीर्य्य तेषु कुशब्राह्मणानुपवेशयेदिति शेषः। यवान् गृहीत्वा ओम् विश्वान् देवानावाहयिष्ये इति देवब्राह्मणं पृच्छति ब्राह्मणेनैवाह्वयेत्यनुज्ञातः सन् यजमानः विश्वेदेवा स आगत इत्यादिनिषीदतेत्यन्तेनावाह्य आवाहनेत्यनुज्ञातो विश्वेदेवास इत्यृचा। यवैरन्ववकीर्य्याथ भाजने सपवित्रके इति याज्ञवल्क्यवचनात् यवान् विकीर्य्य विश्वेदेवाः शृणुत इत्यादिमादयध्वमित्यन्तं जपेत्। ततः पितृनावाहयिष्ये इति पृच्छेत् आवाहयेत्यनुज्ञात उशन्तस्त्वेत्यादि अत्तवे इत्यन्तेनावाह्य उशन्तस्त्वेत्यादि जपन् पितृनावाहयेत्ततः 'ततस्तिलान् गृहीत्वास्मिन् विकिरेदप्रदक्षिणम्। अन्नया परया युक्तो जपन्नपहतेति च' इति ब्रह्मपुराणात् अपहतेत्यादि वेदिषद इत्यन्तेन तिलान् विकीर्य्य आयान्तु न इत्यादि अवन्त्वस्मानित्यन्तं जपेत्। एकैकस्मिन्निति वचनात् शन्नो देवीरित्यस्य तिलोऽसीत्यस्य च प्रेतार्घ्यपात्रेषु आवृत्तिः मन्त्रप्रकाश्यजलादेः प्रत्येकं प्रक्षेपश्च। ननु एकैकस्मिन्नित्यनुवर्त्तते तत् कथं पुनरेकैकस्मिन्नेवेत्यनेन सत्यं पितृनिति बहुवचनात् अनावृत्तेनैव मन्त्रेण सर्वपात्रेषु तिलप्रक्षेपः स्यादिति पुनरुच्यते अतएव अत्र एवकारः एकैकेनैवेति मन्त्रलिङ्गात् न तन्त्रेण एवञ्च एकैकस्मिन्नेव बहुवचनमदृष्टार्थम्। अत्र देवपक्षे यवोऽसीति यव-

विकरणम् 'आवाहयेदनुज्ञातो विश्वे देवा स इत्यृचा। यवै-रन्ववकीर्य्याथ भाजने सपवित्रके। शन्नो देव्या पयः क्षिप्त्वा यवोऽसीति यवांस्तथा'। इति याज्ञवल्क्येनावाहनेऽर्घ्यपात्रे च यवानां विहितत्वात् अत्र च यवयारातीरित्यन्त्यमन्त्रमात्रं यजुर्वेदिनां सामगानान्तु यवोऽसीति दिविन्त्वाऽन्तरीक्षायत्वा इति मन्त्राभ्यां यवप्रक्षेप इति रायमुकुटप्रभृतयः। उडुम्बरं ताम्रपात्रं खड्गो गण्डकस्तत्शृङ्गमयं पात्रं यानि वा कदली-त्वगादीनि। अत्र चक्रघटितपात्रस्य निषेधमाह छन्दोग-परिशिष्टम् 'आसुरेण तु पात्रेण यत्र दद्यात्तिलोदकम्। पितर-स्तत्र नाश्नन्ति दशवर्षाणि पञ्च च। कुलालचक्रघटितमसुरं मृण्मयं स्मृतम्। तदेव हस्तघटितं स्थाल्यादि दैविकं भवेत्'। एकैकस्य दैवस्य प्रत्येकं पित्रादेश्च एकैकब्राह्मणहस्तेन पवित्रे एकैकेन पात्रेण। असावित्यनेन सम्बोधनान्तनामोच्चारणं विधीयते। असाविति नाम गृह्णीयादिति कात्यायनसूत्रान्त-रात्। प्रथमे पात्रे पितृपात्रे संस्रवान् अर्घ्यपात्रावशिष्टजल-विन्दून् पितामहादिपञ्चपात्रस्थान् समवनीय पशुप्रोक्षणवत् क्रमेणानीय प्रपितामहपात्रेण पिधाय पितृभ्यः स्थानमसीति मन्त्रेण न्युब्जमधोमुखं कुर्य्यात् गन्धादीनां द्वन्द्वनिर्द्देशान्मिलि-तानामेव तन्त्रेण पित्रादिकमुद्दिश्य उत्सर्गः। कात्यायनगृह्यम् 'उद्धृत्य घृताक्तमन्नं पृच्छति अग्नौ करिष्ये इति कुरुष्वेत्यनु-ज्ञातः पिण्डपितृयज्ञवद्धुत्वा हुतावशेषं दत्त्वा पात्रमालभ्य जपति पृथिवी ते पात्रं द्यौः पिधानं ब्राह्मणस्य मुखे अमृते अमृतं जुहोमि स्वाहा इति वैष्णव्यर्चा यजुषा वा अङ्गुष्ठमन्ने-ऽवगाह्य अपहतेति तिलान् विकीर्य्य उष्णमन्नं दद्यात् शक्त्या वाश्नत्सु जपेत् व्याहृतिपूर्विकां गायत्रीं सप्रणवां सकृत् त्रिर्वा रक्षोघ्नीः पित्र्यमन्त्रान् पुरुषसूक्तम् अन्यानि च पवित्राणि

तृप्तिं ज्ञात्वा अन्नं प्रकीर्य्य सकृत् सकृदपो दत्त्वा पूर्ववद्गायत्रीं जपित्वा मधुमतीर्मधुमधुमध्विति च तृप्ताःस्थेति पृच्छति शेष-मन्नमनुज्ञाप्येति’। अस्यार्थः आशीयाचनात् पात्रान्तरे अन्न-मुद्धृत्य घृतेनाभ्यज्य अग्नौ करिष्ये इति मन्त्रेण पृच्छतीति कर्कः अतएव पितृदयिताकृत्यप्रदीपस्मृतिरत्नाकरश्राद्धदीपिकादिषु प्रणवादिमत्त्वेनोल्लेखः एवञ्च अस्य मन्त्रत्वेन शूद्रेणोल्लेखो न कर्त्तव्य इति प्रतीयते। ब्राह्मणैरेवोच्चरिते ओम् कुरुष्वेत्यनु-ज्ञातः पिण्डपितृयज्ञवदित्यनेन प्राचीनावीतित्वं दक्षिणा-मुखत्वम्। ओम् अग्नये कव्यवाहनाय स्वाहा ओम् सोमाय पितृमते स्वाहा इति मन्त्राभ्यां हवनञ्च प्रतीयते तथा पिण्ड-पितृयज्ञे शतपथश्रुतिः पतितवामजानुना सजघनेन गार्ह-पत्यं प्राचीनावीती भूत्वा दक्षिणामुख आसीन इत्युपक्रम्य द्वे आहुती जुहोति ओम् अग्नये कव्यवाहनाय स्वाहा ओम् सोमाय पितृमते स्वाहा इति एवमेव हरिहरहलायुधकर्क-वासुदेव-हरिशर्म-शूलपाणि-रायमुकुटाचार्य्य-चूड़ामण्यादयः। एवञ्च पितृभक्तौ सव्येनेति लिखनं प्रमाणशून्यं मेक्षणाभावे हस्तेन होमोऽतिदिश्यते। हुतशेषं दत्त्वा इति विशेषानव-गमात् दैवादिक्रमेण सर्वपात्रेषु दत्त्वा शेषं पिण्डार्थं स्थाप-यित्वा दैवादिक्रमेणानुत्तानोत्तानहस्ताभ्यां प्रत्येकं पात्रं धृत्वा पृथिवी ते पात्रमिति जपेत् अन्नादिकं परिवेश्य वैष्णव्या ऋचा इदं विष्णुरित्यादिना यजुषा विष्णो कव्यमिदं रक्षस्व इत्यनेन वाऽङ्गुष्ठं निवेशयेत्। तूष्णीं दैवे यवान् अपहतेति पितृपक्षे तिलान् विकिरेत्। शक्त्या वेति अन्नाद्यभावेऽप्रति-षिद्धं शाकादिकमपि। अतएव शाकेनापि अपरपक्षं नाति-क्रामेदित्युक्तम्। अश्नत्सु भुञ्जानेषु रक्षोघ्नीर्ऋचः यज्ञेश्वर इत्यादि पित्र्यमन्त्रान् पितृप्रकाशकान्। पुरुषसूक्तं सहस्र-

शीर्षेत्यादि प्रसिद्धम्। पवित्राणि याज्ञवल्क्याश्लोकत्रयाणि। तृप्तिं ब्राह्मणानाम् अन्न' प्रकीर्य्य अग्निदग्धेत्यादि तद्दर्शित-त्ताभ्यां मत्स्यपुराणोक्ताभ्यां मन्त्राभ्यामिति शेषः सकृत् सकृ-दपोदत्त्वेति प्रत्यापोशानजलदानम्। अतएव पुरस्तादापो-शानार्थं जलदानं विशिष्य नोक्तं पुरस्तात् पुरत इति विः सकृद्वा मधुमतीर्मधुवातेति तृचं मधुमधुमध्विति च जपेत् मध्वित्येतत्त्रिकं जपेदित्यन्यत्र दर्शनात्। प्रत्युत्तराभावाद्दर्भ-ब्राह्मणपक्षे तृप्तिप्रश्नप्रत्युत्तरयोर्बाधः। शेषमन्नं क्व देयमित्यनु-ज्ञाप्य इष्टेभ्यो दीयतामिति प्रतिवचनं गृह्णीयात् तथाच पद्मपुराणं 'स तानाह पुनः शेषं क्व देयञ्चान्नमित्यपि। इष्टेभ्यो दीयतामेतदिति संप्रवदन्ति ते'। कात्यायनगृह्यं 'सकल-मन्नमेकत्रोद्धृत्य उच्छिष्टसन्निधौ दर्भेषु त्रीं स्त्रीन् पिण्डान् दद्यादवने निज्येति। आचान्तेषु इत्येके। आचान्तेषु उदकं पुष्पाणि च अक्षतानक्षय्योदकञ्च दद्यात् अघोराः पितरः सन्तु सन्त्वित्युक्ते गोत्रं नो वर्द्धतां वर्द्धतामित्युक्ते दातारो नोऽभि-वर्द्धन्तां वेदाः सन्ततिरेव च। श्रद्धा च नो माव्यगमत् बहुदेयञ्च नोऽस्त्विति इत्याशिषः प्रतिगृह्य स्वधावाचनीयान् सपवित्रान् दर्भानास्तीर्य्य स्वधां वाचयिष्ये इति पृच्छति वाच्यतामित्यनुज्ञातः पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यः मातामहेभ्यः प्रमातामहेभ्यः वृद्धप्रमातामहेभ्यश्च स्वधोच्यता-मिति। अस्तु स्वधेति उच्यमाने स्वधावाचनीयेषु अपो निषिञ्चति उत्तानं पात्रं कृत्वा यथाशक्ति दक्षिणां दद्यात् विश्वे देवाः प्रीयन्तामिति दैवे वाचयित्वा वाजे वाज इत्य-नया विसृज्य आमावाजस्येत्यनुव्रज्य प्रदक्षिणीकृत्य प्रविशे-दिति'। अस्यार्थः सर्वं हुतशेषं आत्मीयामव्यञ्जनादिकं एकस्मिन् पात्रे उद्धृत्य पिण्डपितृयज्ञवदुपचीर इति प्रागुक्तेन

उच्छिष्टसन्निधौ पिण्डान् दद्यात् पिण्डपितृयज्ञवदिति याज्ञ-
वल्कीयेन च तत्रोल्लापहतेत्यादिना रेखादिकं कुर्य्यात् तथाच
पिण्डपितृयज्ञाधिकारे कात्यायनसूत्रं 'दक्षिणेनोल्लिखति अप-
हतेति अपरेणोल्मुकं पुरस्तात् करोति ये रूपाणीत्युदकपात्रे-
णावनेजयेदसावेतस्व इति अपसव्यं सव्ये नवोद्धरणसामर्थ्या-
दसाववनेनिक्ष्वेति यजमानस्य पितृप्रभृतीनुपमूलं सकृदा-
च्छिन्नं रेखायां यथाऽवनिक्त पिण्डान् दद्यात् असावेतत्त इति।
अत्र पितर इत्युक्तोदङ्ङ्ख आगमनादावृत्य अमीमदन्त इति
जपति अवनेनिज्य पूर्ववत् नीवीं विस्रंस्य नमोव इत्यञ्जलिं
करोति एतद्द इत्युपास्यति सूत्राणि प्रतिपिण्डमूर्णामप्यस्ब
उत्तरे वयसि यजमान रोमाणि ऊर्जमित्यपो निषिञ्चति। अव-
घ्राय जिघ्रति यजमानः उल्मुकं सकृदाच्छिन्नान्यग्नाविति।
अस्यार्थः। दक्षिणहस्तेन उल्लिखति कुशेनेति शेषः तथाच
देवलः 'मण्डलं चतुरस्रञ्च दक्षिणाप्लवनं हरेत्। एकदर्भेण
तन्मध्ये उल्लिख्याभ्युक्ष्य तं त्यजेत्'। उल्मुकस्तत्राङ्गारः स च
दक्षिणाग्नेरेव प्रकृतत्वात्। निरग्नेस्तदसम्भवात् अननुष्ठान
मिति पशुपतिः। न च तत्प्रतिनिधिर्लौकिकाऽग्निरस्तु इति
वाच्यं न पितृयज्ञीयो होमो लौकिकाग्नौ विधीयते। न दैव
ताग्निशब्दक्रियाणां परार्थत्वात्। इति कात्यायनवचनात् अग्ने
प्रतिनिधिनिषेधात् अग्नौकरणे तु। 'अग्न्यभावे तु विप्रस्
पाणावथ जलेऽपि वा'। इति विशेषवचनादेव प्रतिनिधि
लाभः। अत्र दर्भेषु अवनेजनदानविधानाभावात् पिण्डपितृ
यज्ञवद्रेखायामवनेजनदानम्। अत्र पिण्डानिति पुंलिङ्ग
निर्देशेऽपि पिण्डपितृयज्ञीयपिण्डदानाभिलापे पिण्डविशेष
एतदिति नपुंसकनिर्देशात्। यजुर्वेदीयाभिलापे पिण
शब्दस्य नपुंसकेन निर्देशोऽपि प्रतीयते पिण्डशब्दस्या

मपुंसकत्वमन्यत्र दृष्टम्। 'यथाभाषेतैतच्च वै पिण्डं यच्च-दत्तस्य पूरकम्' इति। तथाच षष्ठीशेष इति पाणिनिसूत्रे जयादित्यवृत्तौ कुम्भस्य पिण्डं पततीति लिखितं पिण्डदानानन्तरं वायुपुराणम्। 'ततो दर्भेषु विधिवत् संमार्ज्य च करं ततः। प्रक्षाल्य च जलेनाथ त्रिराचम्य हरिं स्मरेत्। तेभ्यः संस्रवपात्रेभ्यो जलेनैवावनेजनम्। दत्त्वात्र पितरश्चेति पठेन्नोदङ्मुखस्थितः। चिन्तयंश्च पितॄंस्तुष्टान् सर्वान् भास्वरमूर्त्तिकान्। अमीमदन्त पितरस्त्विति पश्यन् धिया पठेत्। नीवीं विस्रंस्य च जपेत् नमो वः पितरस्त्विति'। इदञ्च करप्रोञ्छनं लेपभुजः प्रपितामहपितॄनुद्दिश्य इत्याह मनुः। 'न्युप्यपिण्डांस्ततस्तांस्तु प्रयतो विधिपूर्वकम्। तेषु दर्भेषु तं हस्तं निर्मृज्याल्लेपभागिनाम्। तेभ्यः पूर्वदत्तावनेजनदानावशिष्टजलयुक्तपात्रेभ्यः अत्रावनेजनदानानन्तरमेवामीमदन्त इति पाठः शाख्यन्तरीयः यजुर्वेदी तु अत्र पितर इति पठित्वा वामावर्त्तेनोदङ्मुखीभूयागमनात् ग्लानिपर्य्यन्तं श्वासं विधृत्य तेनैव यथा प्रत्यावृत्यामीमदन्त इति जपित्वा पूर्वावनेजनदानावशिष्टजलेन पिण्डोपरि नामग्रहणपूर्वकं प्रत्यवनेनिक्ष्वस्वधेति प्रत्यवनेजनं दद्यात्। तथाच पारस्करः प्रेताय पिण्डं दत्त्वा अवनेजनदानप्रत्यवनेजनदानेषु नाम ग्राह्यमिति। अत्र प्रत्यवनेजनेति श्रुतेः व्यक्तमाह मत्स्यपुराणं 'तेषु दर्भेषु तं हस्तं निमृज्याल्लेपभागिनाम्। तथैव च बुधः कुर्य्यात् पुनः प्रत्यवनेजनम्। सामगस्तु द्वितीयेऽपि अवनेनिक्ष्वेति ब्रूयात्। तत्पात्रक्षालनेनाथ पुनरप्यवनेजयेत्' इति छन्दोगपरिशिष्टात्। नीवीं विस्रंस्य परिहितवस्त्रस्य वामाङ्गग्रन्थिं मोचयित्वा आचमनमाह बौधायनः नीवीं विस्रंस्य परिधाय उपस्पृशेत् इति परिधाय परिधानवस्त्रग्रन्थिमोचनपूर्वकं पुनः परिधाय

च्छामीदित्यर्थः। ततो नमो व इति षडञ्जलिकरणम् ओम् नमो वः पितरः शुषाय ओम् नमो वः पितरस्तपसे। ओम् नमो वः पितरो यज्जीवं तस्मै ओम् नमो वः पितरो रसाय ओम् नमो वः पितरो घोराय मन्यवे ओम् स्वधायै वः पितरो नमो व इति काण्वशाखिनां पाठः। अस्यार्थः हे पितरो वो युष्मभ्यं नमः शुषाय शोषकारिणे शोषायेत्यर्थः हे पितरो वो युष्मभ्यं नमः तपसे तप इति माघमासस्य नाम तेन माघ-फाल्गुनात्मकशिशिर ऋतोरेकदेशोद्भावनेन तस्यैव नमस्कारः कृतः हे पितरो यज्जीवं जलं युष्मभ्यं तस्मै वर्षा ऋतवे नमः हे पितरो युष्मभ्यं नमः रसाय पुष्परसाय अनेन वसन्तस्य नमस्कारः कृतः हे पितरो युष्मभ्यं नमः घोराय मन्यवे शीत-त्वात् हेमन्ताय प्राणिनां भयहेतुत्वेन घोराय मन्यवे क्रुद्धाय यथा क्रूरः कश्चित् दुःखं जनयति तथायमपि शीतो दुःखं जनयतीत्यर्थः। हे पितरो युष्मभ्यं नमः स्वधायै शरदे। यथा श्रुतिः स्वधाशरत्स्वधायै पितृणामन्नमिति ब्राह्मणसर्वस्वे हलायुधः। एवञ्च शुषायेत्यादिना ऋतुनमस्कारे सिद्धे यजु-र्वेदिनां न वसन्तायेति पाठः प्रतीयते एककार्य्यकारित्वात् अतएव मैथिलपद्धतिरपि तथैव एवं ग्रीष्मशिशिरवर्षावसन्त-हेमन्तशरद्रूपतया पितॄन्नमस्कृत्य एतद्वः पितरो वास इत्यनेन शुक्लवस्त्रदशाभवं सूत्रं दद्यात्। माध्यन्दिनशाखिनान्तु ओम् नमो वः पितरो रसाय ओम् नमो वः पितरः शोषाय ओम् नमो वः पितरो जीवाय ओम् नमो वः पितरः स्वधायै ओम् नमो वः पितरो घोराय ओम् नमो वः पितरो मन्यवे इति वसन्ताय षड्ऋतुरूपतया पितॄन्नमस्कृत्य ओम् नमो व पितर इति कव्यवाहनादिरूपतया पितॄन्नमस्कृत्य ओम् नमो वो गृहान्नः पितरो दत्त इति पितॄन् वरं प्रार्थयेत् ओ

सदो वः पितरो देष्म इति कृताञ्जलिः पठेत् ओम् एतद्वः पितरो वास इति पठित्वा वासःसूत्रं दद्यात् तत्र पिण्डपितृयज्ञे वासो दानानन्तरं यदूर्जं वहन्तीरित्यनेन सेचनमुक्तं तत् पिण्डपितृयज्ञ एव श्राद्धपिण्डे तु स्वधावाचनीयेषु अपो निषिञ्चतीति श्राद्धसूत्रेऽभिधानात् स्वधावाचनानन्तरमेव ऊर्जं वहन्तीरित्यनेन सेकः अतएव 'अथातो गोभिलोक्तानामन्येषाञ्चैव कर्मणाम्। असृष्टानां विधिं सम्यग् दर्शयिष्ये प्रदीपवत्' इत्यनेन प्रतिज्ञाय 'प्रार्थनासु प्रतिप्रोक्ते सर्वास्वेव द्विजोत्तमैः। पवित्रान्तर्हितान् पिण्डान् सिञ्चेदुत्तानपात्रकृत्' इत्यनेन एतदपि छन्दोगपरिशिष्टेन व्यक्तीकृतम् एवं श्राद्धचन्द्रिकायां गुरुचरणाः। अवधाय नम्रीभूय जिघ्रति पिण्डानिति शेषः पिण्डपितृयज्ञोक्तोल्मुकनिक्षेपः साग्निकर्त्तव्य एव आहिताग्नौ निक्षिप्यत्वात् आचान्तेषु इत्येक इति एके अन्ये मन्यन्त इति शेषः आचान्तेषु इति। आचान्तेषु ब्राह्मणेषु दैवे पश्चादाचमनं विश्वे देवोपविष्टानां चरमं हस्तधावनं विसर्जनन्तु निर्दिष्टं तेषु रक्षा यतः स्मृताः' इति वचनात् पितृब्राह्मणादिदैवब्राह्मणान्तं कारयेत्। तच्च पितृपूजानन्तरं 'गन्धादीन्निक्षिपेत्तूष्णीं तत आचमयेद्द्विजान्' इति छन्दोगपरिशिष्टात्। उदकं शिवा आपः सन्त्वित्यनेन पुष्पाणि सौमनस्यमस्त्वित्यनेन अक्षतान् अक्षतञ्चारिष्टञ्चास्त्वित्यनेन ब्राह्मणेभ्यो दद्यात् तदुक्तं छन्दोगपरिशिष्टे 'शिवा आपः सन्त्विति च युग्मानेवोदकेन तु सौमनस्यमस्त्विति च पुष्पदानमनन्तरम्। अक्षतञ्चारिष्टञ्चास्त्वित्यक्षतान् प्रतिपादयेत्। अक्षय्योदकदानञ्च अर्घ्यदानवदिष्यते। षष्ठ्यैव नित्यं तत् कुर्यात् न चतुर्थ्या कदाचन' इति एतज्जलादिदानं दैवे प्राक् कर्त्तव्यम्। 'यत्र यत् क्रियते कर्म पैतृके ब्राह्मणान् प्रति।

तत् सर्वं तत्र कर्त्तव्यं वैश्वदेवत्वपूर्वकम् इति देवलवचने श्राद्धप्रसम्बन्धिप्राप्तकर्मणां देवपूर्वकत्वाभिधानात् अतएव सेतिकर्त्तव्यताकपिण्डदाने दैवे निवर्त्तते। अक्षय्योदकदानन्तु पित्र्य एव अक्षय्योदकं दद्यात् पितृकब्राह्मणेभ्य इति संवत्सरप्रदीपधृतविष्णुसूत्रात्। 'अक्षय्यं वाचयेत् पित्र्ये चरमं सतिलोदकम्। इति पशुपतिधृतदेवलवचनात्। अघोरा इत्यादिना आशीः प्रार्थनन्तु दक्षिणामुखकर्त्तव्यत्वात् पितृतः प्रार्थनीयत्वाच्च न दैवे। तदुक्तं मनुना 'दक्षिणान्दिशमाकाङ्क्षन् याचेतेमान् वरान् पितॄन्' इति। आकाङ्क्षन् पश्यन्निति तट्टीकाकृतः। प्राङ्मुखेन वरप्रार्थनन्तु शाख्यन्तरीयं गृह्ये दातार इत्येक एव मन्त्रः कर्कहरिसम्मतः अपिपालेनापि तथा प्रयोगो लिखितः श्रीदत्तादिभिस्तु मत्स्यपुराणदर्शनात् दातार इत्यादिमा च याचिष्म कञ्चन इत्यन्तमन्त्रद्वयम्। एताः सत्याशिषः सन्त्विति च लिखितम्। तथाच मत्स्यपुराणम् 'अघोराः पितरः सन्तु सन्त्वित्युक्तः स तैः पुनः। गोत्रं तथा वर्द्धतां नस्तथेत्युक्तः स तैः पुनः। दातारो नोऽभिवर्द्धन्तामन्नञ्चैवेत्युदीरयेत्। एताः सत्या आशिषः सन्तु सन्त्वित्युक्ते च तैर्द्विजैः'। इति गृह्योक्तमन्त्राधिकं लिखितम् इति फलार्थितया तथैव व्यवह्रियते स्वधावाचनीयान् स्वधावाचनीयार्थमास्तरणीयान् वृद्धप्रमातामहेभ्यश्चेति चत्वारः प्रत्येकार्थः। तेन पितृभ्यः स्वधोच्यतामित्यादि। तथाच छन्दोगपरिशिष्टम् 'अर्घेऽक्षय्योदके चैव पिण्डदानावनेजने। तन्त्रस्य विनिवृत्तिः स्यात् स्वधावाचन एव च' इति अस्तु स्वधेति सकृदेव प्रतिवचनं स्वधावाचनीयेषु पिण्डोपरि आस्तृतदर्भेषु अपो निषिञ्चति वासो दानानन्तरं पिण्डपितृयज्ञे यज्जलसेचनमुक्तं तदेव श्राद्धे स्वधावाचनानन्तरं विदधाति लाघवात् तत्स्नानमिति व्युत्क्रमतमर्घ्यपात्रमुत्तानं कृत्वा

ब्राह्मणाय दक्षिणां दद्यात्। विश्वे देवाः प्रीयन्तामिति दैवे ब्राह्मणान् पृच्छेत् ते च प्रीयन्तामिति ब्रूयुः। विसृज्य आदौ पितॄन् पश्चाद्देवानिति शेषः अनुव्रज्य ब्राह्मणानिति शेषः। प्रविशेद् गृहमिति शेषः।

अथ एकोद्दिष्टम्। तत्र कात्यायनगृह्यम्। 'अथ एकोद्दिष्टम् एकोऽर्घ्यः एकं पवित्रम् एकः पिण्डो नावाहनं नाग्नौ करणं नात्र विश्वे देवाः स्वदितमिति तृप्तिप्रश्ने सुस्वदितमिति अनुज्ञानम् उपतिष्ठतामिति अक्षय्यस्थाने अभिरम्यतामिति विसर्गः अभिरताः स्म इत्यपरे इति'। अस्यार्थः अथेति आनन्तर्य्यवचनं विशेषेतरत्र पार्वणविधेरनुकर्षणार्थम् एकोद्दिष्टमिति वक्ष्यमाणेतिकर्त्तव्यताकमेकं प्रेतमुद्दिश्य यत् क्रियते श्राद्धं तदेकोद्दिष्टम् एकम् एकदलरूपं पवित्रम् अतएव सायनाचार्य्येण पवित्रासि वैष्णवीति विकल्प्य छेदनमन्त्रो लिखितः। नावाहनमिति अत्र कात्यायनेन आवाहने तिलविकरणानन्तरं जप्यत्वेनाभिधानात् आयान्तु नः इत्यस्य एकोद्दिष्टे वाजसनेयिनां निवृत्तिर्नास्ति गोभिलेन आवाहने एवायं मन्त्रः कथित इति छन्दोगानामेकोद्दिष्टे निवर्त्तते इति श्रीदत्तः। तन्न गोभिलेन तादृशपाठादर्शनात् किन्तु आवाह्य आयान्तु न इति कात्यायनेन तुल्य एव गोभिलेऽपि सर्वत्र पाठो दृश्यते। ततश्च छन्दोगानामिव आवाहननिषेधे जप्यस्यायान्तु इत्यस्यावाहनप्रकाशकस्यापि वाजसनेयिनां बाधः। तृप्ताःस्थ इत्यत्र स्वदितमिति तृप्तिप्रश्नः अनुज्ञानं प्रत्युत्तरम्। अक्षय्यमस्त्वित्यत्र उपतिष्ठतामिति वदेत् वाजे वाजे इति मन्त्रस्थाने अभिरम्यतामिति विसर्जनम् आश्वलायनगृह्यपरिशिष्टं प्रेतश्राद्धेषु सर्व्वेषु न स्वधा नाभिरम्यताम्। स्वस्त्यस्तु विसृजेदेवं सकृत् प्रणववर्जितमिति। एकोद्दिष्टे प्रणववर्ज्जितं स्वस्तीत्यनेन

यद्विसर्जनमुक्तं तत् प्रेतश्राद्धविषयकमिति श्रीदत्तवाचस्पति-मिश्रप्रभृतयः। तत्र बह्वृचानामेव पार्वणे अभिरम्यतामिति विसर्जनस्य प्राप्तत्वात् सर्वशाखिनिषेधानुपपत्तेः अभिरम्यता-मिति विसर्जनमभिधाय एतत् प्रेतश्राद्धमिति गोभिलेनाभि-धानाच्च अपरे ब्राह्मणा अभिरताः स्म इति प्रत्युत्तरं ब्रूयुः।

अथ सपिण्डीकरणम्। तत्र कात्यायनग्रन्थः 'ततः संवत्-सरे पूर्णे चत्वारि पात्राणि सतिलगन्धोदकानि त्रीणि पितॄ-णामेकं प्रेतस्य प्रेतपात्रं पितृपात्रेषु आसिञ्चति'। ये समाना इति द्वाभ्याम् एतेनैव पिण्डो व्याख्यातः। ततो द्वादशमासिके-कोद्दिष्टानन्तरं पूर्णे संवत्सरे प्रथमसंवत्सरान्तमृततिथौ चत्वारि इति मातामहपक्षव्युदासार्थं प्रेतपात्रं प्रेतपात्रस्थजलं पितृ-पात्रेषु पितृपात्रस्थजलेषु। द्वाभ्यां मन्त्राभ्याम् एतेनार्घ्यजल-समन्वयप्रकारेण पिण्डः पिण्डसमन्वयो व्याख्यातः कथितः कात्यायनभाष्यकर्कोलाम्बरधृता काठकीयश्रुतिः। 'दत्त्वा पिण्डान् पितृभ्यः पश्चात् प्रेतस्य पार्श्वतः। तच्च पिण्डं त्रिधा कृत्वा आनुपूर्व्या च सन्ततम्। विदध्यात्त्रिषु पिण्डेषु एवं संसर्जने विधिः' संसर्जने मिश्रणे अत्र त्रीणि पितॄणामेकं प्रेतस्य इति कात्यायनग्रन्थे पाठक्रमात्। 'श्राद्धद्वयमुपक्रम्य विदधीत सपिण्डताम्। तयोः पार्वणवत् पूर्वमेकोद्दिष्टमथापरम्' इति परिशिष्टप्रकाशधृतवचने पार्वणैकोद्दिष्टयोः पौर्वापर्य्यस्य शाब्द-क्रमाच्च देवपक्षकृत्यं ततः पितृपक्षकृत्यं ततः प्रेतपक्षकृत्यमिति 'प्रेतविप्रस्य हस्ते तु चतुर्भागं जलं क्षिपेत्। ततः पितामहा-दिभ्यस्तत्रान्येषु पृथक् पृथक्' इति ब्रह्मपुराणे उत्सृष्टार्घ्य-जलसमन्वये शाब्दक्रमानुरोधेन प्रेतादित्वस्य च विशेषतो विधानात् सामगवाजसनेयिनोरपि अर्घ्यजलोत्सर्ग एव प्रेता-दित्वम्। यत्तु असपिण्डीकरणं संवत्सरम् एकं पिण्डमनुदिश्य

संवत्सरान्ते चत्वार्य्युदकपात्राणि प्रयुनक्ति तत्रैकं प्रेतस्य त्रीणीतरेभ्य इत्याश्वलायनगृह्ये सपिण्डने प्रेतादित्वं तद्बहृचमात्रपरम्। एवमन्यानि वचनानि यथायोग्यं व्याख्येयानि एतेन आश्वलायनगृह्यदर्शनाच्छन्दोगयजुर्वेदिनोरपि सपिण्डने आदौ दैवकृत्यं ततः प्रेतकृत्यं ततः पितृकृत्यमिति मैथिलोक्तं हेयं दैवकृत्यपितृकृत्ययोर्मध्ये प्रेतकृत्येन व्यवधानस्यायुक्तत्वात्। यच्चात्र न दैवं योजयेत्। प्रागेव दैवे अर्घ्यं गन्धादिकञ्च दत्त्वा गन्धमाल्यैः पात्रमर्चयित्वा हुतशेषं पितृभ्यः पात्रेषु दद्यात् इति पितृपदार्थे दैवं न मिश्रयेदिति कल्पतरुव्याख्याने मैथिलानां तथाचरणं सर्वशाखिनामुक्तं तदपि न युक्तम् आश्वलायनेन काण्डानुसमयस्योक्तत्वात् बहृचानामिव तथायुक्तत्वात् सामगयजुर्वेदिनोस्तु विशेषाभिधानात् सर्वत्रैव पार्वणवदेव पदार्थानुसमयः। अत्र सामगयजुर्वेदिनोः श्राद्धसूत्रे समन्वयमात्रे मन्त्रदर्शनात् तत्रैव मन्त्रान्वयः पितृदयितादावुक्तः। किन्तु सूत्रानुक्तोऽपि देवताभ्य इति पाठवद्विभागेऽपि मन्त्रान्वयो युक्तः पौराणिकत्वात् अतएव मैथिलैरपि तथा लिखितम्।

अथ सांवत्सरिकश्राद्धम्। तत्र कात्यायनगृह्यम्। 'अत ऊर्द्ध्वं संवत्सरे संवत्सरे प्रेतायान्नं दद्याद् यस्मिन्नहनि प्रेतः स्यादिति'। अत ऊर्द्ध्वं पूर्णसंवत्सरादुपरि संवत्सरे संवत्सरे द्वितीयवत्सरादौ प्रतिसंवत्सरमन्नं दद्यात् श्राद्धं कुर्य्यात्। कुत्रेत्यपेक्षायामाह यस्मिन्निति यन्मासीय यत्पक्षीयतिथौ मृतः स्यात्। उत्तरवाक्यस्य यच्छब्दात्तच्छब्दानपेक्षेति न्यायात्तस्मिन्निति नोक्तम्। तेन मृततिथिसजातीयतिथौ प्रतिसंवत्सरं कुर्य्यादित्यर्थः।

अथाभ्युदयिकश्राद्धम्। तत्र कात्यायनगृह्यम् 'आभ्युदयिकश्राद्धे प्रदक्षिणमुपचारः पित्र्यमन्त्रवर्जं जपः ऋजवो दर्भाः

यथेस्तिलार्थः सम्पन्नमिति वमि प्रश्नः सुसम्पन्नमित्यनुज्ञानं दधिबदराक्षतमिश्राः पिण्डाः नान्दीमुखान् पितॄन् आवाह-यिष्ये इति पृच्छति नान्दीमुखाः पितरः प्रीयन्तामिति अक्ष-य्यस्थाने नान्दीमुखान् पितॄन् वाचयिष्ये इति पृच्छति। नान्दीमुखाः पितरः पितामहाः प्रपितामहाः मातामहाः प्रमातामहाः वृद्धप्रमातामहाः प्रीयन्तां न स्वधाञ्च प्रयुञ्जी-तेति'। अस्यार्थः। पुत्त्रजन्मादावभ्युदये यत् श्राद्धं तदा-भ्युदयिकमुच्यते प्रदक्षिणं देवपितृकर्मकरणाय दक्षिणावर्त्तेन गन्तव्यं न वामावर्त्तेन एतेन दक्षिणत आरभ्य आसनादि-सम्प्रदानं मैथिलाधिपालरायमुकुटाद्युक्तं युक्तम्। अत्राभ्यु-दयिके युग्माः ब्राह्मणाः समूला दर्भाः प्राङ्मुखेभ्य उदङ्मुखो दद्यात् इति आश्वलायनवचनान्मात्रादि ब्राह्मणानां प्राङ्मुख-त्वमिति पार्वणाद्विशेषः ततश्च पश्चिमदिशि नैर्ऋतकोणे देवानां तदुत्तरे मातॄणां तदुत्तरे पितॄणां तदुत्तरे मातामहा-नाम् आसनानि प्रागग्रदर्भद्वययुक्तानि परिकल्प्य दक्षिणाव-र्त्तेन कर्म कुर्य्यात् एवमेवाधिपालमैथिलरायमुकुटप्रभृति-पद्धतिषु न च अन्वष्टकायां देवब्राह्मण दक्षिणतो मात्रादि ब्राह्मणानामुपवेशनस्य दृष्टत्वात् अत्रापि तदनुसारेण वायु-कोणे देवब्राह्मणानुपकल्प्य प्रादक्षिण्येन गत्वा निर्ऋतिकोणा-दारभ्य मात्रादिब्राह्मणोपवेशनं युक्तमिति वाच्यम् अन्वष्टकायां वामाचारानुरोधात् न देवब्राह्मणस्य दक्षिणपार्श्वे मात्रादि-ब्राह्मणोपवेशनम् अत्र च दक्षिणोपचारेण तदितरकल्पनस्या-दोषात् अन्वष्टकायां देवब्राह्मणसन्निधानक्रमेण मातृपितृमा-तामहब्राह्मणानामुपवेशनस्य दृष्टत्वादत्रापि तथैव युक्तत्वाच्च अत्र आवाहनप्रश्नादौ पितृपदस्य प्राप्तपितृलोकोपाधिपरत्वात् मातामहपक्षवन्मातृपक्षेऽपि न पृथगाचरणं किन्तु सकृद्देवा-

चरणम् एवञ्च 'दध्यक्षतैः सवदरैः प्राङ्मुखोदङ्मुखोऽपि वा। दैवतीर्थेन वै पिण्डं दद्यात् कायेन वा नृप' इति। विष्णुपुराणीयेन पिण्डदाने उदङ्मुखत्वाभिधानमपि यजुर्वेदिपरम् आसनादिदाने उदङ्मुखत्वस्य प्राप्तत्वात् पिण्डदानेऽपि तथैव युक्तत्वात्। प्राङ्मुखपिण्डदाने आवाहितपितॄणां पृष्ठस्थतापत्तेः। पित्र्यमन्त्रवर्जं जप इति पित्र्यमन्त्रवर्जं यथा स्यात्तथा भोजनकाले जपः 'न चाश्नत्सु जपेदत्र कदाचित् पितृसंहिताम्। अन्य एव जपः कार्य्यः सोमसामादिकः शुभः' इति छन्दोगपरिशिष्टैकवाक्यत्वात्। पार्वणे द्विगुणा अत्र ऋजवो ज्ञेयाः। यावानर्थस्तिलैः कार्य्यस्तावानर्थो यवैः कार्य्यः अत्र च द्रव्याभिधायकत्वाम्मन्त्रेऽपि यवोऽसीत्यूहनीयः तृप्ताः स्थः इत्यस्य प्रश्नस्य स्थाने सम्पन्नमिति प्रश्नः अनुज्ञानं प्रत्युत्तरम्। अक्षता यवाः। नान्दीमुखान् पितॄनित्यनेन मन्त्रेऽभिलापे च नान्दीमुखविशेषणवत्त्वेनोल्लेखः पित्रादीनाम् एतच्च पार्वणोक्तस्थाने कार्य्यम् अक्षय्यस्थाने इत्यनेन यजुर्विदामक्षय्यमस्त्वित्यन्तवाक्यमनुक्त्वा प्राप्तपितृलोकोपाधित्वेन सर्वानुद्दिश्य नान्दीमुखाः पितरः प्रीयन्तामित्यनेन सकृदेव जलं दातव्यम् आवाहनवत् अत्र कौशिक प्रकृते पार्वणे पितुरक्षय्यकाल इति वचनात् तथा 'अक्षय्योदकदानन्तु अर्घ्यदानवदिष्यते'। तथा 'अर्घ्येऽक्षय्योदके चैव पिण्डदानेऽवनेजने' इति वचनाच्च अमुकगोत्रस्य नान्दीमुखस्य पितुरमुकदेवशर्म्मणोदत्तेनानेनान्नपानादिना नान्दीमुखाः पितरः प्रीयन्ताम् एवं पितामहादीनामपि प्रीयन्तामिति क्रियानुरोधेन दत्तमित्यादेर्दत्तेनेत्यादिना विभक्तिविपरिणाम इति। तत्र अक्षय्यं वाचयेत् पित्रे चरमं सतिलोदकमिति देवलवचनात् पार्वणेऽक्षय्य-

मिति विशेषणपदविधेर्विशेष्याकाङ्क्षायाम् प्रकृतत्वात् श्राद्धे दत्तस्यैवान्वयात्। अत्र चतुर्थी सम्बुद्ध्यन्तपदप्राप्तौ षष्ठ्यन्ताभिधानं वाचनिकम्। नान्दीमुखाः पितरः प्रीयन्तामित्यक्षय्यस्थाने इति वृद्धिश्राद्धेऽक्षय्यवाचनस्थाने नान्दीमुखा इत्यादिविधेरक्षय्यनिवृत्तौ विशेष्याकाङ्क्षाविरहात् दत्तमिदमित्यादेराकाङ्क्षितस्यान्वये मानाभावात् तदन्वयिषष्ठ्यन्तसम्बुद्ध्यादिपदानामपि निवृत्तिः अतएव नान्दीमुखाः पितरः प्रीयन्तामिति वाचयेदिति ब्रह्मपुराणवचनेनापि अक्षय्यस्थाने नान्दीमुखा इत्यादिवचनं विशेषाभिधानेन पदाहवनीयन्यायेन सामान्याक्षय्यवाक्यबाधकमिति वाच्यम्। न चैवमेकोद्दिष्टेऽपि उपतिष्ठतामित्यक्षय्यस्थाने इति पारस्करदर्शनात्। अत्रापि षष्ठ्यन्तप्रयोगो मास्त्विति वाच्यं तत्र उपतिष्ठतामित्युक्तेः किमित्याकाङ्क्षायामक्षय्यवदुपस्थितस्य दत्तमिदमित्यादेरन्वये सम्बन्धितया षष्ठ्यन्तस्यापि आकाङ्क्षितत्वात् न च प्राकृतेऽपि तथा विश्वे देवाः प्रीयन्तां नान्दीमुखाः पितरः प्रीयन्तामित्यादि स्वधावाचनस्थानीयवक्तव्यमात्रेणैवाभिधानपर्य्यवसानात् षष्ठ्येव नित्यमित्यत्र नित्यपदस्य नान्दीमुखप्रकरणपठितत्वेन न तु तन्मात्रपरं किन्तु पार्वणादिपरम्। एतत् परमुत्तरात्र पार्वणेऽपीति निबन्धारः। न्च अर्घ्येऽक्षय्योदके चैवेत्यादिवचनविषयत्वेन कुतस्तन्मता इति वाच्यं लाघवस्यैव बाधासहकृतस्य तन्मतासाधकत्वात् एतेनाक्षय्योदकं दत्त्वा नान्दीमुखाः पितरः प्रीयन्तामिति। पितृब्राह्मणकरे जलं दद्यादिति श्रीदत्तादिलिखितं चिन्त्यमिति श्राद्धचन्द्रिकायां गुरुचरणाः। नान्दीमुखानिति स्वधां वाचयिष्ये इत्यस्य स्थाने नान्दीमुखान् पितॄन् वाचयिष्ये इति पितृभ्यः स्वधोच्यतामित्यादिस्थाने नान्दीमुखाः पितर इत्यादि।

यद्यपि पारस्करेण पित्रादीनामेवोपादानं कृतं न मात्रादीनां तथापि पार्वणे शुन्धन्तां पितर इत्यादिमन्त्राणां मातामहा-द्यविवोधेन नान्दीमुख्यो मातरः प्रीयन्तामित्यूहेन मन्त्रादिषु विनियोगः न च मातामहानामपि एवमित्यादिवचनादस्तु तत्र प्रकृतावूहो यावद्वचनन्तु वाचनिकमिति न्यायात् प्रकृते तु वचनाभावान्न प्रकृतावूहोऽपूर्वत्वादित्यादिकात्यायनवचनात् कथमूह इति वाच्यम्। अत्र जीवति पित्रादौ उत्तक्रमातिदेशस्य यावत् पार्वणोद्देश्य एवाकाङ्क्षितत्वेन मातामहानामिति बहुवचनेन तेषामेवोपादानान्मात्रादीनामपि पार्वणोद्देश्यत्वा-विशेषात् तत्रोहविधेर्वाचनिकत्वात्। अन्यथा मात्रादिजीवने वृद्धग्रन्वष्टकादौ अनिर्णयापत्तेः जीवति पितरि वृद्धप्रपितामहे श्राद्धे शुन्धन्तामिति बहुवचनस्यानूहापाताच्च। न च पार्वणीय-त्वेन वृद्धग्रादावूहविधायकमिति वाच्यं तस्य सकलश्राद्धप्रकृति-त्वेन विकृतावपि तथात्वलाभात्। प्रीयन्तामित्यस्य सर्वत्रानु-षङ्गः स्वधावाचने तन्नतानिषेधादिति प्राञ्चः अनुषङ्ग एव सूत्र-स्वरस इति पाश्चात्याः न स्वधाञ्च प्रयुञ्जीतेति पारस्करसूत्रेण स्वधावाचननिषेधात् अर्घ्येऽक्षय्योदके इत्यस्याविषयत्वे लाघ-वात् सकृदेव नान्दीमुखाः पितरः पितामहाः प्रपितामहाः प्रीयन्तामित्यादि वाच्यम्। नानुषङ्गो गौरवात् वाधकं विना सूत्रस्वरसहानेरनौचित्यात् अतएव पारस्करेण विवाहप्रकरणे जायाहोमे सर्वत्रानुषजतीत्युक्तम्। न स्वधेति अत्र सामा-न्यतो निर्देशात् वाक्ये मन्त्रे स्वधावाचने च स्वधानिषेधः अतएव बह्वृचकारिका प्रदर्शनार्था। 'स्वधयेति पदस्थाने पुष्ट्यायुष्ट्वं वदेदिह। पितॄनिति पदात् पूर्वं वदेन्नान्दीमुखा-निति'। अत्र ब्रह्मपुराणे। 'दद्यान्नान्दीमुखेभ्यश्च पितृभ्यो विधिपूर्वकम्' इत्युपक्रम्य द्राक्षामलकमूलानि यवांश्चाथ निवे-

दयेत् । तान्येव दक्षिणार्थन्तु दद्याद्विप्रेषु सर्वदा' इति वच-नात् पितृपक्ष एव द्राक्षामलकमूलानि दक्षिणाभिधीयते। देवपक्षे तु पार्वणप्राप्तकाञ्चनमेव दक्षिणा। 'हिरण्यं विश्वे-देवेभ्यो रजतं पितृभ्योऽन्यच्च गोकृष्णाजिनादिकं यावच्च शक्नुयात्' इति नव्यवर्द्धमानधृतपारस्करवचनात्। ततश्च देवपक्षेऽपि द्राक्षादिदक्षिणादानं वाचस्पतिमिश्रोक्तं हेयम्। पितृपक्षे रजतस्यामाङ्गलिकत्वात्तत्त्यागात् द्राक्षादिविधानम्। युक्तमिति ।

इति श्रीरघुनन्दनभट्टाचार्य्यविरचितं यजुर्वेदि-
श्राद्धतत्त्वं समाप्तम् ।

---

# देवप्रतिष्ठातत्त्वम् ।

प्रणम्य कमलाकान्तं नारायणमनामयम् ।
प्रतिष्ठां देवतानाञ्च वक्ति श्रीरघुनन्दनः ॥

मत्स्यपुराणम् । 'सौवर्णी राजती वापि ताम्री रत्नमयी तथा। शैलदारुमयी वापि लौहशङ्खमयी तथा। रीतिका धातुयुक्ता च ताम्रकांस्यमयी तथा। शुभदारुमयी वापि देवतार्चा प्रशस्यते। अङ्गुष्ठपर्व चारभ्य वितस्तिं यावदेव तु। गृहेषु प्रतिमा कार्य्या नाधिका शस्यते बुधैः'। रीतिका पित्तलं शुभदारुमयी यज्ञीयकाष्ठसम्भवा। पर्वा प्रतिमा-गृहेषु स्वगृहेषु। प्रासादेषु अधिका शुभेतिवचनात् तत्रा-धिकापि शैलजा गृहे शुभदा तन्त्रान्तरेऽप्युक्ता। 'चिन्मय-स्याद्वितीयस्य निष्कलस्याशरीरिणः। उपासकानां कार्य्यार्थं

ब्राह्मणी रूपकल्पना'। रूपकल्पना रूपस्थानां देवतानां पुंस्त्र्यंशादिकल्पना। गौतमीयतन्त्रे। 'काश्मरी ज्ञानदा प्रोक्ता स्वर्णजापि विमुक्तिदा। तेजोदा दारुजा चैव रैत्तिकी प्रतुनाशिनी। ताम्री धर्मविवृद्धिञ्च करोति बहुसौख्यदा। मृदैव मृण्मयी प्रोक्ता प्रतिमा शुभलक्षणा। भोगदा मोक्षदा सा तु प्रतिमा कथिता तव'। वराहपुराणे। 'कुड्ये लेख्ये च मे कश्चित् पटे कश्चिच्च मानवः। पूजयेद यदि वा चक्रे मम तेजोऽंशसम्भवे'। कुड्ये लेख्ये भित्तौ लिखिते तथा पटे च लिखिते चक्रे शालग्रामचक्रे। मत्स्यपुराणे लिङ्गमभिधाय 'एवं रत्नमयं कुर्य्यात् स्फाटिकं पार्थिवं तथा। शुभदारुमयी वापि यद्वा मनसि रोचते। चैत्रे वा फाल्गुने वापि ज्यैष्ठे वा माधवे तथा। माघे वा सर्वदेवानां प्रतिष्ठा शुभदा भवेत्। प्राप्य पक्षं शुभं शुक्लमतीते चोत्तरायणे'। अतीते वृत्ते 'पञ्चमी च द्वितीया च तृतीया सप्तमी तथा। दशमी पौर्णमासी च तथा श्रेष्ठा त्रयोदशी। तासु प्रतिष्ठा विधिवत् कृता बहु-फला भवेत्'। व्यवहारसमुच्चये। 'प्रतिष्ठा सर्वदेवानां केशवस्य विशेषतः। उत्तरायणमापन्ने शुक्लपक्षे शुभे दिने। कृष्ण-पक्षे च पञ्चम्याम् अष्टम्याञ्चैव शस्यते'। भुजबलभीमे। 'युगादावयने पुण्ये कर्त्तव्या विषुवद्वये'। चन्द्रसूर्य्यग्रहे वापि दिने पुण्येऽथ पर्वसु। या तिथिर्यस्य देवस्य तस्यां वा तस्य कीर्त्तिता। गृह्यागमविशेषेण प्रतिष्ठा मुक्तिदायिनी'। पद्म-पुराणे। 'प्रतिपद्धनदस्योक्ता पवित्रारोहणे तिथिः। श्रियो देव्या द्वितीया च तिथीनामुत्तमा स्मृता। तृतीया तु भवा-न्याश्च चतुर्थी तत्सुतस्य च। पञ्चमी सोमराजस्य षष्ठी प्रोक्ता गुहस्य च। सप्तमी भास्करे प्रोक्ता दशमी वासुके-स्तथा। एकादशी ऋषीणाञ्च द्वादशी चक्रपाणिनः। त्रयो-

दशी स्वनक्षत्र शिवस्योक्ता चतुर्दशी। मम चैव मुनिश्रेष्ठ पौर्णमासी तिथिः स्मृता'। चक्रपाणिन इति पणव्यवहार इत्यस्मात् इनिप्रत्ययः 'महिषासुरहन्त्र्याश्च प्रतिष्ठा दक्षिणायने'। कल्पतरौ देवीपुराणं 'यस्य देवस्य यः कालः प्रतिष्ठाध्वजरोपणे। गर्त्तापूरशिलान्यासे शुभदस्तस्य पूजिता'। यस्य देवस्य प्रतिष्ठाध्वजरोपणे यः कालः शुभदस्तस्य गर्त्तापूरशिलान्यासे गृहारम्भे स काल पूजितः इत्यर्थः। प्रतिष्ठासमुच्चये। 'माघेऽथ फाल्गुने वापि चैत्रवैशाखयोरपि। ज्येष्ठाषाढ़कयोर्वापि प्रतिष्ठा शुभदा भवेत्'। भविष्ये। 'सोमो वृहस्पतिश्चैव शुक्रश्चैवस्तथा बुधः। एते सौम्यग्रहाः प्रोक्ताः प्रतिष्ठा यज्ञकर्मणि'। एतद्वारेषु कर्त्तव्या इत्यर्थः। मत्स्यपुराणम्। 'आषाढ़े द्वे तथा मूलमुत्तरात्रयमेव च। ज्येष्ठा श्रवणरोहिण्यः पूर्वभाद्रपदस्तथा। हस्ताश्विनी रेवती च पुष्यो मृगशिरस्तथा। अनुराधा तथा स्वाती प्रतिष्ठादिषु शस्यते'। दीपिकायां 'प्राजेशवासवकरादिति भाश्विनीषु पौष्णामरेज्यशशिभेषु तथोत्तरासु। कर्त्तुः शुभे शशिनि केन्द्रगते च जीवे कार्य्या हरेः शुभतिथौ विधिवत् प्रतिष्ठा'। देवीपुराणम्। 'यथा द्वादशगे जीवे षष्ठमेवाथ भास्करे। प्रतिष्ठा कारिता विष्णोर्महाभयकरी मता'। कल्पतरौ देवीपुराणम्। 'चतुर्वर्गैस्तथा विष्णुः प्रतिष्ठाप्यः सुखार्थिभिः'। कालिकापुराणम्। 'प्रतिमायाः कपाली द्वौ स्पृष्ट्वा दक्षिणपाणिना। प्राणप्रतिष्ठां कुर्वीत तस्यादेवस्य वा हरेः। पक्वतायां प्रतिष्ठायां प्राणानां प्रतिमासु च। यथापूर्वं तथाभावः स्वर्णादीनां न विष्णुता। अन्येषामपि देवानां प्रतिमासु च पार्थिव। प्राणप्रतिष्ठा कर्त्तव्या तस्यां देवत्वसिद्धये'। प्रतिष्ठा, ब्राह्मणद्वारेन कर्त्तव्या। तथा हयशीर्ष-

पञ्चरात्रे भगवद्वाक्यं 'कर्त्तुमिच्छति यः पुण्यं मम मूर्त्ति-प्रतिष्ठया। अन्वेषणीयस्तेनाचार्य्यस्तेन लक्षणसंयुतः। ब्राह्मणः सर्ववर्णानां पञ्चरात्रविशारदः। ब्राह्मणानामभावे तु क्षत्रियो वैश्यशूद्रयोः। क्षत्रियाणामभावे तु वैश्यः शूद्रस्य कल्पितः। कदाचिदपि शूद्रस्तु न चाचार्य्यत्वमर्हति' बृहन्नारदीये। 'प्रणमेद् यः शूद्रसंस्पृष्टं लिङ्गं वा हरिमेव वा। स सर्व-यातनाभोगी यावदाहूतसंप्लवम्'। आहूतसंप्लवं प्रलयपर्य्य-न्तम्। तथा 'स्त्रीणामनुपनीतानां शूद्राणाञ्च जनेश्वर। स्पर्शने नाधिकारोऽस्ति विष्णौ वा शङ्करेऽपि वा'। कर्मादौ तु नवग्रहपूजामाह मत्स्यपुराणं 'नवग्रहमखं कृत्वा ततः कर्म समारभेत्। अन्यथा फलदं पुंसां न काम्यं जायते क्वचित्'। प्रतिष्ठाप्रकारस्तु विस्तरेण मत्स्यपुराणादावुक्तः। तदसम्भवे विद्याकरवाजपेयिसम्मतो भविष्यादावुक्तो ग्राह्यः। यथा भविष्यपुराणं 'स्नापनादियथाशक्ति कृत्वा तन्मूलमन्त्रकम्। विन्यसेद्धृदयाम्भोजे प्रतिष्ठा सुकृता भवेत्'। आदिपदात् पूजो-पवहोमादि। महाकपिलपञ्चरात्रोक्तकर्म च कर्त्तव्यं तद्यथा 'सपुष्पं सकुशं पाणिं न्यसेद्देवस्य मस्तके। पञ्चवारं जपेन्मूल-मष्टोत्तरशतोत्तरम्। ततो मूलेन मूर्द्धादिपीठान्तं संस्पृशे-दिति। तत्त्वन्यासं लिपिन्यासं मन्त्रन्यासञ्च विन्यसेत्। पूजाञ्च महतीं कुर्य्यात् स्वतन्त्रोक्तां यथाविधि। प्राण-प्रतिष्ठामन्त्रेण प्राणस्थापनमाचरेत्'। लिपिन्यासः मातृका-न्यासः। उक्तञ्च 'जपादौ सर्वमन्त्राणां विन्यासेन लिपिं विना। कृतं तन्निष्फलं विद्यात् तस्मात् पूर्वं लिपिं न्यसेत्'। शारदायामतेऽपि 'मातृकायाः षडङ्गञ्च मातृकान्यासमेव च। वर्णानां प्रथमं कृत्वा पश्चात्तन्त्रोदितं न्यसेत्'। एतद्वचनाच्च पूर्वं मातृकान्यासः पश्चात्तत्त्वन्यासः। क्रमदीपिकायामप्येवं

क्रमो मन्त्रन्यासश्च तत्तन्मन्त्रविशेषोक्तपदवर्णन्यासः। तदभावे शिरसि मूलमन्त्रेण तत्त्वन्यासः। तत्त्वन्यासस्तु विष्णुविषयक एव न्यासप्रमाणानि शारदाक्रमदीपिकोक्तान्यनुसन्धेयानि प्राणप्रतिष्ठामन्त्रस्तु शारदात्रयोविंशतिपटलोक्तः। यथा 'पाशाङ्कुशपुटाशक्तिर्वाणी बिन्दुविभूषिता। याद्याः सप्तसकारान्ता व्योमसत्येन्दुसंयुता। तदन्ते हंसमन्त्रः स्यात्ततोऽमुष्य पदं वदेत्। प्राणा इति वदेत् पश्चादिह प्राणास्ततः परम्। अमुष्य जीव इहस्थितस्ततोऽमुष्य पदं वदेत्। सर्वेन्द्रियाण्यमुष्यान्ते वाङ्मनश्चक्षुरन्ततः। श्रोत्रघ्राणपदे प्राणा इहागत्य सुखं चिरम्। तिष्ठन्त्वग्निवधूरन्ते प्राणमन्त्रोऽयमीरितः। प्रत्यमुष्यपदात् पूर्वं पाशाद्यानि नियोजयेत्। प्रयोगेषु समाख्यातः प्राणमन्त्रो मनीषिभिः'। पाशाङ्कुशपुटाशक्तिरित्यनेन प्रथमं पाशबीजम् आं ततः शक्तिबीजं ह्रीं ततोऽङ्कुशबीजं क्रों वाणीयकारः बिन्दुविभूषितः। तेन यं याद्याः सप्तसकारान्ता उद्धृतयकारानुवादेन सप्त न तु तद्भिन्नं बीजं पूर्वं पृथगुद्धारस्तु वर्णसप्तानामपि सबिन्दुताख्यापनाय अन्यत्राप्यङ्कुशवायूनलाकनीवरुणबीजान्युक्तानि अत्र वायुबीजस्यैकत्वं बीजत्वेन सर्वेषां सबिन्दुत्वं व्यक्तं राघवभट्टोऽप्येवम् अन्यस्तु वाणीबिन्दुविभूषिता। इत्युक्त्वा नादबिन्दुभूषिता इति व्याख्याने याद्या इत्यस्य विशेषणं वदति व्योमहकारः सत्य ओकारः इन्दुर्बिन्दुः तेन होम् अतएव पाशाङ्कुशान्तरितशक्तिमैनोः पुरस्तादुच्चार्य्य शादिवसुवर्णगुणं सहंसमिति। प्रपञ्चसारोऽप्याह। गुणमित्यनेन होमिति पद्मपादाचार्य्यैर्व्याख्यातम् अग्निवधूः स्वाहा तेनायं मन्त्रः आं ह्रीं क्रों यं रं लं वं शं षं सं हों हं सः अमुष्य प्राणा इह प्राणाः। आमित्यादि अमुष्य जीव इह स्थितः। आमित्यादि अमुष्य सर्वेन्द्रियाणि। आमित्यादि अमुष्य

वाङ्मनश्चक्षुःश्रोत्रघ्राणप्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा। अमुष्येति षष्ठ्यन्तदेवतानामोपलक्षणम् 'यदः पदं हि यद्रूपं यत्र मन्त्रे हि दृश्यते। साध्याभिधानं तद्रूपं तत्र स्थाने नियोजयेत्' इति नारदीयात्। वशिष्ठसंहितायां 'हृदि हस्तं समादाय मूलमन्त्रञ्च संजपेत्'। मूलमन्त्रं तत्तद्देवतामन्त्रकं स च वैदिकस्तान्त्रिकश्च 'ओङ्कारादिसमायुक्तं नमस्कारान्तकीर्त्तितम्। स्वनामसर्वसत्त्वानां मन्त्र इत्यभिधीयते'। इति ब्रह्मपुराणीयेन ओङ्कारादिचतुर्थ्यन्त तत्तद्देवतानामरूपो वा। कालिकापुराणेऽपि। 'प्रतिमायाः कपोलौ द्वौ स्पृष्ट्वा दक्षिणपाणिना। प्राणप्रतिष्ठां कुर्वीत तस्या देवस्य वा हरेः। वासुदेवस्य बीजेन तद्विष्णोरित्यनेन सवैवाङ्गाङ्गिमन्त्राभ्यां प्रतिष्ठामाचरेद्धरेः। तथैव हृदयेऽङ्गुष्ठं दत्त्वा ग्रस्य मन्त्रवित्। एभिर्मन्त्रैः प्रतिष्ठान्तु हृदयेऽपि समाचरेत्। अस्यै प्राणाः प्रतिष्ठन्तु अस्यै प्राणाः क्षरन्तु च। अस्यै देवत्वसंख्यायै स्वाहेति यजुरीरयन्। अङ्गमन्त्रैरङ्गिमन्त्रैर्वैदिकैरित्यनेन च। प्राणप्रतिष्ठां सर्वत्र प्रतिमासु समाचरेत्' देवीप्रतिष्ठायाम् अस्या इत्यत्र अस्यै देवत्वसंख्यायै इत्यूहः। साम्बत्यां मेषां प्राम्णा इत्यत्र प्राम्णे इत्यूहवत्। अङ्गमन्त्रैरङ्गन्यासमन्त्रैः अङ्गिमन्त्रैः प्रधानमन्त्रैः वैदिकैः ओम् नमो ज्योतिर्जुषतामित्यादिमन्त्रैः स्नपनात् पूर्वं वल्मीकमृत्तिकादिभिस्त्रिभिः क्षालनमाह हयशीर्षपञ्चरात्रं 'वल्मीकमृत्तिकाभिस्तु गोमयेन सुभस्मना। क्षालयेत् शिल्पिसंस्पर्शदोषाणामुपशान्तये। स्नापयेद्गन्धतोयेन शुद्धवत्या तु देशिकः। नमस्तेऽर्चे सुरेशानि प्रणीते विश्वकर्मणा। प्रभाविताशेषजगद्धात्रि तुभ्यं नमो नमः। त्वयि संपूजयामीशे नारायणमनामयम्। रहिता शिल्पदोषैस्तु ऋद्धियुक्ता सदा भव'।

तेन च यथाशक्तिस्नपनादीतिकर्त्तव्यताकः प्रतिमाद्युद्दे-शपूर्व्वमन्त्रविन्यासो देवताविशेषसन्निधिः प्रतिष्ठेति । राघव-भट्टधृतमहाकपिलपञ्चरात्रेऽपि 'प्रतिष्ठाशब्दसंसिद्धिः प्रति-पूर्व्वाच्च तिष्ठतेः। वह्न्यर्थत्वाद्विपातानां संस्काराद्दो प्रतेः स्थितिः। पर्य्यस्तादयमेतस्य गीयते शाब्दिकैर्जनैः। विशेषसन्निधेर्वा तु क्रियते व्यापकस्य तु। मन्त्रमूर्त्तौ भावना मन्त्रैः प्रतिष्ठा सा विधीयते'। सुभस्मना गोमयभस्मना गन्धतोयेन चन्दनादि-युक्ततोयेन देवतास्नानीयद्रव्यपरिमाणमाह ब्रह्मपुराणम् 'अष्टोत्तरं पलशतं स्नाने देयञ्च सर्व्वदा'। पलमाह मनुः। 'पञ्च कृष्णलको माषस्ते सुवर्णस्तु षोडश। पलं सुवर्णा-श्चत्वारः' इति। ततश्च षट्‌रत्तिकाधिकलौकिकमाषत्र्याधिक-तोलकत्रयेण वैधपलं भवति।१।२।८। एवं तथाविधा-ष्टोत्तरशतपलपरिमितेन। लौकिकषष्ठ्यधिकशतत्रयतोलका इति एवं वल्मीकमृत्तिकादिस्नाने मर्व्वाङ्गान् जलस्पर्शने स्नानरूपत्वात्तत्रापि अष्टोत्तरं शतपलमिति वदन्ति। वल्मीक-मृदादिस्नाने मन्त्रविशेषानुपादानात् मन्त्रानादेशे गायत्रीति शूलपाणिलिखितात् गायत्र्या तत्तन्मूलमन्त्रेण वा स्नानं कारयितव्यं गन्धोदकस्नाने तु गुरुवत्या एतामिन्द्रमित्यादि ऋक्त्रयात्मिकया दैशिको यजमानो गुरुर्वा विप्रः। नमस्ते इत्यादि विज्ञापनमन्त्रो देवतान्तरे च। नारायणमित्यत्र तत्तद्देवतानामोहः शिवलिङ्गस्यार्च्चात्वात् अर्च्चाविशेषणत्वात् स्त्रीलिङ्गमविरुद्धम्। यमः 'कृत्वा देवगृहं सर्व्वं प्रतिष्ठाप्य च देवताम्। विधाय विधिवत् पूजां तल्लोकं विन्दते ध्रुवम्'। नारसिंहे। 'प्रतिमां लक्षणोपेतां नरसिंहस्य कारयेत्। सर्व्वपापानि संत्यज्य स तु विष्णुपुरं व्रजेत्। प्रतिष्ठां नर-सिंहस्य यः करोति यथाविधि। निष्कामो नरशार्दूल दे

ब्रह्मात् प्रमुच्यते। सकामो नरसिंहस्य पुरं प्राप्य प्रमोदते। विधिवत् स्नापयेद् यस्तु कारयित्वा जनार्दनम्। न जातु निर्गमस्तस्य विष्णुलोकात् कथञ्चन'। नरसिंहस्य विष्णोः। उपसंहारे तथा दर्शनात्। माधवोल्लासे। 'देवस्य प्रतिमायास्तु यावन्तः परमाणवः। तावद्वर्षसहस्राणि विष्णुलोके महीयते'। राजमार्त्तण्डे। 'पुत्त्रोत्पत्तौ तथा श्राद्धमवप्राशनिके तथा। चूडाकार्य्ये व्रते चैव नाम्नि पुंसवनेषु च। पाणिग्रहे प्रतिष्ठायां प्रवेशे नववेश्मनः। एतद्वृद्धिकरं नाम गृहस्थस्य विधीयते' वृद्धिकरं श्राद्धमित्यन्वयः सूत उवाच। 'कलौ चैकाहसाध्येन प्रतिष्ठां मन्दवित्तवान्। मध्यमेनाधमेनापि प्रकुर्य्यात्तान्त्रिकोत्तमः। नित्यं निर्वर्त्य मतिमान् कुर्य्यादभ्युदयन्ततः। विप्रान् संभोजयेत्राथ ततो यागगृहं व्रजेत्। गणेशग्रहदिक्पालान् प्रतिष्ठाकुम्भेषु पूजयेत्। स्थण्डिले पूजयेद्विष्णुं परिवारगणं यजेत्। स्नापयेत् प्रथमं देवं तोयैः पञ्चविधैरपि। पश्चाद्घृतैः पञ्चगव्यैः पञ्चमृत्पिण्डकैरपि। तिलतैलैस्तथा क्षीरैः कषायैरपि सत्तमाः। तथा अश्वत्थशाल्मलिवाट्यालं वटरं वकुलं तथा। एतेषां वल्कलरसः कषायः परिकीर्त्तितः। पञ्चपुष्पोदकैर्वाथ त्रिपत्रैरपि सत्तमाः। तुलसीकुन्दमालूरपत्राण्याहुस्त्रिपत्रकम्। चम्पकाम्रशमीपद्मकरवीरञ्च पञ्चकम्। मृत्तिका करिदन्तस्य पर्वताश्वखुरस्य च। कुशवल्मीकसम्भूतं मृत्पञ्चमीरितम्। गोमूत्रं गोमयं क्षीरं दधिसर्पिः कुशोदकम्। कुर्य्यात् प्राणप्रतिष्ठाञ्च होमं कुर्य्याद् यथाविधि। दक्षिणां विधिवत् कुर्य्यात् पूर्णार्घ्यं तदनन्तरम्'। इति भविष्यपुराणे तृतीयभागे नवमोऽध्यायः। नरसिंहपुराणे। 'पञ्चगव्येन देवेशं यः स्नापयति भक्तितः। ब्रह्मकूर्चविधानेन विष्णुलोके महीः

यते'। ब्रह्मकूर्चविधानेन कुशोदकयुक्तेन स्नानीयो लेपने तदुद्धरणे फलमाह तत्रैव 'यवगोधूमजैश्चूर्णैरुद्धर्त्योष्णेन वारिणा। प्रक्षाल्य देवदेवेशं वारुणं लोकमाप्नुयात्'। स्मृतिः। 'चतुरङ्गुलविस्तारा दीर्घा हस्तद्वयावधि पताका लोकपालानां दशानां परिकीर्त्तिताः'। 'पञ्चहस्ताश्च वै दण्डा पताकानां प्रकीर्त्तिताः'। ज्योतिषे। 'दुग्धं सशर्करञ्चैव घृतं दधि तथा मधु। पञ्चामृतमिदं प्रोक्तं विधेयं सर्वकर्मसु'। प्रतिष्ठानन्तरं मत्स्ये। 'ततः सहस्रं विप्राणामथवाष्टशतं तथा। भोजयेच्च यथाशक्त्या पञ्चाशद्वाथ विंशतिम्'। षोड़शोपचाराः। 'आसनं स्वागतं पाद्यमर्घ्यमाचमनीयकम्। मधुपर्काचमनस्नानवसनाभरणानि च। गन्धपुष्पे धूपदीपौ नैवेद्यं वन्दनं तथा'। दशोपचारास्तु 'पाद्यार्घ्यमाचमनीयमधुपर्काचमनान्यपि। गन्धादिपञ्चकञ्चेति उपचारा दशोदिताः'। पञ्चोपचारास्तु। 'गन्धादयो नैवेद्यान्ताः पूजा पञ्चोपचारिका'। उपचारद्रव्याणि शारदायां 'पाद्यं श्यामाकदूर्वाब्जविष्णुक्रान्ताभिरीरितम्'। विष्णुक्रान्ता अपराजिता एतद्द्रव्ययुक्तं जलमिति शेषः। 'गन्धपुष्पाक्षतयवकुशाग्रफलसर्षपैः। सदूर्वैः सर्वदेवानाम् एतदर्घ्यमुदीरितम्'। एतद् युक्तं जलमित्यर्थः। 'जातीलवङ्गकक्कोलैर्जलमाचमनीयकम्। आज्यं दधि मधून्मिश्रं मधुपर्कं निवेदयेत्'। कात्यायनः। 'मधुपर्कं दधिघृतमधुपिहितं कांस्ये कांस्येन'। मधुपर्केतिस्थाने स्नानीयेति पाठः पूर्वोक्तद्रव्ययुक्तं जलमात्रं वा। 'गन्धचन्दनकर्पूरकालागुरुभिरीरितः'। राघवभट्टधृतं 'अङ्गुष्ठावस्थितं गन्धं मन्त्रैः कुर्य्यात् कनिष्ठया। कनिष्ठाङ्गुष्ठसंयुक्ता गन्धमुद्रा प्रकीर्त्तिता। पुष्पाणि तत्सहैर्वदेयानि अगुरुश्चीरगुग्गुलु मधुपर्ककुचन्दनैः। धूपयेदाज्यसंमिश्रे चूर्णैर्देवस्य देशिकः। तत्र तत्र जलं दद्यात्

उपचारान्तरान्तरे'। इति। राघवभट्टधृतम्। 'सर्वोपचार-वस्तूनामभावे भावनैव हि। निर्मलेनोदकेनाथ पूर्णतेत्याह नारदः'। नारसिंहे 'पञ्चगव्येन देवेशं यः स्नापयति भक्तितः। ब्रह्मकूर्चविधानेन विष्णुलोके महीयते'। ब्रह्मकूर्चविधानेन कुशोदकयुक्तेन। ब्रह्मपुराणे। 'देवानां प्रतिमा यत्र घृताभ्यङ्गक्षमा भवेत्। पलानि तस्यै देयानि श्रद्धया पञ्चविंशतिम्। अष्टोत्तरशतं स्नाने पलं देयन्तु सर्वदा। यवगोधूमजैश्चूर्णैरुद्वृत्योष्णेन वारिणा। प्रक्षाल्य देवदेवेशं वारुणं लोकमाप्नुयात्। पादपीठन्तु यो दद्यात् बिल्वपत्रैर्निघर्षयेत्। उष्णाम्बुना च प्रक्षाल्य सर्वपापैः प्रमुच्यते' देवीपुराणम्। 'होमोग्रहादिपूजायां शतमष्टोत्तरं भवेत्। अष्टाविंशतिरष्टौ वा यथाशक्ति विधीयते'। कात्यायनः 'आज्यद्रव्यमनादेशे जुहोतिषु विधीयते'। कालिकापुराणं 'यद्दीयते च देवेभ्यो गन्धपुष्पादिकं तथा। अर्घ्यपात्रस्थितैस्तोयैरभिषिच्य तदुत्सृजेत्'। नरसिंहपुराणम्। 'स्नाने वस्त्रे च नैवेद्ये दद्यादाचमनीयकम्'। अत्र नीराजनविधिः पूजारत्नाकरे देवीपुराणम्। 'भक्त्या पिष्टप्रदीपाद्यैश्चूताश्वत्थादिपल्लवैः। ओषधीभिश्च मेध्याभिः सर्वबीजैर्यवादिभिः। नवम्यां पर्वकालेषु यात्राकाले विशेषतः। यः कुर्य्याच्छ्रद्धया वीर देव्या नीराजनं नरः। शङ्खभेर्य्यादिनिनदैर्जयशब्दैश्च पुष्कलैः। यावतो दिवसान् वीर देव्या नीराजनं कृतम्। तावद्वर्षसहस्राणि स्वर्गलोके महीयते। यस्तु कुर्य्यात् प्रदीपेन सूर्य्यलोकं स गच्छति'। पर्वकाले उत्सवकाले। देव्या इति स्त्रीत्वमविवक्षितम्।

अथ प्रतिष्ठितमूर्त्तौ कदाचित् पूजाभावे महाकपिलपञ्चरात्रम्। एकाहपूजाविहता कुर्य्याद्द्विगुणमर्चनम्। त्रिरात्रे

तु महापूजा संप्रोक्षणमतः परम्। मासादूर्द्ध्वमनेकाहं पूजा चेद् ह्रियते यदि। प्रतिष्ठैवोच्यते कैश्चित् कैश्चित् संप्रोक्षणक्रमः। संप्रोक्षणक्रमः 'संप्रोक्षणन्तु देवस्य देवस्यत्वेति पूर्ववत्। गवां रसैश्च संस्नाप्य दर्भतोयैर्विशोध्य च। प्रोक्षयेत् प्रोक्षणीतोयै मूलेनाष्टोत्तरं शतम्। सपुष्पं सकुशं पाणिं न्यसेद्देवस्य मस्तके। पञ्चवारं जपेन्मूलमष्टोत्तरं शतं तथा। ततो मूलेन मूर्द्धादि पीठान्तं संस्पृशेत्' इति। 'तत्त्वन्यासं लिपिन्यासं मन्त्रन्यासञ्च विन्यसेत्। प्राणप्रतिष्ठामन्त्रेण प्राणस्थापनमाचरेत्। पूजाञ्च महतीं कुर्य्यात् स्वतन्त्रोक्तां यथाविधि। यागहीनादिषु प्रायःसंक्षेपेण विधिः स्मृतः'।

अथास्पृश्यस्पर्शने तु बौधायनः 'द्रव्यवत् कृतशौचानां देवार्चानां भूयः प्रतिष्ठापनमिति'। देवतार्चा देवताप्रतिमा। तासामस्पृश्यस्पृष्टानां प्रकृतिद्रव्यस्य स्पर्शानां प्रकृतिद्रव्यस्य ताम्रादेर्यथेष्टं शौचं कृत्वा पुनः प्रतिष्ठापनात् पूज्यत्वमित्यर्थः। इति रत्नाकराः आदिपुराणे। खण्डिते स्फुटिते दग्धे भ्रष्टे स्थानविवर्जिते। यागहीने पशुस्पृष्टे पतिते दुष्टभूमिषु। अन्यमन्त्रार्चिते चैव पतितस्पर्शदूषिते। दशस्वेतेषु नो चक्रुः सन्निधानं दिवौकसः। इति सर्वगतो विष्णुः परिभाषाप्रकारह। अन्यच्च वृद्धिश्राद्धहोमौ तु आवश्यकौ। यथाशक्तीत्यभिधानात् इति कश्चित् यथा चाल्पधनानां यदि यज्ञं विनाऽपि पूजनमाह विष्णुधर्मोत्तरे प्रथमकाण्डम्। पूजाकर्म वहिर्वेद्यां श्रद्धया भृगुनन्दन। न त्वल्पदक्षिणैर्यज्ञैर्यजेतेह कदाचन। विष्णुदेवनिकायस्थं यथा आश्रमविन्दम। तपसा पूजयेन्नित्यं यस्मादल्पधनो नरः। यद्येकाहे वास्तुयागग्रहोत्सर्गौ तदा तन्त्रेण वृद्धिश्राद्धं कुर्य्यात् तथा एकस्मिन् नाग्नौ होमद्वयं विधेयम् एकाग्नौ अनेकहोमकरणे

परिसमूहनादिकमाह गोभिलः। 'गणेष्वेकं परिसमूहनमिध्म-बर्हिः पर्य्युक्षणमाज्यभागाविति' पूजादिकं प्रत्येकमेव।

इति श्रीरघुनन्दनभट्टाचार्य्यविरचितं देवप्रतिष्ठातत्त्वं समाप्तम्।

---

# जलाशयोत्सर्गतत्त्वम्।

---

प्रणम्य कमलाकान्तं निबन्धानवलोक्य च।
जलाशयोत्सर्गतत्त्वं वक्ति श्रीरघुनन्दनः॥

अथ जलाशयाः। ते च खननसाध्याश्चत्वारः। कूपवापी-पुष्करिणीतड़ागरूपाः। तथाच मत्स्यपुराणम्। 'एवमेव पुराणेषु तड़ागविधिरुच्यते। कूपवापीतड़ागेषु तथा पुष्करि-णीषु च'। कूपोऽद्वारको गर्त्तविशेषः बद्धसोपानकोऽयं वापीति द्वैतनिर्णयः वस्तुतो लक्षणं वक्ष्यते। पुष्करिणीतड़ा-गावाह वशिष्ठसंहितायां 'चतुर्विंशाङ्गुलो हस्तो धनुस्तच्चतु-रुत्तरः। शतधन्वन्तरश्चैव तावत् पुष्करिणी मता। एतत् पञ्चगुणः प्रोक्तस्तड़ाग इति निश्चयः'। धनुर्हस्तचतुष्टयं चतुरुत्तरश्चतुर्गुणो हस्तो यस्य धनुः। तथाच विष्णुधर्मो-त्तरे प्रथमकाण्डम्। 'द्वादशाङ्गुलिकः शङ्कुस्तद्द्वयञ्च शयः स्मृतः। तच्चतुष्कं धनुः प्रोक्तं क्रोशो धनुः सहस्रकः'। कापिले। 'चतुर्विंशाङ्गुलो हस्तश्चतुर्भिश्च करैर्धनुः'। शयो हस्तस्तेन खातचतुर्दिक्षु विंशतिहस्ताभ्यूनतायां चतुःशत-हस्ताभ्यून्नान्तरत्वेन पुष्करिणी। चतुर्दिक्षु पञ्चचत्वारिंशद्ध-स्ताभ्यूनतायां सहस्रद्वितयहस्ताभ्यूनान्तरत्वेन तड़ागः। एतत्तु

जलाधारपरं न तु उपरितटपरम्। मध्यवर्द्धमानधृतो वशिष्ठः। 'शतेन धनुभिंः पुष्करिणी। त्रिभिः शतैर्दीर्घिका। चतुर्भि-र्द्रोणः पञ्चभिस्तड़ागः। द्रोणाद्दशगुणा वापी' इति संहिता-यामन्तरपदश्रुतेरत्रापि तथावगम्यते। तेन चतुर्दिक्षु पञ्च-त्रिंशद्धस्तान्यूनतायां द्वादशशतहस्तान्तरान्यूनत्वेन दीर्घिका। चतुर्दिक्षु चत्वारिंशद्धस्तान्यूनतायां षोड़शशतहस्तान्तरान्यून-त्वेन द्रोणः। चतुर्दिक्षु त्रिंशदधिकशतहस्तान्यूनतायां षोड़श-सहस्रहस्तान्तरान्यूनत्वेन वापी। करोऽत्र कफोण्युपक्रम-मध्यमाङ्गुल्यग्रपर्य्यन्तः तथाच कल्पतरुरत्नाकरयोः। 'मध्य-माङ्गुलिकुर्पर्योर्मध्यः प्रामाणिकः करः'। तत्करणफल-माह आदित्यपुराणम्। 'सेतुबन्धरता ये च तीर्थशौचरताश्च ये। तड़ागकूपकर्त्तारो मुच्यन्ते ते तृषाभयात्'। सेतुर्जल-धारणहेतुर्बन्धः। तीर्थशौचं घट्टकपरिष्कारः तेन सेतुबन्ध-घट्टपरिष्कारतड़ागादीनां करणे प्रत्येकं तृड्भयमोचनं फलं विष्णुः 'अथ कूपकर्त्तुस्तत्प्रवृत्ते पानीये दुष्कृतार्द्धं विनश्य-तीति'। तत्प्रवृत्ते कूपादुत्थिते। विष्णुधर्म्मोत्तरे 'तड़ाग-कूपकर्त्तारस्तथा कन्याप्रदायिनः। छत्रोपानहातारस्ते नराः स्वर्गगामिनः'। तोयं विना सङ्कुचितप्राणिदेशे तु नन्दिपुराणं 'यो वापीमथवा कूपं देशे तोयविवर्जिते। खनयेत् स दिवं याति बिन्दौ बिन्दौ शतं समाः'। ततश्च वाप्यादिखनने प्रत्येकजलबिन्दुसमसंख्यशतवर्षावच्छिन्नस्वर्गप्राप्तिः फलम्। एतत् सङ्कल्पानन्तरं वास्तुयागसङ्कल्पः कार्य्यः। विष्णुः 'कूपा-रामतड़ागेषु देवतायतनेषु च। पुनः संस्कारकर्त्ता तु लभते मौलिकं फलम्'। संस्कारविधौ तु अजले जलमुत्पाद्य इति वक्ष्यमाणवचनात् जलशून्यदेशखनन एव प्रतिष्ठा न तु पङ्कोद्धारमात्रे। मत्स्यपुराणे। 'प्रासादभवनादीनां विशेषं

विस्तराद्वद। कुर्य्यात् केन विधानेन कश्च वास्तुरुदाहृतः'।
इत्युपक्रम्य वाप्यादीनामप्यभिधानात् आदिपदात् कूपादे-
र्ग्रहणम्। 'प्रासादेष्वेवमेव स्यात् कूपवापीषु शस्यते' इत्यभि-
धानाच्च तेन वाप्यादिकरणेऽपि वास्तुयागः। महाकपिलपञ्च-
रात्रं 'जलाधारमहार्थञ्च यजेद्वास्तु' विशेषतः। ब्रह्माद्यदिति-
पर्य्यन्ताः पञ्चाशत्त्रयसंयुताः। सर्वेषां कुलवास्तूनां नायकाः
परिकीर्त्तिताः। असंपूज्य हि तान् सर्वान् प्रासादादीन्न
कारयेत्। अनिष्पत्तिर्विनाशः स्यादुभयोर्धर्मधर्मिणोः'।
ब्रह्माद्यदितिपर्य्यन्ता इति कल्पान्तरम्। देवीपुराणोक्त-
शादिकल्पो व्यवह्रियते। धर्मधर्मिणोस्तडागादितत्कर्त्रोः।
तद्दिने तदकरणे उत्सर्गदिनेऽपि वाप्यादौ तत्करणम्। 'प्रासाद-
भवनोद्यानप्रारम्भपरिवर्त्तने पुरवेश्म प्रवेशे च सर्वदोषापनु-
त्तये। इति वास्तूपशमनं कृत्वा सूत्रेण वेष्टयेत्। वास्तु-
यागमकुर्वाणस्तवाहारो भविष्यति'। इति मत्स्यपुराणवचने
पुरवेश्म प्रवेशे वास्तुयागप्राप्तेः पूर्वोक्तवचनेन प्रासाद-
धर्मातिदेशादत्रापि प्रासादप्रतिष्ठावत् वाप्यादिप्रतिष्ठादिने
वास्तुयागकरणम्। दीपिकायां 'पुष्यामैत्रकरोत्तराश्विवरुण-
ब्रह्माम्बुपित्रेन्दुभिः। शस्तेऽर्के शुभयोगवारतिथिषु क्रूरे-
ष्ववीर्य्येषु च पुष्टेन्दौ जलराशिगे दशमगे शुक्रे शुभांशोदये
प्रारम्भः सलिलाशयस्य शुभदो जीवेन्दुपुत्त्रोदये'। तैः पुष्या-
नुराधाहस्तोत्तरात्रयाश्विनीशतभिषारोहिणीपूर्वाषाढ़ामघामृ-
गशिरोभिः। मात्स्ये। 'चन्द्रादित्य बलं लब्ध्वा लग्नं
शुभनिरीक्षितम्। स्तम्भोच्छ्रायादिकर्त्तव्यमन्यत्र परिवर्ज-
येत्। अश्विनीरोहिणीमूलमुत्तरात्रयमैन्द्रवम्। स्वातीहस्ता-
नुराधा च गृहारम्भे प्रशस्यते। वज्रव्याघातशूले च व्यती-
पातातिगण्डयोः। विष्कुम्भ गण्डपरिघ वर्ज्जं योगेषु कारयेत्।

आदित्यभौमवर्जन्तु सर्वे वाराः शुभावहाः। प्रासादेऽप्येवमेव स्यात् कूपवापीषु चैव हि'। ज्योतिषे। 'गुरोर्भृगोरस्तबाल्ये वार्द्धके सिंहगे गुरौ। वक्रि जीवाष्टविंशेऽपि गुर्वादित्ये दशाह्निके। पूर्वराशावनायातातिचारिगुरुवत्सरे। प्राग्राशिगन्तृजीवस्य चातिचारे त्रिपक्षके। कम्पाद्यन्तु सप्ताहे नीचस्थेऽप्ये मलिम्लुचे। भानुलङ्घितके मासि क्षये राहुयुते गुरौ। पौषादिकचतुर्मासे वरुणाङ्कितवर्षणे। एकेनाह्ना चैकदिने द्वितीयेन दिनत्रये। तृतीयेन च सप्ताहे मङ्गलानि विवर्जयेत्। विद्यारम्भकर्णवेधौ चूड़ोपनयनोद्वहान्। तीर्थस्नानमनाद्यत्तं तथानादिसुरेक्षणम्। परीक्षारामयज्ञांश्च पुरश्चरणदीक्षणे। व्रतारम्भप्रतिष्ठे च गृहारम्भप्रवेशने। प्रतिष्ठारम्भणे देवकूपादेः परिवर्जयेत्। द्वात्रिंशद्दिवसावास्ते जीवस्य भार्गवस्य च। ह्रासप्रतिर्मन्दत्वस्ते पादान्ते द्वादशक्रमात्। अस्तात् प्राक्परयोः पक्षं गुरोर्वार्द्धक्यबालते। पक्षं वृद्धमथास्ते तु भृगुर्बालो दशाह्निकः। पादास्ते तु दशाहानि वृद्धो बालो दिनत्रयम्'। उत्सर्गफलमाह नन्दिपुराणं 'यो वापीमप्निमात्रेण विधिवत् प्रतिपादयेत्। कोणैपदकाकुधस्थान् समुद्रानाप्नुयात्स्त्रया। चतुरन्ता चतुर्वर्णास्तेन दत्ता मही भवेत्'। चतुरन्ता समुद्रामार्थ्येतिस्मृतेः। तच्चतुःपरिच्छिन्ना चतुर्वर्णा चतुर्दिगवच्छिन्नजला। कबन्धोऽर्णस्तोयपानीयमित्यमरकोषादर्णः पदं जलपरम्। कपिलपञ्चरात्रे। संक्षेपात्तु प्रवक्ष्यामि जलदानफलं शृणु। पुष्करिण्यादिदानेन विष्णुः प्रीणाति विश्वधृक्'। जलाधारकरणार्थं भूमिदाने फलमाह चित्रगुप्तः। 'जलाशयार्थं यो दद्यात् वारुणं लोकमाप्नुयात्'। भूमिमिति शेषः। कालमाह मत्स्यपुराणे। 'शृणु राजन् प्रवक्ष्यामि तड़ागादिषु यो विधिः। चैत्रे वा फाल्गुने वापि

ज्यैष्ठे वा माधवे तथा। माघे वा सर्वदेवानां प्रतिष्ठा शुभदा
भवेत्। प्राप्य पक्षं शुभं शुक्लमतीते चोत्तरायणे। पुण्येऽह्नि
विप्रकथिते कृत्वा ब्राह्मणवचनम्'। अतीते प्रवृत्ते तथाच
प्रतिष्ठासमुच्चये 'माघे च फाल्गुने चैव चैत्रवैशाखयोरपि।
ज्यैष्ठाषाढ़कयोर्वापि प्रवृत्ते चोत्तरायणे'। पुण्येऽह्नि अष्टम-
चन्द्रादिशून्ये ब्राह्मणवाचनं पुण्याहस्वस्त्यृद्धिवाचनम्। 'पञ्चमी
च द्वितीया च तृतीया सप्तमी तथा। दशमी पौर्णमासी च
तथा श्रेष्ठा त्रयोदशी। आसु प्रतिष्ठाविधिवत् कृता शुभफला
भवेत्'। मात्स्ये 'आषाढ़े द्वे तथा मूलमुत्तरात्रयमेव च।
ज्येष्ठाश्रवणरोहिण्यः पूर्वभाद्रपदा तथा। हस्ताश्विनी रेवती
च पुष्यो मृगशिरस्तथा। अनुराधा तथा स्वाती प्रतिष्ठादिषु
शस्यते। बुधो बृहस्पतिः शुक्रस्त्रय एते शुभावहाः। एतन्निरी-
क्षितं लग्नं नक्षत्रञ्च प्रशस्यते। ग्रहताराबलं लब्ध्वा ग्रहपूजां
विधाय च। निमित्तं सफलं ज्ञात्वा वर्जयित्वा तथा शुभम्।
शुभयोगे शुभे लग्ने क्रूरग्रहविवर्जिते। लग्ने ऋक्षे च कुर्वीत
प्रतिष्ठादिकमुत्तमम्। अयने विषुवे तद्वत् षड़शीतिमुखे तथा।
सुराणां स्थापनं कार्य्यं विधिदृष्टेन कर्मणा'। भविष्ये 'प्रति-
पच्च द्वितीया च तृतीया पञ्चमी तथा। दशमी त्रयोदशी
चैव पौर्णमासी च कीर्त्तिता। सोमो बृहस्पतिश्चैव शुक्रश्चैव
तथा बुधः। एते सौम्यग्रहाः प्रोक्ताः प्रतिष्ठायागकर्मणि'।
प्रतिष्ठाधिकारे'व्यवहारसमुच्चयः। 'कृष्णपक्षे च पञ्चम्यामष्ट-
म्यामपि शस्यते'। दीपिकायां 'पुष्याश्विशक्रभगदैवतवासवेषु
सौम्यानिलेशमचरोहिणिमूलहस्ते। पौष्णानुराधाहरिभेषु
पुनर्वसौ च कार्य्याभिषेकतरुकूपरथप्रतिष्ठा'। वसवो धनिष्ठा
ईश आर्द्रा। आर्द्रायाश्चैव सौभाग्यमिति प्रतिष्ठासमुच्चयात्।
वापीतड़ागादीनां पूर्त्तत्वात् स्त्रीशूद्राधिकारे जातूकर्णः। 'वापी-

कूपतड़ागादिदेवतायतनेषु च। अन्नप्रदानमारामाः पूर्त्तं इत्य-
भिधीयते। अग्निहोत्रं तपः सत्यं वेदानामनुपालनम्।
आतिथ्यं वैश्वदेवञ्च इष्टमित्यभिधीयते। ग्रहोपरागे यद्दानं
पूर्त्तमित्यभिधीयते। इष्टापूर्त्तं द्विजातीनां धर्मः सामान्य
उच्यते। अधिकारी भवेच्छूद्रः पूर्त्तधर्मे न वैदिके'। वैदिके
वेदाध्ययनसाध्येऽग्निहोत्रादाविति रत्नाकरः। एवं स्त्रीणा-
मपि पूर्त्ताधिकारः। यथानारीत्यनुवृत्तौ बृहस्पतिः। 'पितृ-
व्यगुरुदौहित्रान् भर्त्तुः स्वस्रीयमातुलान्। पूजयेत् कव्य-
पूर्त्ताभ्यां वृद्धानाथातिथीन् स्त्रियः'। एतेन जलाशयोत्सर्गादौ
गौरवतारणानुमन्त्रणयोर्यजमानकर्त्तृको मन्त्रपाठः। तत्रा-
मन्त्रकतया स्त्रीशूद्रयोरनधिकारेण तद्वति यागेऽप्यनधिकारः।
विशेषोपदेशविरहादिति द्वैतनिर्णयोक्तं निरस्तम्। मन्त्रपाठस्तु
ब्राह्मणद्वारा 'अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्यते'। इति
वराहपुराणात्। अमन्त्रस्येति परिभाषया स्त्रीणामप्यधिकारः।
अस्य पूर्त्तत्वाद्वृद्धिश्राद्धमप्यादौ कर्त्तव्यम्। यथा गोभिलः
'वृद्धिः पूर्त्तेषु युग्मानाशयेत् प्रदक्षिणमुपचारः यवैस्तिलार्थं
इति'। हयशीर्षपञ्चरात्रे 'वापीकूपतड़ागानां पश्चिमे याग-
मण्डपम्। कुर्य्याद् यथाक्रमेणैव कन्यसंमध्यमोत्तमम्।
कन्यसंदशहस्तन्तु कूपे शस्तं तथानघ। द्विषट्कं कारये-
द्वाप्यां पुष्करिण्यां चतुर्दश। विरष्टहस्तं कुर्वीत तड़ाग-
मण्डपं शुभम्'। कन्यसङ्कनीयांसम्। सङ्कल्पविधिस्तु भविष्ये।
'गृहीत्वौडुम्बरं पात्रं वारिपूर्णमुदङ्मुखः। दर्भत्रयं साग्रमूलं
फलपुष्पतिलान्वितम्। जलाशयारामकूपे सङ्कल्पे पूर्वदिङ्मुखः।
साधारणे चोत्तरास्य एशान्यां तज्जलं क्षिपेत्'। मत्स्य-
पुराणे। 'प्रागुदक्प्लवने देशे तड़ागस्य समीपतः। चतुर्हस्तां
शुभां वेदीं चतुरस्रां चतुर्मुखीम्'। कारयेदिति शेषः।

तथा 'सर्वतः समवर्णाः स्युः पताकाध्वजसंयुताः'। समवर्णा वक्ष्यमाणलोकपालवर्णाः। 'अश्वत्थोडुम्बरप्लक्षवटशाखाकृतानि च। मण्डपस्य प्रतिदिशं द्वाराण्येतानि कारयेत्'। तथा 'कुलशीलसमापन्नः स्थापकः स्याद्द्विजोत्तमः'। स्थापक आचार्य्य इति रत्नाकरः। तथा 'सौवर्णौ कूर्ममकरौ राजतौ मत्स्यडुण्डुभौ। ताम्रौ कुलीरमण्डूकावायसः शिशुमारकः। एवमासाद्य तान् सर्वानादौ चैव विशाम्पते। शुक्लमाल्याम्बरधरः शुक्लगन्धानुलेपनः। सर्वौषध्युदकस्नानस्नापितो वेदपुङ्गवैः। यजमानः सपत्नीकः पुत्रपौत्रसमन्वितः। पश्चिमं द्वारमाश्रित्य प्रविशेद् यागमण्डपम्। ततो मङ्गलशब्देन भेरीणाञ्च स्वनेन च। रजसामण्डपं कुर्य्यात् पञ्चवर्णेन तत्त्ववित्। षोड़शारं भवेच्चक्रं पद्मगर्भं चतुर्मुखम्। चतुरस्रन्तु परितो वृत्तं मध्ये गुणोत्तरम्। वेद्याश्चोपरितत्कृत्वा ग्रहांल्लोकपतींस्तथा। विन्यसेन्मन्त्रतः सर्वान् प्रतिदिक्षु विचक्षणः। झषादीन् स्थापयेन्मध्ये वारुणं मन्त्रमाश्रितः'। झषादीन् कूर्मादीन्। 'ब्रह्माणञ्च शिवं विष्णुं तत्रैव स्थापयेद्बुधः। विनायकन्तु विन्यस्य कमलामम्बिकान्तथा'। पूजयेदिति शेषः। मत्स्यपुराणम्। 'नवग्रहमखं कृत्वा ततः कर्म समारभेत्। अन्यथाफलदं पुंसां न काम्यं जायते क्वचित्'। ग्रहपूजामण्डलं शान्तिदीपिकायां 'वर्त्तुलो भास्करः कार्य्योऽर्द्धचन्द्रो निशाकरः। अङ्गारकस्त्रिकोणः स्यात् बुधश्चापाकृतिस्तथा। पद्माकृतिर्गुरुः कार्य्यश्चतुष्कोणस्तु भार्गवः। सर्पाकृतिः शनिः कार्य्यो राहुस्तु मकराकृतिः। खड्गाकृतिस्तथा केतुः कार्य्यो मण्डलपूजने'। मत्स्यपुराणे 'देवताश्च तथा स्थाप्या विंशतिर्द्वादशाधिका। सूर्य्यः सोमस्तथा भौमो बुधजीवसिताकंजाः। राहुः केतुरिति प्रोक्ता ग्रहा लोकहिते

रताः। मध्ये तु भास्करं विद्याल्लोहितं दक्षिणेन तु। उत्त-
रेण गुरुं विद्याद् बुधं पूर्वोत्तरेण तु। पूर्वेण भार्गवं विद्यात्
सोमं दक्षिणपूर्वके। पश्चिमेन शनिं विद्यात् राहुं दक्षिण-
पश्चिमे। पश्चिमोत्तरतः केतुं स्थापयेत् शुक्लतण्डुलैः।
भास्करस्येश्वरं विद्यादुमाञ्च शशिनं तथा। स्कन्दमङ्गार-
कस्यापि बुधस्यापि तथा हरिम्। ब्रह्माणञ्च गुरोर्विद्यात्
शुक्रस्यापि प्रजापतिम्। शनैश्चरस्य तु यमं राहोः कालं
तथैव च। केतूनामप्रिगुप्तञ्च सर्व्वेषामधिदेवताः। अग्नि-
रापः क्षितिर्विष्णुरिन्द्र ऐन्द्री च देवता। प्रजापतिश्च सर्पश्च
ब्रह्मा प्रत्यधिदेवताः। विनायकं तथा दुर्गां वायुमाकाश-
मेव च। आवाहयेद्व्याहृतिभिस्तथैवाश्विकुमारकौ। संस्मरे-
द्रक्तमादित्यमङ्गारकसमन्वितम्। सोमशुक्रौ तथा श्वेतौ बुध-
जीवौ तु पिङ्गलौ। मन्दराहू तथा कृष्णौ धूम्रं केतुगणं
विदुः। ग्रहवर्णानि देयानि वासांसि कुसुमानि च। धूपा-
मोदोऽत्र सुरभिरुपरिष्टाद्वितानकम्। शोभनं स्थापयेत् प्राज्ञः
फलपुष्पसमन्वितम्। गुड़ौदनं रवेर्दद्यात् सोमस्य घृतपाय-
सम्। संयावकं कुजे दद्यात् क्षीरान्नं सोमसूनवे। दध्योद-
नन्तु जीवाय शुक्राय तु घृतौदनम्। शनैश्चराय कृशरमाज्यं
मासञ्च राहवे। चित्रौदनञ्च केतुभ्यः सर्वभक्ष्यैः समर्चयेत्।
स्कन्दपुराणम्। 'जन्मभूर्गोत्रमेतेषां वर्णस्थानमुखानि च।
यो ज्ञात्वा कुरुते शान्तिं ग्रहास्ते नावमानिताः। उत्पन्नो-
ऽर्कःकलिङ्गेषु यमुनायाञ्च चन्द्रमाः। अङ्गारकस्त्ववन्त्यान्तु
मागधेषु हिमांशुजः। सैन्धवेषु गुरुर्जातः शुक्रो भोजकटे
तथा। शनैश्चरश्च सौराष्ट्रे राहुर्वैनाटिकापुरे। अन्तर्वेद्यां
तथा केतुरित्येता ग्रहभूमयः। आदित्यः काश्यपो गोत्र आत्रेय-
श्चन्द्रमा भवेत्। भरद्वाजो भवेद्भौमस्तथात्रेयश्च सोमजः।

गुरुः पूज्योऽङ्गिरो गोत्रः शुक्रो वै भार्गवस्तथा। शनिः काश्यप एवायं राहुः पैठीनसिस्तथा। केतवो जैमिनेयाश्च ग्रहालोकहिते रताः। तद्गोत्रजातीरज्ञात्वा होमं यः कुरुते नरः। न तस्य फलमाप्नोति न च तुष्यन्ति देवताः। न हुतं न च संस्कारो न च यज्ञफलं लभेत्'। गोभिलकात्यायनौ। 'ब्राह्मणौ भार्गवाचार्य्यौ क्षत्रियावर्कलोहितौ। वैश्यौ सोम-बुधौ चैव शेषान् शूद्रान् विनिर्दिशेत्'। शान्तिदीपिकायाम्। 'शुक्रार्कौ प्राङ्मुखौ स्थाप्यौ शशाङ्कारौ च दक्षिणौ। उत्त-राश्यौ गुरुबुधौ पश्चिमास्यास्तथापरे'। अग्निप्रणयनानन्तरं ग्रहावाहनमाह वैशम्पायनः। 'अग्निप्रणयनं कृत्वा पश्चादा-वाहयेत् ग्रहान्। मध्ये तु भास्करं विद्याल्लोहितं दक्षिणेन तु'। इत्यादि यद्यपि ग्रहादीनां बहवः शब्दा वाचकाः सन्ति शब्दोपस्थितश्चार्थः अर्थोपस्थितः शाब्दो वा उभयथापि शब्दा नियमादविनिगमः स्यात्तथापि सूर्य्यादिशब्दत्वेन ग्रहाणां देवतात्वं तेन सूर्य्यसोममङ्गलबुधबृहस्पतिशुक्रशनिराहुकेतु-पदैर्देवतात्वम् अधिदेवतानान्तु त्र्यम्बको मा स्कन्दविष्णु-ब्रह्मेन्द्रयमकालचित्रगुप्तानामेभिरेव पदैस्तथा प्रत्यधिदेवता-नाम् अग्न्यप्पृथिवीविष्णिन्द्रशचिप्रजापतिसर्पब्रह्मणामेभि-रेव पदैः। तथा विनायकदुर्गावाय्वाकाश अश्विनामभि-रेवेति कृत्यप्रदीपोक्तध्यानानि प्रयोगे वक्ष्यन्ते लोकपालस्य मन्त्रानाह भविष्ये। 'न्यासमन्त्रानथो वक्ष्ये लोकपाला-त्मकानिह। इन्द्रस्तु महसादीप्तः सर्वदेवाधिपो महान्। वज्रहस्तो मकासत्वस्तस्मै नित्यं नमो नमः। १। आग्नेयः पुरुषो रक्तः सर्वदेवमयोऽव्ययः। धूमकेतुरनाधृष्यस्तस्मै नित्यं नमो नमः। २। यमश्चोत्पलवर्णाभः किरीटी दण्डधृक् सदा। धर्मसाक्षी विशुद्धात्मा तस्मै नित्यं नमो नमः। ३।

निऋर्तिस्तु पुमान् कृष्णः सर्वरक्षोऽधिपो महान्। खड्गहस्तो महासत्वस्तस्मै नित्यं नमो नमः।४। वरुणो धवलो जिष्णुः पुरुषो निम्नगाधिपः। पाशहस्तो महाबाहुस्तस्मै नित्यं नमो नमः।५। वायुश्च सर्ववर्णोऽयं सर्वगन्धवहः शुभः। पुरुषो ध्वजहस्तश्च तस्मै नित्यं नमो नमः।६। गौरवर्णः पुमान् सौम्यः सर्वौषधिसमन्वितः। नक्षत्राधिपतिः सौम्यस्तस्मै नित्यं नमो नमः।७। ईशानः पुरुषः शुक्लः सर्वविद्याधिपो महान्। शूलहस्तो विरूपाक्षस्तस्मै नित्यं नमो नमः।८। पद्मयोनिश्चतुर्मूर्त्तिर्हेमवासाः पितामहः। यज्ञाध्यक्षश्चतुर्वर्गस्तस्मै नित्यं नमो नमः।९। योऽसावनन्तरूपेण ब्रह्माण्डं सचराचरम्।• पुष्पवद्धारयेन्मूर्द्ध्नि तस्मै नित्यं नमो नमः। ओङ्कारपूर्विका ह्येते न्यसेद्दलि निवेदने। मन्त्राः स्युः सर्वकार्य्याणां सिद्धिपुष्टिफलप्रदाः'। हयशीर्षपञ्चरात्रे। 'अथ वाप्यामतः कुर्य्यात् सुवर्णरत्नादिनिर्मितम्। द्विभुजं हंसपृष्ठस्थं दक्षिणेनाभयप्रदम्। वामेन नागपाशन्तु धारयन्तं सुभोगिनम्। सलिलं वाममाभोगं कारयेद् यादसां पतिम्। वामे तु कारयेद् वृद्धिं दक्षिणे पुष्करं शुभम्। नागेन्द्रैर्भियादोभिः समुद्रैः परिवारितम्। कृत्वैवं वरुणं देवं प्रतिष्ठाविधिनार्च्चयेत्'। पुष्करं तत् पुत्रं ततः प्रसन्नवदनमिति ध्यानेन प्रवक्ष्यते वरुणमन्त्रोद्धारस्तु अत्रैव 'अष्टाविंशान्तवीजेन चतुर्दश स्वरेण च। अर्द्धेन्दुविन्दुयुक्तेन प्रणवोद्दीपितेन च'। तेन ओम् वौं इति मन्त्रः। 'प्रतिमायां स्थितिं कृत्वा प्रणवेन निवोधयेत्। पूजयेद्गन्धपुष्पाद्यैः सान्निध्यं पाशमुद्रया'। स्थितिं प्रतिष्ठां निवोधयेत् अन्तर्गताङ्गुष्ठमुष्टिभ्यां निवोध मुद्रां दर्शयेत्। दानकल्पतरुरत्नाकरयोर्वह्वृच गृह्यपरिशिष्टम्। अथातो वारुणविधिं वापीकूपतडागविधिं व्याख्यास्यामः।

पुण्ये तिथिकरणे शुभे नक्षत्रे प्रतीचीं दिशमास्थाय प्राक् प्लवने उदक्प्लवने वा उदकसमीपे उदकमुपसमाधाय वारुणचरुं श्रपयित्वाज्यभागान्तं हुत्वाज्याहुतीर्जुहुयात्। समुद्रज्येष्ठा इति प्रत्यृचं ततो हविषाऽष्टाहुतीर्जुहुयात् तत्त्वायामि ब्रह्मणा वन्दमान इति पञ्च त्वन्नोऽग्ने वरुणस्य विद्वान् इति द्वे इमं देवत्सुधीहवेति च स्विष्टिकृतञ्च नवमं नव वै प्राणा प्राणा वा आपस्तस्मादापो नवभिर्जुहोति मार्जनान्ते धेनुमवतारयेत्। अवतार्य्यमाणां तामनुमन्त्रयेत् इदं सलिलं पवित्रं कुरुष्व शुद्धः पूतो मृतः सन्तु नित्यं भावयन्तौ सर्वतीर्थाभिषिक्तं लोकालोकं तरते तीर्य्यते च इत्यनेन पुच्छाग्रे यजमानः स्वयं लग्न आचार्य्येणान्वारब्ध उत्तीर्य्यापोऽस्मान्मातरः शुन्धयन्तु इत्यैशान्यां दिशि उत्थापयेत् सुप्रसा भवतीह भूया इति यदि सा हिं करोति तदा हिं कृन्वती वसुमती वसूनामिति जपेत् तां सचेलकण्ठां कनकशृङ्गीं ताम्रपृष्ठां दृषप्रजां रूप्यखुरां कांस्योपदोहां विप्राय सामगाय दद्यात् इतरां वा यथाशक्ति दक्षिणाचार्य्याय देयेति तत उत्सर्गं कुर्य्यात् देवपितृमनुष्याः प्रीयन्तामित्युत्सृज्य आह शौनकः। ‘यजमानो ब्राह्मणान् भोजयित्वा स्वस्ति वाचयतीति’ देवाः पितरो मनुष्याः प्रीयन्तामिति कल्पतरुः। अस्यार्थः। तीर्थादीनां शुद्धत्वं पूर्वोक्तवचनेभ्यो ज्ञेयम्। एष विधिर्गोभिलपारस्करगृह्यकर्म्मानुष्ठानाभ्यामनुष्ठीयते। ‘यन्नाम्नातं स्वशाखायां परोक्तमविरोधि च। विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत्’। इति छन्दोगपरिशिष्टात् ततश्च अग्निमुपसमाधायेति स्वगृह्योक्तविधिनाऽग्निं संस्थाप्य वरुणदेवताकं चरुं निष्पाद्याज्यभागान्तं हुत्वा इति सामगेतरपरं न तु विरूपाक्षजपान्तां कुशण्डिकां समाप्य महाव्याहृतिहोमं कृत्वा प्रकृतं कर्म

कुर्य्यात्। तत्र प्रथमतः पिङ्गभ्रूश्मश्रुकेशाच इत्यनेन ध्यात्वा वारुणपाकयज्ञे अग्ने त्वं वरुणनामासीति नाम कुर्य्यात् यथा प्रतिष्ठायां लोहितो वास्तुयागे प्रजापतिः। जलाशयप्रतिष्ठायां वरुणः समुदाहृतः' इति मत्स्यपुराणात् तत आवाह्य पूजयित्वा समित्प्रक्षेपानन्तरं महाव्याहृतिहोमं कृत्वा समुद्रज्येष्ठा इत्यादिचतुर्भिर्मन्त्रैश्चतस्र आहुतीर्जुहुयात् ओम् तत्त्वायामीति ओम् तदिदमन्नमिति ओम् शुनः शेफोयामीति ओम् अवेतेहलो वनु इति ओम् उदुत्तममिति पञ्चभिः। ओम् तत्त्वोऽग्ने इति ओम् स त्वन्नोऽग्ने इति द्वाभ्याम् ओम् इमं मे श्रुधी हर वरु इत्येकेन एवं स्थानत्रयोक्तैर्बह्वृचोक्तैः प्रत्येकमष्टाभिर्मन्त्रैश्चतुरावत्तं भृगुगोत्रभार्गवप्रवरश्च पञ्चावत्तं स्रुचा जुहुयात् अग्नये स्विष्टिकृते च ततः कुशण्डिकोक्तविधानेन शेषं समापयेत्। नव वै प्राणा इति नवाहुतिस्तु मार्जनाख्ये इति मार्जनं यजमानाभिषेकः। तद्विधानन्तु मत्स्यपुराणे 'गजाश्वरथ्या वल्मीकसङ्गमे ह्रदगोकुलात्। मृदमादाय कुम्भेषु प्रक्षिपेच्चत्वरात्तथा। रोचनान्तु ससिद्धार्थान् गन्धान् गुग्गुलमेव च। स्नपनं तस्य कर्त्तव्यं पञ्चभङ्गसमन्वितम्। पूर्त्तकर्त्तुर्महामन्त्रैरेवं कृत्वा विधानतः। पञ्चभङ्गाः शान्तिकपौष्टिककल्पतरुक्ताः। अश्वत्थोडुम्बरप्लक्षवटचूतस्य पल्लवाः। महामन्त्रैः सुरास्त्वामित्यादिभिः। एतत् पर्य्यन्तोऽपि कूपेऽपि कापिले 'ऐशान्यां स्थापयेद् यूपं खातात् पञ्चकरान्तरम् यूपव्रश्चेति मन्त्रेण सर्पाकारं सुशोभनम्। पूजयित्वा तु वस्त्राद्यैस्ततो यष्टिं प्रचालयेत्' मात्स्ये 'चारत्निमात्रो यूपः स्यात् क्षीरिवृक्षविनिर्मितः। यजमानप्रमाणो वा संस्थाप्यो भूतिमिच्छता'। क्षीरिवृक्षोऽश्वत्थादिः। ततो धेनुं सचेलकण्ठाद्युक्तविशेषणविशिष्टां जलेऽवतारयेत्। तथाच हयशीर्षे

'गां सवत्सां समानीय सुशीलाञ्च पयस्विनीम्। कांस्योपदोहां स्वर्णशृङ्गीं वस्त्रपुष्पादिमण्डिताम्। लाङ्गूलग्रहहस्तोऽसौ यजमानः सबान्धवः। शनैः सन्तारयित्वा च आचार्य्याय निवेदयेत्'। कांस्योपदोहां कांस्यक्रोड़ाम्। कापिले 'अञ्जलौ जलमुत्पाद्य यजमानः सभार्य्यकः। तटेहं प्राङ्मुखो भूत्वा धृतगोलाङ्गुलाङ्गुलिः'। इदं सलिलं पवित्रमिति मन्त्रेण अवतार्य्यमानामनुमन्त्रयेत्। प्राङ्मुखः सन् अवतारयेत् सा च गौः पश्चिमतोऽवतार्य्य। ततः कूलसमीपं गत्वा तर्पयेत् यथा कापिले 'पुनः पुष्पोदकेनाथ सतिलेन कुशेन तु। भुग्नेनैवापसव्येन पितृतीर्थेन तर्पयेत्। गताश्चात्र गमिष्यन्ति ये कुले मम बान्धवाः। ते सर्वे तृप्तिमायान्तु मया दत्तजलेन वै। ततो मुञ्चामि मन्त्रेण मुञ्चेद्गां वत्ससंयुताम्'। आचार्य्येण अन्वारब्धा उत्तीर्य्य आपोऽस्मान्मातरः शुन्धन्तु इति मन्त्रेणैतस्यां दिश्युत्थापयेत्। सुयवसा भगवतीह भूया इति ब्रूयात् हिङ्कारं यदि करोति तदा हिंकृण्वतीति पठेत्। ततश्च उक्तविशेषणविशिष्टां तां धेनुमाचार्य्याय सामगाय दद्यात्। यथाशक्ति दक्षिणाञ्च दद्यात् एतत् पर्य्यन्तं कर्म कूपे न व्यवक्रियतेऽसम्भवात् तत उत्सर्गं कुर्य्यात् जलाशयस्येति शेषः। अत्र विशेषमाह रत्नाकरधृतं मत्स्यपुराणं 'फलानि चिन्तयन्मर्त्त्यो विविधानि शुभानि च। प्रदद्यात् सर्वभूतेभ्यो जलपूर्णं जलाशयम्'। कापिलम्। 'ततस्तत्पश्चिमं तीरं गत्वा पूर्वामनः स्थितः। जलोत्सर्गं प्रकुर्वीत सर्वभूतार्थकं ध्रुवम्'। सर्वभूतार्थकं सर्वभूतप्रयोजनकं सर्वभूतेभ्य उत्सृजेदित्यर्थः। देवपितृमनुष्याः प्रीयन्तामिति पठेदिति शेषः। उत्सृज्य यजमानो ब्राह्मणान् स्वस्तिवाचयीत दक्षिणाभिरिति शेषः। एतत्पर्य्यन्तं कूपेऽपि। जलाशयोत्सर्गस्य ,सर्वभूतोद्देश्यकत्वेन

प्रकृष्टचेतनोद्देश्यकत्ववदप्रकृष्टचेतनोद्देश्यकत्यागत्वमपि ततश्च कीटादेर्ममेदमिति स्वीकारयोग्यत्वेन वेदमेयोद्देश्यगतस्वत्वाजनकत्यागरूपत्वादस्य यागत्वम् । अतएव जलाशयोत्सर्गमुपक्रम्य मत्स्यपुराणेऽपि प्राप्नोति तद्यागबलेन भूय इति यागत्वेनाभिहितं ततश्च तज्जलं स्वस्वत्वदूरीकरणेन नद्यादिवत् साधारणीकृतम् अतएव 'सामान्यं सर्वभूतेभ्यो मया दत्तमिदं जलम् । रमन्तु सर्वभूतानि स्नानपानावगाहनैः' । इति मन्त्रलिङ्गेनोपादानं विना कस्यापि स्वत्वमिति । ततश्चान्ययागवदुत्तरप्रतिपत्तेरश्रुतत्वात् साधारणजलस्य परिग्रहमात्रेण गौतमोक्तेन दातुः स्वामित्वश्रुतेर्यजमानस्यापि तथात्वेन स्वामित्वात्तत्र स्नानादावदोषः । तथाच गौतमः 'स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु ब्राह्मणस्याधिकं लब्धं क्षत्रियस्य विजितं निर्दिष्टं वैश्यशूद्रयोः' इति परिग्रहोऽनन्यपूर्वस्य जलतृणकाष्ठादेः स्वीकार इति मिताक्षरा । रिक्थाधिकारे व्यक्तमाह आपस्तम्बः 'दायाद्यं शिलोञ्छौ वान्यच्चापरपरिगृहीतमिति' । अपरपरिगृहीतम् अन्यास्वीकृतम् अस्वामिकमिति यावत् निर्विष्टं वेतनलब्धं निर्वेशो भृतिभोगयोरित्यमरसिंहत्रिकाण्डशेषात् । हयशीर्षे 'आपोहिष्ठेति तिसृभिः पञ्चगव्यं विनिक्षिपेत् । तीर्थतोयं तथा पुण्यं शान्तितोयं द्विजैः कृतम् । गोकुलं प्रार्थयेत् पश्चात् द्विजान् वेदविदस्तथा । ततोऽन्नं भोजयेत् विप्रान् दद्यात्तेभ्यश्च दक्षिणाम्' । एतत् पर्य्यन्तं कूपेऽपि । कापिले 'नागानामष्टनामानि लिखितानि पृथक् पृथक् । ततः कुम्भे च निक्षिप्य गायत्र्या च विलोड्य वै । उद्धरेत् पत्रिकामेकां तत्र वै नागमीक्षयेत् । यस्य नामोद्धरेद्यस्य स वै जलाधिपः स्मृतः । तं वै संपूज्य गन्धाद्यैर्दद्यात् क्षीरञ्च पायसम्' । पद्मपुराणस्य । योगीश्वरघृतवचनात्

यथाऽष्टौ नामान्यास्य पत्रे कृत्वा तु यत्नतः'। तानि च गारुड़े। 'अनन्तो वासुकिः पद्मो महापद्मोऽथ तक्षकः। कुलीरः कर्कटः शङ्खो ह्यष्टौ नागाः प्रकीर्त्तिताः'। ततश्च अनन्त वासुकि कर्कटक पद्म महापद्म तक्षकशङ्खकुलीराणां नामाश्वत्थपत्रे लिखित्वा कुम्भमध्ये निक्षिप्य गायत्र्या गोमूत्रेण वा छन्दसा मथ्नामीति रघुनाथधृतमन्त्रेण आलोड्य यस्य नामोत्तिष्ठति तं यष्ट्यां समावाह्यानेन नागेन अथ जलाशयस्य रत्नाकरसंख्येति ब्राह्मणान् श्रावयेत्। हयशीर्षे 'वैल्वकं वाथ चैव पुन्नागं नागकेशरम्। वकुलं चम्पकञ्चैव विल्वञ्चैवाथ खादिरम्। एतेषामेव दारूणां नागयष्टिः प्रकीर्त्तिता। सवक्रकोटरं त्यक्त्वा तस्मात् कुर्य्यात् यथेप्सितम्'। तथाच बृहस्पतिः 'शूलचक्राङ्कितं कृत्वा स्थापयित्वा जलाशये। द्वादशाङ्गुलमानन्तु वापी चक्रं प्रकल्पयेत्। षोड़शं पुष्करिण्यान्तु विंशतिन्तु सरोवरे। सागरे हस्तमात्रन्तु लौहं ताम्रञ्च पैत्तलम्। चक्रञ्च विविधं प्रोक्तं कुर्य्यात्तेषां यथेप्सितम्। शतहस्ता भवेद्वापी द्विगुणा पुष्करिणी मता। त्रिगुणन्तु सरोमानमत ऊर्द्ध्वन्तु सागरः'। ततो द्वादशपञ्चदशविंशत्येकविंशत्यन्यतमकनिष्ठाङ्गुल्यवच्छिन्नहस्तप्रमाणयष्टिं वक्ष्यमाणमन्त्रेण स्नापयेत्। गन्धद्वारेति गन्धवारिणा। ओम् भद्रं कर्णेभिरिति तैलहरिद्रया ओम् काण्डात् काण्डादिति दूर्वाभिः ओम् द्रुपदादिवेत्यादिना सप्तमृद्भिः। ओम् मधुवाते त्वचा पञ्चामृतेन ओम् याः फलिनीति फलोदकेन ओम् युवा सुवासा इत्यादिना क्षुद्रघण्टिकायुक्तां पताकां यष्ट्यां बध्नीयात्। ओम् यष्ट्यै नम इति पाद्यादिना पूजयेत् पुष्पाद्यलङ्कृतां यष्टिं कन्दरसमीपे नयेत् गुरुस्तु शङ्खादिनिःस्वनै राजतवरुणप्रतिमाम् उत्तिष्ठेति उत्थाप्य प्रदक्षिणत्रयं कृत्वा आपोहिष्ठेति, मन्त्रत्रयेण वरुण-

श्योतस्थनमसीति मन्त्रेण जलाशयमध्ये क्षिपेत् ततस्तत्रैव स्नाते शाद्वलगोमयदधिमधुकुशमहानदीजलपञ्चरत्नानि ओम् येवामीरोचनेदिव इति मन्त्रेण क्षिपेत्। ओम् ध्रुवं ध्रुवेण मनसा इत्यादिना मन्त्रेण यष्टिमभिमन्त्र्य यूपव्रस्केति मन्त्रेण जलमध्ये आरोपयेत्। ततो जलमातॄः पूजयेत्। श्रियं पूर्वस्यां श्रियमाग्नेय्यां शचीं दक्षिणस्यां मेधां नैर्ऋत्यां श्रद्धां पश्चिमायां विद्यां वायव्यां लक्ष्मीमुत्तरस्यां सरस्वतीमैशान्यां विद्यामधो लक्ष्मीमूर्द्धं पाद्यादिभिः पूजयेत्ततोऽग्निं प्रदक्षिणीकृत्य सूर्य्यादिद्वात्रिंशद्देवताः पूजयेत्। वरुणं त्वमस्येति वरुणं समापयेत्। कापिले 'शङ्खभेरीनिनादैश्च तथा वै क्षीरधारया'। जलाशयं वेष्टयेदिति शेषः। प्रतिष्ठानन्तरं मात्स्ये। 'ततः सहस्रं विप्राणामथ वाष्टशतं तथा। भोजयेच्च यथाशक्त्या पञ्चाशद्वाथ विंशतिम्'।

इति श्रीरघुनन्दनभट्टाचार्य्यविरचितं जलाशयोत्सर्गप्रमाणतत्त्वं समाप्तम्।

---

# छन्दोगवृषोत्सर्गतत्त्वम्।

प्रणम्य सच्चिदानन्दं परमात्मानमीश्वरम्।
मुनीन्द्राणां स्मृतेस्तत्त्वं वक्ति श्रीरघुनन्दनः॥
अथ तत्र जगन्नाथं नत्वा छन्दोविदां मुदे।
वृषोत्सर्गप्रमाणानि वक्ति श्रीरघुनन्दनः॥

तत्र कालमाह छन्दोगपरिशिष्टम्। 'कार्त्तिक्यामयने चैव फाल्गुन्यामष्टकासु च। आषाढ्यां विषुवे चैव पौष्यां माघ-

पुत्रस्य च। स्वर्भानुना चोपसृष्टे आदित्ये चन्द्रमस्यपि। सप्तावरान् सप्तपरानुत्सृष्टस्तारयेद् वृषः'। स्वर्भानुना राहुणा पौष्णे रेवत्याम् अवरान् पुत्रादीन् परान् पित्रादीन्। विष्णुधर्मोत्तरे 'अश्वयुक् शुक्लपक्षस्य पञ्चदश्यां नरेश्वर। कार्त्तिकेऽप्यथवा मासि वृषोत्सर्गन्तु कारयेत्। ग्रहणे द्वे महापुण्ये तथाचैवायनद्वये। विषुवद्वितये चैव मृताहे बान्धवस्य च। मृताहो यस्य यस्मिन् वा तस्मिन्नहनि कारयेत्' यस्य बान्धवस्य पित्रादेः यस्मिन्नहनि मृताहस्तस्मिन्नित्यर्थः। अत्र च आश्विनपौर्णमासीविधानात् पौष्णे आश्वयुजस्य चेति रेवतीयुक्तपौर्णमासी ग्राह्या एकश्रुतिमूलत्वकल्पनालाघवात्। कालविवेकेऽपि अग्निपुराणम्। 'एकादशाहे प्रेतस्य यस्य चोत्सृज्यते वृषः। प्रेतलोकं परित्यज्य स्वर्गलोकं स गच्छति। आद्यश्राद्धे त्रिपक्षे वा षष्ठे मासि च वत्सरे। वृषोत्सर्गश्च कर्त्तव्यो यावन्न स्यात् सपिण्डता। सपिण्डीकरणादूर्द्ध्वं कालोऽन्यः शास्त्रचोदितः'। यस्य प्रेतस्येति सामान्यतः श्रुतेः पितृभिन्नस्यापि वृषोत्सर्गः प्रतीयते। तथाच 'आत्मानञ्च पितॄंश्चाथ पत्नीं मातामहान् सुतान्'। इत्यादिकार्ष्णाजिनिवाक्यात् पुंगतत्ववत् स्त्रीगतत्वेऽपि फलस्यावगमात् स्त्रिया अपि वृषोत्सर्गः अतएव विभिन्नगोत्राणामपि वृषोत्सर्ग इति द्वैतनिर्णये मिश्राः। एष्टव्या बहवः पुत्रा यद्येकोऽपीत्यादिवचनन्तु पुत्रस्यातिशयत्वप्रतिपादनार्थमिति। अत्र वत्सर इत्युपादानाद्विष्णुधर्मोत्तरीयमृताह इति पदं पूर्णसंवत्सरीयमृततिथिपरम्। अतएव वशिष्ठोक्तछन्दोगपरिशिष्टमपि।

अथ वृषोत्सर्गं व्याख्यास्यामः। 'कार्त्तिक्यां पौर्णमास्यां रेवत्यामाश्वयुज्यां दशाहे मते संवत्सरेऽतीते वेति' अत्र मृतः

तिथिमादाय संवत्सरगणना दर्शाहवत् इत्यविरोधः। एकाह दर्शाह इति आद्यश्राद्ध इति च अशौचान्ताद्द्वितीयदिनपरम् 'अशौचान्ताद्द्वितीयेऽह्नि शय्यां दद्याद्विलक्षणाम्। काञ्चनं पुरुषं तद्वत् फलवस्त्रसमन्वितम्। संपूज्य द्विजदाम्पत्यं नानाभरणभूषणैः। वृषोत्सर्गश्च कर्त्तव्यो देया च कपिला शुभा' इति मत्स्यपुराणेनैकवाक्यत्वात्। अशौचान्ताद्द्वितीयेऽह्नीति श्रुतेर्निमित्तत्वेन तदुल्लेखः 'मासपक्षतिथीनाञ्च निमित्तानाञ्च सर्वशः। उल्लेखनमकुर्वाणो न तस्य फलभाग्भवेत्' इति ब्रह्माण्डभविष्यपुराणोक्तेः। ननु तस्य निमित्तत्वे किं मानमिति चेत् तस्य कालत्वेन 'निमित्तं कालमादाय वृत्तिर्विधिनिषेधयोः' इति कालमाधवीयधृतवृद्धगार्ग्यवचनम्। आदायेत्यत्र आश्रित्येति कल्पतरुनिर्णयविवेकयोः पाठः। अतएवावश्यकत्वेन कालस्य निमित्तत्वेन पर्वादिक्रियमाणस्य नित्यनैमित्तकत्वमाह मार्कण्डेयपुराणम्। 'नित्यं नैमित्तकं ज्ञेयं पर्वश्राद्धादिपण्डितैः'। अत्र वैदिकक्रियानिमित्तस्य कालविशेषस्य शुचि तत्कालजोविल्वेनाधिविशेषणीभूतस्य परतो या सप्तमी सा नाधिकरणे यो जटाभिः सभुङ्क्ते इतिवत् कालस्य विशेषणत्वेन तद्बाधकतृतीयाप्राप्तेः किन्तु कालभावयोः सप्तमीत्यनेन तृतीयाबाधिका पुनः सप्तमी विधीयते शरदि पुष्प्यन्ति सप्तच्छदा इति वत् अतः कर्त्तृविशेषणीभूतस्यापि कालस्य वैदिकक्रियानिमित्ततयोल्लेखः। अशौचव्यपगमस्य तु विलक्षणशय्यादानादौ वचनानुपात्तत्वान्नोल्लेखः आद्यश्राद्धीयविष्णुसूत्रश्रुतस्याशौचव्यपगमस्यापि ध्वंसस्वरूपत्वेनानन्तस्य विशेषकल्पनायां सर्ववर्णसर्वाशौचसाधारणत्वेन अशौचान्तद्वितीयदिनस्यैव मत्स्यपुराणश्रुतस्य कल्प्यत्वमिति सद्यःशौचेऽपि न तदुल्लेखासङ्गतिः। 'यावदशौचं पिण्डान्

द्यात्' इति विष्णुसूत्रानुरोधेन 'हे सम्ध्ये सद्य इत्याद्य-क्षिसम्ध्यैकाह्निकः स्मृतः। द्वावङ्गावेकरात्रिश्च पक्षिणीत्यभि-धीयते'। इति भट्टनारायणधृतवचनेन सद्यःपदस्य सज्योती-रूपकालपरत्वात् आभरणपदं श्रवणकुण्डलवत् भूषणस्य शरीरयुक्तत्वलाभाय भूषणपदं क्रियापरं अतो न पौनरुक्त्यं द्विजदम्पती पूजयित्वा काञ्चनं प्रेतप्रतिकृतिरूपपुरुषं कृत्वा फलवस्त्रयुतं शय्यायामारोप्य भूषितद्विजदम्पतीभ्यां शय्यां दद्यादिति हारलताकृतः तेषामयमाशयः उपस्थितं द्विजं विहाय पात्रान्तरकल्पने गौरवात् तद्वदिति च प्रेतवदित्येतत्-परम् अतएवोक्तं प्रेतप्रतिकृतिरूपमिति स्पष्टमाह पद्मपुराणं संपूज्य द्विजदाम्पत्यं नानाभरणभूषणैः' इत्यन्तं मत्स्यपुरा-णोक्ततुल्यमभिधाय 'उपवेश्य च शय्यायां मधुपर्कं ततो ददेत्' इत्यभिधानात्। भविष्योत्तरेऽपि 'कार्य्यस्तु पुरुषो हैमस्तस्या-मारोपयेच्च तम्। पूजयित्वा प्रदातव्या मृतशय्या यथोदिता'। अतएव फलवस्त्रयुतप्रेतप्रतिकृतिरूपकालच्च पुरुषवतीत्वेन शय्याया वैलक्षण्यं मङ्गच्छते एवं कर्मभेदाय चकारद्वयमभि-हितमुत्तरार्द्धे। अतएव प्रागुक्ताग्निपुराणवचने एकादशाहे केवलवृषोत्सर्गोऽभिहितः अतएव अशौचान्ताद्द्वितीयदिने वृषोत्सर्गे द्विजदम्पतीपूजनमावश्यकमिति निरस्तं त्रिपक्षादौ वृषोत्सर्गे विलक्षणशय्यादानादौ प्रमाणं नास्ति न च 'देव-तावृषोत्सर्गचूड़ाकरणमेखलाः। मङ्गल्यमभिषेकश्च मलमासे विवर्जयेत्' इति गृह्यपरिशिष्टीयान्मलमासेऽपि प्रेतवृषोत्सर्गो नास्तीति वाच्यम् 'अशौचान्तेऽपि कर्त्तव्यं वृषोत्सर्गादिकं मृतैः। मलिम्लुचादिदोषस्तु न ग्राह्यस्तत्र कश्चन' इति विशारदप्रभृतिधृतवचनात्। 'नैऋतानां हितार्थाय जगत्-कर्त्ता नृणां प्रभुः। निर्ममे मलिनं मासं प्रेतानाञ्च हिताय

च। अतः प्रेतक्रियाः सर्वाः कर्त्तव्यास्तु मलिम्लुचे' इति भविष्यपुराणाच्च। एतद्बहुधा शुद्धितत्त्वे विवृतमिति नेह वितन्यते। प्रेतवृषोत्सर्गे वृद्धिश्राद्धं न कर्त्तव्यं 'नार्वाक् संवत्सराद्वृद्धिर्वृषोत्सर्गे विधीयते। सपिण्डीकरणादूर्द्ध्वं वृद्धिश्राद्धं विधीयते' इत्युशनसो वचनात् वृषलक्षणमाह कात्यायनः 'अव्यङ्गो जीववत्सायाः पयस्विन्याः सुतो बली। एकवर्णो द्विवर्णो वा यो वास्यादष्टकासुतः। यूथादुच्चतरो यस्तु समो वा नीच एव वा। समावरान् समपरानुत्सृष्टस्तारयेद्वृषः'। अष्टकासुतः अष्टकासु जातः कामधेनुप्रभृतिषु मत्स्यपुराणं 'चरणानि मुखं पुच्छं यस्य श्वेतानि गोपतेः। लाक्षारससवर्णश्च तं नीलमिति निर्दिशेत्। वृष एव सयोत्स्रष्टव्यो न सन्धार्य्यो गृहे वसन्। तदर्थमेषा चरति लोके गाथा पुरातनी एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत्। गौरीं वाप्युद्वहेद्भार्य्यां नीलं वा वृषमुत्सृजेत'। तृतीयचरणन्तु यजेद्वाथ अश्वमेधेनेति नारायणोपाध्यायैर्लिखितं वत्सतरीविशेषयति 'अग्रतो लोहिता पश्चौ पार्श्वाभ्यां नीलपाण्डरे। पृष्ठतश्च भवेत् कृष्णा वृषभस्य च मोक्षणे'। वेधकर्मार्थमण्डपान्तर्वितानमुक्तं हयशीर्षपञ्चरात्रम्। 'नवेन चित्रवस्त्रेण वितानं कल्पयेद् बुधः'। अत्र च 'शुक्लवासाः शुचिर्भूत्वा ब्राह्मणान् स्वस्तिवाच्य च। कीर्त्तयेद्भारतञ्चैव तथा स्यादक्षयं हविः' इति दानधर्मस्थवृषोत्सर्गप्रकरणीयवचनात् अक्षयहविष्ट्कामेन स्वस्तिवाचनानन्तरं भारतनामोच्चारणं कार्य्यं 'यदह्ना कुरुते पापं ब्राह्मणस्त्विन्द्रियैश्चरन्। महाभारतमाख्याय पूर्वां सन्ध्यां विमुच्यति' इति आदिपुराणोक्तप्रातर्महाभारतोच्चारणवत् राढ़देशीयास्तु विराटपर्व पाठयन्ति भविष्ये 'वृषोत्सर्गश्च द्विविधो जीवतो वा मृतस्य च'। इत्युपक्रम्य 'अनुज्ञां गृह्य

च पुनर्मण्डपेऽपि पूजयेद् घटे। ग्रहांश्चैव यजेत् पश्चात् विष्णुं संपूजयेत्ततः'। छन्दोगपरिशिष्टं 'गोशालायां प्रणीयाग्निं संस्कृत्य व्रीहितण्डुलान्। अग्निपूषेन्द्रेश्वरेभ्यो निर्वपेत् पायसं चरुम्'। गोशालायामिति प्रधानकल्पः वृषभ इत्युपक्रम्य 'उत्स्रष्टव्यो विधानेन श्रुतिस्मृतिनिदर्शनात्। प्रागुदक् प्लवने देशे मनोज्ञे निर्जने वने'। इति ब्रह्मपुराणेन देशान्तरविधानात् प्रणीयाग्निमिति सङ्कल्पमाह हारीतः 'मनसा सङ्कल्पयति वाचाभिलपति कर्म्मणा चोपपादयति' इति भविष्यपुराणञ्च 'सङ्कल्पेन विना राजन् यत्किञ्चित् कुरुते नरः। फलञ्चाल्पाल्पकन्तस्य धर्मस्यार्द्धक्षयो भवेत्' इति पूर्वोक्तफलाभिसन्धानेन सङ्कल्पानन्तरं यजमान एव प्रथमं ब्रह्मवरणादिकं कुर्य्यात् 'दानवाचनान्वारम्भणवरणव्रतप्रमाणेषु यजमानं प्रतीयात्' इति कात्यायनसूत्रात् तत्र ब्रह्मवरणं प्रथमतो ज्योतिष्टोमे ब्रह्मोद्गातृहोत्रध्वर्य्यु इत्यादिदर्शनेन अत्राकाङ्क्षादृष्टकल्पनाया न्याय्यत्वात् सुगतिसोपानप्रभृतयोऽप्येवं गृह्यासंग्रहे 'द्यूते च व्यवहारे च प्रव्रते यज्ञकर्म्मणि। यानि पश्यन्त्युदासीनाः कर्त्ता तानि न पश्यति। एकः कर्मनियुक्तः स्यात् द्वितीयस्तन्त्रधारकः। तृतीयः प्रब्रूयात् प्रश्नं ततः कर्म समाचरेत्'। प्रव्रते प्रकृष्टव्रते पूर्वोक्तहेतोर्द्वितीयवचनं कर्म नियुक्त आचार्य्यः। स च ब्रह्माङ्गके कर्म्मणि ब्रह्मा स्वयं होमाकरणे होतापि स्वयं प्रधानकर्माकरणे प्रतिनिधिरपि तन्त्रधारकः पुस्तकधारकः प्रश्नवक्ता सदस्यः। वरणविधिमाह पारस्करः 'आसनमाहार्य्याह साधुभवानास्ताम् अर्चयिष्यामो भवन्तमिति' आसनमाहर्य्याह आसनीयं संस्थाप्याह साधुभवानास्तामिति साध्वहमासे इति प्रतिवचनम् अर्चयिष्यामो भवन्तमिति पुनरुक्ते अर्चय इति

प्रतिवचनं सामर्थ्यादिति हरिशर्मा ब्रह्मस्थापनञ्च होमकर्तृक-मेव अग्निमुपसमाधाय दक्षिणतो ब्रह्मासनमास्तीर्य्येति कात्यायनेन एककर्त्तृकत्वाभिधानात्। प्रणीयाग्निमिति गोभिलाद्युक्तसर्वहोमसाधारणप्रकारेण अग्निं स्थापयित्वा। तमाह गोभिलः। 'अनुगुप्ता अप आहृत्य उदकप्लवनं देशं समं वा परिसमूह्योपलिप्य मध्यतः प्राचीं रेखामुल्लिख्योदीचीञ्च संहतां पश्चान्मध्ये प्राचीं रेखामुल्लिख्य मध्ये प्राचीस्तिस्र उल्लिख्याभ्युक्षेत लक्षणावृदेषा सर्वत्रेति' अनुगुप्ता आच्छादिताः पतितादिभिरस्पृष्टा इति यावत् प्राङ्नीचादिदेशफल-माह गृह्यासंग्रहे गोभिलपुत्रः 'प्राङ्नीचं ब्रह्मवर्चस्यमुदङ्नीचं यशोत्तमम्। पित्र्यं दक्षिणतो नीचं प्रतिष्ठालम्भनं समम्' यशोत्तममित्यत्र सान्ता अप्यदन्ता इत्युक्तेरदन्तो यश-शब्दः गयाशिरवत्। परिसमूह्य सर्वतः पांशूनुत्सार्य्य तत उपलेपनं तत्करणमाह गृह्यासंग्रहः 'इन्द्रेण वज्राभिहतः पुरावृत्रो महासुरः। मेदसा तस्य संक्लिन्ना तदर्थमुपलेपयेत्'। मध्यतः स्थण्डिलाभ्यन्तरे दक्षिणांशे न तु मध्यमांशे। उदगन्तैकविंशाङ्गुलरेखानुरोधात् अन्यथा हस्तप्रमाणे स्थण्डिले तदनुपपत्तेः 'प्राचीं प्रागगताम् उदीचीञ्च संहतां पश्चादिति प्रागगतायाः पश्चिमे भागे संलग्नामुदगग्रां मध्ये उदगगतायाः प्राचीः प्रागग्रास्तिस्रो रेखा उल्लिख्याभ्युक्षेतेति' रेखाभ्य मृत्ति-कोद्धारणपूर्वकमभ्युक्षेत 'उल्लिख्योद्धृत्याभ्युक्षेत' इति कात्यायन-सूत्रात् उत्करप्रक्षेपदेशमाह गृह्यासंग्रहः। 'उत्करं गृह्य रेखाभ्योऽरत्निमात्रं निधापयेत्। द्वारमेतत् पदार्थानां प्रागुदीच्यां दिशि स्मृतम्'। लक्षणावृदेषा सर्वत्रेति परिसमूहनादि-परिषेकान्तं कर्मलक्षणसंज्ञकं तस्य लक्षणस्य आहृत्प्रक्रिया सर्वत्र यत्र यत्र अग्निप्रणयनं तत्र रेखाप्रमाणमाह छन्दोग-

परिशिष्टं 'दक्षिणे प्रागतायास्तु प्रमाणं द्वादशाङ्गुलम्। तन्मूललग्नायोदीची तस्या एवं नवोत्तरम्। उदगतायां संलग्नाः शेषाः प्रादेशमात्रिकाः। सप्तसप्ताङ्गुलांस्त्यक्त्वा कुशे-नैव समुल्लिखेत्'। नवोत्तरं नवाधिकं द्वादशाङ्गुलम् एकविंश-त्यङ्गुलमित्यर्थः। शेषाः उक्तरेखयोरवशिष्टास्तिस्रः कुशेनेति सर्वत्राभिसम्बध्यते। एवकारेण शाखान्तरोक्तस्फ्यादिव्या-वृत्तिः। मानकर्त्तारमाह स एव 'मानक्रियायामुक्तायामनुक्ते मानकर्त्तरि। मानकृद् यजमानः स्याद्विदुषामेष निश्चयः'। अङ्गुष्ठाङ्गुलिमानस्वरूपमाह स एव। अङ्गुष्ठाङ्गुलि-मानस्तु यत्र यत्रोपदिश्यते। तत्र तत्र वृहत् पर्वग्रन्थि-भिर्मिनुयात् सदा' स एव यजमानासन्निहितहोमे तु साधारणाङ्गुलिमानं यथा कपिलपञ्चरात्रम् 'अष्टभिस्तैर्भवे-ज्ज्येष्ठं मध्यमं सप्तभिर्यवैः। कन्यसंषड्भिरुद्दिष्टमङ्गुलं मुनि-सत्तम'। तैः प्रक्रंस्यमानयवैः। कन्यसं कनिष्ठं मानन्तु पार्श्वेन 'षड्यवाः पार्श्वसम्मिताः' इति कात्यायनवचनात्। अग्नि-स्थापनमन्त्रमाह गोभिलः 'भूर्भुवः स्वरित्यभिमुखमग्निं प्रण-यन्ति' इति अभिमुखं होतभिमुखं पात्रं नीत्वावर्त्त्य स्थापयतीति हरिशर्म्मधृतवचनात्। प्रणयन्ति रेखोपरि स्थाप-यन्ति अग्निस्थापनपर्य्यन्तं सव्यहस्तप्रादेशस्य भूमौ निधान-माह गृह्यासंग्रहः। 'सव्यं भूमौ प्रतिष्ठाप्य प्रोल्लिखेत् दक्षिणेन तु। तावन्नोत्थापयेत् पाणिं यावदग्निं समापयेत्' तत्प्रकारमाह गृह्यासंग्रह छन्दोगपरिशिष्टं 'जातस्य लक्षणं कृत्वा तं प्रणीय समिध्य च। आधाय समिधश्चैव ब्रह्माण-मुपवेशयेत्' जातस्यारण्याद्युत्पन्नाग्नेरिति साग्निपरम्। लक्षणं प्रागुक्तं रेखादि। ओम् 'क्रव्यादमग्निं' प्रहिणोमि दूरं यमराज्यं गच्छतु रिप्रवाह इति मन्त्रेणाग्नेः क्रव्यादांश

परित्यज्य मन्त्रलिङ्गात् दक्षिणस्यां दिशि प्रणीय उक्तप्रकारेण स्थापयित्वा यद्यग्निस्थापनानन्तरं कर्मकाले बुद्ध्याद्यागन्तुकया तदग्निरन्यत्र नीयते तदा पुनर्भूसंस्कारः कार्य्यः परिसमूह्यो-पलिप्य उल्लिख्योद्धृत्याभ्युक्ष्येति संस्कारोऽनुगतोऽग्नौ भूय इति गृह्यान्तरात् तमग्निं समिध्य ज्वालयित्वा समिधं तूष्णीं तत्र दत्त्वा वक्ष्यमाणक्रमेण ब्राह्मणमुपवेशयेत्। ज्वालनं मुखेनाह गृह्यासंग्रहः 'वस्त्रेण तु भवेद् व्याधिः शूर्पेण धननाशनम्। पाणिना मृत्युमादत्ते मुखेन सिद्धिभाग्भवेत्'। समिल्लक्षणं तत्रैव 'नाङ्गुष्ठादधिका नोना समित् स्थूलतया क्वचित्। न निर्मुक्ता त्वचा चैव न स कीटा न पाटिता। प्रादेशानाधिका नोना न तथा स्याद्विशाखिका। न सपत्रा न निर्वीर्य्या होमेषु च विजानता'। विशाखिका विविधशाखायुक्ता। तथा 'शुभं पात्रन्तु कांस्यं स्यात्तेनाग्निं प्रणयेद् बुधः। तस्याभावे शरावेण नवेनाभिमुखश्च तत्। सर्वतः पाणिपादान्तः सर्वतो-ऽक्षिशिरोमुखम्। विश्वरूपो महानग्निः प्रणीतः सर्वकर्मसु'। एवञ्चास्याग्निप्रणयनानन्तरं पाठो युज्यते मन्त्रलिङ्गात् अन्यथा स्थापनानन्तरम् एतदभिधानं व्यर्थं स्यात्। ब्रह्मोपवेशन-प्रकारमाह गोभिलः 'अग्रेणाग्निं परिक्रम्य दक्षिणतोऽग्नेः प्रागग्रान् कुशानास्तीर्य्य तेषां पुरस्तात् प्रत्यङ्मुखस्तिष्ठन् सव्यस्य पाणेरङ्गुष्ठेनोपकनिष्ठया चाङ्गुल्या ब्रह्मासनात्तृणमभि-संगृह्य दक्षिणापरमष्टमं देशं निरस्यति निरस्तः परावसुरिति अप उपस्पृश्याथ ब्रह्मासन उपविशति आवसोः सदने सीदा-मीत्यग्न्यभिमुखो वाग्यतः प्राञ्जलिरास्ते आकर्मणः पर्य्यव-सानात् भाषेत यज्ञसंसिद्धिं नायज्ञीयां वाचं वदेत् तदा वैष्ण-वीमृचं यजुर्वा जपेदपि वा नमो विष्णवे इत्येवं वा ब्रूयात्। यद्युवा उभयञ्चिकीर्षेद्धौत्रं ब्रह्मत्वञ्च तेनैव कल्पेन छत्रम् उत्त-

रासङ्गम् उदककमण्डलुं दर्भवटुं वा ब्रह्मासने निधाय तेनैव परावृत्याथोऽन्यच्चेष्टेतेति'। अग्रेण पूर्वया दिशा प्रदक्षिणेनाग्निं गत्वा अग्नेर्दक्षिणस्यां दिशि प्रागग्रान् कुशानास्तीर्य्य अन्यच्चेष्टेतेति वक्ष्यमाणेन सम्बन्धः न तु निरस्यतीत्यनेन तत्र ब्रह्मेति कर्तृनिर्देशात् न च ब्रह्मेत्यासनेन सम्बन्धः उपवेशनात् पूर्वं तत्सम्बन्धाभावात् ततश्च दर्भास्तरणान्तं याजमानिकं कर्म ब्रह्मा तु तेषां पुरस्तात् आस्तृतकुशानां पूर्वदिग्भागे तिष्ठन्ननुपविष्टः सव्यस्य वामस्य उपकनिष्ठया अनामिकया आसनात् यजमानास्तृतात् तृणं कुशपत्रं गृहीत्वा दक्षिणपश्चिमाष्टमदेश नैर्ऋतकोणमिति यावत् निरस्तः परावसुरित्यनेन क्षिपति अप उपस्पृश्य दक्षिणपाणिना जलं स्पृष्ट्वा अथानन्तरमासने ब्रह्मा ब्रह्मत्वेन परिकल्पित उपविशति आवसोः सदने सीदामीति मन्त्रेण एवमेव भट्टनारायणव्याख्यानात् तेषां पुरस्तादित्यादि आवसोः सदने सीदेत्यन्तं कर्म यजमानकर्तृकं सीदामीति प्रतिवचनं ब्रह्मकर्तृकमिति भवदेवभट्टकल्पनं हेयमेव सीदेति सूत्रानुपात्तत्वाच्च भाषेत यज्ञसंसिद्धिमिति चोत्वान्यथा क्रियमाणे कर्मणि तत्संसिद्ध्यर्थम् एतदेवं कुरु एतत् कृत्वा एवं कुर्वित्यादि भाषेत अत्राप्ययज्ञीयामसंस्कृतां वाचं वदेद् यदि तदा वैष्णव्यृचम् इदं विष्णुरिति यजुर्विष्णोवराटमसीति नमो विष्णव इति प्रकारत्रितयान्यतमप्रकारं प्रायश्चित्तमिति यद्युवाऽशक्तावुत्तरासङ्गमुत्तरीयं दर्भवटुः कुशब्राह्मणः सचापरिमितकुशदलैर्भवतीति भट्टभाष्यात् एकपञ्चाशतान् कुशानिति भवदेवभट्टलिखनाच्च दलैर्व्यवक्रियते अत्र परिमितसंख्यात्वमाह छन्दोगपरिशिष्टं 'यज्ञवास्तुनि मुष्ट्याञ्च स्तम्बे दर्भवटौ तथा। दर्भसंख्या न विहिता विष्टरास्तरणेषु च' इति छन्दोगपरम् अन्येषान्तु शान्तिदीपिकायां

'सप्तभिर्नवभिर्वापि सार्द्धद्वितयवेष्टितम्। यो(ॐ)ङ्कारेणैव मन्त्रेण द्विजः कुर्य्यात् कुशद्विजम्'। कर्मोपदेशिन्यान्तु नवभिरित्यत्र पञ्चभिरिति पाठः एतदेकवाक्यतया 'द्विरावृत्त्या च मध्ये वै चार्द्धवृत्त्यास्तदेशतः। ग्रन्थिप्रदक्षिणावर्त्तः स ब्रह्मा ग्रन्थिसंज्ञकः' इति कालिकापुराणोक्तं व्याख्येयं रत्नाकरे गृह्यासंग्रहपरिशिष्टम्। 'ऊर्द्धकेशो भवेद् ब्रह्मा लम्बकेशस्तु विष्टरः। दक्षिणावर्त्तको ब्रह्मा वामावर्त्तस्तु विष्टरः'। तेनैवेत्येवकारेण ब्रह्मकर्म स्वयं कर्त्तृत्वेऽपि आवसोः सदने मौदामौत्यस्य मन्त्रस्योह प्रतिषेधार्थः। स्वयञ्चेदुभयं कुर्य्यादिति छन्दोगपरिशिष्टात् कृताकृतावेक्षणवत् स्वयं तद्देशोपवेशनस्य कर्त्तव्यत्वात् कुशमयब्राह्मणादिद्वारा तदुपपत्तेः तेनैव पूर्ववर्त्मना अथेति विशिष्टमानन्तर्य्यं द्योतयति तच्च द्रव्याद्युपयोगक्रमेण अग्नेरुत्तरतः उदगग्राणि पूर्वपूर्वाक्रमेणासाद्य वीक्ष्य प्रोक्षणं तदनन्तरं ब्राह्मणोपवेशनमित्यर्थः अन्वहक्ष्यमाणं भूमिजपादिकर्म चेष्टेत् कुर्य्यात् यजमानः परस्मैपदं छन्दोवत् सूत्राणि भवन्तीत्युक्तेः। तथा द्रव्यासादनमाह कात्यायनः 'प्राच्यं प्राञ्चमुदगग्नेरुदगग्रं समीपतः। तत्तथासादयेद् द्रव्यं यद् यथा विनियुज्यते'। इति भट्टभाष्यधृतञ्च 'द्रव्याणामुपक्लृप्तानां होमीयानां यथाक्रमम्। सादयन् वीक्षणं कुर्य्यादद्भिरभ्युक्षणं तथा'। छन्दोगपरिशिष्टम्। 'आज्यस्थाली च कर्त्तव्या तैजसद्रव्यसम्भवा। माहेयी वापि कर्त्तव्या नित्यं सर्वाग्निकर्मसु'। एवं क्रमेणाग्निं प्रणीय व्रीहितण्डुलान् इति शरत्पक्वधान्यतण्डुलानित्यर्थः अभावे शालितण्डुलान् 'यथोक्तवस्तुसम्पत्तौ ग्राह्यं तदनुकारि यत्। यवानामिव गोधूमाव्रीहीणामिव शालयः'। इति कात्यायनोक्तेः अत च हविर्निर्वपति व्रीहीन् यवान् वेति गोभिलपरिभाषाभि-

षेषु व्रीहिषु यद् व्रीहिग्रहणं तद्वैकल्पिकयवनिरासनियमार्थं सिद्धे सत्यारम्भस्य नियमार्थत्वात् संस्कृत्य निर्वापादिक्रमेण निष्पाद्याग्न्यादिदेवेभ्यो होमाय पायसं पयोभिः पक्वं भविष्यन्तं चरुं निर्वपेत् अग्नावारोपयेत् यद्यपि पूषाचपिष्टकभागदन्तको हि स इति श्रुत्या पूष्णः पैष्टचरुरुचितस्तथापि भूयो विरोधे स्वल्पमन्याय्यमिति न्यायेनाग्नीन्द्रेश्वराणामनुरोधात् तण्डुलेन चरुमाह छन्दोगपरिशिष्टं 'यद्यप्यदन्तकः पूषा पैष्टमत्ति सदा चरुम्। अग्नीन्द्रेश्वरसामान्यात्तण्डुलोऽत्र विधीयते'। पिष्टचरुस्तु केवलपूषदैवतपरः। सर्वत्र चरुहोमप्रकारमाह गोभिलः अथोदूखलमूषले प्रक्षाल्य शूर्पञ्च पश्चादग्नेः प्रागग्रान् दर्भानास्तीर्य्योपसादयति अथ हविर्निर्वपति व्रीहीन् यवान् वा कांस्येन चरुस्थाल्या वा अमुष्मै त्वाजुष्टं निर्वपामीति देवतानामोद्देशं सकृद् यजुषा द्विस्तूष्णीम् अथ पश्चा त् प्राङ् मुखोऽवहन्तुमुपक्रमते दक्षिणोत्तराभ्यां पाणिभ्यां त्रिःफलीकृतांस्तण्डुलां स्त्रिर्देवेभ्यः प्रक्षालयेद्विर्मनुष्येभ्यः सकृत् पितृभ्य इति पवित्रान्तर्हितांस्तण्डुलान् वपेत् कुशलशृतमिव स्थालीपाकं श्रपयेत् प्रदक्षिणमुदा युवन् शृतमभिघार्य्य उदगुद्वास्य प्रत्यभिघारयेदिति। उपसादयति स्थापयति देवतानामोद्देशं देवतानामोच्चारणं यथा स्यात्तथा अमुष्मै त्वाजुष्टं निर्वपामीति मन्त्रेणोदूखलोपरि व्रीह्यादीन् कंसादिना सकृन्निर्वपेत् निक्षिपेत् अत्रामुष्मा इत्यत्र चतुर्थ्यन्त तत्तद्देवतानामोच्चारणम् अतएव कात्यायनः 'असाविति नाम गृह्णातीति' नारायणीयेऽपि 'अदःपदं हि यद्रूपं यत्र मन्त्रे हि दृश्यते। साध्याभिधानं तद्रूपं तत्र स्थाने नियोजयेत्' अदःपद एवोक्तो न तु विरूपाक्षजपादाविदमित्यादौ एवञ्चाग्नये त्वाजुष्टं निर्वपामीति सामगानां यजुःप्रयोगः बहुदेवस्य-

चरौ तत्तद्देवतानामभिः प्रत्येकं निर्वापः भन्ननिर्वापौ तु तन्त्रे-णैव होमोऽपि पृथक् निर्वापपरिमाणन्तु होमसंख्याशेषस्थि-त्यनुसारेणेत्याह छन्दोगपरिशिष्टं 'देवतासंख्यया ग्रह्यनिर्वा-पांश्च पृथक् पृथक्। तूष्णीं द्विरेव गृह्णीयाद्धोमस्यापि पृथक् पृथक्। यावता होमनिष्पत्तिर्भवेद् या यत्र कीर्त्तिता। शेषञ्चैव भवेत् किञ्चित् तावन्तं निर्वपेच्चरुम्'। यद्यपि देव-तासंख्ययेति वचनम्। चरुः समसनीयो य इत्युपक्रम्य पठितं तथाप्याकाङ्क्षया लाघवेन च चरुसामान्यपरमिति। गोभिले निर्वापमात्रश्रुतेर्यजुर्वेदिकसमन्त्रकग्रहणप्रोक्षणे सामगेन न कार्य्ये। यजुःपरिभाषामाह जैमिनिः 'शेषे यजुःशब्द इति' शेषे ऋक्सामभिन्ने मन्त्रजाते। ततश्च यन्मन्त्रजातं प्रश्लिष्य पठितं गानपादभेदरहितं तद् यजुरिति अत्र विद्याकरवाज-पेयौ तु शास्त्रावधारणवेलायां हि यत्र प्रयोजनाभावादिति निश्चयः तत्रैव तदुपादानादिलोपः शास्त्रार्थः यथा कृष्णलेऽव-घातादिलोपः यत्र त्वनुष्ठानवेलामेव पुरुषदोषेण प्रयोजना-भावो ज्ञायते तदा प्राक् तन्निश्चयात् शास्त्रप्रापितपदार्थो नियमापूर्वमात्रार्थमनुष्ठेयः अतएव प्रकृतावप्यालस्यादिना व्रीह्यादिस्थाने तण्डुलादिषु गृहीतेषु अवघातादि समाचरन्ति याज्ञिकाः पठन्ति च 'घाते न्यूने तथा छिन्ने साध्याये मान्त्रिके तथा। यत्र मन्त्राः प्रयोक्तव्या मन्त्रा यज्ञार्थसाधकाः'। मान्त्रिके मन्त्रसाध्येऽवघातादौ न्यूने तत्काले मन्त्रपाठाभावेऽपि यज्ञ-काले मन्त्राः प्रयोक्तव्याः अस्मिंस्तु कल्पे मन्त्रार्थज्ञानस्य नास्त्युपयोगः इत्यमेव इदानीं प्रयोगानुष्ठानमित्याह। चरु-स्थालीपरिमाणमाह छन्दोगपरिशिष्टं 'तिर्य्यगूर्द्ध्वसमिन्मात्रा दृढ़ानातिविस्तृतमुखी। मृण्मय्यौडुम्बरी वापि चरुस्थाली प्रश-स्यते'। गर्भप्रस्तारदैर्घ्याभ्यां प्रादेशप्रमाणा चरुस्थाली

मौडुम्बरी ताम्रमयी एषा पायसचरावपि न विरुद्धा। 'पयो-नुद्धृतसारञ्च ताम्रपात्रे न दुष्यति' इति स्मृतिसागरसारधृत-वचनात्। अतएव शारदातिलके। 'ततश्च संस्कृते वह्नौ गोक्षीरेण चरुं पचेत्। अम्लेन क्षालिते पात्रे नवे ताम्र-मयादिके'। दक्षिणोत्तराभ्यामिति दक्षिण उत्तर उपरि ययोः पाण्योस्ताभ्यां मुसलं गृहीत्वेति शेषः त्रिःफलीकृतान् त्रिधा वितुषीकृतान् कण्डनप्रच्छटनाभ्यामिति शेषः' पवित्रान्त-र्हितान् पवित्रमन्तर्हितं व्यवहितं येषां तान्। तेन चरु-स्थाल्यामुत्तराग्रं पवित्रं निक्षिप्य तण्डुलान् निक्षिपेत् कुशल-शृतमिव कुशलेनात्र परिपाकनिपुणेन शृतं यथा न दग्धं भवति नातिक्लिन्नं न मन्दपक्कं तथा स्थालीपाकं यथा स्यात् तथा श्रपयेत् अतएव छन्दोगपरिशिष्टे 'स्वशाखोक्तश्चरुः स्विन्नो ह्यदग्धो कठिनः शुभः। न चाति शिथिलः पाच्यो न च वीतरसो भवेत्' वीतरसो गालितमण्डः। प्रदक्षिणमुदा-युवन्निति दक्षिणावर्त्तं यथा स्यात्तथा मेक्षणेनोर्द्ध्वमीषदवघट्ट-यन् मिश्रयन् युमिश्रण इत्यस्य रूपम्। शृतमभिघार्य्य इति स्फुटितं चरुमाज्यस्रुवेणाप्लाव्य उदगग्नेरुत्तरस्याम् उद्वास्यो-त्तीर्य्य प्रत्यभिघारयेत् पुनर्घृतेन तथा सेचयेत् वृषोत्सर्गेत्यभि-घारणद्वयात् पूर्वं ज्वलदङ्गारेण अवद्योतनमाह छन्दोगपरि-शिष्टम् 'अधिश्रितम् अवद्योत्य सुशृतं चाभिघारयेत्। पश्चात् पुनरवद्योत्य पुनः प्रत्यभिघारयेत्'। मेक्षणादीनां प्रमाण-माह छन्दोगपरिशिष्टम् 'इध्मजातीयमिध्मार्द्धप्रमाणं मेक्षणं भवेत्। वृत्तं वाचञ्च पृथ्वग्रमवदानक्रियाक्षमम्'। इध्मार्द्ध-प्रमाणं प्रादेशद्वयमिध्मस्य प्रमाणं परिकल्पितमित्युक्तं तदर्द्धम् 'एषैव दर्वी यस्तत्र विशेषस्तमहं ब्रुवे। दर्वी द्व्यङ्गुलपृथ्वग्रा तुरीयेणास्तु मेक्षणम्। मुसलोदूखले वार्क्षे स्वायते सुदृढे

तथा। इच्छाप्रमाणे भवतः शूर्पं वैणवमेव च'। तत्र तिर्य्यगूर्द्धेत्यादि वैणवमेव चेत्यन्तेन चरुकर्म्मभिधाय भूमि-जपपरिसमूहनहस्तविन्यासमाह छन्दोगपरिशिष्टं 'दक्षिणं वामतो वाह्यमात्माभिमुखमेव च। करं करेण कुर्वीत करणिन्यस्य कर्म्मणः। कृत्वाग्न्यभिमुखौ हस्तौ स्वस्थानस्थौ सुसंहतौ। प्रदक्षिणं तथासीनः कुर्य्यात् परिसमूहनम्'। करेणेति षष्ठ्यर्थे तृतीया करं करस्येति पाठान्तरम्। दक्षिणं करं वामतो वामकरस्य वाह्यं कुर्य्यात् दक्षिणहस्तमधोमुखं तथाविधवामहस्तपृष्ठोपरिभावेन विपर्य्यस्तमात्माभिमुखं कृत्वा भूमिजपं कुर्य्यादित्यर्थः। अग्न्यभिमुखौ नात्माभि-मुखौ स्वस्थानस्थौ न भूमिजपवद्धस्तौ सुसंहतं विस्तृतसंलग्नौ तथात्वेनैवाग्नेः परिसमूहनं विक्षिप्तावयवानामेकत्रीकरण-रूपं सुकरं स्यात् एवमेव भट्टनारायणोपाध्यायाः एतेन दक्षिणहस्तेन कुशान् गृहीत्वा इति भवदेवभट्टलिखनं निष्प्र-माणकम्। इमं स्तोममर्हत इति तृचेन परिसमूहेदिति सूत्रस्य परिशेषोऽयम् एतदनुसारादेव ब्रह्मस्थापनचरुस्थाप-नानन्तरं भूमिजपपरिसमूहनादि भवदेवभट्टवीरेश्वरोक्तं युक्तं भट्टभाष्ये तु भूमिजपं तृचेन परिसमूहनं कुर्य्यात् पश्चाद् ब्रह्मोपवेशनमिति। सरलापरिशिष्टप्रकाशयोस्तु भूमिजपा-नन्तरं चरुश्रपणमित्युक्तम्। अग्निस्तरणमाह गोभिलः। 'अग्निमुपसमाधाय कुशैः समन्तात् परिस्तृणुयात् पुरस्ता-द्दक्षिणतः उत्तरतः पश्चादिति सर्वतस्त्रिवृतं पञ्चवृतं बहुल-मयुग्ममसंहतं प्रागग्रैर्मूलानि छादयन्निति'। उपसमाधाय प्रज्वाल्य समन्तात् सर्वतः पुरस्तादित्यनेन क्रमेण सर्वतः सर्वासु दिक्षु त्रिवृतं पञ्चवृतं वा त्रिःकृत्वः पञ्चकृत्वो वा। बहुलं बहुदलकम्,अयुग्मं युग्मभिन्नम् असंहतमसंलग्नं पृथक्

पृथक् त्रिवृतं पञ्चवृतं वेत्यनेनायुग्मे सिद्धेऽयुग्मग्रहणमेका-
वृतस्यापि प्राप्त्यर्थं तथाच गृह्यान्तरं सकृत्त्रिर्वा प्रतिदिशं
प्रदक्षिणम् अग्निं स्तृणातीति एवमेव भट्टनारायणचरणाः
तत्र सकृदावृतमग्रकृतविषयं पूर्वास्तृतावृतानां मूलानि पश्चादा-
स्तृताग्रैः करणभूतैश्छादयन् परिस्तृणुयात् एवञ्च प्रतिदिशं
दर्भत्रयेणावृतानि कृत्वा तेषां मूलानि तथैवाच्छादयेत्।
इति संस्कारतत्त्वेऽधिकं लिखितम्। ततो दशदिक्षु स्वस्ति-
कान् दद्यादिति भवदेवभट्टः। अस्मिन्नेव समये प्रागानाम्
अथेध्मानुपकल्पयति खादिरान् पालाशान् वेति गोभिले-
नोक्तानां 'प्रादेशद्वयमिध्मस्य प्रमाणं परिकीर्त्तितम्। एवं-
विधाः स्युरेवेह समिधः सर्वकर्मसु। समिधोऽष्टादशेध्मस्य
प्रवदन्ति मनीषिणः। दर्शे च पौर्णमासे च क्रियास्वन्यासु
विंशतिम्' इति कात्यायनेन विशेषितानां विंशतिकाष्ठिका-
रूपसमिधमङ्गहोममात्रनिषेधाद्वृषोत्सर्गाङ्गहोमेऽपि निषेधः
अङ्गहोमसमित्तन्त्रशोष्यन्त्याख्येषु कर्मसु। येषाञ्चैतदुपर्य्युक्तं
तेषु तत्सदृशेषु च। अक्षभङ्गादिविपदि जपहोमादिकर्मसु।
सोमाहुतिषु सर्वासु नैतेष्विध्मो विधीयते' इति कात्यायन-
वचनात्। अङ्गहोमाः सीमन्तोन्नयनचूडाकरणादौ विहिता-
स्तेषु अस्य सीमन्तोन्नयनादेः प्राधान्यात् तथा द्विधा
होमा याज्ञिका प्रसिद्धाः तन्त्रहोमाः क्षिप्रं हूयते इति
व्युत्पत्त्या सायं प्रातर्होमादयः तन्त्रहोमाश्च परिसमूहन-
वर्हिरास्तरणाद्यङ्गविस्तारयुक्ताः तत्र ये समिद्धविष्कास्तन्त्र-
होमाः यथा सुखप्रसवार्थं शोष्यन्तीहोमः येषां च सायं
प्रातर्होमादीनाम् एतदिध्माख्यं द्रव्यं पश्चात् अथे-
ध्मानुपकल्पयते इत्यनेन सूत्रेणोक्तं तेषु तत्सदृशेषु क्षिप्र-
होमादिषु इध्मस्य निवृत्तिर्भवेदिति विवाहोत्तरगोभिलोक्त-

गोयानकालीनाक्षभङ्गादिविपदि तन्निमित्तके होमे 'लौकिके वैदिके चैव हुतोच्छिष्टे जले चितौ। विश्वदेवस्तु कर्त्तव्यः पञ्च-सूनापनुत्तये' इत्याद्युक्तजलचित्यादिहोमेषु सोमरसाहुतिषु इध्मस्य निवृत्तिरित्यर्थः। गोभिलः 'बर्हिषि स्थालीपाकमासाद्य इध्ममभ्याधायाज्यं संस्कुरुते' इति आस्तीर्णकुशेषु चरुं विधाय समिधमग्नावाधाय ज्वलनार्थत्वादमन्त्रकम्। तथाच कात्यायनः 'इध्मोऽप्येधार्थमेवाग्नेर्हविराहुतिषु स्मृतः'। आज्य-माह गृह्यासंग्रहे 'अग्निना चैव मन्त्रेण पवित्रेण च चक्षुषा। चतुर्भिरेव यत् पूतं तदाज्यमितरद् घृतम्। घृतं वा यदि वा तैलं पयो वा दधि यावकम्। आज्यस्थाने नियुक्ता-नामाज्यशब्दो विधीयते' शेषवचनं यत्तपार्श्वीयमपि संस्कार-विधिमाह गोभिलः। 'तत एव बर्हिषः प्रादेशमात्रे पवित्रे कुरुते'। इति तत आस्तृतात् प्रादेशमात्रे विस्तृततर्जन्य-ङ्गुष्ठप्रमाणे द्विवचनं दलापेक्षं न तु 'अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च। प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्र-चित्' इति कात्यायनोक्तद्विदलपवित्रस्य द्वित्वं तथात्वे प्रादेशमात्र इति व्यर्थं स्यात् अतएव कात्यायनेनैव आज्य-स्योत्पवनार्थं यत्तदप्येतावदेवत्वेकत्वेन निर्दिष्टम् अनन्त-र्गर्भिणमन्तर्गर्भस्याभावोऽनन्तगर्भं तद्युक्तमन्तर्गर्भशून्य-मित्यर्थः। 'अनन्तस्तरुणौ यौ तु कुशौ प्रादेशसम्मितौ। अनखच्छेदिनौ साग्रौ तौ पवित्राभिधायकौ' इति शौनक-वचनैकवाक्यत्वात्। अत्र दलेऽपि कुशपदप्रयोगः। गोभिलः ओषधिमन्तर्धाय छिनत्ति न नखेन पवित्रेस्थो वैष्णव्याविति' श्रौह्यादिकमन्तरातत्वा गोभिलः 'अथैने अद्भिरनुमार्ष्टि विष्णोर्मनसा पूतेस्थः' इति। एने पवित्रे। 'संपूयोत्-पुनात्युदगग्राभ्यां ,पवित्राभ्यामङ्गुष्ठाभ्यां चोपकनिष्ठाभ्यां

ङ्गुलिभ्यामिति' अभिसंगृह्य प्राक्शस्त्रिरुत्पुनाति 'देवस्त्वा-सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्य्यस्य रश्मिभिः' इति सकृद् यजुषाद्विस्तूष्णीमिति संपूय प्रकृतमाज्यं कथं पवित्रमन्तरा कृत्वा स्थाल्यामाज्यं समावपेत् इत्येवं वक्ष्यमाणविधिनेति भट्टभाष्यं संपूय मक्षिकाद्यपनीयेति सरला उत्पुनात्यूर्द्धं शोधयति तत्प्रकारमाह उदगग्राभ्या-मिति अङ्गुष्ठाभ्यामिति द्विवचनं पाणिद्वयार्थम् एवमनेन प्रकारेण प्रतिसंगृह्य प्रकृते पवित्रे प्राक्श इति प्राग्गतं त्रिरुत्पुनाति अग्नौ वारत्रयं घृतं निक्षिपति तत्प्रकारमाह मन्त्रेण सकृत्द्विस्तूष्णीं गोभिलः 'अथैने अद्भिरभ्युक्ष्याग्ना-वुत्सृजेत् इति अथानन्तरमेवामुञ्चन् एने पवित्रे सव्येन गृहीत्वा दक्षिणेनाभ्युक्ष्य गोभिलः। 'अथैतदाज्यमधि-श्रित्योदगुद्वासयेदेवमाज्यसंस्कारकल्पो भवतीति'। आज्यं तद्युतपात्रमधिश्रित्याग्नेरुपरि कृत्वा उदगुत्तरतः उद्वासयेत् अवतारयेत् यत्रैवाज्यसंस्कारस्तत्रैवायं कल्प इत्यत्र गर्भपात-संस्कार सकृत् संस्कृताज्यपात्रे यानि प्रक्षिप्यन्ते तेषां संस्कारा-न्तरापेक्षा नास्तीत्याह गृह्यासंग्रहः। 'तथा सीमन्तिनी नारी पूर्वगर्भेण संस्कृता। एवमाज्यस्य संस्कारः संस्कार-विधिदेशितः'। आश्वलायनगृह्यपरिशिष्टं 'सीमन्तोन्नयनं प्रथमे गर्भे सीमन्तोन्नयनसंस्कारो गर्भपात्रसंस्कार इति' श्रुतिरिति गर्भपात्रयोरयं गार्भपात्रः गर्भस्य उदरस्थस्य पात्रस्य तदाधारस्य स्त्रिया इति कल्पतरुः। हारीतः 'सकृच्च 'कृतसंस्काराः सीमन्तेन कुलस्त्रियः। यं यं गर्भं प्रसूयन्ते स गर्भः संस्कृतो भवेत्'। गोभिलः। 'पूर्वमाज्यमपरस्थाली-पाक' इति अत्र पूर्वापरदेशस्थित्याज्यस्थालीपाकयोस्तथा व्यपदेशः तेन तौ पूर्वापरौ स्थाप्यौ प्रथमतो अग्नेरुत्तरस्यां

मासादनं ततश्च कर्मकाले सौकर्य्यात् अग्नेः पश्चात् तथाच गृह्यान्तरं 'होत्रमन्त्रोरन्तराज्यहविषी आसादयेदिति' छन्दोगपरिशिष्टं 'होमपात्रमनादेशे द्रवद्रव्ये स्रुवः स्मृतः' तथा। खादिरो वाथ पालाशो द्विवितस्तिः स्रुवः स्मृतः। स्रुग्बाहुमात्रा विज्ञेया वृत्तस्तु प्रग्रहस्तयोः'। खादिरः खदिरकाष्ठनिर्मितः पलाशकाष्ठनिर्मितो वा प्रगृह्यतेऽस्मिन्निति प्रग्रहो दण्डः स च वर्त्तुलः स्रुवाग्रे घ्राणवत् खातं द्व्यङ्गुष्ठपरिमण्डलं जुह्वाः शराववत् खातं सनिर्वाहं षडङ्गुलम्। स्रुवाग्र नामारम्भकमध्यस्थितमर्य्यादमङ्गुष्ठद्वयमितं वर्त्तुलबिलं जुह्वास्तु खातं शरावाकारं निःशेषवहनसाधनता निर्वाहपदवाच्यः प्रणालीसहितं षडङ्गुलं जानीयात्। 'तेषां प्राक्शः कुशैः कार्य्यः सम्प्रमार्जो जुहूषता प्रतापनञ्च लिप्तानां प्रक्षाल्योष्णेन वारिणा'। स्रुवस्रुचोर्व्यक्तिभेदात् बहुवचनं पूर्वाभिमुखं मार्जनं कुशैः कार्य्यं घृतादिलेपवतान्तूक्तेन वारिणा प्रक्षालनमग्नौ प्रतापनं कार्य्यं लेपरहितानान्तु प्रतापनं दर्भैः संमार्जनमभ्युक्षणं पुनः प्रतापनमुत्तरतो निधानञ्च कुर्य्यात् तथाच कात्यायनः 'स्रुवं प्रतप्य दर्भैः सम्मार्ज्याभ्युक्ष्य पुनः प्रतप्य निदध्यादिति'। आज्यादिसंस्कारं वारत्रयं कुर्य्यादिति भवदेवभट्टः। हरिशर्म्मणाप्येतत्प्रकरणे सकृत्त्रिर्वेति वचनादित्युक्तं होमकाले पञ्चाङ्गुलांस्त्यक्त्वा शङ्खमुद्रया स्रुवो धार्य्यः 'पञ्चाङ्गुलान् वह्निस्त्यक्त्वा धारयेच्छङ्खमुद्रया' इति वचनात् पाण्याहुतौ च गोभिलः 'उत्तानेनैव हस्तेन ह्यङ्गुष्ठाग्रेण पीडितम्। संहताङ्गुलिपाणिस्तु वाग्यतो जुहुयाद्धविः'। अत्र परिमाणमाह कात्यायनः। 'पाण्या इति द्वादशपर्वपूरिका कंसादिना चेत् स्रुवमात्रपूरिका। दैवेन तीर्थेन च हूयते हविः स्वङ्गारिणि स्वर्चिषि तच्च

पावके' अशक्तौ तु स्मृतिः 'आर्द्रामलकमानेन कुर्य्याद्धोमहविर्बलीन्। प्राणा इति बलिश्चैव स्मृतं गात्रविशोधनीम्'। कात्यायनः 'योऽनर्चिषि जुहोत्यग्नौ व्यङ्गारिणि च मानवः। मन्दाग्निरामयावी च दरिद्रश्च प्रजायते। तस्मात् समिद्धे होतव्यं नासमिद्धे कदाचन। आरोग्यमिच्छतायुश्च श्रियमात्यन्तिकीन्तथा। जुहूषंश्च हुते चैव पाणिशूर्पस्फ्यदारुभिः। न कुर्य्यादग्निधमनं न कुर्य्याद्व्यजनादिना। मुखेनैव धमेदग्निं मुखाद्ध्येषोऽध्यजायत। नाग्निं मुखेनेति च यल्लौकिके योजयन्ति तत्'। हि यस्मात् मुखपाठ्यमन्त्रात् एष संस्कृताग्निः ततश्च लौकिक इति तदितराग्निपरम् एतेन लौकिक इति श्रौताग्निभिन्नपरमिति मैथिलोक्तं हेयम्। जुहूषंश्च हुतेनैवोपक्रमवचनेन संस्क्रियमाणसंस्कृताग्न्योरेव पाणिशूर्पादि निषेधमुखेन न मुखोपधमनस्य विदितत्वात् तद्व्यतिरिक्तस्यैव लौकिकशब्देनाभिधानस्यौचित्यात् आहितत्वस्यानुपस्थितेश्च एवमेव गुरुचरणाः तन्नु 'अग्निस्तु नामधेयादौ होमे सर्वत्र लौकिके' इति छन्दोगपरिशिष्टवचनेन नामकरणाद्यर्थाग्नेर्लौकिकमुक्तं तत् न ह्यग्ना वन्यहोमः स्यात् इति तस्यैव वचनान्तरेण साग्नेः स्वीयश्रौताग्नौ तत्करणनिषेधात् लौकिकाग्न्यन्तरमादाय कर्त्तव्यताविधायकं न तु तदग्नेः संस्कारानन्तरमपि लौकिकत्वप्रतिपादकम्। इति संस्कारतत्त्वे लिखितम्। गोभिलः 'अग्निमुपसमाधाय परिसमूह्य दक्षिणजान्वक्तो दक्षिणेनाग्निमदितेऽप्यनुमन्यस्वेत्युदकाञ्जलिं प्रसिञ्चेदिति अनुमतेऽनुमन्यस्वेति पश्चात् सरस्वत्यनुमन्यस्वेत्युत्तरतो देवसवितः प्रसुवेति प्रदक्षिणमग्निं पर्य्युक्षेत् सकृत् त्रिर्वा पर्य्युक्षणान्तान् व्यतिहरन्नभिपर्य्युक्षण होमीयमिति'। अग्निमुपसमाधाय काष्ठादिना प्रज्वाल्य परिसमूह्य विक्षिप्ता-

अथवानेकोत्रस्थ दक्षिणजान्वक्तो भूमिगतदक्षिणजानुर्दक्षिणे-नाग्निमग्नेर्दक्षिणेऽदितेऽनुमन्यस्वेति मन्त्रेणोदकाञ्जलिं प्राग्-गतं सिञ्चेदनुमत इत्यादिना अग्नेः पश्चादुदकसंस्थं सिञ्चेत् अग्नेरुत्तरे सरस्वत्यनुमन्यस्वेत्यनेन प्राक् संस्थं सिञ्चेत् देव-सवितः प्रसुवमित्यादिमन्त्रेण प्रदक्षिणमग्नेर्यथा स्यात्तथा अग्निमुदकाञ्जलिना वेष्टयेत्। त्रिर्वेति फलभूमार्थं तत्र मन्त्रो ऽपि त्रिर्धोव्याय्यै मुख्यावृत्तौ गुणावृत्तेर्युक्तत्वात् पर्य्युक्षणान्तानिति बहुवचनं बिल्वपक्षे दण्डवदुदकधारादिरप्यन्तो भवती-त्यन्तद्वयं व्यतिहरन् मिश्रीकुर्वन् होमीयं होमद्रव्यं पर्य्युक्षण-तज्जलेन स्पर्शयन्निति वेष्टनप्रकार उक्तः चरुहोमे विशेषमाह गोभिलः। 'पर्य्युक्ष्य स्थालीपाके आज्यमानीयमेक्षणेनोपघातं होतुमेवोपक्रमतः' इति। अदितेऽनुमन्यस्वेत्येवं पर्य्युक्ष्यस्था-लीपाके चरावाज्यमानीय प्रक्षिप्य मेक्षणेनोपघातम् उपहत्या-दाय होतुमेवोपक्रमते आरभते उपघातमिति हिंसायाश्चैक-कर्मकादित्यनेन तृतीयान्तोपपदणमासिद्धम् एवकारकरणमुप-घातहोमेऽभिघारितचताभ्यङ्गप्रतिषेधार्थं होतुमेवोपक्रमते नान्यत् उपघातहोमलक्षणञ्च गृह्यासंग्रहे। 'पाणिना मेक्षणेनाथ स्रुवेणैव तु यद्धविः। हूयते चानुपस्तीर्य्य उपघातः स उच्यते। यद्युपघातं जुहुयात् चरावाज्यं समावपेत्। मेक्षणेन तु होतव्यं नाज्यभागो न स्विष्टिकृत्'। बहुदैवत्यचरुहोमे तु उपघात-होम एव चरौ च बहुदैवत्ये होमस्तस्योपघातवदिति परि-शिष्टप्रकाशधृतवचनात् ततश्च चरावाज्यमानीय प्रपदविरू-पाक्षौ जपित्वा समिधमादाय जुहुयादिति भट्टभाष्यं युक्त-श्चैतत् क्षिप्रहोम एव परिसमूहनादिवर्जनेन तदितरत्र तेषु लाभात् तथाच छन्दोगपरिशिष्टम्। 'न कुर्य्यात् क्षिप्रहोमेषु द्विजः परिसमूहनं विरूपाक्षञ्च न जपेत् प्रपदञ्च विवर्जयेत्'

ग्निप्रहोमेषु अन्नप्राशकेषु सायं प्रातःशोष्यन्ती होमादिषु ब्राह्मण इमं स्तोममर्हत इत्यादिमन्त्रकपरिसमूहनं न कुर्य्यात् विरू-पाक्षप्रपदौ च त्यजेत्। प्रपदश्च तपश्च तेजश्चेति मन्त्रः काम्य-कर्मार्थं यदि कुर्य्यात्तदा तदा प्रपदजपानन्तरं विरूपाक्षजप इति भवदेवभट्टः। ततः प्रकृतहोमकर्मणि वह्नेस्तत्तन्नामाह्वाने छन्दोगसंग्रहे गोभिलपुत्रः 'प्रायश्चित्ते विधुश्चैव पाकयज्ञे तु साहसः। लक्षहोमे तु वह्निः स्यात् कोटिहोमे हुताशनः। पूर्णाहुत्यां मृडो नाम शान्तिके वरदस्तथा। आहूय चैव होतव्यं यो यत्र विहितोऽनलः'। ततश्च वृषोत्सर्गाङ्गहोमस्य पाकाङ्गत्वात् साहसनामत्वमग्नेरिति वृषोत्सर्गकर्मणि अग्ने त्वं साहसनामासीति नाम कृत्वा पिङ्गभ्रूः श्मश्रुकेशाक्षः इति आदित्यपुराणीयं ध्यानं कृत्वा साहसाग्ने इहागच्छ इहा-गच्छ इत्यावाह्य एतत् पाद्यम् ओम् साहसनाम्नेऽग्नये नमः इत्यादिभिः पूजयेत्। होमात् पूर्वं वह्निपूजनमाह मार्क-ण्डेयपुराणं 'पूजयेच्च ततो वह्निं दद्याच्चाप्याहुतीः क्रमात्'। ततश्च प्रकृतहोमपूर्वापरयोस्तूष्णीं समित्प्रक्षेपमाह छन्दोग-परिशिष्टम्। 'समिदादिषु होमेषु मन्त्रदैवतवर्जिता। पुर-स्ताच्चोपरिष्टाच्च इन्धनार्थं समिद्भवेत्'। स्मृतिः 'मन्त्रेणोङ्कार-पूतेन स्वाहान्तेन विचक्षणः। स्वाहावसाने जुहुयाद्ध्यायन् वै मन्त्रदेवताम्'। स्वाहान्तमन्त्रे स्वाहान्तरं निषेधयति सर-लाभट्टभाष्ये मन्त्रतन्त्रप्रकाशश्च 'नमोऽन्तेन नमो दद्यात् स्वाहान्ते ठिठमेव च। पूजायामाहुतौ चापि सर्वत्रायं विधिः स्मृतः' ठिठः स्वाहेत्यागमविदः। सरलाभट्टभाष्ययोरप्येवम्। गोभिलः 'आज्याहुतिष्वाज्यमेव संस्कृतस्योपघातं जुहुयादाज्य-भागौ न स्विष्टकृदाज्याहुतिष्वनादेशे पुरस्ताच्चोपरिष्टाच्च व्याहृतिभिर्होमो यथा पाणिग्रहणे तथा चूडाकर्मण्युप-

भयने गोदाने' इति आज्याहुतिषु चतुर्थीकर्मादिषु आज्य मेव यथोक्तविधिना संस्कृत्य उपघातं स्रुवेणोपहत्य जुहुयात् आज्यमात्रकहोमेषु आज्यभागस्विष्टिकृतातिदेशप्राप्तानां निषेधः। एवमाज्यमात्रकहोमेषु धृतिहोमादिषु अनादेशे यत्र पुंसवनशुङ्गाकर्मसीमन्तोन्नयनचूड़ाकरणादिषु पश्चादग्नेरुद· गग्रेषु दर्भेष्वित्यादिनाग्निग्रहणं प्रागुक्तं विशिष्य होमो नोप· दिष्टस्तत्र प्रधानकर्मणोऽग्राभिमर्षणादेः पुरस्ताच्चोपरिष्टाच्च महाव्याहृतिभिः भूर्भुवःस्वरिति तिसृभिर्होमः कर्त्तव्यः पाणि· ग्रहणादौ तु महाव्याहृतिभिः पृथक् समस्ताभिश्चतुर्थीमिति गोभिलसूत्रेण यथा पाणिग्रहणे चतस्रस्तथा चूड़ादिषु संस्कार· रूपेषु पूर्वं पश्चाच्च चतस्रश्चतस्रो महाव्याहृतिभिराहुतयः स्युः इति चरुहोमानन्तरं गोभिलेन महाव्याहृतिभिराज्येनाभि· जुहुयादिति सूत्रेण चरुहोमे पश्चान्महाव्याहृतिभिर्होमः कर्त्त· व्यो न तु पूर्वमिति गोभिलः 'यद्युवा उपस्तीर्णाभिघारितं जुहुयादाज्यभागावेव प्रथमौ जुहुयाच्चतुरर्द्धं हौतमाज्यं गृहीत्वा पश्चाद्धत्तं भृगूणामग्नये स्वाहेत्युत्तरतः सोमायेति दक्षिणतः प्राक्शो जुहुयादिति' स्रुवेण स्रुचि यदाज्यं प्रथमं गृह्यते तदु· पस्तीर्णं यद्धविर्गृहीत्वानन्तरमाज्यं दीयते' तदभिघारितं यदि तथाविधं होतुमिच्छेत्तदाज्यभागावेव प्रथमौ जुहुयात् स्रुचा होमस्तु अनेन गृहीतं जुह्वा जुहोतीति गृह्यान्तरात् स्रुवेण स्रुचि चतुर्वारमाज्यं गृहीत्वा भृगूणां भृगुगोत्राणामिति सरला पञ्चावदानानि पञ्चार्षेयाणामिति गृह्यान्तरात् भार्गव· प्रवराणामिति भट्टभाष्यं भृगुगोत्राणां भार्गवप्रवराणामिति भवदेवभट्टः तेषां पञ्चवारं तथा गृहीत्वा ओम् अग्नये स्वाहे· त्यनेनाग्नेर्मध्यदेशादुत्तरे प्राक्सु खधारया जुहुयात् 'उत्तरे आग्नेयं दक्षिणे सौम्यं मध्ये अन्या आहुतयः' इति सांख्या·

यनसूत्रात् तथैव दक्षिणभागे ओम् सोमाय स्वाहेति जुहुयात् एतत् सर्वचरुसाधारणं विधाय प्रकृतहोमं कुर्य्यात् तत्र वृषोत्सर्गे छन्दोगपरिशिष्टम् 'ओम् अग्नये स्वाहा ओम् पूष्णे स्वाहा ओम् इन्द्राय स्वाहा ओम् ईश्वराय स्वाहा एतेभ्य एव जुहुयान्मेक्षणेनावदाय च। स्रुच्याहुतीश्चरोः पृथक् सिञ्चेदाज्याभिघारितम्' ओम् अग्नये स्वाहेत्यादिमन्त्रैर्मन्त्रप्रकाश्य देवताभ्यः स्रुचि घृतोपस्तरणानन्तरं चरोर्मेक्षणेन मध्यपूर्वार्द्धयोर्हविरवदाय भृगूणां पश्चादर्द्धावदानेन च त्रिरवदाय घृतेनाभिघार्य्य चतुरावत्तं पञ्चावत्तं वा जुहुयात् पृथगाहुतीर्न तु तन्त्रेणेति अवदाय च होमात् पूर्वमवदानक्षतं चरुस्थानं क्षताभ्यङ्गार्थमाज्येन प्लावयेदिति वक्ष्यमाणगोभिलसूत्रेण स्विष्टिकृद्धविरभिघारानन्तरं क्षताभ्यङ्गनिषेधादन्यत्र क्षताभ्यङ्गप्रतीतेरिति तथा सोमं राजानं वरुणं शुक्रन्तेऽन्यदित्यपि। इन्द्रापर्वता बृहता आवो राजानमित्यृचः। 'चतुर्गृहीतं कृत्वाज्यमाभिर्ऋग्भिः पृथक् पृथक्। स्वाहाकारान्ताभिर्जुहुयात् विधिवत् सदा'। स्रुवेण चतुर्द्धा घृतं स्रुचि गृहीत्वा ओम् सोमं राजानमित्यादि ऋग्भिश्चतसृभिः स्वाहाकारान्ताभिश्चतस्र आहुतीर्जुहुयात्। ऋक्‌परिभाषामाह जैमिनिः। तेषामृक् यत्रार्थवशेन पादव्यवस्थितिस्तेषां मन्त्राणां मध्ये यत्रार्थवशेन एकान्वयित्वेनानुष्टुवादिना पादव्यवस्थितिः सा ऋक् भृगूणाञ्चेदत्रापि पञ्चावत्तं तदा सर्वचरुहोमसाधारणगोभिलोक्तस्विष्टिकृतादि होमः। यथा गोभिलः 'अथ स्विष्टिकृत उपस्तीर्य्यावाद्य उत्तरार्द्धे पूर्वार्द्धात् सकृदेव भूयिष्ठं हविरभिघारयेत् यद्युवा पञ्चावत्तं स्यात् द्विरुपस्तीर्य्यावदाय द्विरभिघारयेत् न प्रत्यनक्त्यवदानस्थानम् अयातयामतायै अग्नये स्विष्टिकृते स्वाहा इत्युत्तरार्द्धे पूर्वार्द्धे • जुहुयात् अथा-

व्याहृतिभिराज्येनाभिजुहुयात् प्राक्स्विष्टिकृत आवापो गणे-ष्वेकं परिसमूहनमिध्मो बर्हिः पर्य्युक्षणमाज्यभागौ सर्वेभ्यः समवदाय सकृदेव सौविष्टिकृतं जुहोति हुत्वैतमेक्षण-मनुप्रहरेदिति' स्विष्टिकृदर्थं स्रुचि घृतस्रुवं दत्वा चरोरुत्तरतः पूर्वार्द्धभागादीशानकोणरूपाच्चेक्षणेन बहुतरमेकवारं गृहीत्वा स्रुचि स्थापयित्वा वारद्वयं घृतेन सेचयेत्। पञ्चावदानपक्षे घृतस्रुवद्वयेनोपस्तरणं सकृद्धविर्निक्षेपः पुनर्घृतेनाभिषेचनद्वय-मिति चात्र सेचणचतस्थानं न घृतेन प्लावयेत् पुनर्यागार्थमेव तत् ततश्च यागायोग्यतारूपयातयामतायामपि न दोष इत्यर्थः। ततोऽग्नये स्विष्टिकृते स्वाहेत्यनेन ईशानकोणे जुहु-यात्। ततो भूर्भुवःस्वरिति तिसृभिर्महाव्याहृतिभिर्होमः अस्य चरुहोमे पश्चादुपदेशाच्च प्राकरणमिति। आ उप्यते इत्यावापः प्रधानहोमः स तु स्विष्टिकृद्धोमात् प्राक् न पश्चादित्यर्थः एवञ्च मुख्यहोमे त्वकृते यदि चरुर्नष्टो दुष्टो वा तदान्यः पाच्यः मुख्ये कृते चेच्चाग्रदुष्टौ तदाज्येनैव स्विष्टिकृद्धोम इति सरला। गणेष्वेकदानेकयागेषु एकमेव न प्रत्येकं परिसमूहनादि उप-लक्षणत्वात् उदूखलमुसलाद्यपि एवं स्विष्टिकृद्धोमोऽपि सकृत् उपलक्षणमेतत् व्याहृत्याद्यपीति सरला। अनुप्रहरेत् अग्नौ प्रक्षिपेत्। एवम् उक्तप्रकारेण यथायथं प्रकृतहोमं समापये-दिति। छन्दोगपरिशिष्टं 'रूपिण्यो वत्सतर्य्यस्तु चतस्र उपकल्पयेत्। ताभिः सहैनं प्राग्ग्रीवमग्ने रभ्यासमानयेत्। ततोऽक्षणेन गन्धेन मानस्तोक इतीरयन्। वृषस्य दक्षिणे पार्श्वे त्रिशूलाङ्कं समुल्लिखेत्। वृषाज्यसीति सव्येऽस्य चक्रा-ङ्कमपि दर्शयेत्। ततेन पश्चादयसा स्पृष्टौ तावेव कारयेत्। अर्थैनं कलसस्थाभिरद्भिरेको वृषेण वा। सर्वौषधिसुगन्धोभिः स्नापयेदलङ्कृता अपि। परिधाप्याहते शुक्ले वाससी हेमपट्टकम्

सत्यमिथ्या वृषा सोम सामभ्यां शिरसि न्यसेत्'। वत्सतरी-चतुष्टययुक्तं प्राङ्मुखं वृषमग्निसमीपमानयेत्। कुङ्कुमादिना मानस्तोक इति मन्त्रेण वृषस्य दक्षिणफलके त्रिशूलाङ्कं वृषाण्यसीति मन्त्रेण वामफलके चक्राकारमङ्कं कुर्य्यात् तप्तलोहेन तौ स्पष्टौ कारयेत्। ततश्च प्राञ्चं प्राञ्चमुदगग्नेरिति प्रागुक्तवचनात् पूर्वासादिताभिः कलसस्थाभिरद्भिः 'मुरा मांसी वचा कुष्ठं शैलेयं रजनीद्वयम्। शठीचम्पकमुस्ताश्च सर्वौषधिगणः स्मृतः। इति सर्वौषधित्वेन परिभाषितैर्दशभिर्द्रव्यैः सुगन्धीकृताभिरद्भिरेको वृषा विराजत्यनुगीयमानेन एको वृषाभिधानेन साम्ना अग्नेरग्रे वृषं स्थापयेत् न तु 'व्रीहयः शालयो मुद्गा गोधूमाः सर्षपास्तिलाः। यवाश्चौषधयः सप्त विपदो घ्नन्ति धारिताः' इति छन्दोगपरिशिष्टोक्तद्रव्यैर्मिश्रणं नारायणोपाध्यायोक्तं युक्तं सामपरिभाषामाह जैमिनिः। 'गीतेषु सामाख्येति' गीतेषु गीयमानेषु मन्त्रेषु सामसंज्ञा इत्यर्थः। सर्वौषधित्वेनापरिभाषितत्वात् सुगन्धित्वायोगाच्च तथैव वत्सिका अपि स्नापयेत् तूष्णीं न तु मन्त्रेण मन्त्रलिङ्गविरोधादिति नारायणोपाध्यायाः। वस्तुतस्तु ऋगर्थे विरोधो न दृश्यते आहतमाह वशिष्ठः 'ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम्। आहतन्तद्विजानीयात् सर्वकर्मसु पावनम्' एवं लक्षणवस्त्रद्वयेन वृषमासाद्य ओम् सत्यमिथ्यावृषोऽदसि वृषाजूतिर्नोऽविता। वृषायस्त्यिषेपरावतिवृषोर्वारतिश्रुतिः वृषादेव युम्नाम् असिवृषादेव वृषव्रतः। वृषाधर्मोषि दभिरे इति ऋग्द्वयगीयमानसामभ्यां वृषस्य ललाटे सौवर्णवीरपट्टं बध्नीयात् छन्दोगपरिशिष्टम् पश्चाग्निपरिक्रमणमासां वत्सतरीणामेकामनुगमयेत्। ताञ्च अनुगच्छन्तीं प्रति मन्त्रयेत् काम्यासि प्रियासि हव्यासि इडासि रमन्तासि सरस्वत्यसि

मस्यसि विभुतिरसि इति वत्सतरीणां मध्ये चोत्सृजति। एतं युवानं पतिं वो ददामि तेन क्रीडन्तीश्चरथ: प्रियेण मान: साप्तजनुषा सुभगारायस्पोषेण समिषामदेम इति मन्त्रेण ज्ञातां पौष्णीं पाद्यं वार्षवाद्यं सोम: पौषं गवां व्रतेन श्रावयेत्। रौद्रीश्च संहितां वामदेव्यश्चान्ते। अथोपचालयेत् यथेष्टं पर्य्यटेति। अथ वृषवत्सतरीणामलङ्कारं वाससी च आचार्य्याय प्रयच्छेद् गाश्च। उदाहरति वेदार्थान् यन्नविद्या: स्मृतीरपि। श्रुतिस्मृतिसमापन्नमाचार्य्यन्तं विदुर्बुधा:। अथ यज्जीवनवृषोऽश्नाति पिबति प्रजनयत्यङ्गानि धुनोति तेन देवान् पितृंश्च प्रीणातीत्याह कात्यायन इति अग्निपरिक्रमणम् अग्ने: सर्वतोभ्रमणं प्रदक्षिणमिति यावत् वृषं कारयेदिति शेष:। तं वृषं लोहितवर्णां वत्सतरीमनुगमनं कारयेत्। व्रजन्तीं तां काम्यादिभिर्गोनामभि: काम्यासौत्यादिमन्त्रेणाभिमन्त्रयेत्। अत्र इडासीति इत्यादि: तथा चामर: भूर्गोवाचस्त्विडा इला इति परिभ्रमणानन्तरं यूपमाह स्मृति: 'चतुर्हस्तो भवेद् यूपो यज्ञवृक्षसमुद्भव:। वर्त्तुल: शोभन: स्थूल: कर्त्तव्यो वृषमौलिक:' इति 'बिल्वस्य बकुलस्यैव कलौ यूप: प्रशस्यते'। इति भविष्योक्ते यूपे नूतनवस्त्रेण बद्धा पूर्वादिक्रमेण लोहितनीलपाण्डरकृष्णवत्सिका यथायोग्यमुपयूपचतुष्टये बद्धा संस्थाप्य ओम् एतं युवानम् इति मन्त्रं पठित्वा वक्ष्यमाणब्रह्मपुराणकात्यायनोक्तं सर्वोपकरणोपेतं वत्सतरीचतुष्टयसहितं वृषम् ओम् अद्येत्यादिवाक्येनोत्सृजेत्। एवमेव पितृदयितापरिशिष्टप्रकाशप्रभृतय:। मैथिलास्तु ओम् अद्येत्याद्यमुककामो बहुदैवतं वृषम् एतं युवानम् इत्यादि लौकिकपदमन्त्राभ्यां वृषोत्सर्गवाक्यमाहु: तन्न परम्परान्वयबोधाय लौकिकपद-

विधिष्टमन्त्रोत्सेगे मानाभावात्। अन्यथा भूःस्वाहेत्यादौ हुताद्युल्लेखेन तथात्वापत्तेः। अष्टाभिर्धेनुभिर्युक्तस्तत्तभिरनुक्रमात्। त्रिहायनीभिर्धन्याभिः स्वरूपाभिश्च शोभितः। सर्वोपकरणोपेतः सर्वशस्यधरो महान्। उत्स्रष्टव्यो विधानेन श्रुतिस्मृतिनिदर्शनात्' इति ब्रह्मपुराणोक्तधेनुयुक्तसर्वकरणोपेतत्वानुल्लेखाच्च। अत्र धेनुपदं वत्सतरीपरम्। 'पयस्विन्याः पुत्रो यूथे च रूपवान् स्यात् तमलङ्कृत्य यूथे मुख्याश्चतस्रो वत्सतर्य्यश्चालङ्कृत्य एनं युवानं पतिं वो ददामि तेन क्रीडन्तीश्चरथ प्रियेण मानः साप्तजनुषा सुभगा रायस्पोषेण समिषा मदेमः इत्येतयैवोत्सृजेरन्निति' कात्यायनसूत्रदर्शनात् न चैवं तदनुसारेण वत्सतरीचतुष्टययुक्तमिति वृषविशेषणं वाच्यं तथात्वे तादृशं वृषमिति विशिष्टे वो युष्माकं वत्सतरीणां पतिमित्यनन्वयापत्तेः प्रागुक्तदोषाच्च। न च कात्यायनीये एवकारश्रुतेः केवलमन्त्रेणोत्सर्गो न तु वाक्येनेति वाच्यम् एतयैवेत्युत्तरैवकारेण सजातीयत्वे सर्वशाखाप्रत्ययमेकं कर्मेति न्यायप्राप्तस्य नैयतकालिककल्पतरुधृतविष्णूक्तस्य ऋगन्तरस्य व्यावृत्तिर्न तु वाक्यस्य एवञ्चमन्त्रस्य करणत्वमुपपन्नम् अन्यथा ददामीत्यनेन मन्त्रान्तरेणोत्सर्गाच्च तथात्वं मन्त्रान्ते कर्मादिसन्निपात इति न्यायस्याप्यबाधः। मन्त्रान्ते संप्रदानमिति सरलाधृतकाठकश्रुतेरप्यबाधः। व्यक्तमाह आपस्तम्बः। 'मन्त्रान्ते कर्मादीन् सन्निपातयेदिति'। समग्रं मन्त्रं पठित्वा कर्म कारयेदिति कर्मविपाकः। एवञ्च अमुककाम इति सोपकरणं वत्सतरीचतुष्टययुक्तवृषमिति चाभिलप्य उत्सर्गः यद्यप्यमन्त्रास्तु स्त्रियो मता इति विष्णुधर्मोत्तरवेदमन्त्रवर्जं शूद्रस्य इति सूत्र य इह वै वेदं पठति तस्य यश्चलतो जिह्वां निकृन्तति इति श्रुतिभ्यः शूद्रादेः पाठा-

नधिकारोऽपि समन्त्रस्य तु शूद्रस्य इति वचनात् अत्राश्वलायनकार। मन्त्रपाठोपपत्तेश्छन्दोगपरिशिष्टादौ कर्तृविशेषणाभिधानेन सर्वाधिकारत्वप्रतीतेः 'न स्त्रीणामधिकारोऽस्ति श्राद्धादिषु कथञ्चन। कन्यादानवृषोत्सर्गे चाधिकारो भवेत् स्त्रियाः' इति प्रतिष्ठासमुच्चयलायुधधृतवचनाच्च स्त्रीशूद्राणामप्यधिकारः एवमेव सुगतिसोपानप्रभृतयः। कर्णेनाप्यन्त्यजन्मन इति वर्णप्रशंसामात्रपरम्। स्नात्वा उपत्वाजामय इति। गौणी। अवापरेति पाद्यं साम प्रसम्राजश्चर्षणीनामिति वार्षवाद्यं साम अचिक्रदटेति सोमः पौषं साम सोमः पूषेति गवां व्रते साम्नेतिते मन्त्र प्रथममिति। अग्निमीळे पुरोहित-मिति गानद्वयमारण्यकचतुर्थपाठके पठितं 'न त्वारण्यक-पञ्चमप्रपाठकश्रुते मन्वत इति गवां व्रतरूपमेकं साम रौद्रीं संहिताम् आवोवाजेति तन्नो गायेति मूर्द्धानन्दिव इति अधिपते इति ऋक्चतुष्टयं वामदेव्यं कयान इत्यादि एतत् सर्वं गीयमानं वृषं श्रावयेत्। गानाशक्तौ सर्वा ऋचस्त्रिधा पठेत् वामदेव्यगानेषु छन्दोगपरिशिष्टेन तथाभिधानात् यथा 'अन्ते च वामदेव्यस्य गानं कुर्य्यादृचस्त्रिधा' इति अन्यत्राप्यकाङ्क्षया 'बहूनामेकधर्माणामेकस्यापि यदुच्यते। सर्वेषामेव तत् कुर्य्यादेकरूपा हि ते स्मृताः' इति बौधायन-वचनात्तथा कल्पते अतएव एकत्र निर्णीतः शास्त्रार्थो बाधकमन्तरेणान्यत्रापि तथा कल्पते इत्युक्तम् अथेति श्रवणानन्तरं यूपाद्विमुच्य वत्सतरीचतुष्टयसहितं वृषम् ऐशान्यां गत्यर्थं प्रार्थयेत् यथेष्टं यूथं पर्य्येटेति मन्त्रेण 'वृषं वत्सतरीयुक्तमैशान्यां चालयेद्दिशि' इति विष्णुवचनात् 'होतुर्वस्त्रयुगं दद्यात् सुवर्णं कांस्यमेव च। अवस्कारय दातव्यं वेतनं मनसेप्सितम्' इति वचनात्। ओम् 'न खादेत्

परशस्यानि नाक्रामेत् गर्भिणीश्च गाम्' इति वदेत्। तदा वृषं प्रदक्षिणीकृत्य श्रोम् 'धर्मोऽसि त्वं चतुष्पादश्चतस्रस्ते प्रियास्त्विमाः। चतुर्णां पोषणार्थाय मयोत्सृष्टास्त्वया सह। देवानाञ्च पितॄणाञ्च मनुष्याणाञ्च योषितः। भूतानां तृप्तिजननास्त्वया सार्द्धं व्रजन्त्विमाः। नमो ब्रह्मण्य देवेश पितृभूतर्षिपोषक। त्वयि मुक्तेऽक्षया लोका मम सन्तु मनोरथाः। मामे ऋणोऽस्तु दैवेऽथ पैत्रो भौतोऽथ मानुषः। धर्मस्त्वं त्वत्प्रपन्नस्य या गतिः सा तु मे ध्रुवा। यत्किञ्चित् दुष्कृतं कर्म लोभमोहात् कृतं भवेत्। तस्मादुद्धृत्य देवेश पितुः स्वर्गं प्रयच्छ मे। यावन्ति तव लोमानि शरीरे सम्भवन्ति च। तावद्वर्षसहस्राणि स्वर्गे वासोऽस्तु मे पितुः' इति स्वल्पमत्स्यपुराणोक्तं पठेत्। तत आचारात् प्राचीनावीती दक्षिणाभिमुखः भुग्नकुशपत्रद्वयसहितं वृषपुच्छगलितोदकमादाय दक्षिणाग्रकुशत्रयोपरि श्रोम् अमुकगोत्रं प्रेतममुकशर्माणं सतिलवृषपुच्छगलितोदकेन तर्पयामीति त्रिस्तर्पयेत्। प्राप्तपितृलोकस्य तु श्रोम् अमुकगोत्रः पितामुकदेवशर्मा तृप्यतामेतत् सतिलवृषपुच्छगलितोदकं तस्मै स्वधेति विशेषः। एवमन्येषां वृषोत्सर्गे ऊह्यमिति ततो ब्रह्मपुराणोक्ततर्पणं कुर्य्यात् श्रोम् 'स्वधापितृभ्यो मातृभ्यो बन्धुभ्यश्चापि तृप्तये। मातृपक्षाश्च ये केचित् ये चान्ये पितृपक्षकाः। गुरुश्वशुरबन्धूनां ये कुलेषु समुद्भवाः। ये प्रेतभावमापन्ना ये चान्ये श्राद्धवर्जिताः। वृषोत्सर्गेण ते सर्वे लभन्तां प्रीतिमुत्तमाम्। दद्यादनेन मन्त्रेण तिलाक्षतयुतं जलम्। पितृभ्यश्च समासीन ब्राह्मणेभ्यश्च दक्षिणाम्। ततः प्रमुदितास्ते च वृषभेण समन्विताः। वनेषु गावः क्रीड़न्ति वृषोत्सर्गप्रसिद्धये। अथ वृते वृषोत्सर्गे दाता वक्ष्यतिभिः पदैः।

आम्रवणानाह यत्किञ्चिन्मयोत्सृष्टन्तु निर्जने। तत् कश्चिदन्यो न नयेद्विभाज्यन्तु यथाक्रमम्। वृषोत्सर्गादृते नान्यत् पुण्यमस्तीह भूतले। तस्मात् कुरु वृषोत्सर्गं पितॄणामात्मनोऽपि च'। तर्पणान्तप्रकृतकर्मानन्तरं महाव्याहृतिभिस्तिसृभिः समित्प्रक्षेपपूर्वकं जुहुयात्। महाव्याहृतिभिराज्येनाभि जुहुयात् इति गोभिलसूत्रात्। ततः समित्प्रक्षेपादिकं कुर्य्यात्तथा च गोभिलः। 'समिधमादाय अनुपर्य्युक्ष्य यज्ञवास्तु करोति तत एव बर्हिषः कुशमुष्टिमादायाज्ये हविषि वा त्रिरवदध्यादग्राणि मध्यानि मूलानि अक्तं रिहानाव्यन्तु वय इति अथैनमद्भिरभ्युक्ष्याग्नौ वर्जयेत्। यः पशूनामधिपती रुद्रस्तन्ति चरो वृषापशूनस्माकं मा हिंसीरेतदस्तु हुतं तव स्वाहेत्येतयज्ञवास्त्वित्याचक्षत' इति तूष्णीं समिधं प्रक्षिपेत्। 'समिदादिषु होमेषु मन्त्रदैवतवर्जिता। पुरस्ताच्चोपरिष्टाच्च इन्धनार्थं समिद्भवेत्'। इति छन्दोगपरिशिष्टात् अत्र समित् प्रक्षेपः कर्मान्त इत्यवगम्यते। एतदनन्तरं कर्म वैगुण्यसमाधानाय प्रायश्चित्तं गोभिलेनोक्तमपि तत् परिशिष्टोक्तं कुर्य्यात्। तद् यथा 'यत्र व्याहृतिभिर्होमः प्रायश्चित्तात्मको भवेत्। चतस्रस्तत्र विज्ञेयाः स्त्रीपाणिग्रहणे यथा। अपि वा ज्ञातमित्येषा प्राजापत्यापि वा हुतिः। होतव्या त्रिविकल्पोऽयं प्रायश्चित्तविधिः स्मृतः'। यत्र प्रायश्चित्तहोमार्थं व्याहृतिभिर्होमो विधीयते तत्र चतस्र आहुतयो होतव्याः। यथा विवाहे तथा च गोभिलः। 'समस्ताभिश्चतुर्थीमिति' अस्यार्थः भूराद्याभिर्व्यस्ताभिस्तिसृभिस्तिस्र आहुती भूर्भुवःस्वः स्वाहेति समस्ताभिश्चतुर्थीं जुहुयात्। अपि वा अथवा अज्ञातं यदनाज्ञातम् इति मन्त्रेणाहुतिर्होतव्या। प्रजापतये स्वाहेति वा प्रायश्चित्तविधिर्विकल्पत्रयवान् मुनिभिः स्मृत

इत्यनेन पक्षान्तरं निरस्तं ततश्च भवदेवभट्टोक्तशाट्यायन-होमो निष्प्रमाणकः भट्टनारायणचरणैर्गोभिलभाष्ये तदप्रमा-णीकृतत्वात् ततः प्रायश्चित्तहोमार्थं सङ्कल्प्य प्रायश्चित्तहोमे अग्ने त्वं विधु नामासीति नाम कृत्वावाह्य संपूज्य समिधं प्रक्षिप्य 'आज्यं द्रव्यमनादेशे जुहोतिषु विधीयते' इति छन्दो-गपरिशिष्टादाज्यद्रव्यकहोमत्वेन पूर्वापरं महाव्याहृतिहोमः तथाच गोभिलः। 'आज्याहुतिष्वनादेशे पुरस्ताच्चोपरिष्टाच्च महाव्याहृतिहोम इति एवञ्च तिसृभिर्महाव्याहृतिर्हुत्वा व्यस्तसमस्ताभिर्महाव्याहृतिभिश्च प्रायश्चित्तरूपाभिश्चतुराहु-तीर्हुत्वा व्यस्ताभिस्तिसृभिः पुनर्हुत्वा समिधं प्रक्षिप्य तिसृ-भिर्महाव्याहृतिभिर्हुत्वा समित्प्रक्षेपेण प्रायश्चित्तं समापयेत् अन्विति पश्चादित्यर्थः पर्य्युक्ष्य देवसवित इत्यादिभिरग्निं परितो जलेन वेष्टयेत्। ततो यज्ञवास्तु करोतीति यदुक्तं तद्विवृणोति तत इति तत आस्तरणात् तत कृतास्तरणादपरिमितान् दर्भान् गृहीत्वा घृतादावुक्तमिति मन्त्रेणाग्राणि मज्जयेत्। एवं मध्यान्यन्यानि मूलानि च। अनन्तरमेवामुञ्चन एनं कुशमुष्टिमद्भिः प्रणीताभिरभ्युक्ष्याग्नौ यः पशूनामधिपतीत्यनेन क्षिपेत्। एतत्तत एव वर्हिष इत्यारभ्य यदुक्तं तद्यज्ञवास्तु-नामकं कथयति आचार्य्या एतत् प्रयोजनन्तु प्रतिपत्तिकर्मत्वेन तद्द्रव्यविनाशे तत्कर्माप्राप्तावपि यज्ञो यस्मिन् वसतीति व्युत्पत्तिः प्रतिपाद्यार्थसिद्ध्यर्थं कुशान्तरमुष्टिमादायापि तत् कर्त्तव्यमिति एवमेव भट्टभाष्यम्। ततश्च पूर्णाहुत्यां मृडो-नामेति गोभिलपुत्त्रकृतछन्दोगपरिशिष्टान्मृड़नामानम् अग्निं संपूज्य 'दद्यादुत्थाय पूर्णां वै नोपविश्य कदाचन' इति भवि-ष्याग्निपुराणाभ्याम् उत्थाय पूर्णाहुतिं दद्यात्। ततश्च 'ऐशा-न्यां माहरेद्भस्म स्रुचा वाथ स्रुवेण वा।' वन्दनां कारये-

स्तेन शिरःकण्ठांशकेषु च । कश्यपस्येति मन्त्रेण यथानुक्रम-योगतः । ततः शान्तिं प्रकुर्वीत अवधारणवाचनं दक्षिणा च प्रदातव्या ब्राह्मणाश्च विसर्जनम्' इति वशिष्ठवचनोक्तानि कर्माणि कुर्य्यात् । शान्तिः सामगानां वामदेव्यगानं तथाच गोभिलः 'अपवृत्ते कर्माणि वामदेव्यगानं शान्त्यर्थमिति'। अपवृत्ते समाप्ते गानाशक्तौ त्रिधा पाठमाह छन्दोगपरिशिष्टं 'पर्य्युक्षणञ्च सर्वत्र कर्त्तव्यमदितेऽन्विति अन्ते च वामदेव्यस्य गानमित्यथवा त्रिधा' गानं कुर्य्यादृचस्त्रिधेति वा पाठः अव-धारणमच्छिद्रावधारणं दक्षिणादानानन्तरं कर्त्तव्यं न तु पाठक्रमादरः 'वृथा विप्रवचो यस्तु गृह्णाति मनुजः शुभे। अदत्त्वा दक्षिणां वापि स याति नरकं ध्रुवम्'। इति नार-दीयात् अत एव भट्टेनापि वामदेव्यगानानन्तरं दक्षिणाभि-हिता ततो दक्षिणात्रयं दद्यात् । न च 'ब्रह्मैवैक ऋत्विक् पाकयज्ञे संहोतेति' गोभिलसूत्रात् 'ब्रह्मणे दक्षिणा देया यत्र या परिकीर्त्तिता। कर्मान्तेऽनुच्यमानायां पूर्णपात्रादिका भवेत्'। इति छन्दोगपरिशिष्टात् ब्राह्मणे वृषोत्सर्गदक्षिणा देयेति वाच्यं होमदक्षिणाया एव ब्रह्मसम्प्रदानकत्वात् अत एव दर्शादियागमभिधाय गोभिलेनापि पूर्णपात्रो दक्षिणान्ब्रह्मणे दद्यादित्युक्तम् । कर्मान्तेऽपि पुंस्त्वं छान्दसम् एत-दनुसारात् कर्मान्त इति ब्रह्मसाध्यहोमान्तपरं न तु परिशिष्टप्रकाशोक्तनामकरणादिप्रधानकर्मान्तपरम् अतस्तद्दक्षिणा पात्रान्तरेऽपि देया एतेन वृषोत्सर्गे विष्णूक्ता दक्षिणा स्वयं होमपक्षे ब्रह्मणे देया अन्यकर्त्तृकहोमपक्षे तु 'विदध्या-द्धौत्रमन्यश्चेद्दक्षिणार्द्धहरो भवेत् स्वयञ्चेदुभयं कुर्य्यादन्यस्मै प्रतिपादयेत्' इति छन्दोगपरिशिष्टाद्धं ब्रह्मणे अर्द्धं होत्रे देयमिति परिशिष्टप्रकाशोक्तं 'वृषं वत्सतरीयुक्तमैशान्यां

चालयेद्दिशि। होतुर्वस्त्रयुग्मं दद्यात् सुवर्णं कांस्यमेव च। अथस्काराय दातव्यं वेतनं मनसेप्सितम्। भोजनं बहुसर्पिष्कं ब्राह्मणांश्च विभोजयेत्'। इति विष्णूक्ता होतृदक्षिणा सा कथं ब्रह्मणे देयेति। तस्मादत्र ब्रह्मणे पूर्णपात्रादिका दक्षिणा वस्त्रसुवर्णकांस्यादिरूपा। स्वयं होतृत्वे एषापि ब्रह्मणे देयेति आचार्य्याय च प्रागुक्त छन्दोगपरिशिष्टात् वृषवत्सतरीणामलङ्कारवस्त्राणि प्रतिपाद्य गोरूपा वृषोत्सर्गस्य दक्षिणा देयेति भविष्यपुराणं 'वृषतुल्यवयो वर्णो वृषः स्याद्दक्षिणाऽत्विजः। वृषोत्सर्गे तथा पुंसां स्त्रीणां स्त्री गौर्विशिष्यते'। अतएव पारस्करेण गोयज्ञं प्रकृत्य तस्य तुल्यवया गौर्दक्षिणा इत्युक्त्वा तथा गोयज्ञेन वृषोत्सर्गो व्याख्यात इत्यनेन वृषरूपदक्षिणातिदिष्टा अतएव ब्रह्महोत्राचार्य्य दक्षिणाभेदाय ब्राह्मणेभ्य इति ब्रह्मपुराणेन निर्दिष्टं यथा 'दद्यादनेन मन्त्रेण तिलाक्षतयुक्तं जलम्। पितृभ्यश्च समासेन ब्राह्मणेभ्यश्च दक्षिणा। ततः प्रमुदितास्तेन वृषभेण समन्विता। वनेषु गावः क्रीड़न्ति वृषोत्सर्गप्रसिद्धये। अथ वृत्ते वृषोत्सर्गे दाता वक्ष्यतिभिः पदैः। ब्राह्मणानाह यत् किञ्चिन्मयोत्सृष्टन्तु निर्जने। तत्कश्चिदन्यो न नयेद्विभाज्यश्च यथाक्रमम्। न वाह्यं न च तत् क्षीरं पातव्यं केनचित् क्वचित्'। एतदर्द्धं क्वचित् पूर्वत्र दृश्यते पद्धतिकारेणात्र लिख्यते। 'वृषोत्सर्गादृते नान्यत् पुण्यमस्ति महीतले'। ततः प्रागुक्तविष्णुवचनात् वृषाङ्कन कर्त्रे वेतनं दातव्यं ब्राह्मणान् सर्पिरादिना भोजयेच्च। गोभिलेनापि परिभाषायामुक्तम् अपवर्गे अभिरूपभोजनं यथाशक्तीति। अपवर्गे कर्मसमाप्तौ अभिरूपमाह गृह्यसंग्रहकारः। 'यत्र विद्या च वृत्तञ्च सत्यं धर्मः शमोदमः। अभिरूपः स विज्ञेय आश्रमे यत्र्यवस्थितः'। अथ यज्ञोपवीतिति

प्रजनयति गर्भोत्पादं करोति। अजीवतोऽग्रनायसम्भवात् जीवचिति वत्सं न युज्यते इति चेन्न गर्भ एव जीवसम्बन्धा-दारभ्य चेष्टया आप्युत्सर्गकर्त्ता फलभागीति ज्ञापनाय जीव-चित्युक्तं तथाच वायुपुराणं 'वृषेण गर्भिणी गौर्या चेष्टमानश्च लीलया। बत्सृष्टस्तेन तृप्यन्ति देवाः पितृगणैः सह'। तेन गर्भस्थचेष्टमानवृषेण तथा 'यः पूर्वाह्णे वृषः किञ्चिदाचा-रादिकमाचरेत्। अमरास्तेन तृप्यन्ति प्रविशन्ति च तत्पदम्। मध्याह्ने चेष्टितेनास्य तृप्यन्त्यृषि गणाः सदा। अप-राह्णे तु पितरः सन्ध्यायां सिद्धचारणाः। शर्वर्य्यां सर्वभूतानि तृप्यन्ति पितरस्तथा'। अत्र च तत्तत् क्रियाकरणोपाधिकं हि तत्तत्फलं तदकरणे सर्वथैव न सम्भवतीति सन्देहाच्च तत्तत्कामस्य अत्राधिकार इति किन्तु तथाभूतास्तत्फलं जायं इति प्रागुक्तनारदीयादच्छिद्रावधारणं कुर्य्यात् ततः साङ्गतां विष्णुं स्मरेत्। 'प्रमादात् कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः। तद्विष्णोरिति मन्त्रेण मज्जेदप्सु पुनः पुनः। गायत्री वैष्णवी ह्येषा विष्णोः संस्मरणाय वै'। इति योगियाज्ञवल्क्यात्। ततो 'गच्छध्वममराः सर्वे गृहीत्वार्चां स्वमालयम्। सन्तुष्टावरमस्माद् दत्त्वेदानीं सुपूजिताः'। इति विष्णुधर्मोत्तरीयेण विसर्जयेत् ततः 'प्रीयतां पुण्डरीकाक्षः सर्वयज्ञेश्वरो हरिः। तस्मिंस्तु जगत्तुष्टे प्रीणिते प्रीणितं जगत्'। इति मत्स्यपुराणं पठेत्।

इति वन्द्यघटीय श्रीहरिहरभट्टाचार्य्यात्मज श्रीरघुनन्दन-भट्टाचार्य्यविरचितं सामगवृषोत्सर्गतत्त्वं समाप्तम्।

---

# श्रीपुरुषोत्तमतत्त्वम् ।

सच्चिदानन्दगोविन्दं नत्वा श्रीरघुनन्दनः ।
स्मृतितत्त्वे विधिं वक्ति क्षेत्रे श्रीपुरुषोत्तमे ॥

अथ पुरुषोत्तमदर्शनविधानादि । तत्र ब्रह्मपुराणं 'पृथिव्यां भारतं वर्षं कर्मभूमिरुदाहृता । न खल्वन्यत्र मर्त्यानां भूमौ कर्म विधीयते । तत्रास्ते भारते वर्षे दक्षिणोदधिसंस्थितः । ओड्रदेश इति ख्यातः स्वर्गमोक्षप्रदायकः । समुद्रादुत्तरे तीरे यावद्विरजमण्डलम्' । तीर्थकाण्डकल्पतरौ वामनपुराणम् 'उपोष्य रजनीमेकां विरजां स नदीं ययौ । स्नात्वा विरजसे तीर्थे दत्त्वा पिण्डं पितुस्तथा । दर्शनार्थं ययौ धीमानजितं पुरुषोत्तमम् । तं दृष्ट्वा पुण्डरीकाक्षमक्षरं परमं शुचिः । उपोष्य सतिला देया माहेन्द्रं दक्षिणं ययौ' । उपोष्य स्थित्वा । तथा 'आदौ यद्दारु प्लवते सिन्धोः पारे अपूरुषम् । तदा लभस्व दुर्द्दनो तेन याहि परं स्थलम्' । अस्य व्याख्या सांख्यायनभाष्ये आदौ विप्रकृष्टे देशे वर्त्तमानं यद्दारु दारुमयपुरुषोत्तमाख्यदेवताशरीरं प्लवते जलस्योपरि वर्त्तते अपूरुषं निर्मातृरहितत्वेन अपूरुषं तत् आलभस्व दुर्द्दनोहे होतः तेन दारुमयेन देवेन उपास्यमानेन परं स्थलं वैष्णवं लोकं गच्छेत्यर्थः । अथर्ववेदेऽपि 'आदौ यद्दारु प्लवते सिन्धोर्मध्ये अपूरुषम् । तदा लभस्व दुर्द्दनो तेन या हि परं स्थलम्' । अत्रापि तथैवार्थः मध्ये तीरे । स्कन्दपुराणम् 'इन्द्रद्युम्न प्रसन्नस्ते भक्त्या निष्कामकर्मभिः । उत्सृज्य वित्त-कोटीस्तु यन्ममायतनं कृतम् । भङ्गेऽप्येतस्य राजेन्द्र स्थानं

न त्यज्यते मया'। ब्रह्मपुराणे 'विरजे विरजा नाम ब्रह्मणा संप्रतिष्ठिता। तस्याः सन्दर्शने मर्त्यः पुनात्यासप्तमं कुलम्। स्नात्वा दृष्ट्वा तु तां देवीं भक्त्या पूज्य प्रणम्य च। नरः स्ववंशमुद्धृत्य मम लोकं स गच्छति। आस्ते वैतरणी नाम सर्वपापहरा नदी। तस्यां स्नात्वा नरश्रेष्ठ सर्वपापैः प्रमुच्यते'। वैतरणीमधिकृत्य महाभारते 'आयातभागं सर्वेभ्यो भागिभ्यो भागमुत्तमम्। देवाः सङ्कल्पयामासुर्भयाद्रुद्रस्य शाश्वतीम्। इमां गाथां समुद्धृत्य मम लोकं सगच्छति। देवायनं तस्य पन्याः शक्रस्येव विराजते'। ब्रह्मपुराणे 'आस्ते स्वयम्भुस्तत्रैव क्रोड़रूपी हरिः स्वयम्। दृष्ट्वा प्रणम्य तं भक्त्या नरो विष्णुपुरं व्रजेत्'। तथा 'विरजायां मम क्षेत्रे पिण्डदानं करोति यः। स करोत्यक्षयां तृप्तिं पितॄणां नात्र संशयः। मम क्षेत्रे मुनिश्रेष्ठ विरजे ये कलेवरम्। परित्यजन्ति पुरुषास्ते मोक्षं प्राप्नुवन्ति वै'। तथा 'नदी तत्र महापुण्या विन्ध्यपादविनिर्गता। चित्रोत्पलेति विख्याता सर्वपापहरा शुभा'। चित्रोत्पला महानदी। तथा 'सत्यं सत्यं पुनः सत्यं क्षेत्रं तत्परमं महत्। पुरुषाख्यं सकृद्दृष्ट्वा सागराम्भः सकृत्प्लुतः। ब्रह्मविद्यां सकृज्जप्ता गर्भवासो न विद्यते'। पुरुषोत्तमक्षेत्रदर्शनसागरमरणब्रह्मविद्या जपानां प्रत्येकं गर्भवासाजनकत्वम्। कूर्मपुराणे 'तीर्थं नारायणस्यास्य स्नात्वा तु पुरुषोत्तमम्। अत्र नारायणः श्रीमानास्ते परमपूरुषः। पूजयित्वा परं विष्णुं तत्र स्नात्वा द्विजोत्तमाः। ब्राह्मणान् भोजयित्वा तु विष्णुलोकमवाप्नुयात्'। श्राद्धकाण्डकल्पतरौ वायुपुराणे 'धूतपापं तथा तीर्थं सुभद्रा दक्षिणस्तथा। गोकर्णो गजकर्णश्च तथाच पुरुषोत्तमः। एतेषु पितृतीर्थेषु श्राद्धमानन्त्यमश्नुते'। ब्रह्मपुराणे 'चक्रं दृष्ट्वा हरेर्दूरात् प्रासादो-

परिसंस्थितम्। सहसा मुच्यते पापात् सर्वस्मादिति मे मतिः'। तथा 'मार्कण्डेयह्रदे गत्वा स्नात्वा चोदङ्मुखः शुचिः। निमज्जे त्रींश्च वारांश्च इमं मन्त्रमुदीरयन्। संसारसागरे मग्नं पापग्रस्तमचेतनम्। पाहि मां भगनेत्रघ्न त्रिपुरारे नमोऽस्तु ते। नमः शिवाय शान्ताय सर्वपापहराय च। स्नानं करोमि देवेश! मम नश्यतु पातकम्। नाभिमात्रजले स्थित्वा विधिवद्देवता मुनीन्। तिलोदकेन मतिमान् पितॄनन्यांश्च तर्पयेत्। स्नात्वैव तु तथा तत्र ततो गच्छेच्छिवालयम्। प्रविश्य देवतागारं कृत्वा तु त्रिःप्रदक्षिणम्। मूलमन्त्रेण संपूज्य मार्कण्डेयस्य चेश्वरम्। अघोरेण च मन्त्रेण प्रणिपत्य प्रसादयेत्'। ओम् नमः शिवायेति मूलमन्त्रः। ओम् अघोरेभ्योऽथ घोरेभ्याघोरघोरतरेभ्यः सर्वतः सर्वसर्वेभ्यो नमस्ते रुद्ररूपेभ्य इत्यघोरमन्त्रः। तथा 'त्रिलोचन नमस्तेऽस्तु नमस्ते शशिभूषण। पाहि मां त्वं विरूपाक्ष महादेव नमोऽस्तु ते। मार्कण्डेयह्रदे त्वेवं स्नात्वा दृष्ट्वा तु शङ्करम्। दशानामश्वमेधानां फलं प्राप्नोति मानवः। पापैः सर्वैर्विनिर्मुक्तः शिवलोकं स गच्छति। तत्र भुक्त्वा वरान् भोगान् यावदाहूतसंप्लवम्। इह लोकं समासाद्य ततो मोक्षमवाप्नुयात्। कल्पवृक्षं ततो गत्वा कृत्वा तं त्रिःप्रदक्षिणम्। पूजयेत् परया भक्त्या मन्त्रेणानेन तं वटम्। ओम् नमोऽव्यक्तरूपाय महाप्रलयप्राणते। महद्रसोपविष्टाय न्यग्रोधाय नमो नमः। अमरस्त्वं महाकल्पे हरेश्चायतनं वट। न्यग्रोध हर मे पापं कल्पवृक्ष नमोऽस्तु ते। भक्त्या प्रदक्षिणं कृत्वा महत् कल्पवटं नरः। सहसा मुच्यते पापात् जीर्णत्वच इवोरगः। छायां तस्य समासाद्य कल्पवृक्षस्य भो द्विजाः। ब्रह्महत्या नरो दह्यात् पापेष्वन्येषु का कथा।

दृष्ट्वा कृष्णाङ्गसम्भूतं ब्रह्मतेजो मयं वटम्। न्यग्रोधाकृतिनं विष्णुं प्रणिपत्य च भो द्विजाः। राजसूयाश्वमेधाभ्यां फलं प्राप्नोति चाधिकम्। तथा स्ववंशमुद्धृत्य विष्णुलोकं स गच्छति। वैनतेयं नमस्कृत्य कृष्णस्य पुरतः स्थितम्। सर्व-पापविनिर्मुक्तस्ततो विष्णुपुरं व्रजेत्। दृष्ट्वा वटं वैनतेयं यः पश्येत् पुरुषोत्तमम्। सङ्कर्षणं सुभद्राञ्च स याति परमां गतिम्। प्रविश्यायतनं विष्णोः कृत्वा तं त्रिःप्रदक्षिणम्। सङ्कर्षणं स्वमन्त्रेण भक्त्या पूज्य प्रसादयेत्। नमस्ते हलधृ-ग्राम नमस्ते मुषलायुध। नमस्ते रेवतीकान्त! नमस्ते भक्तवत्सल!। नमस्ते बलिनां श्रेष्ठ! नमस्ते धरणीधर!। प्रलम्बारे नमस्तेऽस्तु पाहि मां कृष्णपूर्वज:। एवं प्रसाद्य चानन्तमजेयं त्रिदशार्चितम्। कैलासशिखराकारं चन्द्रात् कान्ततराननम्। नीलवस्त्रधरं देवं फणाविकलमस्तकम्। महाबलं हलधरं कुण्डलैकविभूषणम्। रौहिणेयं नरो भक्त्या लभेताभिमतं फलम्। सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति। आभूतसंप्लवं यावत् भुक्त्वा तत्र सुखं नरः। पुण्य-क्षयादिहागत्य प्रवरे योगिनां कुले। ब्राह्मणप्रवरो भूत्वा सर्वशास्त्रार्थपारगः। ज्ञानं तत्र समासाद्य मुक्तिं प्राप्नोति दुर्लभाम्। एवमभ्यर्च्य हलिनं ततः कृष्णं विचक्षणः। द्वाद-शाक्षरमन्त्रेण पूजयेत् सुसमाहितः'। आभूतसंप्लवं यावत् भूत-संप्लवं यावत् आप्रलयकालम् इति यावत् छान्दसो भकारस्य हकारः। द्वादशाक्षरमन्त्रेण ओम् नमो भगवते वासुदेवाय इत्यनेन। 'द्विषट्कवर्णमन्त्रेण भक्त्या ये पुरुषोत्तमम्। पूज-यन्ति सदा धीरास्ते मोक्षं प्राप्नुवन्ति वै। तस्मात्तेनैव मन्त्रेण भक्त्या कृष्णं जगद्गुरुम्। संपूज्य गन्धपुष्पाद्यैः प्रणिपत्य प्रसादयेत्। जय कृष्ण जगन्नाथ जय सर्वाघनाशन!। ज

चाणूर केशिघ्न जय कंसनिसूदन!। जय पद्मपलाशाक्ष जय चक्रगदाधर!। जय नीलाम्बुदश्याम जय सर्वसुखप्रद!। जय देव जगत् पूज्य जय संसारनाशन!। जय लोकपते नाथ जय वाञ्छाफलप्रद!। संसारसागरे घोरे निःसारे दुःखफेनिले। क्रोधग्राहाकुले रौद्रे विषयोदकसंप्लवे। नानारोगोर्मिकलिले मोहावर्त्तसुदुस्तरे। निमग्नोऽहं सुरश्रेष्ठ! त्राहि मां पुरुषोत्तम!। एवं प्रसाद्य देवेशं वरदं भक्तवत्सलम्। सर्वपापहरं देवं सर्वकामफलप्रदम्। प्रानदं द्विभुजं देवं पद्मपत्रायतेक्षणम्। महोरसं महाबाहुं पीतवस्त्रं शुभाननम्। शङ्खचक्रगदापाणिं मुकुटाङ्गदभूषणम्। सर्वलक्षणसंयुतं वनमालाविभूषितम्। दृष्ट्वा नरोऽञ्जलिं बध्वा दण्डवत् प्रणिपत्य च। अश्वमेधसहस्राणां फलं प्राप्नोति भो द्विजाः। यत् फलं सर्वतीर्थेषु स्नानदाने प्रकीर्त्तितम्। नरस्तत् फलमाप्नोति दृष्ट्वा कृष्णं प्रणम्य च'। अत्र यद्यपि दृष्ट्वा प्रणम्येति श्रवणात् समुच्चित एव फलान्वयोऽन्यथा वाक्यभेदः स्यात् तथापि शेषे दर्शनमात्र एव फलोपसंहारात् प्रत्येकं फलान्वय इति वदन्ति। ब्रह्मपुराणे 'ततः पूज्य स्वमन्त्रेण सुभद्रां भक्तवत्सलाम्। प्रसादयेत्ततो विप्राः प्रणिपत्य कृताञ्जलिः'। स्वमन्त्रेण प्रणवादिनमोऽन्तेन नाम्ना। यथा गारुड़े 'प्रणवादिनमोऽन्तेन चतुर्थ्यन्तश्च सत्तमाः। देवतायाः स्वकं नाम मूलमन्त्रः प्रकीर्त्तितः। नमस्ते सर्वदेवेशि नमस्ते सुखमोक्षदे। पाहि मां पद्मपत्राक्षि कात्यायनि नमोऽस्तु ते। एवं प्रसाद्य तां देवीं जगद्धात्रीं जगद्धिताम्। बलदेवस्य भगिनीं सुभद्रां वरदां शिवाम्। कामगेन विमानेन नरो विष्णुपुरं व्रजेत्। निष्क्रम्य देवतागारात् कृतकृत्यो भवेन्नरः। प्रणम्यायतनं पश्चात् व्रजेत्तत्र च भो द्विजाः। भक्त्या

दृष्ट्वा च तं देवं प्रणम्य नरकेशरिम्। मुच्यते पातकैर्मर्त्यः समस्तैर्नात्र संशयः। नरकेशरिं नरकेशरिणम्। तथा 'अनन्ताख्यं वासुदेवं दृष्ट्वा भक्त्या प्रणम्य च। सर्वपापविनिर्मुक्तो नरो याति परं पदम्'। तथा 'श्वेतगङ्गां नरः स्नात्वा यः पश्येत् श्वेतमाधवम्'। तथा 'कुशाग्रेणापि राजेन्द्र! श्वेतगाङ्गेयमम्बु च। स्पृष्ट्वा स्वर्गं गमिष्यन्ति मद्भक्ता ये समाहिताः। यस्त्विमां प्रतिमां लोके माधवाख्यां शशिप्रभाम्। विज्ञाय सर्वलोकान् वै मम लोके महीयते'। तथा 'श्वेतमाधवमालोक्य समीपे मत्स्यमाधवम्। एकार्णवजले मग्नं रोहितं रूपमास्थितम्। देवानां तारणार्थाय रसातलतले स्थितम्'। तथा 'आद्यावतारणं रूपं माधवं मत्स्यरूपिणम्। प्रणम्य प्रयतो भूत्वा सर्वदुःखाद्विमुच्यते'। तथा 'पूर्वोक्तेन तु मन्त्रेण नमस्कृत्य तु तं वटम्। दक्षिणाभिमुखो गच्छेत् धन्वन्तरशतत्रयम्'। पूर्वोक्तेन ओम् नमोऽव्यक्तरूपायेत्यादिना। धनुश्चतुर्हस्तम्। तथा 'उग्रसेनं पुरा दृष्ट्वा स्वर्गद्वारेण सागरम्। गत्वाचम्य शुचिस्तत्र ध्यात्वा नारायणं परम्। न्यसेदष्टाक्षरं मन्त्रं पश्चाद्धस्तशरीरयोः'। समुद्रोदकेन नाचामेत् तस्यापेयत्वस्य तैत्तिरीयश्रुतावुक्तत्वात्। 'यैः क्षतः सर्वभक्ष्योऽग्निस्त्वपेयश्च महोदधिः। क्षयी चाप्यायितश्चन्द्रः को न नश्येत् प्रकोप्य तान्'। इति मनुनाभिहितत्वाच्च। यैर्ब्राह्मणैः। तथा 'ओङ्कारञ्च नमस्कारं यत्किञ्चिज्जीवसंश्रितम्। अङ्गुष्ठे हस्तपादे च शिखायां शिरसि न्यसेत्। शेषाम् हस्ततलं यावत् तर्जन्यादिषु विन्यसेत्'। ओं नम इति वर्णं हस्ताङ्गुष्ठयोः हस्तयोः पादयोः शिखायां शिरसि च न्यस्य नाकारं तर्जन्योः राकारं मध्यमयोः यकारम् अनामिकयोः णाकारं कनिष्ठयोः यकारं

करतलयोः न्यसेत्। ओङ्कारं वामपादे तु नकारं दक्षिणे न्यसेत्। मोकारं वामकट्यान्तु नाकारं दक्षिणे न्यसेत्। रकारं नाभिदेशे तु यकारं वामबाहुके। णाकारं दक्षिणे न्यस्य यकारं मूर्द्ध्नि विन्यसेत्। अधश्चोर्द्ध्वं च हृदये पार्श्वतः पृष्ठतोऽग्रतः। ध्यात्वा नारायणं पश्चादाचरेत् कवचं बुधः। पूर्वे मां पातु गोविन्दो दक्षिणे मधुसूदनः। भूतले पातु वाराहस्तथोर्द्ध्वे च त्रिविक्रमः। कृत्वैव कवचं पश्चादात्मानं चिन्तयेद्धरिम्। अहं नारायणो देवः शङ्खचक्रगदाधरः। एवं ध्यात्वा तथात्मानमिमं मन्त्रमुदीरयेत्। त्वमग्निर्द्विपदां नाथ रेतोधाः कामदीपनः। प्रधानः सर्व्वभूतानां जीवानां प्रभुरव्ययः। अमृतस्यारणिस्त्वं हि देवयोनिरपां पतिः। वृजिनं हर मे सर्व्वं तीर्थराज नमोऽस्तु ते। एवमुच्चार्य्य विधिवत्ततः स्नानं समाचरेत्। अन्यथा भो द्विजश्रेष्ठाः स्नानं तत्र न शस्यते'। वनपर्व्वणि 'अग्निश्च तेजो वड़वा च देहो रेतोधाविष्णोरमृतस्य नाभिः। एवं ब्रुवन् पाण्डव सत्यवाक्य-मतोऽवगाहेत पतिं नदीनाम्। अन्यथा हि कुरुश्रेष्ठ! देव-योनिरपां पतिः। कुशाग्रेणापि कौन्तेय! स्प्रष्टव्यो न महो-दधिः'। वड़वा इत्यत्र वड़वा चेति क्वचित् पाठः। ब्रह्म-पुराणे 'कृत्वा चाब्दैवतैर्मन्त्रैरभिषेकञ्च मार्ज्जनम्। अन्तर्ज्जले जपेत् पश्चात् त्रिरावृत्त्यघमर्षणम्। अब्दैवतैः आपोहिष्ठा-दिभिस्त्रिभिः। अघमर्षणञ्च ऋतञ्च सत्यञ्चेत्यादि। देवान् पितॄंस्तथा चान्यान् सन्तर्प्याचम्य वाग्यतः'। अन्यान् ऋषीन्। 'हस्तमात्रं चतुष्कोणं चतुर्द्वारं सुशोभनम्। पुरं प्रलिख्य भो विप्रास्तीरे तस्य महोदधेः। मध्ये तत्र लिखेत् पद्मम् अष्टपत्रं सकर्णिकम्। एवं मण्डलमालिख्य पूजयेत्तत्र भो द्विजाः। अष्टाक्षरविधानेन नारायणमजं विभुम्'।

हृदविधिमुद्राभिहितम्। अर्चनं ये न जानन्ति हरेर्मन्त्रै-र्यथोदितम्। ते तत्र मूलमन्त्रेण पूजयन्त्वच्युतं सदा'। ओ नमो नारायणायेति मूलमन्त्रः। 'एवं संपूज्य विधिवद्भक्त्या तं पुरुषोत्तमम्। प्रणम्य शिरसा पश्चात् सागरन्तु प्रसादयेत्। प्राणस्त्वं सर्वभूतानां योनिश्च सरितांपते। तीर्थराज नम-स्तुभ्यं त्राहि मामच्युतप्रिय' अत्र च 'पिप्पलाद समुद्भूते कृत्ये लोकभयङ्करि। पाषाणस्ते मया दत्तमाहारं परि-कल्पय' इति मन्त्रेण पाषाणप्रक्षेपः सदाचारसिद्ध इति विद्याकरः ब्रह्मपुराणे 'तीर्थे चाभ्यर्च्य विधिवत् नारायणमना-मयम्। रामं कृष्णं सुभद्राञ्च प्रणिपत्य च सागरम्। दशा-नामश्वमेधानां फलं प्राप्नोति मानवः। सर्वपापविनिर्मुक्तः सर्वदुःखविवर्जितः। कुलैकविंशमुद्धृत्य विष्णुलोकञ्च गच्छति। पितृणां ये प्रयच्छन्ति पिण्डं तत्र विधानतः। अक्षयां पितर-स्तेषां तृप्तिं संप्राप्नुवन्ति वै'। तथा कोट्यो नवनवत्यश्च तत्र तीर्थानि सन्ति वै। तस्मात् स्नानञ्च दानञ्च होमं जप-सुरार्चनम्। यत्किञ्चित् क्रियते तत्र चाक्षयं भवति द्विजाः। ततो गच्छेद्विजश्रेष्ठाः तीर्थं यज्ञाङ्गसम्भवम्। इन्द्रद्युम्नसरो नाम यत्रास्ते पावनं शुभम्। गत्वा तत्र शुचिः श्रीमाना-चम्य मनसा हरिम्। ध्यात्वोपस्थाय च जपन्निदं मन्त्रमुदी-रयेत्। अश्वमेधाङ्गसम्भूत तीर्थसर्वाघनाशन। स्नानं त्वयि करोम्यद्य पापं हर नमोऽस्तु ते। एवमुच्चार्य्य विधिवत् स्नात्वा देवानृषीन् पितॄन्। तिलोदकेन चान्यांश्च सन्तर्प्या-चम्य वाग्यतः। दत्त्वा पितॄणां पिण्डांश्च संपूज्य पुरुषोत्त-मम्। दशाश्वमेधिकं सम्यक् फलं प्राप्नोति मानवः'। तथा 'नामानधः समुद्राश्च सप्ताहं पुरुषोत्तमे। ज्येष्ठशुक्लदश-म्यादिसप्ताहं यान्ति सर्वदा। स्नानदानादिकं तस्मात् देवता-

प्रेक्षणादिकम्। यत्किञ्चित् क्रियते तात तस्मिन् काले क्षयं भवेत्। एवं कृत्वा पञ्चतीर्थमेकादश्यामुपोषितः। ज्यैष्ठे शुक्लदशम्यान्तु पश्येत् श्रीपुरुषोत्तमम्। स पूर्वोक्तं फलं प्राप्य क्रीड़ित्वा चाच्युतालये। प्रयाति परमं स्थानं यस्मान्न विनिवर्त्तते'। तीर्थभेदेन स्नानान्तरावृत्तिमाह निगमः। 'नावर्त्तयेत् पुनः कर्म्म तर्पणादिकमन्वहम्। काम्यनैमित्तिके हित्वा एकं श्लोकत्र वासरे। व्यपोह्य चाष्टमं भागमुदयाद् यत्र कुत्रचित्। तिथ्योर्युग्मेऽप्ययुग्मे वा यद् यदाह्निकमाचरेत्'। ब्रह्मपुराणे 'मार्कण्डेया वटः कृष्णो रौहिणेयो महोदधिः। इन्द्रद्युम्नसरश्चैव पञ्चतीर्थी विधिः स्मृतः' मार्कण्डेया वटो मार्कण्डेयह्रदः। कृष्णः अक्षयवटः न्यग्रोधाकृतिनं विष्णुमिति पूर्वोक्तात्। वराहपुराणे 'यस्तिष्ठेदेकपादेन कुरुक्षेत्रे नराधिप। वर्षाणामयुतं सप्त वायुभक्ष्यो जितेन्द्रियः। ज्यैष्ठे मासि सिते पक्षे द्वादश्यान्तु विशेषतः। पुरुषोत्तममासाद्य ततोऽधिकफलं लभेत्'। अग्निपुराणं 'वैशाखस्य सिते पक्षे तृतीयाक्षयसंज्ञिता। तत्र मां लेपयेद्गन्धलेपनैरतिशोभनम्'। तथा 'ज्यैष्ठ्यामहञ्चावतीर्णस्तत् पुण्यं जन्मवासरम्। तस्यां मे स्नपनं कुर्य्यात् महास्नानविधानतः। ज्यैष्ठे प्रातस्तने काले ब्रह्मणा सहितञ्च माम्। रामं सुभद्रां संस्नाप्य मम लोकमवाप्नुयात्'। तथा 'आषाढस्य सिते पक्षे द्वितीया पुष्यसंयुता। तस्यां रथे समारोप्य रामं मां भद्रया सह। यात्रोत्सवं प्रवर्त्याथ प्रीणयेच्च द्विजान् बहून्'। तथा 'ऋक्षाभावात्तथा कार्य्या सदा सा प्रीतये मम'। स्कन्दपुराणे 'फाल्गुन्यां क्रीड़नं कुर्य्यात् दोलायां मम भूमिप'। ब्रह्मपुराणे 'उत्तरे दक्षिणे विप्रास्त्वयने पुरुषोत्तमे। दृष्ट्वा रामं सुभद्राञ्च विष्णुलोकं व्रजेन्नरः। नरो दोलागतं दृष्ट्वा

गोविन्दं पुरुषोत्तमम्। फाल्गुन्यां संयतो भूत्वा गोविन्दस्य पुरं व्रजेत्। विषुवद्दिवसे प्राप्ते पञ्चतीर्थी विधानतः। कृत्वा मञ्चगतं कृष्णं दृष्ट्वा तत्राथ भो द्विजाः। नरः समस्तयज्ञानां फलं प्राप्नोति दुर्लभम्। विमुक्तः सर्वपापेभ्यो विष्णुलोकञ्च गच्छति। यः पश्यति तृतीयायां कृष्णं चन्दनभूषितम्। वैशाखस्य सिते पक्षे स यात्यच्युतमन्दिरम्'। तथा 'मासि जैष्ठे तु संप्राप्ते नक्षत्रे शक्रदैवते। पौर्णमास्यां तथा स्नानं सर्वकालं हरेर्द्विजाः। तस्मिन् काले तु ये मर्त्याः पश्यन्ति पुरुषोत्तमम्। बलभद्रं सुभद्राञ्च स याति पदमव्ययम्'। तथा 'स्नातं पश्यति यः कृष्णं व्रजन्तं दक्षिणामुखम्। गुण्डिकामण्डपं यान्तं ये पश्यन्ति रथस्थितम्। कृष्णं बलं सुभद्राञ्च ते यान्ति भवनं हरेः। ये पश्यन्ति तदा कृष्णं सप्ताहं मण्डपे स्थितम्। हरिं रामं सुभद्राञ्च विष्णुलोकं व्रजन्ति ते'। तथा 'संवत्सरमुपोषित्वा मासत्रयमथापि वा। तेन यष्टं हुतं तेन तेन तप्तं तपो महत्। स याति परमं स्थानं यत्र योगेश्वरो हरिः'। तथा 'दृष्ट्वा रामं महाज्यैष्ठ्यां कृष्णं सह सुभद्रया। विष्णुलोकं नरो याति समुद्धृत्य शतं कुलम्'। तथा 'वार्षिकांश्चतुरो मासान् यावत् स पुरुषोत्तमे। काशीवासयुगान्यष्टौ दिनेनैकेन लभ्यते'। मत्स्यपुराणं 'कोटिजन्मकृतं पापं पुरुषोत्तमसन्निधौ। कृत्वा सूर्य्यग्रहे स्नानं विमुच्यति महोदधौ'। ब्रह्मपुराणे 'पथि श्मशाने गृहमण्डपे वा रथ्याप्रदेशेऽपि च यत्र तत्र। इच्छन्ननिच्छन्नपि यत्र तत्र संत्यज्य देहं लभते च मोक्षम्। देहं त्यजन्ति पुरुषा ये तत्र पुरुषोत्तमे। कल्पवृक्षं समासाद्य मुक्तास्तेनात्र संशयः। वटसागरयोर्मध्ये ये त्यजन्ति कलेवरम्। ते दुर्लभं परं मोक्षमाप्नुवन्ति न संशयः'। तत्रैव 'तथा चैवोत्कले देशे कोत्तिवास मही-

श्वरः। सर्वपापहरं तस्य क्षेत्रं परमदुर्लभम्। लिङ्गकोटि-समायुक्तं वाराणस्याः समं शुभम्। एकाम्रकेति विख्यातं तीर्थाष्टकसमन्वितम्। तीर्थं विन्दुसरो नाम तस्मिन् क्षेत्रे द्विजोत्तमाः। देवानृषीन् मनुष्यांश्च पितॄन् सन्तर्पयेत्ततः। तिलोदकेन विधिना नामगोत्रविधानवित्। स्नात्वैव विधि-वत्तत्र सोऽश्वमेधफलं लभेत्। पिण्डं ये संप्रयच्छन्ति पितृभ्यः सरसस्तटे। पितॄणामक्षयां तृप्तिं ते कुर्वन्ति न संशयः। ततः शम्भोर्गृहं गच्छेद् वाग्यतः संयतेन्द्रियः। प्रविश्य पूजयेत् पूर्वं स्नात्वा तत्र प्रदक्षिणम्। आगमोक्तेन मन्त्रेण वेदोक्तेन च शङ्करम्। अदीक्षितश्च वा देवान् मूलमन्त्रेण चार्चयेत्'। तथा 'सर्वपापविनिर्मुक्तो रूपयौवनगर्वितः। कुलैकविंश-मुद्धृत्य शिवलोकं स गच्छति'। तथा 'पञ्चदेवविरूपाक्षं देवीञ्च शारदां शिवाम्। गणचण्डं कार्त्तिकेयं गणेशं वृषभं तथा। कल्पद्रुमञ्च सावित्रीं शिवलोकं स गच्छति। एत-त्तथा मुनिश्रेष्ठाः क्षेत्रं प्रोक्तं सुदुर्लभम्। कोनार्कस्योदधे-स्तीरं भुक्तिमुक्तिफलप्रदम्। स्नात्वैव सागरे दत्त्वा सूर्या-यार्घ्यं प्रणम्य च। नरो वा यदि वा नारी सर्वकामफलं लभेत्। ततः सूर्यालयं गच्छेत् पुष्पमादाय वाग्यतः। प्रविश्य पूजयेद्भानुं कुर्य्यात्तं त्रिः प्रदक्षिणम्। दशानामश्व-मेधानां फलं प्राप्नोति मानवः'।

इति श्रीहरिहरभट्टाचार्य्यात्मज श्रीरघुनन्दनभट्टाचार्य्य-विरचितं पुरुषोत्तमतत्त्वं समाप्तम्।

---

# दिव्यतत्त्वम् ।

प्रणम्य सच्चिदानन्दं गोविन्दमजमव्ययम् ।
स्मृतितत्त्वे दिव्यतत्त्वं वक्ति श्रीरघुनन्दनः ।

अथ दिव्यानि । तत्र बृहस्पतिः 'धटोऽग्निरुदकञ्चैव विषं कोषश्च पञ्चमः । षष्ठश्च तण्डुलः प्रोक्तः सप्तमस्तप्तमाषकः । अष्टमं फालमित्युक्तं नवमं धर्मजं स्मृतम् । दिव्यान्येतानि सर्वाणि निर्दिष्टानि स्वयम्भुवा' । अथ किं तद्दिव्यम् । तत्र मानुषप्रमाणानिर्णयस्यापि निर्णायकं यत्तद्दिव्यमितिलोक प्रसिद्धम् अपिना मानुषप्रमाणसत्त्वेऽपि यत्र चैव धटाद्यङ्गीकारस्तत्रापि एतद्भवतीति सूचितम् । अतएव लिखितसाक्षिभुक्तिलक्षणत्रिविधमानुषप्रमाणभिन्नप्रमाणं दिव्यं तच्च प्रमाणं न केवलं भावैकगोचरं किन्तु भावाभावाविशेषेण गोचरयतीति । तत्र महाभियोगे दिव्यान्याह याज्ञवल्क्यः 'तुलाग्न्यापो विषं कोषो दिव्यानीह विशुद्धये । महाभियोगेष्वेतानि शीर्षकस्थेऽभियोक्तरि' । विशुद्धये सन्दिग्धार्थस्य सन्देहनिवृत्तये । महाभियोगेषु महापातकादिगुरुतराभियोगेषु । शीर्षकस्थे शीर्षकं प्रधानं शिरो व्यवहारस्य चतुर्थपादः जयपराजयलक्षणः तेन दण्डो लक्ष्यते तत्र तिष्ठतीति शीर्षकस्थः तत् प्रयुक्तदण्डभागीत्यर्थः । महाभियोगान् स्पष्टयति कालिकापुराणम् । 'परदाराभिशापे च चौर्य्यागम्यागमेषु च । महापातकशस्तेषु स्याद्दिव्यं नृप साहसे । विप्रतिपत्तौ विवादे च पणस्य स्थापने कृते । तत्रैव स्थापयेद्दिव्यं शिरः पूर्वं महीपतिः । परदाराभिशापे च बहवो यत्र वादिनः । शिरोहीनं भवेद्दिव्यम् आत्मनः

शुद्धिकारणात्'। पितामहः 'शिरःस्थायिविहीनानि दिव्यानि परिवर्जयेत्। चत्वारि तु धटादीनि कोषश्चैवाशिराः स्मृतः'। महाभियोगेतरत्रापि स्मृतिः। कोषं स्वल्पेऽपि दापयेत्। याज्ञवल्क्येनाभियोक्तुर्वादिनः शिरोवर्त्तित्वाभिधानादभियोज्यस्य दिव्यकर्त्तृत्वं प्रतिपादितम्। व्यक्तमाह कात्यायनः 'न कश्चिदभियोक्तारं दिव्येषु विनियोजयेत्। अभियुक्ताय दातव्यं दिव्यं दिव्यविशारदैः'। प्रत्यर्थिस्वीकारेणार्थिनोऽपि दिव्यमाह याज्ञवल्क्यः 'रुच्यावान्यतरः कुर्य्यादितरो वर्त्तयेच्छिरः। विनापि शीर्षकात् कुर्य्यात् नृपद्रोहेति पातके'। इतरोऽभियुक्तः। शिरः शारीरं दण्डमर्थदण्डं वा वर्त्तयेत् स्वीकुर्य्यात्। वृहस्पतिः 'स्नेहात् क्रोधाल्लोभतो वा भेदमायान्ति साक्षिणः। विधिदत्तस्य दिव्यस्य न भेदो जायते क्वचित्'। भेदः सत्याद्वैपरीत्यम्। तत्तु कात्यायनवचनं 'क्रिया न दैविकी प्रोक्ता विद्यमानेषु साक्षिषु। लेख्ये च सति वादेषु न स्याद्दिव्यं न साक्षिणः'। इति तद्गुणान्वितसाक्षिसत्त्वे। यथा व्यासः 'मणिमन्त्रौषधि बलात् प्रदत्तं वा विधानतः। विसम्वादो दिव्यमपि न तु साक्षी गुणान्वितः'। अतएव नारदः 'युक्तिष्वप्यवसन्नासु शपथेनेन मर्दयेत्'। एनं विचार्य्यार्थं मर्दयेत् पीड़येत् निर्द्धारयेदिति यावत्। शपथानाह नारदः। 'सत्यं वाहनशस्त्राणि गोवीजकनकानि च। देवता पितृपादांस्तु दत्तानि सुकृतानि च। स्पृशेच्छिरांसि पुत्राणां दाराणां सुहृदां तथा। अभियोगेषु सर्वेषु कोषपानमथापि वा। इत्येते शपथाः प्रोक्ता मनुना स्वल्पकारणात्'। वृहस्पतिः 'यथोक्तविधिना देयं दिव्यं दिव्यविशारदैः। अयथोक्तप्रदत्तन्तु न शक्तं साध्यसाधने। अदेशकालदत्तानि वहिर्वादिकृतानि च। व्यभिचारं सदा त्वेवं कुर्वन्तीह न संशयः'।

बहिर्व्वादिकृतानि अभियोक्तारं विना कृतानि एतच्च प्रायिकम् आत्मशुद्धिपराणाम् अभियोक्तारं विनापि दिव्यविधानात् तथाच नारदः 'राजभिः शङ्कितानाञ्च निर्दिष्टानाञ्च दस्युभिः। आत्मशुद्धिपराणाञ्च दिव्यं देयं शिरो विना'।

अथ दिव्यदेशाः। तत्र कात्यायनः 'इन्द्रस्थानेऽभिशस्तानां महापातकिनां नृणाम्। नृपद्रोहे प्रवृत्तानां राजद्वारे प्रयोजयेत्। प्रतिलोम्य प्रसूतानां दिव्यं देयं चतुष्पथे। अतोऽन्येषु कार्य्येषु च सभामध्ये विदुर्बुधाः' इन्द्रस्थाने इन्द्रध्वजस्थाने।

अथ दिव्यकालाः। तत्र पितामहः 'चैत्रो मार्गशिराश्चैव वैशाखश्च तथैव हि। एते साधारणा मासा दिव्यानामविरोधिनः। धटः सर्व्वर्त्तुकः प्रोक्तो वाते वाति विवर्जयेत्। अग्निः शिशिरहेमन्तवर्षासु परिकीर्त्तितः। शरद्ग्रीष्मे तु सलिलं हेमन्ते शिशिरे विषम्। कोषस्तु सर्वदा देयस्तुला स्यात् सार्वकालिकी'। इति मिताक्षरा। नारदः 'न शीते तोयशुद्धिः स्यात् नोष्णकालेऽग्निशोधनम्। न प्रावृषि विषं दद्यात् प्रवाते न तुलां नृप'। शीते हेमन्तशिशिरवर्षासु उष्णकाले ग्रीष्मशरदोः। वर्षासु विषनिषेधः चतुर्यवातिरिक्तविषनिषेधपरः वर्षासु चतुरो यवानिति वक्ष्यमाणनारदवचनात्। तण्डुलादीनान्तु विशेषकालानभिधानात् सार्वकालिकत्वम् अत्र विषे विशेषतो वर्षानिषेधात् वक्ष्यमाणवचनेन सिंहस्थरवावेव परीक्षाभावनिषेधाच्च दिव्यान्तरं सिंहेतरवर्षास्वपि कुर्वीत। अतो 'याम्यायने हरौ सुप्ते सर्व्वकर्म्माणि वर्जयेत्'। इत्यस्य न विषयः। ज्योतिषे 'सिंहस्थे मकरस्थे च जीवे चास्तमुपागते। मलमासे न कर्त्तव्या परीक्षा जयकाङ्क्षिणा। रविशुद्धौ गुरौ चैव न शस्तोऽस्तं गते पुनः। सिंहस्थे च रवौ नैव परीक्षा

शस्यते बुधैः। नाष्टम्यां न चतुर्दश्यां प्रायश्चित्तपरीक्षणे। न परीक्षा विवाहस्य शनिभौमदिने भवेत्'। रविशुद्धौ गुरौ चैवेत्यत्र शस्यत इति शेषः। तथाच दीपकलिकायाम्। 'नो शक्रास्तेऽर्के गुरुसहितरवौ जन्ममासेऽष्टमेन्दौ विष्टौ मासे मलाख्ये कुजशनिदिवसे जन्मतारासु चाथ। नाड़ीनक्षत्रहीने गुरुरविरजनीनाथ तारा विशुद्धौ प्रातः कार्य्या परीक्षा हितनुचरगृहांशोदये शस्तलग्ने' पितामहः। 'प्रत्यक्षं दापयेद्दिव्यं राजा वाधिकृतोऽपि वा। ब्राह्मणानां श्रुतवतां प्रकृतीनां तथैव च'। ब्राह्मणानां प्रकृतीनाञ्च दिव्यं प्रत्यक्षं दापयेदित्यर्थः। प्रकृतयोऽमात्यादयः 'स्वाम्यमात्यः सुहृत् कोषो राष्ट्रदुर्गबलानि च। राज्याङ्गानि प्रकृतयः पौराणां श्रेणयोऽपि च' इति अमरसिंहोक्ताः।

अथ दिव्यविशेषाधिकारिणः। तत्र नारदः 'ब्राह्मणस्य धटो देयः क्षत्रियस्य हुताशनः। वैश्यस्य सलिलं देयं शूद्रस्य विषमेव च। साधारणः समस्तानां कोषः प्रोक्तो मनीषिभिः। विषवर्जं ब्राह्मणस्य सर्व्वेषान्तु तुला स्मृता'। यत् पुनरनेन 'सव्रतानां भृशार्त्तानां व्याधितानां तपस्विनाम्। स्त्रीणाञ्च न भवेद्दिव्यं यदि धर्मस्त्वपेक्षितः'। इति स्त्र्यादीनां दिव्यं निषिद्धं तत्तुलेतरविषयमिति शूलपाणिः। मिताक्षरा तु पुंस्त्रियोर्विवादे न स्त्रीणां दिव्यमिति ह्यावान्यतरः कुर्य्यादिति विकल्पनिषेधार्थम् एतदुक्तं भवति अवष्टम्भाभियोगेषु स्त्र्यादीनामभियोक्तृत्वेऽभियोज्यानां दिव्यम् एतेषामभियोज्यत्वेऽभियोक्तृणामेव दिव्यं परस्पराभियोगे तु विकल्प एव तत्रापि तुलैवेति नियम्यते तथा महापातकादिशङ्काभियोगे तु स्त्र्यादीनान्तु तुलैव यथा याज्ञवल्क्यः 'तुला स्त्रीबालवृद्धान्धपङ्गुब्राह्मणरोगिणाम्। अग्निर्जलं वा शूद्रस्य यवाः

सप्तविषस्य वा'। स्त्रीमात्रं जातिवयोऽवस्थाविशेषानादरेण बालस्याषोड़शाद्दर्षात् जातिविशेषानादरेण वृद्धोऽशीति-पारगः एतद्वचनं सर्वदिव्यसाधारणेषु मार्गशीर्षचैत्र-वैशाखेषु स्त्र्यादीनां सर्वदिव्यसाधारणाभिधानेन नियामकतयाऽर्थवत् न च सर्वकालं स्त्रीणान्तु तुलैवेति वाच्यं 'स्त्रीणान्तु न विषं प्रोक्तं न चापि सलिलं स्मृतम्। धट-कोषादिभिस्तासामतस्तत्त्वं विचारयेत्'। इति विषसलिल-व्यतिरिक्तधटकोषादिभिः शुद्धिविधानात् एवं बालादिषु अपि योजनीया तथा ब्राह्मणादीनामपि सर्वकालिकतुलादि-नियमः 'सर्वेषामेव वर्णानां कोषात् शुद्धिर्विधीयते। सर्वा-ण्येतानि सर्वेषां ब्राह्मणस्य विषं विना' इति पितामहस्मर-णात्। तस्मात् साधारणकाले सकलदिव्यप्रसक्तौ तुलादि-नियमार्थं याज्ञवल्क्यवचनं कालान्तरे तु तत्तत्काले विहितं सर्वेषां तथाहि वर्षास्वग्निरेव सर्वेषां हेमन्तशिशिरयोस्तु क्षत्रियादीनां त्रयाणामग्निविषयोर्विकल्पः। ब्राह्मणाना-न्त्वग्निरेव न कदाचिद्विषं ब्राह्मणस्य विषं विनेति विधानात् ग्रीष्मशरदोस्तु सलिलान्येव येषां कुष्ठ्यादीनान्तु विशेषे-णाग्न्यादिनिषेधः 'कुष्ठिनां वर्जयेदग्निं सलिलं श्वासकासि-नाम्। पित्तश्लेष्मवतां नित्यं विषन्तु परिवर्जयेत्'। इति वचनात् तेषामग्न्यादिकालेऽपि साधारणकाले तुलाद्येव दिव्यं भवति। 'तोयमग्निर्विषञ्चैव दातव्यं बलिनां नृणाम्' इति स्मरणात् दुर्बलानामपि सर्वदा तोयादिप्रतिषेधाद्युक्त-कालानतिक्रमेण जातिवयोऽवस्थाविशेषाश्रितानि दिव्यानि देयानि यत्र च यस्य यानि विशेषसामान्यपर्य्युदस्तेतरविहि-तानि मुख्यकल्पापत्कल्पानि वेदितव्यानि यथा ब्राह्मणस्य धटो मुख्यः कोषस्त्वनुकल्पः अलाभे आपत्कल्पो प्रागुक्त-

नारदवचने एवकारश्रुतेर्मुख्यकल्पादित्वं न तु प्रशस्ततरादित्वमिति। एवञ्च अन्यत्राप्ययथोक्तप्रदत्तन्तु न शक्तं साध्यसाधने इयि प्रागुक्तं बोध्यम्। स्मृतिः 'अवष्टभ्याभियुक्तानां घटादीनि विनिर्दिशेत्। तण्डुलाश्चैव कोषश्च शङ्काश्चैव न संशयः'। अवष्टम्भोऽत्र निश्चयः शिरोवर्त्तितेति केचिदिति व्यवहारदीपिकायां कात्यायनः। 'असृश्याधमदासानां म्लेच्छानां पापकारिणाम्। प्रातिलोम्यप्रसूतानां निश्चयो न च राजनि। तत्प्रसिद्धानि दिव्यानि समये तेषु निर्दिशेत्' तत्तत् प्रसिद्धानि सर्पघटादीनि तथा 'देशकालाविरोधेन यथायुक्तं प्रकल्पयेत्। अन्येन हारयेद्दिव्यं विधिरेष विपर्य्ययेत्'। अन्येन प्रतिनिधिना हारयेत् कारयेत् विपर्य्ययेऽभियुक्तस्यासामर्थ्ये अतएव महापातकादीनामन्यद्वारा दिव्यमाह स एव 'मातापितृद्विजगुरुबालस्त्रीराजघातिनाम्। महापातकयुक्तानां नास्तिकानां विशेषतः'। इत्यभिधाय 'दिव्यं प्रकल्पयेन्नैव राजा धर्मपरायणः। एभिरेव प्रयुक्तानां साधूनां दिव्यमर्हति'। कात्यायनः। 'न लौहशिल्पिनामग्निं सलिलं नाम्बुजीविनाम्। तण्डुलैर्न प्रयुञ्जीत ब्राह्मणं मुखरोगिणम्। श्वित्रान्धकुनखादीनां नाग्निकर्म विधीयते। न मज्जनं स्त्रीबालयोर्धर्मशास्त्रविशारदैः। निकृत्याह्वान् व्याधितशास्त्रार्त्तांस्तोये निमज्जयेत्। न चापि हारयेदग्निं न विषेण विशोधयेत्'। यत्तु 'स्थावरेषु विवादेषु दिव्यानि परिवर्जयेत्' इति पितामहवचनं तल्लिखितसामन्तादिसत्त्वे दिव्यनिषेधार्थम्। यद्यपि 'अलेख्यसाक्षिके दैवीं व्यवहारे विनिर्दिशेत्'। इति स्मृतेः विवादान्तरेऽपि लेख्यादिसत्त्वे दिव्यानादरः तथापि ऋणादानादिविवादे साक्ष्युपन्यासे कृतेऽपि प्रत्यर्थी यदि दण्डस्वीकारेण दिव्यमङ्गीकरोति तदा

दिव्यमपि भवति साक्षिणां दोषसम्भवात् दिव्यस्य तु निर्दोषत्वेन वस्तुतत्त्वविषयत्वात् तल्लक्षणत्वाच्च धर्मस्य। यथा नारदः 'तत्र सत्ये स्थितो धर्मो व्यवहारस्तु साक्षिणि। दैवसाध्ये पौरुषन्तु न लेख्यन्तु प्रयोजयेत्'। स्थावरविवादे तु प्रत्यर्थिना दण्डाङ्गीकारेण दिव्यावलम्बने कृते सामन्तादिदृष्टप्रमाणसत्त्वेऽपि दिव्यं ग्राह्यमिति विकल्पनिराकरणाय स्थावरेष्वित्यादि पितामहवचनं नात्यन्तिकदिव्यनिराकरणाय लिखिताद्यभावे स्थावरादिषु निर्णयाप्रसक्तेः।

अथ द्रव्यसंख्यया दिव्यविशेषाः। विष्णुः 'अथ समयक्रियाराजद्रोहसाहसेषु यथाकामं निक्षेपणस्तेयेषु अर्थप्रमाणादिति'। समयो दिव्यं राजद्रोहादिषु यथाकामं राजेच्छानुरोधात् दिव्यं निक्षेपादिषु तु धनप्रमाणतारतम्यादित्यर्थः। बृहस्पतिः 'संख्यारश्मि रजो मूला मनुना समुदाहृता। कार्षापणान्ता सा दिव्ये नियोज्या विनये तथा। विषं सहस्रेऽपहृते पादोने च हुताशनः। त्रिभागोने च सलिलम् अर्द्धे देयो धटः सदा। चतुःशताभियोगे तु दातव्यस्तप्तमाषकः। त्रिशते तण्डुला देयाः कोषश्चैव तदर्द्धके। शते हृतेऽपहृते च दातव्यं धर्मशोधनम्। गोचौरस्य प्रदातव्यं सभ्यैः फालं प्रयत्नतः। एषा संख्या निकृष्टानां मध्यानां द्विगुणा स्मृता। चतुर्गुणोत्तमानाञ्च कल्पनीया परीक्षकैः'। रश्मिरजः 'जालान्तरगते भानौ यत् सूक्ष्मं दृश्यते रजः। प्रथमं तत् प्रमाणानां त्रसरेणुं प्रचक्षते' इति मनूक्तं कार्षापणान्तापणान्ता कार्षापणः पण इति पर्य्यायदर्शनात् विनये दण्डे एवञ्च सहस्र इत्यादौ पण इति शेषमुपक्रमात् निकृष्टानां जातिकर्मगुणैः। एवञ्च 'नासहस्राद्धरेत्फालं न तुलां न विषं तथा' इति याज्ञवल्क्यवचनं मध्यमोत्तमविषयत्वेन

पुरुषातिवचनेनैकवाक्यतयाऽविरुद्धम्। 'सहस्रे तु घटं दद्यात् सहस्रार्द्धे हुताशनम्। अर्द्धस्यार्द्धे तु सलिलं तस्यार्द्धे तु विषं स्मृतम्' इति अत्र अल्पापराधे पातित्य' तद्विषयमिति एतत् सर्वं स्तेयसाहसविषयमिति। अपह्नवे तु कात्यायनः। 'द्रव्यस्यापह्नवो यत्र प्रमाणं तत्र कारयेत्। स्तेयसाहसयोर्दिव्यं स्वल्पेऽप्यर्थे प्रदापयेत्। सर्वद्रव्यप्रमाणन्तु ज्ञात्वा हेम प्रकल्पयेत्। हेमप्रमाणयुक्तन्तु तदा दिव्यं प्रकल्पयेत्। ज्ञात्वा संख्यां सुवर्णानां शतनाशे विषं स्मृतम्। अशीतेश्च विनाशे तु दद्याच्चैव हुताशनम। षष्ट्यानाशे जलं देयं चत्वारिंशति वै घटम्। विंशद्दशविनाशे तु कोषपानं विधीयते। पञ्चाधिकस्य वा नाशे ततोऽर्द्धार्द्धे तु तण्डुलाः। ततोऽर्द्धार्द्धविनाशे तु स्पृशेत् पुत्रादिमस्तकान्। ततोऽर्द्धार्द्धविनाशे तु लौकिक्यश्च क्रियाः स्मृताः। एवं विचारयन् राजा धर्मार्थाभ्यां न हीयते'। सुवर्णानां 'पञ्चकृष्णलको माषस्ते सुवर्णस्तु षोड़शः' इत्युक्ताशीतिरत्तिकापरिमितहेम्नां नाशेऽपह्नवे दशाधिकस्य विंशतेर्वा नाशे कोषपानमित्यर्थः तण्डुलाः पुनरल्पचौर्य्याभिशङ्कायामेव 'चौर्य्ये च तण्डुला देया नान्यत्रेति विनिश्चयः'। इति पितामहस्मृतेः। तप्तमाषस्तु महाचौर्य्याभिशङ्कायां 'महाचौर्य्याभियुक्तानां तप्तमाषो विधीयते' इति स्मृतेः। व्यवहारमातृकायां 'समत्व साक्षिणां यत्र दिव्यैस्तमपि शोधयेत्। प्राणान्तिकविवादेषु विद्यमानेषु साक्षिषु। दिव्यमालम्बते वादी न पृच्छेत् तत्र साक्षिणः'।

अथ घटोत्पत्तिविधिः। पितामहः 'छित्वा तु यज्ञियं वृक्षं यूपवन्मन्त्रपूर्वकम्। प्रणम्य लोकपालेभ्यस्तुला कार्य्या मनीषिभिः'। यूपवदिति यूपच्छेदनविहितसर्वेतिकर्त्तव्यताति-

देशः । सा च ओम् स्वधितेमैनं हिंसीरिति छेदनमन्त्र-विशेषादिरूपेति व्यवहारप्रदीपः । 'मन्त्रः सौम्यो वानस्पत्य-श्छेदने जप्य एव च । चतुरस्रा तुला कार्य्या दृढ़ा स्तम्भौ तथैव च । कटकानि च देयानि त्रिषु स्थानेषु चार्थवत्' । कटकानि वलयानि । 'चतुर्हस्ता तुला कार्य्या पादौ चोपरि तत्समौ' । अत्र साधारणत्वेन शारदातिलकोक्तो हस्तो ग्राह्यः । यथा 'चतुर्विंशत्यङ्गुलाढ्यं हस्तं तन्त्रविदो विदुः । यवानामष्टभिः क्लृप्तं मानाङ्गुलमुदीरितम्' । यवानां तण्डुलीकृतानां 'यवानां तण्डुलैरेकमङ्गुलं चाष्टाभिर्भवेत् अदीर्घयोजितैर्हस्तश्चतुर्विंशतिरङ्गुलैः' इति कालिकापुराणात् प्रमाणन्तु पार्श्वेन 'यवानां षड्यवाः पार्श्वसम्मिताः' इति कात्यायनवचनात् । अनयोर्व्यवस्थामाह कापिलपञ्चरात्रम् । 'अष्टभिस्तैर्भवेज्ज्येष्ठं मध्यमं सप्तभिर्यवैः । कन्यसं षड्भिरुद्दिष्टमङ्गुलं मुनिसत्तम' कन्यसं कनिष्ठं पादौ स्तम्भौ उपरि मृत्तिकोपरि तत्समौ चतुर्हस्तावित्यर्थः वस्तुतस्तु उपरि तत्समौ उपरि तत्समं काष्ठान्तरं ययोः पादयोस्तौ स्तम्भप्रमाणमाह व्यासः । 'हस्तद्वयं निखेयन्तु प्रोक्तं मुण्डकयोर्द्वयोः । षड्हस्तन्तु तयोः प्रोक्तं प्रमाणं परिमाणतः' । मुण्डकयोः स्तम्भयोः षड्हस्तं निखातहस्तद्वयेन समम् अर्थान्मृत्तिकोपरि हस्तचतुष्टयमित्यर्थः । 'अन्तरन्तु तयोर्हस्तौ भवेदध्यर्द्धमेव वा' । तयोस्तम्भयोः । हस्तावन्तरं हस्तद्वयपरिमितमध्यमित्यर्थः अध्यर्द्धं सार्द्धहस्तद्वयम् एतत्तु 'शालद्रुमोद्भवा कार्य्या पञ्चहस्तायता तुला' । इति विष्णूक्तपञ्चहस्तायततुलाविषयम् । व्यवहारदीपिकाऽप्येवम् ।

अथ धटारोपणविधिः । 'पितामहः हस्तद्वयं निखेयन्तु पादयोरुभयोरपि' अत्र हस्तद्वयं मृत्तिकाभ्यन्तरे हस्तचतु-

ष्टयं मृत्तिकोपरि तथा 'तोरणे च तथा कार्य्ये पार्श्वयोरुभयोरपि। घटादुत्तरे स्यातां नित्यं दशभिरङ्गुलैः। अवलम्बौ च कर्त्तव्यौ तोरणाभ्यामधोमुखौ। मृण्मयौ सूत्रसम्बन्धौ घटमस्तकचुम्बितौ। प्राङ्मुखो निश्चलः कार्य्यः शुचौ देशे घटस्तथा' नारदः 'शिक्यद्वयं समासाद्य घटककटयोर्दृढम्। एकत्र शिक्ये पुरुषमन्यत्र तुलयेच्छिलाम्'। पितामहः 'प्राङ्मुखान् कल्पयेद्दर्भान् शिक्ययोरुभयोरपि। पश्चिमे तोलयेत् कर्त्तनन्यस्मिन् मृत्तिकां शुभाम्। पिटकं पूरयेत्तस्मिन् इष्टकाग्रावपांशुभिः'। अत्र मृत्तिकेष्टकाग्रावपांशूनां विकल्पः 'परीक्षका नियोक्तव्यास्तुलामानविशारदाः। वणिजो हेमकाराश्च कांस्यकारास्तथैव च। कार्य्यः परीक्षकैर्नित्यमवलम्बसमो घटः। उदकञ्च प्रदातव्यं घटस्योपरि पण्डितैः। यस्मिन् न प्लवते तोयं स विज्ञेयः समो घटः। तोलयित्वा नरं पूर्वं पश्चात्तमवतार्य्य तु। घटन्तु कारयेन्नित्यं पताकाध्वजशोभितम्। तत आवाहयेद्देवान् विधिनानेन मन्त्रवित्। वादित्र तूर्य्यघोषैश्च गन्धमाल्यानुलेपनैः। प्राङ्मुखः प्राञ्जलिर्भूत्वा प्राड्विवाकस्ततो वदेत्'। प्राड्विवाकसमाख्या तु पृच्छतीति प्राट्विवेचयतीति विवाक इति व्यवहारमातृका। तथा च बृहस्पतिः। 'विवादे पृच्छति प्रश्नं प्रतिपन्नं तथैव च। प्रियपूर्वं प्रागवदति प्राड्विवाकस्ततः स्मृतः'। वस्तुतस्तु प्राड्विवाकसमाख्यामाह कात्यायनः। 'व्यवहाराश्रितं प्रश्नं पृच्छति प्राडिति स्मृतिः। विवेचयति यस्तस्मिन् प्राड्विवाक इति स्मृतः'। अभिशस्तं पृच्छतीति प्राट् तदनुरूपं दिव्यं विविनक्ति इति विवाकः प्राट् चासौ विवाकश्चेति कर्मधारयः। अस्य काम्यत्वेन नवग्रहपूजामाह मत्स्यपुराणं 'नवग्रहमखं कृत्वा ततः कर्म समारभेत्। अन्यथा फलदं पुंसां न काम्यं

जायते क्वचित्'। ततश्च प्राड्विवाकः पूर्वं कार्य्यं पृच्छेत् निवेदितञ्च विवेचयेत् ततोऽभियुक्तं तोलयित्वाऽवतार्य्य धर्मा-वाहनादि कुर्य्यात्। पितामहः 'एह्येहि भगवन् धर्म दिव्ये ह्यस्मिन् समाविश। सहितो लोकपालैश्च वस्वादित्यमरुद्गणैः। आवाह्य च घटे धर्मं पश्चादङ्गानि विन्यसेत्'। अङ्गानि परिवारदेवता। 'इन्द्रं पूर्वे तु संस्थाप्य प्रेतेशं दक्षिणे तथा। वरुणं पश्चिमे भागे कुबेरमुत्तरे तथा। अग्न्यादिलोकपालांश्च कोणभागेषु विन्यसेत्। इन्द्रः पीतो यमः श्यामो वरुणः स्फटिकप्रभः। कुबेरस्तु सुवर्णाभो वह्निश्चापि सुवर्णभः। तथैव निर्ऋतिः श्यामो वायुर्धूम्रः प्रशस्यते। ईशानस्तु भवेत् शुक्लोऽनन्तः शुक्ल एव च। ब्रह्मा चैव भवेद्रक्त एवं ध्यायेत् क्रमादिमान्। इन्द्रस्य दक्षिणे पार्श्वे वसूनावाहयेद् बुधः। धरो ध्रुवस्तथा सोम आपश्चैवानिलोऽनलः। प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्त्तिताः। इन्द्रेशानयोर्मध्ये आदित्यानां च तथायनम्। धातार्य्यमा च मित्रश्च वरुणोंऽशुभगस्तथा। इन्द्रो विवस्वान् पूषा च पर्जन्यो दशमः स्मृतः। ततस्त्वष्टा ततो विष्णुरजघन्यो जघन्यतः'। अजघन्य इति विष्णोर्विशे-षणम् जघन्यत इति पश्चात्। 'इत्येते द्वादशादित्या मनुना परिकीर्त्तिताः। अग्नेः पश्चिमभागे तु रुद्राणामयनं विदुः। वीरभद्रश्च शम्भुश्च गिरिशश्च महायशाः। अजैकपादोऽहिर्बुध्नः पिनाकी चापराजितः। भुवनाधीश्वरश्चैव कपाली च विशां-पतिः। स्थाणुर्भवश्च भगवान् रुद्राश्चैकादश स्मृताः'। महा-यशाविशांपतिर्भगवांश्चेति विशेषणानि। 'प्रेतेश रक्षसोर्मध्ये मातॄस्थानं प्रकल्पयेत्। ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा। वाराही चैव माहेन्द्री चामुण्डा गणसंयुता'। गणसंयुतो विशेषणं 'निर्ऋतेरुत्तरे भागे गणेशायतनं विदुः।

वरुणस्योत्तरे भागे मरुतां स्थानमुच्यते। श्वसनः स्पर्शनो वायुरनिलो मारुतस्तथा। प्राणः प्राणेश जीवौ च मरुतोऽष्टौ प्रकीर्त्तिताः। घटस्योत्तरभागे तु दुर्गामावाहयेद् बुधः। एतासां देवतानाञ्च स्वनाम्ना पूजनं विदुः'। विशेषमाह ब्रह्मपुराणम्। 'ओङ्कारादिसमायुक्तं नमस्कारान्त कीर्त्तितम्। स्वनाम सर्व्वसत्वानां मन्त्र इत्यभिधीयते। अनेनैव विधानेन गन्धपुष्पं निवेदयेत्। एकैकस्य प्रकुर्व्वीत यथोद्दिष्टं क्रमेण तु'। मन्त्र इत्यभिधानादनेनैवेत्येवकारश्रुतेश्च इदं द्रव्यम् ओम् अमुकाय नम इति योज्यं न तु धर्म्मायार्घ्यं प्रकल्पयामि नम इति मिताक्षरोक्तं प्रमाणाभावादनन्वयाच्च। पितामहः। 'भूषावसानं धर्म्माय दत्त्वा चार्घ्यादिकं क्रमात्। अर्घ्यादि पश्चादङ्गानां भूषान्तमुपकल्पयेत्। गन्धादिकां नैवेद्यान्तां परिचर्य्यां प्रकल्पयेत्'। एतत् सर्व्वं प्राड्विवाकः कुर्य्यात् यथा 'प्राड्विवाकस्ततो विप्रो वेदवेदाङ्गपारगः। श्रुतव्रतोपपन्नश्च शान्तचित्तो विमत्सरः। सत्यसन्धः शुचिर्दक्षः सर्व्वप्राणिहिते रतः। उपोषितः शुद्धवासाः कृतदन्तादिधावनः। सर्व्वासां देवतानाञ्च पूजां कुर्य्याद् यथाविधि'। रक्तपुष्पगन्धादीनाह नारदः। 'रक्तैर्गन्धैश्च माल्यैश्च धूपदीपाक्षतादिभिः। अर्च्चयेत्तु घटं पूर्व्वं ततः शिष्टांश्च पूजयेत्'। घटं धर्म्मं तथाच विष्णुनारदौ 'धर्म्मपर्य्यायवचनं घट इत्यभिधीयते'। शिष्टानिन्द्रादीन्। अविशेषात् सर्व्वत्र रक्तान्वयः। मिताक्षरायान्तु धर्म्मपूजन एव रक्तत्वनियमः। तथा 'चतुर्दिक्षु ततो होमः कर्त्तव्यो वेदपारगैः। आज्येन हविषा चैव समिद्भिर्होमसाधनैः। सावित्र्या प्रणवेनैव स्वाहान्तेनैव होमयेत्'। तेन प्रणवादिकां गायत्रीमुच्चार्य्य पुनः स्वाहाकारान्तं प्रणवमुच्चार्य्य समिदाज्यचरून् प्रत्येकमष्टोत्तरशतं जुहुयादिति मिताक्षरा।

वस्तुतस्तु गायत्रीहोमे योगियाज्ञवल्क्यः। 'प्रणवव्याहृतिभ्याञ्च स्वाहान्ते होमकर्म्मणि'। तेन प्रणवादिकां सव्याहृतिकां गायत्रीमुच्चार्य्य स्वाहाकारान्तं पुनः प्रणवमुच्चार्य्य घाज्यपायस-समिधो मिलित्वा अष्टोत्तरशतं जुहुयात् लाघवात् अतएव देवलेखे हि दधिपयसोस्तन्त्रेणानुष्ठानम् ऐन्द्रं दध्यमावास्यामैन्द्रं पयो भवत्यमावास्यायामित्यत्रेति श्राद्धविवेकः। यत्तु 'पञ्च-लाङ्गलमहादाने पर्जन्यादित्यरुद्रेभ्यः पायसं निर्वपेच्चरुम्। एकस्मिन्नेव कुण्डे च गुरुर्यस्मै निवेदयेत्। पलाशसमिधस्त-द्वदाज्यं कृष्णतिलांस्तथा'। इति मत्स्यपुराणात् चतुर्णां होतॄणां मध्ये यस्मै गुरुः पर्जन्यादिभ्यो होमं कुर्व्विति आज्ञां करोति स एव पर्जन्यायादित्याय रुद्रेभ्यस्तत्तन्मन्त्रैः पायसं पलाश समिदाज्य कृष्णतिलांश्च प्रत्येकं जुहुयादिति भूपाल-प्रभृतिभिरुक्तं तद्युक्तं तद्वदिति तथेत्याभ्यां प्रत्येकद्रव्येण होमविधानात्। अतएव रत्नाकरकल्पतरू जुहुयादित्युक्त्वा तद्वदिति पलाशादि जुहुयादित्युक्तम् अतएव वृषोत्सर्गे वाच-स्पतिमिश्र प्रभृतिभिरग्न्यादिहोम-शेष-पायसपूषहोमशेष-पिष्ट-काभ्यां मिलिताभ्यां सकृत् स्विष्टिकृद्धोमो विहितः। अशक्तौ तु 'होमो ग्रहादिपूजायां शतमष्टाधिकं भवेत्। अष्टाविंशति-रष्टौ वा शक्त्यपेक्षमथापि वा' इति देवीपुराणादिपददर्शना-दत्राप्यन्यासंख्या उन्नेया एवं मत्स्यपुराणे 'शृणु राजन् महा-बाहो! तड़ागादिषु यो विधिः। वेद्यास्तु परितो गर्त्तारत्नि-मात्रास्त्रिमेखलाः। नव सप्ताथवा पञ्च योनिवक्त्रा नृपात्मज' इति नवादिकुण्डानुक्त्वा 'स्वल्पेऽप्येकाग्निमत् कार्य्यां वित्त-शाठ्याहते नृभिः' इति दर्शनादत्राप्यशक्तावेकाग्निविधिरिति वदन्ति अत्र प्राड्विवाक एकेनैव होमः। 'दिव्येषु सर्व-कार्य्याणि प्राड्विवाकः समाचरेत्। अध्वरेषु यथाध्वर्युः

सोपवासो नृपाज्ञया'। इति मिताक्षराधृतपितामहवचनात् अध्वर्य्युर्यजमानमात्रं न चात्र भिन्नशाखिनामृत्विजां रथकारवह्निद्याप्रयुक्तिकल्पनेति वाच्यं ब्राह्मणमात्रस्य नाना शाखापाठविधानेन कल्पनानुपपत्तेः। तथा च मनुः 'वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम्। अविप्लुतब्रह्मचर्य्यो गृहस्थाश्रममाचरेत्' इति प्रायश्चित्तहोमस्तु सामगानां महाव्याहृतिभिः। 'यत्र व्याहृतिभिर्होमः प्रायश्चित्तात्मको भवेत्। चतस्रस्तत्र कर्त्तव्याः स्त्रीपाणिग्रहणे यथा। अपि वा ज्ञातमित्येषा प्राजापत्यादि वाहुतिः। होतव्या त्रिर्विकल्पोऽयं प्रायश्चित्तविधिः स्मृतः'। इति छन्दोगपरिशिष्टात् न तु शाट्यायनहोम भवदेवभट्टोक्तः त्रिर्विकल्प इत्यनेन तस्य तस्य निरासात्। भट्टनारायणादिभिरप्रमाणोक्तत्वाच्च। पितामहः 'तोलयित्वा नरं पूर्वं तस्मात्तमवतार्य्य च। प्राङ्मुखः प्राञ्जलिभूत्वा प्राड्विवाकस्ततो वदेत्। एह्येहि भगवन् धर्म्म दिव्ये ह्यस्मिन् समाविश। सहितो लोकपालैस्त्वं वस्वादित्यमरुद्गणैः। तस्यार्थमभियुक्तस्य लेखयित्वा तु पत्रके। मन्त्रेणानेन सहितं कुर्य्यात्तस्य शिरोगतम्। आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च। अहश्च रात्रिश्च उभे च सन्ध्ये धर्म्मो हि जानाति नरस्य वृत्तम्। इमं मन्त्रं विधिं कृत्स्नं सर्वद्रव्येषु योजयेत्। आवाहनञ्च देवानां तथैव परिकल्पयेत्। धटमामन्त्रयेच्चैवं विधिनानेन मन्त्रवित्। त्वं धटो ब्रह्मणा सृष्टः परीक्षार्थं दुरात्मनाम्। धकाराद्धर्म्ममूर्त्तिस्त्वं टकारात् कुटिलं नरम्। धृतो धारयसे यस्माद्धटस्तेनाभिधीयते। त्वं वेत्सि सर्वभूतानां पापानि सुकृतानि च। त्वमेव देव जानीषे न विदुर्य्यानि मानवाः। व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति। तदेनं संशयादस्माद्धर्म्मतस्त्रातुमर्हसि'। लिखन-

प्रकारमाह नन्दिपुराणम्। 'शुभे नक्षत्रदिवसे शुभे राशि-दिनग्रहे। लेखयेत् पूज्य देवेशान् ब्रह्मरुद्रजनार्दनान्। पूर्वदिग्वदनो भूत्वा लिपिज्ञो लेखकोत्तमः। निरोधो हस्त-वाक्कोष मसीपत्रविधारणे'। मत्स्यपुराणञ्च 'शीर्षोपेतान् सुस-म्पन्नान् समश्रेणिगतान् समान्। अक्षरान् लेखयेद् यस्तु सपरो लेखकः स्मृतः'। इति दानसागरधारयसे इत्यत्र भावयस इति पाठोऽनुपयुक्तः। तथाहि कुटिलं पापिनं संशयोपन्नं वा आद्ये पापिनमेतावन्मात्राभिधानमनुपपन्नम् अशुङ्गत्वा शुद्धस्यापि ज्ञापनात् द्वितीये पूर्वमित्यत्वेन ज्ञाप-मानुपपत्तिः तस्मात् कुटिलं व्यवहाराभिशस्तं धारयसे इत्येवार्थः अतएव उपसंहारे संशयादस्मादित्युक्तम् अतएव कालिकापुराणेऽपि मानुषस्तोऽत्यते त्वयीत्युक्तमिति स्मृतिसमु-च्चयव्यवहारदीपिकयोर्विष्णुः। धटञ्च समयेन गृह्णीयात्। तुलाधारकञ्च 'धर्मपर्य्यायवचनं धट इत्यभिधीयते। त्वमेव धट जानीषे न विदुर्यानि मानवाः। व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति। तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि। ब्रह्मघ्ना ये स्मृतालोका ये लोकाः कूटसाक्षिणः। तुलाधारस्य ते लोकास्तुलां धारयतो मृषा'। समयेन त्वमेव धट इत्यादि-नियमेन धटं गृह्णीयात् योजयेत्। तुलाधारकञ्च ब्रह्मघ्ना ये इत्यादिना नियमेनेत्यर्थः अत्र नानामुनिप्रणीतमन्त्राणाम् एकतरपाठ्यानां समानप्रयोजकानां यवव्रीहिवद्विकल्प इति ग्रन्थगौरवात्ते न लिखिताः। अभिशस्तप्राड्विवाकपाठ्यानान्तु दृष्टार्थानां समुच्चयः। पितामहः 'नित्यं देयानि दिव्यानि शुचये चार्द्रवाससे'। शुचये जननमरणाशौचरहिताय। अतिनं प्रति याज्ञवल्क्यदीपकलिकायां नारदः। 'हस्तक्षतेषु सर्वेषु कुर्य्याल्लक्षपदानि च। तान्येव पुनरालक्षयेत्तस्मौ विन्दु·

विचिन्तितौ'। इत्यग्निविधौ हस्तक्षतिनो हस्तक्षतमलक्ष्मा-दिना चिह्नितं कृत्वा क्षतान्तरं जातं न वा इति ज्ञातव्यमिति सुतरां क्षतिनो दिव्याधिकारः। नारदः 'अहोरात्रोषिते स्नाते आर्द्रवाससि मानवे। पूर्वाह्णे सर्वदिव्यानां प्रदान-मनुकीर्त्तितम्'। धटामन्त्रणात् प्रागपि पुनस्तोलनमाह कालिकापुराणम्। 'उपोषितं तथा स्नातं मृत्समं प्रथमं तुलाम्। सन्तोल्य कारयेद्रेखामवतार्य्यानुमन्त्रयेत्'। याज्ञ-वल्क्यः 'तुलाधारणविद्वद्भिरभियुक्तस्तुलाश्रितः। प्रतिमानसमी-भूतो रेखां कृत्वावतारितः। त्वं तुले सत्यधामासि पुरा देवैर्विनिर्म्मिता। तत्सत्यं वद कल्याणि संशयान्मां विमोचय। यद्यस्मिन् पापकृन्मातस्ततो मां त्वमधो नय। शुद्धश्चेत् गम-योर्द्ध्वं मां तुलामित्यभिमन्त्रयेत्'। तुलाधारणाभिज्ञैर्वणि-गादिभिः पाषाणादिप्रतिमानसमीकृतस्तुलाधिरूढोऽभिशस्तो-ऽभिशस्ता वा दिव्याधिकारी येन सन्निवेशेन प्रतिमानसमीक-रणदशायां यत्र पादादयो व्यवस्थिताः। शिक्यरज्ज्वश्च तत्र पाण्डुलेखेनाङ्कयित्वा पिटकादवतारितस्त्वन्तुलेति मन्त्रेण तुलां प्रार्थयेत् सत्य सन्दिग्धार्थस्य स्वरूपं वद दर्शय। पापकृद-सत्यवादी शुद्धश्च सत्यवादी मन्त्रश्चायं स्मार्त्तः पौराणिकत्वात् शूद्रैरपि पाठ्यः वेदमन्त्रवर्ज्जं शूद्रस्येति छन्दोगाह्निकधृतस्मृतौ वेदेति विशेषणात् श्राद्धविश्वदेवादौ तु विशेषतो नमस्कार-मन्त्रविधानात् स्मार्त्तमन्त्रोऽपि निषिद्धः प्रपञ्चस्तु तिथितत्त्वे-ऽनुसन्धेयः स्त्र्योपरीक्षायामपि अविकृत एव प्रयोज्यः दिव्या-नीह विशुद्धये इत्यनेन सन्दिग्धार्थसन्देहनिवृत्तिफलतयाऽवि-शेषेण स्त्रीपुंसकर्त्तृकदिव्यविधानेन मानुषः शुद्धिमिच्छतो-त्यनेन च प्रकृतावूह्यायोगात्। अतएव पत्नीं सन्नह्यात्वं योक्त्रेणेति मन्त्रे द्विवहुपत्नीकयजमानकर्त्तृकप्रयोगेऽपि न

द्विबहुवचनोह इत्युक्तम्। पत्रस्थप्रतिज्ञेयार्थस्य शोध्याय तस्य स्वस्य बोधाय श्रवणमाह नारदः। अमुमर्थञ्च पत्रस्थमभियुक्तं यथार्थतः। संश्राव्य मूर्ध्नि तस्यैव न्यसेद् देयो यथाक्रमम्'। देयो दिव्यविशेषः प्राड्विवाकेनेति शेषः ततः शिरोऽवस्थितपत्रकं शोध्यं नरं धटे पुनरारोपयेत् पुनरारोपयेत्तस्मिन् शिरोऽवस्थितपत्रकमिति स्मरणात् तुलारोपितञ्च नरं विनाडीपञ्चककालं शतत्रयगुर्वक्षरोच्चारणयोग्यं 'माकान्ते पञ्चस्यान्ते पश्चाकाशे देशे स्वाप्तेः कान्तं वक्त्रं वृत्तं पूर्णं चन्द्रं मत्वा रात्रौ चेत् सूतृचामः प्राटंश्चेतश्चेतो राहुः क्रूरः प्रायात्तस्माद्दान्ते हर्म्यस्यान्ते शय्यैकान्ते कर्त्तव्या' इति श्लोकस्य पञ्चधा पाठयोग्यकालं पञ्चपलात्मकं यावत् तावत् स्थापयेत्। यथा स्मृतिः 'ज्योतिर्विद् ब्राह्मणः श्रेष्ठः कुर्य्यात् कालपरीक्षणम्। विनाड्यः पञ्च विज्ञेयाः परीक्षाकालकोविदैः'। तत्कालञ्च ज्योतिषे 'दश गुर्वक्षरः प्राणः षट्प्राणाः स्युर्विनाडिका। तासां षष्ट्यां घटो ज्ञेयाऽहोरात्रं घटिकास्तथा'। तथा षष्ट्या पितामहः 'साक्षिणो ब्राह्मणाः श्रेष्ठा यथा दृष्टार्थवादिनः। ज्ञानिनः शुचयो लुब्धा नियोक्तव्या नृपेण तु। शंसन्ति साक्षिणः सर्वे शुद्ध्यशुद्धी नृपे तथा। तुलितो यदि वर्द्धेत स शुद्धः स्यान्न संशयः। समो वा हीयमानो वा न विशुद्धो भवेन्नरः। अल्पदोषः समो ज्ञेयो बहुदोषस्तु हीयते'। अल्पत्वं व्यभिचारे आलिङ्गनादिना चौर्य्ये तद्गृहगमनादिना। तत्र पुनस्तोलनमाह बृहस्पतिः। 'धटेऽभियुक्तस्तुलितो हीनश्चेद्धानिमाप्नुयात्। तत्समस्तु पुनस्तोल्यो वर्द्धितो विजयी भवेत्'। शोध्यः स्वल्पदोषाङ्गीकारेऽपि प्रधानदोषनिर्णयार्थं तत्रैव पुनस्तोलनीयः। अन्यथाऽङ्गवैगुण्यसम्भावनायान्तु प्रयोगान्तरमिति यदा चानुपलभ्य-

मानदृष्टकारणक एव कक्षादीनां छेदनादिस्तदाप्यशुचिः। 'कक्षच्छेदे तुलाभङ्गे घटकर्कटयोस्तथा। रज्जुच्छेदेऽक्षभङ्गे च तथैवाशुचिमादिशेत्' इति बृहस्पतिवचनात् कक्षं शिक्यतलं घटकर्कटौ तुलान्तयोः शिक्याधारावीषद्वक्रावायसकीलकौ कर्कटशृङ्गनिभौ। अक्षः पादः स्तम्भयोरुपरिनिविष्टस्तुलाधारपट्ट इति मिताक्षरा द्रात्यः प्रयोजनकः कीलक इति हलायुधः। कटकमिति पारिजातः। यदा तु दृश्यमानकारणक एवैषां भङ्गस्तदा पुनरारोपयेत्। शिक्यादिच्छेदभङ्गेषु पुनरारोपयेन्नरमिति स्मृतेः ततश्च 'ऋत्विक्पुरोहिताचार्य्यान् दक्षिणाभिश्च तोषयेत्। एवं कारयिता भुक्त्वा राजा भोगान् मनोरमान्। महतीं कीर्त्तिमाप्नोति ब्रह्मभूयाय कल्पते'। तदयं संक्षेपः। प्राड्विवाको लोकपालादिनमस्कारपूर्वकं यथोक्तलक्षणां तुलां कुर्य्यात्। ततः षड्हस्तौ सुदृढ़ौ स्तम्भौ कृत्वा हस्तद्वयव्यवधानेन दक्षिणोत्तरयोर्दिशोर्हस्तद्वयनिखननं कृत्वा पट्टधारककीलकाग्रस्तम्भयोरुपरि मध्ये पार्श्वद्वये च विहितच्छिद्रं मध्यनिवेशितलौहाङ्कुशं पट्टकं निधाय उपरिफलकस्य तत् पट्टकस्य मध्यस्थिताङ्कुशेन तुलामध्यवलयस्थलौहं संयुक्ष्यात् एवञ्च मध्ये स्तम्भयोरन्तरा तिर्य्यक् तुलादण्डास्तिष्ठति तुलाग्रस्थिताभ्यामायसकीलकाभ्यां शिक्यद्वयरज्जुबन्धनं कुर्य्यात् तुलायाः पार्श्वयोः प्राक् प्रत्यक्दिशोस्तोरणस्तम्भौ तुलातो दशाङ्गुलोच्छ्रयौ कार्य्यौ तोरणयोरुपरि सूत्रसम्बद्धौ मृण्मयावधोमुखौ घटमस्तकचुम्बितौ अवलम्बौ कार्य्यौ यथाऽवलम्बनविश्लेषाभ्यां तुलायामवनतिरुन्नतिश्च ज्ञेया तथा जलधारापि।

अथैतत्प्रयोगः। कृतोपवासः कृतस्नानादिः प्राड्विवाको ब्राह्मणः कार्य्यं पृच्छेत् निवेदितं विवेचयेत् ततोऽभियुक्तं तोल-

यित्वावतार्य्य धर्म्मावाहनादि कुर्य्यात्। ओं तत्सदित्युच्चार्य्य ब्राह्मणत्रयं गन्धादिना पूजयित्वा अस्मिन्नमुकपरीक्षाकर्म्मणि पुण्याहं भवन्तो ब्रुवन्त्वित्यादि वाचयित्वा पुण्याहं स्वस्ति ऋद्धिञ्च प्रत्येकं त्रिस्ततो दिव्याङ्गभूतहोमार्थं ब्राह्मणचतुष्टयञ्च पाद्यादिभिरभ्यर्च्य वृणुयात् अशक्तावेकं ब्राह्मणमेकमृत्विजञ्च ततो घटे गणेशनवग्रहपूजा तत्र तुलां सपताकां ध्वजालङ्कृतां भूमौ निधाय तस्यां प्राङ्मुखः पुष्पाक्षतमादाय ओं भूर्भुवः स्वरि-त्युच्चार्य्य ओम् 'एह्येहि भगवन् धर्म्म दिव्ये ह्यस्मिन् समाविश। सहितो लोकपालैश्च वस्वादित्यमरुद्गणैः' इति मन्त्रेण धर्म्ममावाह्य एषोऽर्घ ओं धर्म्माय नम इत्यादिनाऽर्घपाद्याचमनीयमधुपर्कं पुनराचमनीयस्नानीय वस्त्रयज्ञोपवीतमुकुटकटकादिभूषणानि दत्त्वा तथैवाङ्ग देवतानामर्घ्यादि भूषणान्तं दत्त्वा प्रणवादि-नमोऽन्तेन स्वस्वनाम्ना पूजयेत् पूर्व्वस्याम् इन्द्राय दक्षिणस्यां यमाय पश्चिमायां वरुणाय उत्तरस्यां कुवेराय आग्नेय्यामग्नये नैर्ऋत्यां निर्ऋतये वायव्यां वायवे ऐशान्यामीशानाय ऊर्द्ध्वं ब्रह्मणे अधोऽनन्ताय इन्द्रस्य दक्षिणे पार्श्वेऽष्टवसुभ्यः प्रत्येकं स्वस्वनामभिः वसूनां ध्यानमाह आदित्यपुराणे 'प्रसन्नवदनाः सौम्याः वरदाः शक्तिपाणयः। पद्मासनस्था द्विभुजा वसवोऽष्टौ प्रकीर्त्तिताः'। तत्र धराय ध्रुवाय सोमाय अपाय अनिलाय अनलाय प्रत्यूषाय प्रभाषाय इन्द्रेशानयोर्म्मध्ये तथा द्वादशा-दित्येभ्यः तेषां ध्यानम् आदित्यपुराणे। पद्मासनस्था द्विभुजा पद्मगर्भाङ्गकान्तयः। कराटिस्कन्धपर्य्यन्तनीलपङ्कजधारिणः। धात्राद्या द्वादशादित्यास्तेजोमण्डलमध्यगाः'। तत्र धात्रे अर्य्यम्णे मित्राय वरुणाय अंशवे भगाय इन्द्राय विवस्वते पूष्णे पर्ज्जन्याय त्वष्ट्रे विष्णवे अग्नेः पश्चिमभागे तथैकादशरुद्रेभ्यः ध्यानम् आदित्यपुराणे 'करे त्रिशूलिनो वामे दक्षिणे चाक्ष-

मालिनः। एकादश प्रकर्त्तव्या रुद्राख्यचेन्दुमौलयः'। तत्र वीरभद्राय शम्भवे गिरिशाय अजैकपादे अहिर्बुध्न्याय पिनाकिने अपराजिताय भुवनाधीश्वराय कपालिने स्थाणवे भवाय यमराक्षसयोर्मध्ये तथा मातृभ्यः तत्र ब्राह्म्यै माहेश्वर्य्यै कौमार्य्यै वैष्णव्यै वाराह्यै नारसिंह्यै चामुण्डायै। निर्ऋत्युत्तरे गणेशाय वरुणोत्तरेऽष्टमरुद्भ्यः तत्र श्वसनाय स्पर्शनाय वायवे अनिलाय मारुताय प्राणाय प्राणेशाय जीवाय धटोत्तरे दुर्गायै अर्घादिकं दत्त्वा धर्माय रक्तगन्धपुष्पधूपदीपनैवेद्यानि पूर्ववद्दत्त्वा इन्द्रादि दुर्गान्तेभ्यो रक्तगन्धपुष्पादि दद्यात् ततश्चतुर्दिक्षु चतुर्भी ऋग्भिश्चतुरोऽग्नीन् अशक्तावेकेन ऋत्विजा एकमग्निं प्राड्विवाक गृह्योक्तविधिना संस्थाप्य प्रणवपुटितां सव्याहृतिकां गायत्रीं स्वाहान्तामुच्चार्य्य घृतपायससमिद्भिर्मिलिताभिरष्टोत्तरशतम् अष्टाविंशतिरष्टौ वा जुहुयात् सामगानां प्रायश्चित्तहोमस्तु व्यस्तसमस्ताभिर्महाव्याहृतिभिः एवं हवनान्तां देवपूजां विधाय दक्षिणां दद्यात् ततः शोध्यं कृतोपवासम् आर्द्रवाससं पश्चिममग्निकं कृत्वा इष्टकाञ्च पूर्वशिक्ये कृत्वा उत्तोल्य धटोपरि जलदानेन साम्यमवगत्यावतारयेत्। ततः प्राड्विवाकस्तद्दिनकृतकज्जलमस्या विच्छेदाङ्कादिशून्यां पंक्तिद्वयेन समसंख्याक्षरेण आदित्यचन्द्रावित्यादि चतुश्चत्वारिंशदक्षरमन्त्रसमेतामभियुक्तार्थकरणाकरण-रूपमिद-मृणमस्मै दत्तमिदमृणमस्मान्मया न गृहीतमित्यादिरूपां प्रतिज्ञां पत्रे विलिख्य प्रतिज्ञार्थं शोध्यं श्रावयित्वा तत् पत्रं शोध्यस्य शिरोगतं कुर्य्यात् इति लिखनप्रकारविशेषस्तु हरिहरादिपद्धतिव्यवहारदीपिकयोरनुरोधात् कृतः। ततश्च प्राड्विवाको धटमामन्त्रयेदेभिः 'त्वं धटो ब्रह्मणा सृष्टः परीक्षार्थं दुरात्मनाम्। धकाराद्धर्ममूर्त्तिस्त्वं टकारात् कुटिलं नरम्।

भूतो धारयसे यस्मात् धटस्तेनाभिधीयते। त्वं वेत्सि सर्व-भूतानां पापानि सुकृतानि च। त्वमेव देव जानीषे न विदु-र्यानि मानवाः। व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति। तदेनं संशयादस्मात्धर्मतस्त्रातुमर्हसि'। तुलाधारकं नियामयेदनेन मन्त्रेण 'ब्रह्मघ्ना ये स्मृता लोका ये लोकाः कूटसाक्षिणः। तुलाधारस्य ते लोकास्तुलां धारयतो मृषा'। ततोऽभिशस्त-स्तुलामामन्त्रयेदनेन 'त्वं तुले सत्यधामासि पुरा देवैर्विनि-र्मिता। तत्सत्यं वद कल्याणि संशयान्मां समुद्धर। यद्य-स्मिन् पापकृन्मातस्ततो मां त्वमधो नय। शुद्धश्चेद्गमयोर्द्ध्वं मां तुलामित्यभिमन्त्रयेत्'। ततः प्राड्विवाकः पूर्वानन्तं पूर्ववत् धटमारोपयेत्। आरोपितश्च पलपञ्चककालं तत्र शुद्ध्यशुद्धिज्ञापनाय स्थापयेत्। ततः प्रतिमानद्रव्यादूर्द्ध्वा-वस्थाने शुद्धः अधोऽवस्थानेऽशुद्धः समावस्थानोऽपि अल्पदोषः कक्षकीलककर्कटशिक्यपादाद्यादीनां दृष्टकारणव्यतिरेकेण छेदे भङ्गे वाप्यशुद्धिमादिशेत्। ततः पुरोहिताचार्य्यादीन् दक्षिणाभिस्तोषयेत्।

अथ अग्निपरीक्षा। पितामहः। 'अग्नेर्विधिं प्रवक्ष्यामि यथावच्छास्त्रभाषितम्। कारयेन्मण्डलान्यष्टौ पुरस्तान्नवमं तथा। आग्नेयं मण्डलं त्वाद्यं द्वितीयं वारुणं स्मृतम्। तृतीयं वायुदैवत्यं चतुर्थं यमदैवतम्। पञ्चमन्त्विन्द्रदैवत्यं षष्ठं कौवेरमुच्यते। सप्तमं सोमदैवत्यं सावित्रमष्टमं तथा। नवमं सर्वदैवत्यमिति दिव्यविदो विदुः। पुरस्तान्नवमं यत्तु तन्महत् पार्थिवं विदुः'। महत्पार्थिवमित्यपरिमिताङ्गुल-मित्यर्थः 'गोमयेन कृतानि स्युरद्भिः पर्य्युक्षितानि च। द्वात्रिं-शदङ्गुलान्याहुर्मण्डलात् मण्डलान्तरम्। अष्टाभिर्मण्डलैरेव-मङ्गुलीनां शतद्वयम्। षट्पञ्चाशत्समधिकं भूमेस्तु परिक-

त्मना'। यद्वा 'कर्त्तुः पादसमं कार्य्यं मण्डलन्तु प्रमाणतः'। प्राजापत्यमग्निदैवताकम् एवमन्यत्र तेनाग्न्यादयस्तेन पूज्याः मण्डलं षोड़शाङ्गुलं तदन्तरालञ्च षोड़शाङ्गुलं तेन मिलित्वा द्वात्रिंशदङ्गुलमिति तथाच याज्ञवल्क्यः 'षोड़शाङ्गुलकं ज्ञेयं मण्डलन्तावदन्तरमिति'। तथा 'मण्डले मण्डले देयाः कुशाः शास्त्रप्रचोदिताः। विन्यसेत्तु पदं कर्त्ता तेषु नित्यमिति स्थितिः। प्राङ्मुखस्तु ततस्तिष्ठेत् प्रसारितकराञ्जलिः। आर्द्रवासाः शुचिश्चैव शिरस्यारोप्य पत्रकम्। पश्चिमे मण्डले तिष्ठेत् प्राङ्मुखः प्राञ्जलिः शुचिः। लक्षयेयुः क्षतादीनि हस्तयोस्तस्य कारिणः'। तस्यावष्टष्टव्रीहेः। तथाच याज्ञवल्क्यः 'करौ विमृदितव्रीहेर्लक्षयित्वा ततो न्यसेत्। सप्ताश्वत्थस्य पत्राणि तावत् सूत्रेण वेष्टयेत्'। विमृदितव्रीहेः कराभ्यामिति शेषः विमृदितव्रीहेः करौ लक्षयित्वा क्षततिलादिस्थानेषु हंसपदाकृतिरेखारूपेण रक्तचन्दनादिविन्दुना अङ्कयित्वा तदाह नारदः 'हस्तक्षतेषु सर्वेषु कुर्य्याद्धंसपदानि तु तान्येव पुनरालक्षेद्धस्तौ विन्दुर्विचिन्नितौ'। ततश्च हस्तयोरुपरि सप्ताश्वत्थपत्राणि सप्तशमीपत्राणि सप्त दूर्वापत्राणि दध्यक्तान् यवान् पुष्पाणि च विन्यसेत्। 'सप्त पिप्पलपत्राणि शमीपत्राण्यथ क्रमात्। दूर्वायाः सप्त पत्राणि दध्यक्तांश्चाक्षतान् न्यसेत्'। इति मिताक्षराधृतवचनात्। सप्तपिप्पलपत्राणि अक्षतं सुमनो दधि। हस्तयोर्निक्षिपेत्तत्र सूत्रेण वेष्टनं तथा' इति पितामहवचनाच्च सूत्रं विशेषयति नारदः। 'वेष्टयीत सितैर्हस्तौ सप्तभिः सूत्रतन्तुभिः'। तथा 'जात्यैव लौहकारो यः कुशलश्चाग्निकर्मणि। दृष्टप्रयोगश्चान्यत्र तेनायोऽग्नौ प्रतापयेत्। अग्निवर्णमयं पिण्डं सस्फुलिङ्गं सुरञ्जितम्। पञ्चाशत्पलिकं भूयः

कारयित्वा शुचिर्द्विजः। तृतीयतापे तप्यन्तं ब्रूयात् सत्य-पुरस्कृतं' सत्यपुरस्कृतं सत्यशब्दयुक्तं त्वमग्ने सर्वभूतानामिति याज्ञवल्क्योक्तं मन्त्रं ब्रूयादित्यर्थः। अयःपिण्डं विशेषयति पितामहः 'अस्त्रहीनं तथा ज्ञात्वा अष्टाङ्गुलमयोमयम्। पिण्डन्तु तापयेदग्नौ पञ्चाशत्पलिकं समम्'। अस्त्रं कोणं अङ्गुलिमानन्तु 'तिर्य्यग्यवोदराण्यष्टावूर्द्धा वा ब्रीहयस्त्रयः। प्रमाणमङ्गुलस्योक्तं वितस्तिर्द्वादशाङ्गुलः'। पलपरिमाण-माह मनुः। 'पञ्चकृष्णलकोमाषस्ते सुवर्णस्तु षोडश। पलं सुवर्णाश्चत्वारः' इति लौकिकमानेनाष्टतोलकपरिमितपलानि विंशतिः षट्तोलकाः पञ्चमाषकाश्चतस्रो रत्तिकावैदिकपञ्चा-शतः पलेभ्यो निष्पद्यन्ते ततः 'शान्त्यर्थं जुहुयादग्नौ घृत-मष्टोत्तरं शतम्' इति मिताक्षराधृतात्। प्राड्विवाको मण्डलभूमेर्दक्षिणदेशे स्वगृह्योक्तविधिनाग्निं संस्थाप्य ओम् अग्नये पावकाय स्वाहेति मिताक्षरोक्तमन्त्रेणाज्येनाष्टोत्तरशतं हुत्वा तस्मिन्नग्नौ तप्तौर्हपिण्डं प्रक्षिप्य तत्पिण्डं जले क्षिप्त्वा पुनः संताप्य जले पुनः क्षिप्त्वा पुनस्तस्मिन् तप्यमाने धर्मा-वाहनादिहवनान्तपूर्वोक्तविधिं विधाय तत् पिण्डं जले क्षिप्त्वा पुनस्तप्यमानपिण्डस्थमग्निमेभिः पितामहाद्युक्तैर्मन्त्रै-रभिमन्त्रयेत् ओम् 'त्वमग्ने वेदाश्चत्वारस्त्वञ्च यज्ञेषु हूयसे। त्वं मुखं सर्वदेवानां त्वं मुखं ब्रह्मवादिनाम्। जठरस्थो हि भूतानां ततो वेत्सि शुभाशुभम्। पापं पुनासि वै यस्मात् तस्मात् पावक उच्यते। पापेषु दर्शयात्मानमर्चिष्मान् भव पावक। अथवा शुद्धभावेषु शीतो भव हुताशन। त्वमग्ने सर्वभूतानामन्तश्चरसि साक्षिवत्। त्वमेव देव जानीषे न विदुर्यानि मानवाः। व्यवहाराभिशस्तोऽयं मानुषः शुद्धि-मिच्छति। तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि'। ततो

व्रीहिमर्दनसंस्कृतकरयोरुपरि सप्ताश्वत्थपत्राणि विन्यस्य सप्तसूत्रैः संवेष्ट्याद्यमण्डले तिष्ठन् प्राड्विवाकेन सन्दंशानीतं लौहपिण्डमनेन याज्ञवल्क्योक्तेनाभिमन्त्रयेत्। 'त्वमग्ने सर्वभूतानामन्तश्चरसि पावक। साक्षिवत् पुण्यपापेभ्यो ब्रूहि सत्यं कवे मम'। अस्यार्थः हे अग्ने त्वं सर्वभूतानां जरायुजाण्डजस्वेदजोद्भिज्जातानामन्तःशरीराभ्यन्तरे चरसि भुक्तान्नपानादीनां पाचकत्वेन वर्त्तसे सर्वस्य हृदयगतं जानासीति वा। पावक शुद्धिहेतो कवे अन्तर्दर्शिन् सर्वार्थदर्शिन् सर्वज्ञेति यावत् अतः साक्षिवत् पुण्यपापेभ्यः सत्यं ब्रूहि पुण्यपापेभ्य इति ल्यब्लोपे पञ्चमी पुण्यपापान्यवेक्ष्य सत्यं ब्रूहि दर्शयेत्यर्थः तदनन्तरं याज्ञवल्क्यः 'तस्येत्युक्तवतो लौहं पञ्चाशत्पलिकं समम्। अग्निवर्णं न्यसेत् पिण्डं हस्तयोरुभयोरपि' न्यसेद्राजा प्राड्विवाको वा यथा पितामहः 'ततस्तं समुपादाय राजा धर्मपरायणः। सन्दंशेन नियुक्तो वा हस्तयोरस्य निक्षिपेत्'। तं लौहपिण्डं नियुक्तः प्राड्विवाकः अस्य दिव्यकर्त्तुः याज्ञवल्क्यः 'स तमादाय सप्तैव मण्डलानि शनैर्व्रजेत्'। एवकारेण मण्डलेषु एव पादन्यासो मण्डलानतिक्रमणञ्च दर्शितं व्यक्तमाह पितामहः 'न मण्डलमतिक्रामेत् नाप्यर्वाक् स्थापयेत् पदम्। अष्टमं मण्डलं गत्वा नवमे क्षेपयेद् बुधः' कालिकापुराणं 'मण्डलानि तथा सप्तषोड़शाङ्गुलिमानतः। तावदन्तरितो गच्छेद्गत्वा नवदले क्षिपेत्'। अत्र च गन्तव्यानि सप्तैव मण्डलानि यतः प्रथमे तिष्ठति नवमे क्षिपति तेन न विरुध्यते। याज्ञवल्क्यः 'अन्तरा पतिते पिण्डे सन्देहे वा पुनर्हरेत्'। सन्देहे दग्धत्वादग्धत्वसन्देहे तस्मिन्नेव प्रयोगे पिण्डं पुनरारोप्य शेषं समापयेत् न तु प्रयोगान्तरम् आरोपणमात्रस्य पुनर्विधानात्

तत् प्रयोगस्य त्रिगुणत्वानिश्चयाच्च। कात्यायनः 'प्रत्यक्ष-मभियुक्तश्चेत् स्थानादन्यत्र दह्यते। न दग्धं तं विदुर्देवास्तस्य भूयोऽपि दापयेत्'। याज्ञवल्क्यः 'मुक्ताग्निं मृदितव्रीहि-रदग्धः शुद्धिमाप्नुयात्'। नारदः 'व्रीहिमतिप्रयत्नेन सप्तवारांश्च मर्दयेत्'। पितामहः 'निर्विशङ्केन तेषान्तु हस्ताभ्यां मर्दने कृते। निर्विकारो दिनस्यान्ते शुद्धिस्तस्य विनिर्दिशेत्'।

अथैतत्प्रयोगः। पूर्ववद्भूमिशुद्धिं विधाय पश्चिमपूर्वं यथा पूर्वमष्टमण्डलानि षोड़शाङ्गुलप्रमाणानि तदन्तरालानि च षोड़शाङ्गुलप्रमाणानि तदन्तरालं नवमं मण्डलमपरिमिता-ङ्गुलप्रमाणं गोमयेन निर्माय तेषु प्रागग्रान् कुशानास्तीर्य प्रथमे मण्डले रक्तपुष्पाक्षतमादाय ओम् भूर्भुवः स्वरग्ने इहा-गच्छ इहागच्छ इह तिष्ठ इह तिष्ठ इत्यावाह्य स्थापयित्वा गन्धादिभिः प्राड्विवाकोऽभ्यर्चयेत्। एवं द्वितीये वरुणं तृतीये वायुं चतुर्थे यमं पञ्चमे इन्द्रं षष्ठे कुवेरं सप्तमे सोमम् अष्टमे सूर्य्यं नवमे सर्वदेवताः ततो मण्डलदक्षिणे प्राड्विवाकः स्वगृह्योक्तविधिनाग्निस्थापनं कृत्वा ओम् अग्नये पावकाय स्वाहेति अष्टोत्तरशतम् आज्येन शान्तिहोमं कृत्वा तदग्नौ लौकिकमानेन चतूरक्तिकाधिकपञ्चमाषकाधिकषट्पञ्चाधिक-शततोलकमितं कोणरहितम् अष्टाङ्गुलं लौहपिण्डं प्रतप्य जले प्रक्षिप्य पुनरग्नौ प्रतप्य पुनर्जले प्रक्षिप्य पुनः प्रतप्य तत् पिण्डे धर्मावाहनादि सर्वदेवतापूजां हवनान्तां तुलोक्तां विधाय दक्षिणां दद्यात् उपोषितस्य स्नातस्यार्द्रवाससो मलावधमण्डले तिष्ठतो व्रीहिमर्दनादिसंस्कारं विधाय प्रतिज्ञापत्रं समन्त्रकं कर्त्तुः शिरसि बद्धा प्राड्विवाकस्तृतीये तापेऽयःपिण्डस्थमग्निमभिमन्त्रयेत् एभिर्मन्त्रैः। ओम् त्वमग्ने वेदाश्चत्वारस्त्वञ्च यज्ञेषु हूयसे। त्वं मुखं सर्वदेवानां

त्वं मुखं ब्रह्मवादिनाम्। जठरस्थो हि भूतानां ततो वेत्सि शुभाशुभम्। पापं पुनासि वै यस्मात्तस्मात् पावक उच्यते। पापेषु दर्शयात्मानमर्चिष्मान् भव पावक। अथवा शुद्धभावेन शीतो भव हुताशन। त्वमग्ने सर्वभूतानामन्तश्चरसि साक्षिवत्। त्वमेव देव जानीषे न विदुर्यानि मानवाः। व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति। तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि'। ततः कर्त्तुर्हस्तयोरुपरि सप्ताश्वत्थपत्राणि सप्तशमीपत्राणि सप्तदूर्वापत्राणि दध्यक्षतान् यवान् पुष्पाणि च शुक्लसूत्रेण सप्तकृत्वो वेष्टयेत्। कर्त्ता लौहपिण्डस्थमग्निमभिमन्त्रयेदनेन मन्त्रेण 'त्वमग्ने सर्वभूतानामन्तश्चरसि पावक। साक्षिवत् पुण्यपापेभ्यो ब्रूहि सत्यं करे मम'। ततस्तद्धस्तयोरुपरि लौहपिण्डं निदध्यात् ततस्तं गृहीत्वा शनैरकुटिलं क्रमशः सप्तमण्डलानि गत्वा नवममण्डलस्थतृणोपरि त्यजेत्। ततः पुनरपि व्रीहिभिर्मर्दयेत्। अदग्धश्चेत् शुद्धिमाप्नुयात् अन्तरापतिते पिण्डे दग्धादग्धत्वसन्देहे वा पुनर्हरेत्। स्खलने हस्तयोरन्यत्र दाहे न दोषः। पुनरारोपणञ्च ततो गुरुपुरोहितादीन् दक्षिणाभिः परितोषयेत्।* इति अग्निपरीक्षा

अथ उदकपरीक्षा। पितामहः 'तोयस्याथ प्रवक्ष्यामि विधिं धर्म्यं सनातनम्। मण्डलं पुष्पधूपाभ्यां कारयेत् सुविचक्षणः। शरान् संपूजयेद्व्रत्वा वैणवञ्च धनुस्तथा'। तत्र प्रथमतो वरुणं पूजयेत् यथा नारदः 'गन्धमाल्यैः सुरभिभिर्मधुक्षीरघृतादिभिः। वरुणाय प्रकुर्वीत पूजामादौ समाहितः'। ततो धर्मावाहनादिसकलदेवतापूजा होम समन्त्रकप्रतिज्ञापत्रशिरो निवेशान्तं कर्म कुर्य्यात्। कात्यायनः। 'शरांस्त्रमायसाग्रांस्तु प्रकुर्वीत विशुद्धये। वेणुकाष्ठमयाश्चैव

क्षेप्ता च सुदृढं क्षिपेत्'। पितामहः 'क्षेप्ता च क्षत्रियः कार्य्यः तद्वृत्तिर्ब्राह्मणोऽथवा। अक्रूरहृदयः शान्तः सोपवासस्तथा शुचिः। इषूंश्च प्रक्षिपेत्तीमान् मारुतो वाति वा भृशम्। विषमे भूप्रदेशे च वृक्षस्थाणुसमाकुले'। नारदः 'क्रूरं धनुः सप्तशतं मध्यमं षट्शतं मतम्। मन्दं पञ्चशतं प्रोक्तमेष ज्ञेयो धनुर्विधिः'। अङ्गुलीनां सप्ताधिकं शतं यस्य धनुषः परिमाणं तत् सप्तशतम् एवं षट्शतादिकं पितामहः 'मध्यमेन तु चापेन प्रक्षिपेत्तु शरत्रयम्। हस्तानान्तु शते सार्द्धे लक्ष्यं कृत्वा विचक्षणः। तेषाञ्च प्रेषितानान्तु शराणां शास्त्रदेशनात्। मध्यमस्तु शरो ग्राह्यः पुरुषेण बलीयसा। शराणां पतनं ग्राह्यं सर्पणं परिवर्जयेत्। सर्पन् सर्पन् शरो याति दूराद् दूरतरं यतः'। पतनं ग्राह्यमिति शरपतनस्थानपर्य्यन्तं गच्छेदित्यर्थः तेन प्रमत्तपक्षेऽपि पतनस्थानकशरग्रहणं ततश्च प्रथमतः पुरुषान्तरेण तत्स्थाने शर आनेतव्यः। नारदः 'नदीषु नातिवेगासु तड़ागेषु सरःसु च। कूटेषु स्थिरतोयेषु कुर्य्यात् पुंसां निमज्जनम्'। नातिवेगासु स्थितिविरोधिवेगशून्यासु। विष्णुः 'पङ्कशैवालदुष्टग्राहमत्स्यजलौकादिवर्जिते तस्य नाभिमात्रजले मग्नस्यारागद्वेषिणः। पुरुषस्यान्यस्योरू गृहीत्वाऽभिमन्त्रिताम्भः प्रविशेत्। ततः समकालञ्च नातिक्रूरमृदुना धनुषा पुरुषोऽपरः शरमोक्षं कुर्य्यादिति' तस्य शोध्यस्येत्यर्थः अन्यथा तस्येति व्यर्थं स्यात् अन्यपुरुषस्य स्तम्भधारणमाह स्मृतिः 'उदके प्राङ्मुखस्तिष्ठेद्धर्मस्थूणां प्रगृह्य च' शोध्यकर्तृकजलाभिमन्त्रणमाह पितामहः। 'तोय त्वं प्राणिनां प्राणः सृष्टेराद्यन्तु निर्मितम्। शुद्धेश्च कारणं प्रोक्तं द्रव्याणां देहिनान्तथा। अतस्त्वं दर्शयात्मानं शुभाशुभपरीक्षणे'। शोध्यकर्तृकाभिमन्त्रणमाह याज्ञवल्क्यः 'सत्येन माभिरक्ष

वरुणेत्यभिप्रायकम्। नाभिमात्रोदकस्थस्य गृहीत्वोरू जलं विशेत्। मामभिशाप्य शपथं कारयित्वा कं जलं विशेत्' तोरणञ्च निमज्जनसमीपे समे स्थाने शोध्यकर्णप्रमाणोच्छ्रितं कार्य्यं यथा नारदः 'गत्वा तु तज्जलस्थानं तटे तोरणमुच्छ्रितम्। कुर्वीत कर्णमात्रन्तु भूमिभागे समे शुचौ। शरमोक्षे विशेषमाहतुर्नारदबृहस्पती 'शरप्रक्षेपणस्थानाद् युवाजवसमन्वितः। गच्छेत् परमया शक्त्या यत्रासौ मध्यमः शरः। मध्यमं शरमादाय पुरुषोऽन्यस्तथाविधः'। प्रत्यागच्छेत्तु वेगेन यतः स पुरुषो गतः। आगतस्तु शरग्राही न पश्यति यदा जले। अन्तर्जलगतं सम्यक् तदा शुद्धिं विनिर्द्दिशेत्। अन्यथा न विशुद्धः स्यादेकाङ्गस्यापि दर्शनात्। स्थानाद्वान्यत्रगमनाद् यस्मिन् पूर्वं निवेशयेत्'। जविनौ विशेषयति नारदः 'पञ्चाशतो धावकानां यौ स्यातामधिकौ जवे। तौ च तत्र नियोक्तव्यौ शरानयनकर्मणि'। एकाङ्गस्य दर्शनादिति च कर्णाद्यभिप्रायेण 'शिरोमात्रन्तु दृश्येत न कर्णौ नापि नासिके। अप्सु प्रवेशने यस्य शुद्धं तमपि निर्द्दिशेत्'। इति विशेषाभिधानात् निमज्ज्योत्प्लवते यस्तु दृष्टः स्यात् प्राणिना नरः। पुनस्तत्र निमज्जेत दंशचिह्नविचारितः'। जलान्तर्गतमत्स्यजलौकादिना दष्टः समुत्प्लवते यदि तदा दृष्टे पुनर्निमज्जनीयमित्यर्थः। पितामहः 'गन्तुश्चापि च कर्त्तुश्च समं गमनमज्जनम्। गच्छेत्तोरणमूलात्तु शरस्थानं जवी नरः। तस्मिन् गते द्वितीयोऽपि वेगादादाय सायकम्। गच्छत्तोरणमूलन्तु यतः स पुरुषो गतः। आगतस्तु शरग्राही न पश्यति यदा जले। अन्तर्जलगतं सम्यक् ततः शुद्धिं विनिर्द्दिशेत्'। अत्र मज्जनसमकालगमनाभिधानाच्छरमोक्षसमकालं गमनं शूलपाण्युक्तमयुक्तं मज्जन-

समकालच्चिप्तं मध्यमं शरमादायेत्यपरमुक्तमपि प्रमाणशून्य ततश्च त्रिषु शरेषु मुक्तेषु एको वेगवान् मध्यमशरपतनस्थान गत्वा तमादाय तत्रैव तिष्ठति अन्यस्तु पुरुषो वेगवान् शर मोचस्थाने तोरणमूले तिष्ठति एवं स्थितयोस्तृतीयाय करतालिकायां प्राड्विवाकदत्तायां शोध्यो निमज्जति तत् समकालमेव तोरणमूलस्थितोऽपि द्रुततरं मध्यमशरपतन स्थानं गच्छति शरग्राही च तस्मिन् प्राप्ते द्रुततरं तोरणमूल प्राप्यान्तर्जलगतं यदि न पश्यति तदा शुद्धो भवतीति वर्त्तुलार्थः।

तत्र प्रयोगः। उक्तलक्षणजलाशयनिकटे तथा तोरण विधाय उक्तदेशे लक्ष्यं कृत्वा तोरणसमीपे सशरं धनुः संपूज्य जलाशये वरुणमावाह्य पूजयित्वा तत्तीरे धर्मादींश्च देवान् हवनान्तमिष्ट्वा दक्षिणां कृत्वा शोध्यस्य शिरसि प्रतिज्ञापत्रं बद्ध्वा प्राड्विवाको जलमभिमन्त्रयेत्। 'ओम् तोय त्वं प्राणिनां प्राणः सृष्टेराद्यन्तु निर्मितम्। शुद्धेश्च कारणं प्रोक्तं द्रव्याणां देहिनां तथा। अतस्त्वं दर्शयात्मानं शुभाशुभपरीक्षणे' इति मन्त्रेण। शोध्यस्तु ओं सत्येन माभिरक्षस्व वरुणेत्यनेन जल-मभिमन्त्र्य गृहीतस्थूणस्य शोध्यस्य नाभिमात्रोदकावस्थितस्य बलीयसः। प्राङ्मुखस्य पुरुषस्य समीपं जलमध्ये गच्छेत्। ततश्च शरेषु त्रिषु मुक्तेषु मध्यमशरपातस्थाने मध्यमशरं गृहीत्वा जविन्येकस्मिन् पुरुषे स्थिते अन्यस्मिंश्च तोरणमूल-स्थिते प्राड्विवाकेन तालत्रये दत्ते शोध्यो गृहीतस्थूण-प्राङ्मुखपुरुषोरू गृहीत्वा निमज्जति तत्समकालमेव तोरण-मूलस्थोऽपि मध्यमशरस्थानं द्रुतं गच्छति। ततः शरग्राही च तस्मिन् प्राप्ते द्रुतं तोरणमूलं प्राप्य जलान्तःस्थं यदि न पश्यति तदा शुद्धः। कर्णाद्यङ्गं विना शिरोमात्रदर्शनेऽपि

पुनः मज्जनस्थानादन्यत्र गमनेऽपि अशुद्धः दक्षिणादिकं दद्यात्।

अथ विषविधिः। नारदः 'शार्ङ्गं हैमवतं शस्तं गन्धवर्ण-रसान्वितम्। अकृत्रिमसमं गूढममन्त्रोपहतञ्च यत्। वर्षे चतु-र्यवा मात्रा ग्रीष्मे पञ्चयवाः स्मृताः। हेमन्ते स्युः सप्तयवाः शर-त्स्वल्पन्ततोऽपि हि। दद्याद्विषं सोपवासो देवब्राह्मणसन्निधौ। धूपोपहारमन्त्रैश्च पूजयित्वा महेश्वरम्। द्विजानां सन्निधावेव दक्षिणाभिमुखे स्थिते। उदङ्मुखः प्राङ्मुखो वा दद्याद्विप्रः समाहितः'। शार्ङ्गस्वरूपमाह कात्यायनः। 'अजाशृङ्गनिभं श्यामं सुगीतं शृङ्गसम्भवम्। भङ्गे च शृङ्गवेराभं तत्स्यात् शृङ्गिणं विषम्। रक्तस्थमसितं कुर्य्यात् कठिनञ्चैव तत्क्षणात्'। शृङ्गवेरमार्द्रकं तदाभं तत्तुल्यम्। रक्तस्थमिति यद्विषं रक्ते स्थापितं सत् तद्रक्तस्थं श्यामं कठिनं करोतीत्यर्थः अल्पेति पूर्वोक्तसप्तयवानामल्पत्वं षड्यवमात्रेत्यर्थः। हेमन्तग्रहणे शिशिरस्यापि ग्रहणं हेमन्तशिशिरयोः समानत्वमिति श्रुतेः। वसन्तस्य सर्वदिव्यसाधारणत्वेन तत्रापि सप्तयवाः सप्तविषस्य वेति याज्ञवल्क्येन सामान्यतोऽभिधानात् कात्यायनः 'पूर्वाह्णे शीतले देशे विषं देयन्तु देहिनाम्। घृतेन योजितं स्लक्ष्णं पिष्टं त्रिंशद्गुणेन च'। देयं प्राड्विवाकेन तत्प्राठ्यमाह पिता-महः 'दीयमानं करे कृत्वा विषन्तु परिश्रापयेत्। विष त्वं ब्रह्मणा सृष्टं परीक्षार्थं दुरात्मनाम्। पापिनां दर्शयात्मानं शुद्धानाममृतं भव। मृत्युमूर्त्ते विष त्वं हि ब्रह्मणा परिनि-र्मितम्। त्रायस्वैनं नरं पापात् सत्येनास्यामृतं भव'। परि-श्रापयेत् शपथं कारयेत् शोध्यमाह याज्ञवल्क्यः। 'विष त्वं ब्रह्मणः पुत्रः सत्यधर्मे व्यवस्थितः। त्रायस्वास्मदभीशापात् सत्येन भव मेऽमृतम्। एवमुक्त्वा विषं शार्ङ्गं भक्षयेद्धिमशै-

लक्षम्। भक्षिते च यदा तुल्ये मूर्च्छाच्छर्दिविवर्जितः। निर्विकारो दिनस्यान्ते शुद्धं तमिति निर्दिशेत्। त्रिरात्रं पञ्चरात्रं वा पुरुषैः स्वैरधिष्ठितम्। कुहकादिभयाद्राजा वारयेद्दिव्यकारिणम्। औषधीर्मन्त्रयोगांश्च मण्यौनथ विषापहान् कर्त्तुः शरीरसंस्थांश्च गूढोत्पन्नान् परीक्षयेत्'। विषतन्त्रे वेगो रोमाञ्च माद्यो रचयति विषजः। स्वेदवक्त्रोपशोषौ तस्योर्द्धं स्तत्परौ द्वौ वपुषि जनयतो वर्णभेदप्रवेपौ यो वेगः पञ्चमोऽसौ नयनविरसतां कण्ठभङ्गञ्च हिक्कां षष्ठो निश्वासमोहौ वितरति मृतिं सप्तमो भक्षकस्य'। वृहस्पतिः। 'विधिदत्तं विषं येन जीर्णं मन्त्रौषधं विना। स शुद्धः स्यादन्यथा तु दण्ड्यं दाप्यश्च तद्धनम्'। तत्र क्रमः। सोपवासः प्राड्विवाकः शिवं संपूज्य तत् पुरतो विषमुक्तपरिमाणं पिष्टं त्रिंशद्गुणघृतयुक्तं संस्थाप्य धर्मादीन् देवान् हवनान्तमिष्ट्वा दक्षिणां दत्त्वा शोध्यशिरसि प्रतिज्ञापत्रं निधाय 'ओं विष त्वं ब्रह्मणः सृष्टं परीक्षार्थं दुरात्मनाम्। पापिनां दर्शयात्मानं शुद्धानाममृतं भव। मृत्युमूर्त्ते विष त्वं हि ब्रह्मणा परिनिर्मितम् त्रायस्वैनं नरं पापात् सत्येनास्यामृतं भव'। इत्याभ्यां प्राङ्मुख उदङ्मुखो वा विषमभिमन्त्र्य दक्षिणाभिमुखाय शोध्याय ददाति। शोध्यस्तु। ओं 'विष त्वं ब्रह्मणः पुत्रः सत्यधर्मे व्यवस्थितः। त्रायस्वास्मादभीशापात् सत्येन भव मेऽमृतम्'। इत्यनेनाभिमन्त्र्य भक्षयति। यदि दिनान्तं निर्विकारस्तदा शुद्ध इति।

अथ कोषविधिः। नारदः 'पूर्वाह्णे सोपवासस्य स्नातस्यार्द्रपटस्य च। संमुखकस्याव्यसनिनः कोषपानं विधीयते। इष्टतः श्रद्दधानस्य देवब्राह्मणसन्निधौ। मद्यपस्त्रीव्यसनिनां कितवानान्तथैव च। कोषः प्राज्ञैर्न दातव्यो ये च नास्तिकवृत्तयः।

महापराधे निर्धर्मे कृतघ्ने क्लीवकुत्सिते नास्तिकव्रात्यदासेषु कोषपानं विवर्जयेत्। तमाहूयाभिशस्तन्तु मण्डलाभ्यन्तरे स्थितम्। आदित्याभिमुखं कृत्वा पाययेत् प्रसृतित्रयम्। ऊर्द्ध्वं यस्य हि सप्ताहाद्वैकृतन्तु महद्भवेत्। नाभियोज्यः स विदुषा कृतकालव्यतिक्रमात्'। संसूचक आस्तिक इति मिताक्षरा। महापराधी महापातकी निर्धर्मो वर्णाश्रम-रहितः कुत्सितः प्रतिलोमजः। दासः कैवर्त्तः। मण्डला-भ्यन्तरे गोमयकृतमण्डलाभ्यन्तरे वैकृतं रोगादिमहत्त्वात्' तस्य देहिनामपरिहार्य्यत्वात्। तदाह कात्यायनः। 'अथ दैवविसंवादे त्रिसप्ताहन्तु दापयेत्। अभियुक्तं प्रयत्नेन तदर्थं दण्डमेव च। तस्यैकस्य न सर्वस्य जनस्य यदि तद्भवेत्। रोगोऽग्निर्ज्ञातिमरणमृणं दाप्योदमश्च सः। ज्वरातिसार-विस्फोटगूढ़ास्थिपरिपीड़नम्। नेत्ररुक् गलरोगश्च तथोन्मादः प्रजायते। शिरोरुग्भुजभङ्गश्च दैविका व्याधयो नृणाम्' गलरोग इत्यत्र शूलरोग इति क्वचित् पाठः त्रिसप्ताहन्तु महाभियोग-भवविषयं महाभियोगेष्वेतानीति प्रस्तुत्य चतुर्दशकादर्वाक् इति याज्ञवल्क्याभिधानात् मिताक्षराप्येवम्। यत्तु 'त्रिरात्रात् सप्तरात्राद्वा द्वादशाहात् द्विसप्तकात्। वैकृतं यस्य दृश्येत पापकृत् स उदाहृतः'। इति पितामहोक्तं तन्महाभियोगात् कृतघ्नद्रव्यादर्वाचीनं द्रव्यं त्रिधा विभज्य त्रिरात्रादिपक्षत्रयं व्यवस्थापनीयमिति मिताक्षरा। तथा 'भक्तो यो यस्य देवस्य पाययेत्तस्य तज्जलम्। समभावे तु देवानामादित्यस्य तु पाययेत्। दुर्गायाः पाययेच्चौरान् ये च शस्त्रोपजीविनः। भास्करस्य तु यत्तोयं ब्राह्मणं तत्र पाययेत्। दुर्गायाः स्नाप-येच्छूलमादित्यस्य मण्डलम्। अन्येषामपि देवानां स्नापये-दायुधानि च। अत्र स्वल्पापराधे देवानां स्नापयित्वायुधो-

दकम्। पाप्मी विकारे चाग्रतो नियम्यः शुचिरन्यथा’। इति कात्यायनोक्तविशेषाच्चल्पापराधे देवस्नानोदकमिति विषय-भेदः। रत्नाकरोऽप्येवम्। मण्डलं व्योमेति व्यवहारदीपिका तस्यां विष्णुः ‘उग्रान् देवान् समभ्यर्च्य तत् स्नानोदकप्रसृति-त्रयं पिबेत्। इदं मया न कृतमिति व्याहरन् देवतामुखः’ इति। एतदनुसारा देवान्यत्र प्रतिज्ञा प्रागुक्ता। तत्र क्रमः। प्राड्विवाको गोमयकृतमण्डलाभ्यन्तरे धर्मावाहनादि सर्वदेव-तापूजां हवनान्तां निर्वर्त्य दक्षिणां दत्त्वा समन्त्रकं प्रतिज्ञा-पत्रं शोध्य शिरसि निधाय यथाविहितदेवं संपूज्य तत् स्नानोदकमानीय ओं ‘तोय त्वं प्राणिनां प्राणः सृष्टेराद्यन्तु निर्मितम्। शुद्धेश्च कारणं प्रोक्तं द्रव्याणां देहिनान्तथा। अतस्त्वं दर्शयात्मानं शुभाशुभपरीक्षणे’। इत्याभ्यामभिमन्त्र्य गोमयकृतमण्डलाभ्यन्तरे स्थितं सोपवासं स्नातार्द्रवाससमादित्याभिमुखम्। ओं सत्येन मामभिरक्षस्व वरुणेत्यनेन शोध्य पठितेनाभिमन्त्रितं प्रसृतित्रयं जलं पाययेत्। ततो यदि अवधिकालाभ्यन्तरे रोगपीड़ा न भवति तदा शुद्ध इति ततो दक्षिणा देया।

अथ तण्डुलविधिः। पितामहः। ‘चौर्य्ये तु तण्डुला देया नान्यत्रेति विनिश्चयः। तण्डुलान् कारयेच्छुक्लान् शाले-र्नान्यस्य कस्यचित्। मृण्मये भाजने कृत्वा आदित्यस्याग्रतः शुचिः। स्नानोदकेन संमिश्रान् रात्रौ तत्रैव वासयेत्। प्राङ्मुखोपोषितं स्नातं शिरोरोपितपत्रकम्। तण्डुलान् भक्षयित्वा तु पत्रे निष्ठीवयेत्त्रिधा। भूर्जस्यैव तु नान्यस्य अभावे पिप्पलस्य तु। शोणितं दृश्यते यस्य हनुस्तालु च शीर्य्यते। गात्रञ्च कम्पते यस्य तमशुद्धं विनिर्दिशेत्’। स्नानो-दकेन देवतास्नानोदकेन। तथाच कात्यायनः। देवतास्नान-

पानीयक्लिन्नतण्डुलभक्षणे। शुद्धनिष्ठीवनात् शुद्धो नियम्यो-ऽशुचिरन्यथा'। शिरोरोपितपत्रकं तण्डुलान् भक्षयित्वा निष्ठीवयेत्। प्राड्विवाक इति निष्ठीवयेदिति एतन्मात् सिद्धं तुलानिरूपितं सर्वदिव्यसाधारणञ्च धर्मावाहनादिकं नाम्नं पूर्ववदिहापि कर्त्तव्यम्।

अथ तप्तमाषकविधिः। पितामहः 'कारयेदायसं पात्रं ताम्रं वा षोड़शाङ्गुलम्। चतुरङ्गुलखातन्तु मृण्मयं वाथ मण्डलम्'। मण्डलं सूर्य्यमण्डलाकारं वर्त्तुलमिति यावत्। 'पूरयेद् घृततैलाभ्यां विंशत्या तु पलैस्तु तत्। सुवर्णमाषकं तस्मिन् सुतप्ते निक्षिपेत्ततः। अङ्गुष्ठाङ्गुलियोगेन उद्धरेत्तप्त-माषकम्। कराग्रं यो न धुनुयात् विस्फोटो वा न जायते। शुद्धो भवति धर्म्मेण पितामहवचो यथा'। कल्पान्तरमाह 'सौवर्णे राजते ताम्रे आयसे मृण्मयेऽपि वा। गव्यं घृत-मुपादाय तदग्नौ तापयेच्छुचिः। सौवर्णीं राजतीं ताम्रीमायसीञ्च सुशोधिताम्। सलिलेन सकृद्धौतां प्रक्षिपेत्तत्र मुद्रिकाम्। भ्रमद्वीचितरङ्गाढ्येन नखस्पर्शगोचरे। परीक्षेतार्द्र-पर्णेन चुचुकारं सघोषकम्। ततश्चानेन मन्त्रेण सकृत्तदभि-मन्त्रयेत्। ,परं पवित्रममृतं घृत त्वं यज्ञकर्मसु। दह पावक पापं त्वं हिमशीतं शुचौ भव। उपोषितं ततः स्नात-मार्द्रवाससमागतम्। ग्राहयेन्मुद्रिकां तान्तु घृतमध्यगता-न्तथा। प्रदेशिनीञ्च तस्याथ परीक्षेयुः परीक्षकाः। यस्य विस्फोटका न स्युः शुद्धोऽसावन्यथा शुचिः'। प्रयोगस्तु। मध्यविधाष्टयवतण्डुलमध्यमिताङ्गुलि·षोड़शाङ्गुलमित·प्रस्तारे तथाविधाङ्गुलिचतुष्टयखाते ताम्रादिघटितेऽशक्तौ मृण्मये वा चक्राकारवर्त्तुले पात्रे लौकिकाष्टरत्तिकाधिकमाषक-द्वयाधिकत्रयस्त्रिंशत्तोलक। ३१। २८। रूपवेदिकपलदशक-

मितं घृतम् एवं तैलञ्च निक्षिप्य लौकिकचतुरक्तिकाधिक-पञ्चमाषकषट्षष्टितोलक। ६६। ५४। रूपवेदिकविंशतिपल-परिमितं केवलं गव्यघृतं वा निक्षिप्य तस्मिन् सुतप्ते सम्यक्शीतां पञ्चरक्तिकामितां काञ्चनमुद्रिकां राजतादिकां वा निक्षिपेत्। धर्मावाहनादिहवनान्तं तुलोक्तं सदक्षिणं कर्म्म कृत्वा, ओम् 'परं पवित्रममृत' घृत त्वं यज्ञकर्मसु। दह पावक पापं त्वं हिमशीतं शुचौ भव'। इत्यनेनाभिमन्त्रयेत्। प्राड्विवाकः ततः कृतोपवासः स्नातार्द्रवासाः शोध्यशिरसि प्रतिज्ञापत्रं निधाय, ओम् 'त्वमग्ने सर्व्वभूतानामन्तश्चरसि पावक। साक्षिवत् पुण्यपापेभ्यो ब्रूहि सत्यं करे मम'। इत्यनेनाभि-मन्त्रयार्द्रपत्रनिक्षेपकृतचुचुकशब्दाद् घृतान्मुद्रिकां तर्जन्यङ्गुष्ठा-भ्यामुत्तोलयेत् घृततैलाभ्यां वा तप्तमाषकमुत्तोलयेत् अदग्ध-श्चेत्तदा शुद्ध इति ततो दक्षिणां दद्यात्।

अथ फालविधिः। बृहस्पतिः 'आयसं द्वादशपलघटितं फालमुच्यते। अष्टाङ्गुलं भवेद्दीर्घं चतुरङ्गुलविस्तरम्। अग्नि-वर्णं ततश्चौरो जिह्वया लेहयेत् सकृत्। न दग्धश्चेच्छुद्धि-मियादन्यथा स तु हीयते'। चौरोऽत्र गोचौरः। 'गोचौरस्य प्रदातव्यं तप्तफालावलेहनम्' इति स्मृतेरिति मैथिलाः। अत्रापि त्वमग्ने इत्यादि मन्त्रानन्तरम्। 'आयसं लेलिहानस्य जिह्वयापि समादिशेत्'। इति पितामहोक्तेः प्राड्विवाक-शोध्याभ्यामग्न्यभिमन्त्रणं कार्य्यम्। अत्र प्रयोगः। लौकिक-चत्वारिंशत्तोलकमितं लौहघटितमष्टयवमध्यात्मकाङ्गुलाष्ट-दीर्घम्। तथाविधचतुरङ्गुलप्रस्तारं फालमग्नौ च ताप-येत्। तत्र प्राड्विवाको धर्म्मावाहनादिहवनान्तं कर्म्म कृत्वा दक्षिणां दत्त्वा समन्त्रकं प्रतिज्ञापत्रं शोध्य शिरसि निधाय, ओम् 'त्वमग्ने वेदाश्चत्वारस्त्वञ्च यज्ञेषु हूयसे। त्वं मुखं सर्व्व-

देवानां त्वं मुखं ब्रह्मवादिनाम्। जठरस्थो हि भूतानां ततो वेत्सि शुभाशुभम्। पापं पुनासि वै यस्मात् तस्मात् पावक उच्यते। पापेषु दर्शयात्मानमर्चिष्मान् भव पावक। अथवा शुद्धभावेन शीतो भव हुताशन। त्वमेव सर्वभूतानामन्तश्चरसि साक्षिवत्। त्वमेव देव जानीषे न विदुर्यानि मानवाः। व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति। तदेनं संशयादस्मादमंतस्त्रातुमर्हसि'। इत्येतैः फालस्थमग्निमभिमन्त्रयेत्। शोध्यस्तु 'त्वमग्ने सर्वभूतानामन्तश्चरसि पावक। साक्षिवत् पुण्यपापेभ्यो ब्रूहि सत्यं करे मम'। इत्यनेनाभिमन्त्राग्निवर्णं फालं जिह्वया सकृत् लिह्यात्। न दग्धश्चेत् शुद्धः।

अथ धर्मराजविधिः। वृहस्पतिः। 'पत्रद्वये लेखनीयौ धर्माधर्मौ सितासितौ। जीवदानादिकैर्मन्त्रैर्गायत्र्याद्यैश्च सामभिः। आमन्त्र्य पूजयेद्गन्धैः कुसुमैश्च सितासितैः। अभ्युक्ष्य पञ्चगव्येन मृत्पिण्डान्तरितौ ततः। समौ कृत्वा नवे कुम्भे स्थाप्यौ चानुपलक्षितौ। ततः कुम्भात् पिण्डमेकं गृह्णीयादविलम्बितः। धर्मे गृहीते शुद्धः स्यात् संपूज्यश्च परीक्षकैः'। जीवदानमन्त्रस्तु शारदायां 'पाशाङ्कुशपुटाशक्तिर्वायुविन्दुविभूषितायाद्याः सप्तसकारान्ता व्योमसत्येन्दुसंयुतम्। तदन्ते हंसमन्त्रः स्यात् ततोऽमुष्यपदं वदेत्। प्राणा इति वदेत् पश्चादिह प्राणास्ततः परम्। अमुष्य जीव इह स्थितस्ततोऽमुष्यपदं वदेत्। सर्वेन्द्रियाण्यमुष्यान्ते वाङ्मनश्चक्षुरन्ततः। श्रोत्रघ्राणपदे प्राणा इहागत्य सुखं चिरम्। तिष्ठन्त्वग्निवधूरन्ते प्राणमन्त्रोऽयमीरितः। प्रत्यमुष्यपदात् पूर्वं पाशाद्यानि प्रयोजयेत्। प्रयोगेषु समाख्यातः प्राणमन्त्रो मनीषिभिः'। पाशाङ्कुशपुटाशक्तिरित्यनेन प्रथमं पाशं



बीजम्। थां ततः शक्तिबीजं क्रौं ततो मृत्युबीजं क्षौं वायु-र्यकारो बिन्दुविभूषितः तेन यं याथाः सप्तसकारान्ता उद्धृत यकारमादाय सप्त मृत्युवायूनलावनिवरुणबीजानीत्य-र्थोक्तेः। अत्र वायोरेकस्य पूर्वं पृथगुपन्यासः सप्तानां सबिन्दु-त्वार्थः अतएव अन्यत्र बीजानीत्युक्तम्। व्योमसत्त्वेन्दुभूषितं व्योमहकारः इन्दुर्विन्दुः तेनाह्वोम् अमुष्य इति षष्ठ्यन्त-देवतानामोपलक्षणम्। 'अदःपदं हि यद्रूपं यत्र मन्त्रे प्रदृ-श्यते। साध्याभिधानं तद्रूपं तत्र स्थाने नियोजयेत्'। इति नारायणीयात्। अग्निवधू स्वाहा गायत्र्यादिसामाम्नाने तु सप्रणवव्याहृतिगायत्रीमात्रं पठितव्यम्। 'जपहोमादि यत्किञ्चित् कृतस्मोक्तं सम्भवेन चेत्। तत्सर्वं व्याहृतिभिः कुर्य्यात् गायत्र्या प्रणवेन च। इति मिताक्षराधृतषट्त्रिंश-न्मतवचनदर्शनादत्रापि तथा कल्प्यते पितामहः 'अधुना संप्रवक्ष्यामि धर्माधर्मपरीक्षणम्। हन्तॄणां याचमानानां प्रायश्चित्तार्थिनां नृणाम्। राजतं कारयेद्धर्ममधर्मं सीसकाय-सम्। लिखेद्भूर्जे पटे वापि धर्माधर्मौ सितासितौ। अभ्युक्ष्य पञ्चगव्येन गन्धमाल्यैः समर्चयेत्। सितपुष्पस्तु धर्मः स्यात् अधर्मोऽसितपुष्पकः। एवंविधायोपलिख्य पिण्ड-योस्तौ निधापयेत्। गोमयेन मृदा वापि पिण्डौ कार्य्यौ समौ ततः। मृद्भाण्डकेऽनुपहते स्थाप्यौ चानुपलक्षितौ। उपलिप्ते शुचौ देशे देवब्राह्मणसन्निधौ। आवाहयेत्ततो देवान् लोकपालांश्च पूर्ववत्। धर्मावाहनपूर्वन्तु प्रतिज्ञा-पत्रकं लिखेत्। यदि पापवियुक्तोऽहं धर्मस्त्वायातु मे करम्। अभियुक्तस्तयोरेकं प्रगृह्णीतविलम्बितः। धर्मे गृह्णीते शुद्धः स्यादधर्मे स तु हीयते। एवं समासतः प्रोक्तं धर्माधर्मपरीक्षणम्'। हन्तॄणामिति साहसाभियोगेषु याच-

मानानामिति अत्यल्पार्थाभियोगेषु प्रायश्चित्तार्थिनामिति पातकाभियोगेषु।

तत्र प्रयोगः। पत्रद्वये शुक्लं धर्मं कृष्णमधर्मं पुत्तलक-द्वयरूपं निधाय। ओम् आं ह्रीं क्रों यं रं लं वं शं षं सं ह्रौं हं सः धर्मस्य प्राणा इह प्राणाः पुनः आमित्यादिधर्मस्य जीव इह स्थितः पुनः आमित्यादिधर्मस्य वाङ्मनश्चक्षुःश्रोत्रघ्राणप्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहेत्यनेन जीवदानं धर्मप्रति-मायाम्। एवमधर्मप्रतिमायां कृत्वा गायत्र्यादिसामस्थाने तेनैव नो चेत् सप्रणवव्याहृतिगायत्रीं पठित्वा धर्मस्यावाह-नादि कृत्वा यथाक्रमं शुक्लकृष्णपुष्पाभ्यां धर्माधर्मौ संपूज्य प्रणवेन पञ्चगव्यमुपादायाभ्युक्ष्य शुक्लपुष्पयुक्तं धर्मं कृष्णपुष्प-युक्तमधर्मं मृत्पिण्डद्वये कृत्वा नवे कुम्भे स्थापयेत्। प्राड्-विवाकस्ततो देवब्राह्मणसन्निधौ धर्मावाहनादिहवनान्तं कर्म कृत्वा दक्षिणां दत्त्वा समन्त्रकप्रतिज्ञापत्रं लिखित्वा शोध्यशिरसि दद्यात् शोध्यस्तु। ओम् 'यदि पापवियुक्तोऽहं धर्मस्त्वायातु मे करम्' इत्युच्चार्य्य कुम्भात्तयोरेकं गृह्णीयात् धर्मे गृहीते शुद्ध इति अन्यथा त्वशुद्ध इति।

अथ शपथविधिः। मनुः 'सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः। गोवीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः। पुत्रदारस्य वाप्येनं शिरांसि स्पर्शयेत् पृथक्'। मयैतत् कृतं न कृतं वा सत्यमित्युच्चारणे ब्राह्मणं शापयेत्। सम्भाव्यमान-स्यालीकव्यलीकत्वं तदुक्तस्यालीकत्वं मिथ्यात्वं निवेशयेत्। उक्तमिदं सत्यमिव गमयेदित्यर्थः। तदवगमप्रकारमाह कात्यायनः। 'आचतुर्दशकादह्नो यस्य नो राजदैविकम्। व्यसनं जायते घोरं स ज्ञेयः शपथे शुचिः'। व्यसनम् आपद् घोर-मिति पीड़ाकरम्। अल्पस्य शरीरधर्मत्वात्। तत्र प्रागुक्त-

रोगादि एवं मयैतत् कृतं न कृतं वा इति प्रतिज्ञामुच्चारयन्तं वाहनस्पर्शनेन एवमायुधेनापि क्षत्रियम् एवं गोवीजकाञ्चनानामन्यतमेन वैश्यं शूद्रं सर्वैः पातकैरिति वृथाकरणे पातकहेतुत्वात् पातकैः प्रकृतैः गोवीजकाञ्चनैः सर्वैर्मिलितैस्तेन मयैतत् कृतं न कृतं वेति प्रतिज्ञामुच्चारयन्तं गोवीजकाञ्चनत्रितयस्पर्शेन शूद्रमिति। एतेषां स्पर्शने किं मानमिति चेत्। 'पुत्रदारस्य वाप्येनं शिरांसि स्पर्शयेत् पृथक्'। इति मनुवचनान्तरे तथा दर्शनात् एनं शपथकारिणं ततश्च मयैतत् कृतं न कृतं वेति प्रतिज्ञामुच्चारयन्तं पुत्रस्य दाराणां वा शिरः स्पर्शयेत्। एवं वक्ष्यमाणस्पर्शेऽपि कल्पं स्पर्शनन्तु दक्षिणकरेण। 'यत्रोपदिश्यते कर्म कर्त्तुरङ्गं न तूच्यते। दक्षिणस्तत्र विज्ञेयः कर्मणां पारगः करः' इति कात्यायनोक्तेः। अतएव विष्णुना दूर्वाकराद्यभिहितम्। यथा 'सर्वेष्वर्थविवादेषु मूल्यं स्वर्णं प्रकल्पयेत्'। तत्र कृष्णलोने शूद्रं दूर्वाकरं शापयेत्। द्विकृष्णलोने तिलकरं त्रिकृष्णलोने जलकरं चतुःकृष्णलोने सुवर्णकरं पञ्चकृष्णलोने सीतोद्धृतमहीकरम्। सुवर्णार्द्धोने कोषो देयः शूद्रस्य यथाविहिता समयक्रिया। तथा 'द्विगुणेऽर्थे वैश्यस्य त्रिगुणेऽर्थे राजन्यस्य चतुर्गुणेऽर्थे ब्राह्मणस्य' इति। कृष्णलोने काञ्चनरत्तिकामूल्यद्रव्यादूने एवमन्यत्र बृहस्पतिः 'सत्यं वाहनशस्त्राणि गोवीजकनकानि च। देवब्राह्मणपादांश्च पुत्रदारशिरांसि च। इत्येते शपथाः प्रोक्ताः स्वल्पेऽर्थे सुकराः सदा। साहसेष्वभियोगेषु दिव्यान्याहुर्विशोधनम्'। स्वल्पेऽर्थे धर्मलेश्यविषयादल्पविषय इत्यर्थः। अत्र शपथानां दिव्याङ्गदेनोपन्यासाद्घटादिमध्येऽगणितत्वाच्च न दिव्यत्वम् अतोऽत्र दिव्यधर्माणामुपवासार्द्रवासस्त्वादीनां नातिदेशः। शौचार्थन्तु

ग्रामाध्यक्षनादीनामादरः कर्त्तव्यः । यमः 'कृत्वा मृषा तु शपथं कीटस्य वधसंयुतम् । अनृतेन च युज्येत वधेन च तथा नरः । तस्मान्न शपथं कुर्य्यात् नरो मिथ्या बधेप्सितम्' । कीटस्येति प्राणिमात्रोपलक्षणं तेन प्राणिनोऽत्यन्तानुपयुक्तस्यापि वधसंयुक्तः शपथोऽनर्थहेतुस्तद्वधपापेन मृषा शपथकर्त्ता युज्यत इत्यर्थः ।

इति वन्द्यघटीय श्रीहरिहरभट्टाचार्य्यात्मज श्रीरघुनन्दनभट्टाचार्य्यविरचिते स्मृतितत्त्वे दिव्यतत्त्वं समाप्तम् ।

---

# मठप्रतिष्ठादितत्त्वम् ।

चतुर्वर्गप्रदं विष्णुं नत्वा तत्प्रीतयेऽमितम् ।
तत्त्वं मठप्रतिष्ठादेर्वक्ति श्रीरघुनन्दनः ॥

अथ प्रासादादिकरणम् । तत्र यमः 'कृत्वा देवालयं सर्वं प्रतिष्ठाप्य च देवताम् । विधाय विधिवच्चित्रं तल्लोकं विन्दते ध्रुवम्' । विष्णुः 'यस्तु देवस्यायतनं करोति स तल्लोकमाप्नोति' । तत्र केवल देवतायनकरणे तल्लोकगमनदर्शनात् । पूर्ववचने प्रत्येकं फलमिति । कल्पतरुभविष्यपुराणम् । 'अल्पे महति वा वित्ते फलमाढ्यदरिद्रयोः । मृण्मयात् कोटिगुणितं फलं स्यादिष्टकाभिः कृते । कोटिकोटिगुणं युक्तं फलं स्यादिष्टकामये । द्विपरार्द्धगुणं पुण्यं शैलजे तु वेदुर्बुधाः । मृच्छैलयोः समं ज्ञेयं पुण्यमाढ्यदरिद्रयोः' । देवगृहकरणार्थभूमिदानफलमाह चित्रगुप्तः 'दत्त्वा च देव-

वेश्मार्थं तस्य देवस्य सोऽश्नुते। यस्तत्र वियते नित्यं लोकं द्विजवराभुवम्'। यो देवस्तत्कृतवेश्मनि स्थास्यति तद्देव-लोकं तद्गृहभूमिदाता प्राप्नोति। विष्णुः 'कूपारामतड़ागेषु देवतायतनेषु च। पुनः संस्कारकर्त्ता च लभते मौलिकं फलं' ज्योतिषे 'गुरोर्भृगोरस्तबाल्ये वार्द्धके सिंहगे गुरौ। वक्रिजीवाष्टविंशेऽह्नि गुर्वादित्ये दशाहिके। पूर्वराशावना-यातातिचारिगुरुवत्सरे। प्राग्राशि गन्तृजीवस्य चातिचारे त्रिपक्षके। कम्पाद्यद्भुतसप्ताहे नीचस्थेज्ये मलिम्लुचे। भानु-लङ्घितके मासि क्षये राहुयुते गुरौ। पौषादिकचतुर्मासे चरणाङ्कितवर्षणे। एकेनाङ्गा चैकदिनं द्वितीयेन दिनत्रयम्। तृतीयेन तु सप्ताहं माङ्गल्यानि जिजीविषुः। विद्यारम्भकर्ण-वेधौ चूड़ोपनयनोद्वहान्। तीर्थस्नानमनावृत्तं तथानादि-सुरेक्षणम्। परीक्षारामयज्ञांश्च पुरश्चरणदक्षिणे। व्रता-रम्भप्रतिष्ठे च गृहारम्भप्रवेशने। प्रतिष्ठारम्भणे देवकूपादेः परि-वर्जने। द्वात्रिंशद्दिवसाश्चास्ते जीवस्य भार्गवस्य च। द्वासप्तति-मेहत्यस्ते पादास्ते द्वादशक्रमात्। अस्तात् प्राक् परयोः पक्षं गुरोर्वार्द्धकबालते। पक्षं वृद्धो महास्ते तु भृगोर्बालो दशाहिकः। पादास्ते तु दशाहानि वृद्धो बालो दिनत्रयम्'। देवीपुराणे 'यथा जीवे स्थिते सिंहे तथैव मकरे स्थिते। देवा-रामतड़ागादिपुरोद्यानगृहाणि च। विवाहादि महाभाग भयदानानि निर्दिशेत्'। ज्योतिःकौमुद्यां 'गङ्गाया उत्तरे तीरे गिरिराजस्य दक्षिणे। सिंहस्थं मकरस्थञ्च गुरुं यत्नेन वर्जयेत्'। भुजबलभीमे 'युगादावयने पुण्ये कार्त्तिक्यां विषुव-द्वये। चन्द्रसूर्य्यग्रहे वापि दिने पुण्येऽथ पर्वसु। या तिथि-र्यस्य देवस्य तस्यां वा तस्य कीर्त्तिता। गृह्यागमविशेषेण प्रतिष्ठा मुक्तिदायिनी'। कल्पतरौ देवीपुराणम्। 'यस्य

देवस्य यः कालः प्रतिष्ठा ध्वजरोपणे। गर्त्तापूरशिलान्यासे शुभदस्तस्य पूजितः'। यस्य देवस्य प्रतिष्ठाध्वजरोपणे यः कालः शुभदस्तस्य गर्त्तापूरशिलान्यासे गृहारम्भे स कालः पूजित इत्यर्थः। प्रतिष्ठाकालस्तु मात्स्ये 'चैत्रे वा फाल्गुने वापि ज्यैष्ठे वा माधवेऽपि वा। माघे वा सर्वदेवानां प्रतिष्ठा शुभदा भवेत्। प्राप्य पक्षं शुभं शुक्लमतीते चोत्तरायणे। पञ्चमी च द्वितीया च तृतीया सप्तमी तथा। दशमी पौर्णमासी च तथा श्रेष्ठा त्रयोदशी। तासु प्रतिष्ठा विधिवत् कृता बहुफला भवेत्'। अतीते प्राप्ते गत्यर्थस्य प्राप्त्यर्थत्वात् उत्तरायण इत्यभिधानादाषाढ़ेऽपि। तथाच प्रतिष्ठासमुच्चये 'माघेऽथ फाल्गुने वापि चैत्रवैशाखयोरपि। ज्यैष्ठाषाढ़कयोर्वापि प्रतिष्ठा शुभदा भवेत्'। तथाच माघादावेव देवतानां गृहारम्भप्रवेशौ दीपिकायाम्। 'द्वादश्येकादशी राका शुक्ले कृष्णे च पञ्चमी। अष्टमी च विशेषेण प्रतिष्ठायां हरेः शुभा'। एवं दुर्गाया दक्षिणायनेऽपि। तथाच देवीपुराणम्। 'महिषासुरहन्त्र्याश्च प्रतिष्ठा दक्षिणायने'। मात्स्ये 'आदित्य भौमवर्जन्तु सर्वे वाराः शुभावहाः। प्रासादेऽप्येवमेव स्यात् कूपवापीषु चैव हि। अश्विनी रेवती मूलमुत्तरत्रयमैन्द्रवम्। स्वातिहस्तानुराधा च गृहारम्भे प्रशस्यते। वज्रव्याघातशूले च व्यतीपातातिगण्डयोः। विष्कम्भगण्डपरिघवर्जं योगेषु कारयेत्। चन्द्रादित्यबलं लब्ध्वा लग्नं शुभनिरीक्षितम्। स्तम्भोच्छ्रयादिकर्त्तव्यमन्यत्र परिवर्जयेत्'। ऐन्द्रवं मृगशिरः गृहारम्भे उक्तकालः प्रवेशकालः। यथा ज्योतिषे। उग्रं विशाखामदितिञ्च शक्रं भुजङ्गमग्निञ्च विहाय गेहम्। साम्यस्थलग्नास्थिरमन्दिरेषु कुर्य्यात् सौम्यग्रहैर्युक्तनिरीक्षितेषु। ज्येष्ठादितिभ्यां संयुक्तं गृहारम्भोदितञ्च यत्। तत्सर्वं योज-

गेहेऽस्य प्रवेशे दैवचिन्तकः'। उग्रगणः पूर्वात्रयमघाभरण्यः। अदितिः पुनर्वसुः शक्रो ज्येष्ठा भुजङ्गोऽश्लेषा अग्निः कृत्तिका। शम्याणि मिथुनकन्यातुलाधनुः कुम्भलग्नानि स्थलग्नं स्थलग्नं स्थिराणि वृषसिंहवृश्चिककुम्भलग्नानि कृत्यचिन्तामणौ योगीश्वरः 'गृहे स्वे यो विधिः प्रोक्तो विनिवेशप्रवेशयोः। स एव विदुषा कार्य्यो देवतायतनेष्वपि'। स्वे स्वकीये विनिवेशः करणम् उत्सर्गानन्तरप्रवेशाचरणादुत्सर्गस्यापि स एव कालः स्वयमशक्तो मठारम्भप्रतिष्ठादीनि काम्यान्यपि स्मार्त्तत्वात् प्रतिनिधिना कर्त्तव्यानि तथाच अधिकरणमालाकृन्माधवाचार्य्यकृतपराशरभाष्ये शातातपः 'श्रौतं कर्म स्वयं कुर्य्यादन्योऽपि स्मार्त्तमाचरेत्। अशक्तौ श्रौतमप्यन्यः कुर्य्यादाचारमन्ततः'। एतद्वचनं काम्ये प्रतिनिधिविधायकं नित्यनैमित्तिकमात्रपरत्वे श्रौतस्मार्त्तभेदेनोपादानं व्यर्थं स्यात् तयोरविशेषादेव प्रतिनिधिलाभात्। अन्ततः उपक्रमात् परतः। 'काम्ये प्रतिनिधिर्नास्ति नित्यनैमित्तिके हि 'सः। काम्येष्‌पक्रमादूर्द्ध्वं केचिदिच्छन्ति सत्तमाः'। इत्येकवाक्यत्वात्। ततः स्मार्त्तं काम्यं प्रतिनिधिनाप्यारभ्यते न तु श्रौतमिति स्थितम्। एवञ्च वैदिकेतरमन्त्रपाठे शूद्रादेरप्यधिकारः। 'वेदमन्त्रवर्जं शूद्रस्य' इति छन्दोगाह्निकाचारचिन्तामणिधृतस्मृतौ वेदेतिविशेषणात् पञ्चयज्ञादौ तु 'नमस्कारेण मन्त्रेण पञ्चयज्ञान् हापयेत्'। इति आपस्तम्बादिविशेषविधिना नमस्कारमन्त्रविधानात्। तत्र वैदिकोऽपि निषिद्धः। कर्मादौ नवग्रहपूजामाह मत्स्यपुराणम्। 'नवग्रहमखं कृत्वा ततः कर्म समारभेत्। अन्यथा फलदं पुंसां न काम्यं जायते क्वचित्'। गोभिलपुत्रकृतगृह्यासंग्रहपरिशिष्टे। 'द्यूते च व्यवहारे च प्रवृत्ते यज्ञकर्मणि। यानि पश्यन्त्युदासीनाः कर्त्ता तानि न पश्यति। एकः कर्म नियुक्तश्च द्वितीय-

स्तम्भधारकः। तृतीयः प्रश्नं प्रब्रूयात्ततः कर्म समारभेत्’। प्रश्नते प्रक्रष्टब्रते। पूर्वोक्तहेतौ द्वितीयवचनात् कर्मनियुक्तो-होतैवाचार्य्यः स्वयं होतृपक्षे ब्रह्माचार्य्यः अन्यहोतृपक्षे सोऽप्य-धिक आचार्य्यः। तन्त्रधारकः पुस्तकवाचक आचार्य्यः प्रश्न-वक्ता सदस्यः। महाकपिलपञ्चरात्रं ‘जलाधारगृहार्थञ्च यजे-द्वास्तु विशेषतः। ब्रह्माद्यदितिपर्य्यन्ताः पञ्चाशत्त्रयसंयुताः। सर्वेषां किल वास्तूनां नायकाः परिकीर्त्तिताः। असंपूज्य हि तान् सर्वान् प्रासादादीन कारयेत्। अनिष्पत्तिर्विनाशः स्यादुभयोर्धर्मधर्मिणोः’। धर्मधर्मिणोस्तड़ागादितत्कर्त्रोः। वास्तुयागविधानन्तु वास्तुयागतत्त्वेऽनुसन्धेयम्। अशक्तौ गृहा-रम्भदिने अशक्तौ प्रवेशदिनेऽपि कर्त्तव्यतामाह मात्स्ये ‘प्रासाद भवनादीनां प्रारम्भपरिवर्त्तने। पुरवेश्म प्रवेशेषु सर्व-दोषापनुत्तये। इति वास्तुपशमनं कृत्वा सूत्रेण वेष्टयेत्। वास्तुपूजामकुर्वाणस्तवाहारो भविष्यति’। तव वास्तुनाम्नो राक्षसस्य। मत्स्यपुराणे ‘घण्टावितानकतोरणचित्रयुक्तं नित्यो-त्सवप्रमुदितेन जनेन सार्द्धम्। यः कारयेत् सुरगृहं विधि-वद्धजाढ्यम्। श्रीस्तं न मुञ्चति सदा दिवि पूज्यते च’। तोरणमाह देवीपुराणं ‘प्राच्यं द्वारं भवेत् पूर्वे याम्ये चौडुम्बरं भवेत्। पश्चादश्वत्थघटितं नैयग्रोधं तथोत्तरे। भूमौ हस्तं प्रमाणानि चतुर्हस्तानि चोच्छ्रये’ शारदायां ‘तिर्य्यक्फलक-मानं स्यात् स्तम्भानामूर्द्ध्वमानतः’। तिर्य्यक्फलकमुच्छ्रित-स्तम्भद्वयोपरि विस्तृतैककाष्ठं सिद्धान्तशेखरे। ‘एवमेषामलाभे स्यात् तदलाभे शमीद्रुमः’। ध्वजयष्ट्यादिमानमाह हयशीर्षे ‘ध्वजवंशः प्रकर्त्तव्यो निर्घुणः शोभनो दृढ़ः। तदूर्द्ध्वं ताम्रजं चक्रं सूक्ष्मं कुर्य्यात् द्विजोत्तमः। प्रासादस्य च विस्तारो मानं दण्डस्य कीर्त्तितम्। ध्वजयष्टिर्देवगृहे ऐशान्यां दिशि

देशिकैः। स्थापनीयोऽथ वायव्यां साम्प्रतं ध्वजमुच्यते। पट्टकार्पासक्षौमाद्यैर्ध्वजं कुर्य्यात् सुशोभनम्। एकवर्णं द्विवर्णं वा घण्टाचामरभूषितम्। किङ्किणीजालकोपेतं बर्हिपत्रविभूषितम्। दण्डाग्राहरणीं यावत् हस्तैकं विस्तरेण तु। महाध्वजस्तु विख्यातं सर्वकामप्रदं शुभम्। ध्वजेन रहितो यस्तु प्रासादश्च वृथा भवेत्। पूजाहोमादिकं सर्वं जपाद्यं यत् कृतं नरैः'। शिवसर्वस्वे देवेभ्यश्च ध्वजं दद्यात् वाहनैरुपशोभितम्। तुरङ्गेण सूर्य्यस्य हरस्य वृषचिह्नितम्। विष्णवे गरुडाङ्कन्तु दुर्गायै सिंहचिह्नितम्। कार्य्यं ध्वजं पताकाख्यम् अन्यथा न कथञ्चन'। नारदपञ्चरात्रे। 'उपेन्द्रस्याग्रतः पक्षी खगाधीशः कृताञ्जलिः। सव्यजानुगतो भूमौ मूर्द्धाधोमणिमण्डितम्। पक्षिजङ्घो नराङ्घ्रिश्च तुङ्गनासो म-ङ्कः। द्विबाहुः पक्षयुक्तश्च कर्त्तव्यो विनतायुतः'। विष्णुधर्मोत्तरे 'प्रतिपाद्य तथा भक्त्या ध्वजं त्रिदशवेश्मनि। निर्द्दहत्याशु पापानि महापातकजान्यपि'।

अथ तत्प्रतिष्ठाप्रमाणम्। हयशीर्षे श्रीभगवानुवाच। 'गोपथारामसेतूनां मठसंक्रमवेश्मनाम्। नियमव्रतकृच्छ्राणां प्रतिष्ठां शृणु सत्तम। ब्राह्मेण विधिना वह्निं समाधाय विचक्षणः। शिलां पूर्णघटं कांस्यं सम्भारं स्थापयेत्ततः। ब्राह्मणः सर्वमाहृत्य श्रपयेद् यवमयं चरुम्। क्षीरेण कपिलायास्तु तद्विष्णोरिति साधकः। प्रणवेनाभिघार्य्याथ दर्व्या संघट्टयेत्ततः। साधयित्वावतार्य्याथ तद्विष्णोरिति होमयेत्। व्याहृत्या चैव गायत्र्या तद्विप्रा सेति होमयेत्। विश्वतश्चक्षुरित्युक्त्वा वेदाद्यैर्होमयेत्तथा। सोमं राजानमिति च जुहुयात्तदनन्तरम्। दिक्पालेभ्यः स्वस्वमन्त्रैर्ग्रहेभ्यश्चैव होमयेत्'। ओम् अग्नये स्वाहा ओम् सूर्य्याय स्वाहा ओम् प्रजापतये स्वाहा

ओम् अन्तरीक्षाय स्वाहा ओम् द्यौ स्वाहा ओम् ब्रह्मणे स्वाहा ओम् पृथिव्यै स्वाहा ओम् महाराजाय स्वाहा 'एवं हुत्वा चरोर्भागान् दद्यात् दशदिशां बलिम्। ततः पलाशसमिधा हुनेदष्टोत्तरं शतम्। आज्येन जुहुयात् पश्चादेभिर्मन्त्रैर्द्विजोत्तमः'। ततः पुरुषसूक्तस्य मन्त्रैराद्यन्तु होमयेत्। इरावतीति जुहुयात्तिलान् घृतपरिप्लुतान्। हुत्वा तु ब्रह्मविष्णोश्च देवानामनुयायिनाम्। ग्रहाणामाहुतीर्हुत्वा लोकेशानामथो पुनः। पर्वतानां नदीनाञ्च समुद्राणान्तथैव च। हुत्वा व्याहृतिभिः कुर्य्यात् स्रुवा पूर्णाहुतित्रयम्। वौ षडन्तेन मन्त्रेण वैष्णवेन सुरोत्तमाः। पञ्चगव्यञ्च संप्राश्य दद्यादाचार्य्यदक्षिणाम्। तिलपात्रं हेमयुक्तं सवत्सां गामलङ्कृताम्। प्रीयतां भगवान् विष्णुरित्युत्सृज्य घृतव्रतः। आरामं कारयेद् यस्तु नन्दने स चिरं वसेत्। मठप्रदानात् स्वर्लोकमाप्नोति पुरुषः सदा। सेतुप्रदानादिन्द्रस्य लोकमाप्नोति मानवः। प्रपाप्रदानाद्वरुणलोकमाप्नोत्यसंशयम्। संक्रमाणान्तु यः कर्त्ता स स्वर्गं तरते नरः। स्वर्गलोके च निवसेदिष्टकासेतुकृत् सदा। गोपथस्य तथा कर्त्ता गोलोके निवसेच्चिरम्। नियमव्रतकृच्चापि विष्णुलोकं नरोत्तमम्। कृच्छ्रकृत् सर्वमाप्नोति सर्वपापविवर्जितः। अनेन विधिना मर्त्यः संपूर्णं फलमाप्नुयात्। इयं प्रतिष्ठा सामान्या सर्वसाधारणा। 'कर्त्तव्या देशिकेन्द्रैस्तु प्रतिष्ठात्रयविद्यते। इति संक्षेपतः प्रोक्तः समुदाय विधिस्तव। सर्वेषामेव वर्णानां सर्वकामफलप्रदः। सर्वसूक्तेषु कर्त्तव्या प्रतिष्ठा विधिना बुधैः। फलार्थिभिरप्रतिष्ठं यस्मान्निष्फलमुच्यते। इति वल्लालसेनदेवाहृतहिरण्यगर्भलिखितहयशीर्षपञ्चरात्रीयसङ्कर्षणकाण्डे समुदायप्रतिष्ठापटलः अस्यार्थः ब्राह्मेण वैदिकेन स्वगृह्योक्तेनेति यावत्।

शिलेति उदूखलोपलक्षणं तण्डुलार्थत्वात्। कांस्यम् अग्नि-प्रणयनार्थम्। तथाच गृह्यासंग्रहः। 'शुभं पात्रन्तु कांस्यं स्यात्तेनाग्निं प्रणयेद् बुधः। तस्याभावे शरावेण नवेनाभिमुखश्च तम्। सर्वतः पाणिपादान्तः सर्वतोऽक्षि शिरोमुखः। विश्वरूपो महानग्निः प्रणीतः सर्वकर्मसु'। एवञ्चाग्निप्रणयनानन्तरं सर्वत इत्यस्य पाठो युज्यते। प्रणीत इति मन्त्रलिङ्गात् अन्यथा स्थापनानन्तरमेतद्विधानं व्यर्थं स्यात्। गुणविष्णुनापि श्रुतिरित्युक्ता सर्वतः पाणिपादान्त इति लिखितम्। अत्र च पाकाङ्गयज्ञत्वात् साहसनामानमग्निमाह गृह्यासंग्रहः। 'प्रायश्चित्ते विधुश्चैव पाकयज्ञे तु साहसः। पूर्णाहुत्यां मृडो नाम शान्तिके वरदस्तथा। आहूय चैव होतव्यं यो यत्र विहितोऽनलः'। प्रायश्चित्ते वैगुण्यसमाधानार्थं प्रायश्चित्तात्मकमहाव्याहृतिहोमादौ। तथाच छन्दोगपरिशिष्टम्। 'यत्र व्याहृतिभिर्होमः प्रायश्चित्तात्मको भवेत्। चतस्रस्तत्र विज्ञेया स्त्रीपाणिग्रहणे तथा। अपि वा ज्ञातमित्येषा प्राजापत्यापि वा हुतिः। होतव्या त्रिविकल्पोऽयं प्रायश्चित्तविधिः स्मृतः'। अत्र त्रिविकल्प इत्यभिधानात्। सामगानां भवदेवभट्टोक्तशाट्यायनहोमोऽपि निष्प्रमाणकः। भट्टनारायणचरणा अप्येवम्। अत्र 'प्रत्येकं नियतं कालमात्मनो व्रतमादिशेत्। प्रायश्चित्तमुपासीनो वाग्यतस्त्रिसवनं स्पृशेत्'। इति शङ्खलिखितवचने प्रत्येकं नियतं कालमिति। तत्तद् व्रतकालसंख्यामात्मनो व्रतम् आत्मसम्बन्धित्वेन आत्मकर्तृत्वेनेति यावत्। तेनामुकपापक्षयकामोऽमुकव्रतमहं करिष्ये इति आदिशेत् उल्लेखं कुर्य्यादित्यनेन प्रायश्चित्तव्रते सङ्कल्पविधानात्। प्रायश्चित्तहोमेऽपि तथा अतएव भवदेवभट्टेनापि लिखितम्। तेन

सर्ववेदिभिः प्रायश्चित्तहोमे संकल्पः कार्य्यः पाद्ययामुत्र अग्ने इहागच्छ इत्युत्थार्थे। यवमयं चरुमित्यत्र। यवाभावे व्रीह्यादिभिरपि। न च वृषोत्सर्गे सतण्डुल्य व्रीहितण्डुला-नित्यनेन यवतण्डुलनिरासवत् अत्रापि यवेन व्रीहिनिरासो-ऽस्त्विति वाच्यम् अत्र गोभिलपरिभाषितत्वेन व्रीहियवयोः प्राप्तावपि तत्परिशिष्टे पुनर्व्रीह्यभिधानात् यवनिरासोऽस्तु सिद्धे सत्यारम्भो नियमाय इति न्यायात्। इह तु पञ्चरात्रे पूर्वं प्राप्त्यभावेन यवविधानं मुख्यार्थमेव। 'हविष्येषु यवा मुख्या-स्तदनु व्रीहयो मताः। माषकोद्रवगौरादीन् सर्वाभावेऽपि वर्जयेत्। यथोक्तवस्त्वसम्पत्तौ ग्राह्यं तदनुकारि यत्। यवानामिव गोधूमाव्रीहीणामिव शालयः'। इति छन्दोगपरि-शिष्टात् अतएव प्रतिष्ठाकाण्डकल्पतरावपि तत्तद्द्रव्यविशेष-मुक्त्वा तत्तदसत्त्वे भविष्यपुराणेन काम्येऽपि प्रतिनिधिरुक्तः। यथा 'काञ्चनं हरितालस्य सर्वाभावे विनिक्षिपेत्। दद्याद्दीजो-पधिस्थाने सहदेवां यवानपि'। सहदेवा मेदिन्युक्ता। यथा 'सहदेवा बला दण्डोत्पलयोः साविरोधणी'। चरुमित्यभिधा-नात्। हवनीयनिर्वापादिना चरुनिष्पत्तिः कर्त्तव्या तत्र गोभिलेन अथ हविर्निर्वपति व्रीहीन् यवान् वा चरुस्थाल्या वा अमुष्मै त्वाजुष्टं निर्वपामि इति देवतानामोद्देशं सकृद् यजुषा द्विस्तूष्णीमित्यनेन निर्वापमात्राभिधानात् सामगेन तन्मात्रं कर्त्तव्यम् अत्र च ओं विष्णवे त्वाजुष्टं निर्वपामीत्या-दिना यजुषा यजुः परिभाषामाह जैमिनिः 'शेषे यजुः शब्दः' इति ऋक्सामभिन्ने मन्त्रजाते ततश्च यन्मन्त्रजातं प्रश्लिष्य पठितं गानपादविच्छेदरहितं तद्यजुरिति। यजुर्वेदिना तु ग्रहण-निर्वापणप्रोक्षणानि कर्त्तव्यानि। तथाह सांख्यायनः 'स्थाली-पाकेषु च ग्रहणासादनप्रोक्षितानि मन्त्रदेवताभ्यः' इति।

ऋग्वेदिना तु निर्वापणप्रोक्षणे कर्त्तव्ये तथाश्वलायनः। 'तस्मै तस्मै देवतायै चतुरश्चतुरो मुष्टीन् निर्वपतीति' पवित्रेषान्तर्धायामुष्मै त्वाजुष्टं निर्वपामीत्यर्थेन प्रोक्षति अमुष्मै त्वाजुष्टं प्रोक्षामीति। तत्र छन्दोगपरिशिष्टं 'देवतासंख्यया ग्राह्या निर्वापांश्च पृथक् पृथक्। तूष्णीं द्विरवघ्नीयात् होमश्चापि पृथक् पृथक्'। अत्र देवतासंख्यया पृथक् पृथक् यवादिनिर्वापः अन्ननिर्वापः सर्वदेवनिर्वापान्ते सकृद्धोमश्च पृथक् पृथगिति। अत्र च आलस्यादिना पुरुषदोषे गृहीततण्डुलेष्वपि मन्त्रपूर्वेण निर्वापादिकं समाचरन्ति याज्ञिकाः। 'घाते न्यूने तथा छिन्ने मानाज्ये मान्त्रिके तथा। यज्ञे मन्त्राः प्रयोक्तव्या मन्त्रा यज्ञार्थसाधकाः'। इत्युक्तेः। मान्त्रिके मन्त्रसाध्ये घातादौ न्यूने तत्काले मन्त्रपाठाभावेऽपि यज्ञकाले मन्त्राः प्रयोक्तव्या इति कपिलाया अमत्त्वेऽन्यधेनोरपि प्रणवसहितेन अभिवार्य्य ओं तद्विष्णोरित्यनेन घृतेन सिक्ता दर्व्या दक्षिणावर्त्तेन संमिश्रयेत्। दर्वी च प्रादेशप्रमाणा द्व्यङ्गुलविस्ताराया 'इध्मजातीयमिध्मार्द्धप्रमाणं मेक्षणं भवेत्। वृत्तं चाङ्गुष्ठपृथ्वग्रमवदानक्रियाक्षमम्। एषैव दर्वी यस्तत्र विशेषस्तमहं ब्रुवे। दर्वी द्व्यङ्गुलपृथ्वग्रा तुरीयोनन्तु मेक्षणम्'। इति छन्दोगपरिशिष्टात्। अथेत्यनेन स्वगृह्योक्तविशेषकर्मसमापनानन्तरं प्रकृतहोमः। अत्र च बहुदैवत्यचरुहोमत्वात् उपघातहोमः चरौ तु बहुदैवत्यो होमस्तस्योपघातवदिति परिशिष्टप्रकाशधृतवचनात्। उपघातहोमलक्षणमाह गृह्यासंग्रहे 'पाणिना मेक्षणेनाथ स्रुवेणैव तु यद्धविः। हूयते चानुपस्तीर्य्य उपघातः स उच्यते। यद्युपघातं जुहुयात् चरावाज्यं समावपेत्। मेक्षणेन तु होतव्यं नाज्यभागौ न स्विष्टकृत्'। अनुपस्तीर्य्येत्यनेन स्रुचि यच्चतुरावत्तं पञ्चावत्तार्थं घृतेनोपस्तर-

श्वादिकं तदत्र नास्ति तेन केवल मेचणादिना सकृत् गृहीत्वा होतव्यं प्रकृतहोमात् पूर्वं वह्निपूजनमाह मार्कण्डेयपुराणं 'पूजयेच्च ततो वह्निं दद्याच्चाप्याहुतीः क्रमात्'। तत इति वह्नेर्विशेषनामकरणध्यानानन्तरम्। होमानुष्ठाने स्मृतिः 'मन्त्रेणोङ्कारपूतेन स्वाहान्तेन विचक्षणः। स्वाहावसाने जुहुयात् ध्यायन् वै मन्त्रदेवताम्। ततस्तद्विष्णोः परमं पद-मित्यनेन चरुणा होमयेत्। एवं व्याहृत्या प्रत्येकम् ओँ भूरा-दिना गायत्र्या सावित्र्या। ओँ तद्विप्रासो विपण्यवो जागृ-वांस इत्यादिना ओँ विश्वतश्चक्षुरुतविश्वतोमुख इत्यादिना वेदाद्यैः अग्निमीले पुरोहितमित्यादिना इषेत्वोर्जेत्वा इत्या-दिना अग्न आयाहि वीतये इत्यादिना शन्नो देवीरित्यादिना चतुर्भिर्मन्त्रैर्लोकपालेभ्यः स्वस्वमन्त्रै स्तत्तत्वेदोक्तदशदिक्पाल-मन्त्रैस्तत्र सामगानाम् इन्द्रस्य त्रातारमिन्द्रमित्यादिना अग्ने-रग्निं दूतं वृणीमह इत्यादिना यमस्य नाके सुवर्णमित्यादिना निरृतेश्च वेत्थाहि निरृतीनामित्यादिना वरुणस्य घृतवती भुवनानामित्यादिना वायोः वात आवातु भेषजमित्यादिना सोमस्य ओँ सोमं राजानमित्यादिना ईशानस्य अभित्वाशूरणो नुम इत्यादिना ब्रह्मणो ब्रह्मयज्ञानामित्यादिना अनन्तस्य चर्षणीधृतमित्यादिना। तथा च गोभिलीयकर्मप्रदीपे 'त्रातारमिन्द्रमवितारमिन्द्रस्य परिकीर्त्तितः। अग्निं दूतं वृणीमहे वह्नेर्मन्त्रं यमस्य वै। नाके सुपर्णमुपयत् वेत्थाहि निरृतेस्तथा। घृतवती वरुणस्य वात आवातु भेषजम्। वायोर्मन्त्रं समुदितं सोमं राजानमित्यृचा। सोमस्य मन्त्रः कथितः अभित्वेतीश उच्यते'। ईश ईशानस्य इट् इति इट् तस्य। 'ब्रह्मयज्ञानां प्रथमं ब्रह्मणः परिकीर्त्तितम्। चर्षणी-धृतमित्येवं सर्पस्य समुदाहृतम्'। इति। सूर्यादिभ्यः

सूक्तमन्त्रैः सर्ववेदसाधारणा कृष्णेनेत्यादिमत्स्यपुराणोक्त-मन्त्रैः यत्र सूर्य्यस्य आकृष्णेनेत्यादिना। सोमस्य आप्याय-स्व समे तु ते इत्यादिना मङ्गलस्य अग्निर्मूर्द्धा इत्यादिना। बुधस्य अग्ने विवस्व इत्यादिना। बृहस्पते परिदीया रथेन इत्यादिना। शुक्रस्य शुक्रन्त इत्यादिना। शनेः शन्नो-देवीरित्यादिना राहोः कयानश्चित्र इत्यादिना केतूनां केतुं कृण्वन्नेत्यादिना। तथाच मत्स्यपुराणम् 'आकृष्णेनेति सूर्य्याय होमः कार्य्यो द्विजन्मना। आप्यायस्वेति मन्त्रेण सोमाय जुहुयात् पुनः। अग्निर्मूर्द्धादिवो मन्त्रमिति भौमाय कीर्त्तयेत्। अग्ने विवस्वदुषस इति सोमसुताय च। बृहस्पते परीदीयारथेनेति गुरोर्मतः। शुक्रन्तेऽन्यदिति च शुक्रस्यापि निगद्यते। शन्नो देवीरिति पुनः शनैश्चराय होमयेत्। कयानश्चित्र आभुवदूतीराहोरुदाहृतम्। केतुं कृण्वन्नेति कुर्य्यात् केतूनामुपशान्तये' एवं चरुहोमं समाप्य चरुशेषेण प्राच्यादिदिग्भ्यः पायसबलिं दद्यात्। तद् यथा एष पायस-बलिः ओम् प्राच्ये दिशे नमः इत्यादि मन्त्रेण ओम् दक्षिणायै दिशे स्वाहा इति स्मृतिदर्शनात् इति हरिहरकृत्यप्रदीपाभ्यां दशदिग्भ्यो बलिं दद्यात् वस्तुतस्तु बलिप्रकरण एव प्राच्यूर्द्धा-न्ताचीभ्यो अहरहर्नित्यप्रयोगे नमः इति गोभिलसूत्रे कौलिक-दर्शनात् दिशां देवतात्वं बलौ प्रतीयते। अतावाचीपाठात् स्मृत्युक्तहोमीयदक्षिणायै इत्यनादृत्य ओम् अवाच्यै दिशे नमः इति बलौ प्रयुज्यते एभिर्मन्त्रैः प्रागुक्त तद्विष्णोरित्यादि मन्त्रैः। आज्याहुतिमिति तु शब्देन समिद्धोमे तेषां व्यावर्त्तनात् मन्त्रा-काङ्क्षायां प्राथमिकत्वेन तद्विष्णोरित्यस्य परिग्रहः। तत-स्तद्विष्णोरिति मन्त्रेण स्वाहान्तेन घृताक्तपलाशसमिधमष्टो-त्तरशतं जुहुयात्। पूर्वोक्तमन्त्रैः पूर्वोक्तदेवताभ्यः स्रुवेणा-

ष्टाहुतीर्जुहुयात्। पुरुषसूक्तञ्च तत्तद्वेदोक्तञ्च तत्र सामगानाम् ओम् इदं विष्णुरिति प्रथमस्य ब्रुणालप्रकाश्यमुपस्थेव ब्रुवाणेति सहस्रशीर्षेति त्रिपादूर्द्ध इति पुरुष एवेदम् इति एतावानस्येति। प्रकाश्यमुपस्थेव ब्रुवाण इति वाराहयमस्यमित्यनेनैको मन्त्रः पुरुष इत्यनेन इति पुरुषपदयुक्ताः पञ्चमन्त्राः ब्रूत इत्यनेन कयानश्चित्र इत्येकः। एतैः सामगो जुहुयात्। यजुर्वेदी तु तत्प्रसिद्धाभिः ओम् सहस्रशीर्षेत्यादिषोड़शभी ऋग्भिः षोड़शाहुतीर्जुहुयात्। इरावती धेनुमतीत्यादिमन्त्रेण घृताक्तांस्तिलान् सकृत् जुहुयात्। एवं ब्रह्मानुयायिभ्यः स्वाहा विष्णुनुयायिभ्यः स्वाहा ईशानानुयायिभ्यः स्वाहा देवानुयायिभ्यः स्वाहा ग्रहाणां प्रत्येकेन लोकपालानाञ्च प्रत्येकेन जुहुयात् पुनरिति श्रवणात् ओं पर्वतेभ्यः स्वाहा ओं नदीभ्यः स्वाहाः ओं समुद्रेभ्यः स्वाहा ओं भूः स्वाहा ओं भुवः स्वाहा ओं स्वः स्वाहा इति जुहुयात्। ततः परिभाषासिद्धं स्वशाखोक्तं महाव्याहृतिहोमं प्रायश्चित्तहोमादिकञ्च कृत्वा स्रुचा ओं तद्विष्णोरिति मन्त्रेण वौषड़न्तेन पूर्णाहुतित्रयम् उत्थाय जुहुयात्। इति विशेषोपादानात् नात्र स्वशाखोक्तपूर्णहोमः॰ ततश्च पञ्चगव्य चरुशेषं प्राश्य प्राश्य वा हेमयुक्तं सवस्त्रं तिलपात्रम् अलङ्कृतां गाञ्च दक्षिणामाचार्य्याय दद्यात्। तत्र 'उदाहरति वेदार्थान् यज्ञविद्याः स्मृतीरपि। श्रुतिस्मृतिसमापन्नमाचार्य्यन्तं विदुर्बुधाः'। इति छन्दोगपरिशिष्टे कर्मोपदेष्टृहोतुराचार्य्यपदेनाभिधानं स्वयं होतृपक्षे ब्रह्मपरम् अन्यहोतृपक्षे ब्रह्महोतृहितयपरं स्वयं ब्रह्मकर्महोतृकर्मकारणपक्षे पुस्तकधारकपरम्। 'ब्रह्मणे दक्षिणा देया यत्र या परिकीर्त्तिता। कर्मान्तेऽनुच्यमानायां पूर्णपात्रादिका भवेत्। विदध्याद्धौत्रमन्यश्चेत् दक्षिणार्द्धहरो भवेत्। स्वयं

चेदुभयं कुर्य्यादन्यस्मै प्रतिपादयेत्' । इति छन्दोगपरिशिष्टैक-वाक्यत्वात् । एवञ्च शास्त्रविधानाभिख्यापनादि प्रीयतां भगवान् विष्णुरित्यन्तं कर्म समाप्य संस्कृतगोपथादिदाननि-यम-व्रत-कच्छादि-करणान्यतमरूपा-समुदाय-प्रतिष्ठावगन्तव्या समुदायस्य संस्कृतगोपथादेः प्रतिष्ठा समुदायप्रतिष्ठा । तथाच कपिलपञ्चरात्रं 'प्रतिष्ठाशब्दसंसिद्धिः प्रतिपूर्वाच्च तिष्ठतेः । बह्वर्थत्वान्निपातनानां संस्कारादौ प्रतेः स्थितिः' । ततश्च गोपथादेवर्त्तकर्मसंस्कृतस्य तस्य फलजनकत्वम् । अप्रतिष्ठन्तु निष्फलमित्युक्तेः । एतत् कृतकर्मणा प्रीयतां भगवान् विष्णु-रिति समर्पयेत् । मठप्रदानात् स्वर्लोकमित्यत्र मठपदं देव-वेश्मपरम् । उपक्रमोक्तेऽपि तस्मिन् फलान्तरानुपदेशात् । यत्र इष्टकाष्ठादिभेदेन स्वर्गतारतम्यं रक्ष्यमाणविष्णुधर्मो-त्तरवचनादवगन्तव्यमिति । ततः प्रासादसमीपे ओम् उत्तिष्ठ ब्रह्मणस्पते इति मन्त्रेण देवतामानीय पूजयित्वा प्रासादं गत्वा दानानि च दत्त्वा देवतामादाय तां प्रदक्षिणं कारयित्वा ओं भद्रं कर्णेभिरिति मन्त्रेण प्रवेशयेत् । ओं देवस्यत्वेति मन्त्रेण पिण्डिकोपरि न्यसेत् । ओं स्थिरोभवेति मन्त्रेण स्थिरीकरणम् । ततो गन्धपुष्पाभ्यां पूजयित्वा यावच्चरेति मन्त्रेण देवतासन्निधिं कुर्य्यात् । तथाच कपिलपञ्चरात्रम् 'एवं कृत्वा विधानन्तु प्रासादे देवमानयेत् । उत्तिष्ठेति यथायोगं पठेत् सुसमाहितः । प्रासादस्य ततो दत्त्वा कारयेत्तं प्रदक्षिणम् । ततः संवेशयेद्देवं भद्रं कर्णेभि-रन्वितम् । देवस्यत्वेति मन्त्रेण पिण्डिकोपरि विन्यसेत् । स्थिरोभवेति मन्त्रेण स्थिरं कुर्य्यात्प्रणादनम् । पूजयित्वा ततो-देवमिमं मन्त्रमुदीरयेत् । यावच्चक्रधरो देवो यावत्तिष्ठति मेदिनी । तावदत्र जगन्नाथ सन्निधीभव केशव' । अत च

वास्तुयागं कृत्वा मठादौ कृते तत् प्रतिष्ठां कृत्वा। मठादि-दातरि मृते तद्धनस्वामिना प्रतिष्ठा कर्त्तव्या। 'सुखेनार्त्तेन वा दत्त' आदितं धर्मकारणात्। अदत्ता तु मृते दाप्यस्तत् पुत्रो नात्र संशयः'। इति विवादरत्नाकरधृतकात्यायन-वचनात्। 'चतुःषष्टिपदं कृत्वा वास्तु सर्वगृहं प्रति'। इति लिङ्गपुराणवचनेन 'वास्तूपशमनं कुर्य्यात् पूर्वमेव विचक्षणः'। इति मत्स्यपुराणवचनेन न चैतदमुकदेवगृहवास्तुसर्वदोष-प्रशमनार्थत्वेन प्राप्तस्य वास्तुयागस्य प्रतिष्ठाकर्त्ता सहैककर्तृत्व-विधानाभावाच्च।

अथ देवसंप्रदानकदानानि। पूजारत्नाकरेऽग्निपुराणम् 'सुवर्णमणिमुक्तादि यदन्यदपि दुर्लभम्। तत्तु देवादिदेवाय केशवाय निवेदयेत्'। यदन्यदपि दुर्लभमित्यनेन गृहादि-कमपि बोध्यम्। तथाच विष्णुधर्मोत्तरे 'सुरवेश्म नरो दद्यात् यथाशक्ति विधानतः। पुण्यदेशेषु भूमौ वा शोधयित्वा वसु-न्धराम्। सुरवेश्मनि यावन्तो द्विजेन्द्राः परमाणवः। ताव-द्वर्षसहस्राणि स्वर्गलोके महीयते। तृणकाष्ठमये पुण्यं यदे-तत् कथितं द्विजाः। तस्माद्दशगुणं पुण्यं कृतेष्टकमये भवेत्। तस्माद्दशगुणञ्चापि शैलनिर्मितमन्दिरे'। तथा 'अकामः सात्त्विको लोके यत्किञ्चिद्विनिवेदयेत्। तेनैव स्थानमाप्नोति यत्र गत्वा न शोचति। धर्मवाणिजिका मूढ़ाः फलकामा नराधमाः। अर्च्चयन्ति जगन्नाथं ते कामानाप्नुवन्त्यथ। अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम्'। तथा 'पद्भ्यां प्रतीच्छते देवः अकामेन निवेदितम्। मूर्द्ध्ना प्रतीच्छते द्रव्यमकामेन द्विजो-त्तमाः'। वामनपुराणम्। 'यद् यदिष्टतमं लोके यच्चाप्यस्ति गृहे शुचि। तत्तद्धि देयं तुष्ट्यर्थं देवदेवस्य चक्रिणः'। एतस्य ब्राह्मण-प्रदानकविषयेऽपि सुतरां विष्णुसंप्रदानेऽपि विष्णुप्रीतिः

फलम्। नरसिंहपुराणे 'त्रिवृत् शक्लच पीतच पट्टसूत्रादिनिर्मितम्। यज्ञोपवीतं गोविन्दे दत्त्वा वेदान्तगो भवेत्'। त्रिवृत् नवगुणं नव वै त्रिवृत् इति श्रुतेः। नन्दिपुराणम्। 'अलङ्कारञ्च यो दद्यात् विप्रायाथ सुराय वा। स गच्छेद्वारुणं लोकं नानाभरणभूषितः। जातः पृथिव्यां कालेन ततो द्वीपपतिर्नरः'। सुरायेति पुंस्त्वमविवक्षितम्। अलङ्कारदानेन नानाभरणभूषितत्वपूर्वकवरुणलोकगन्तृत्वानन्तरद्वीपपतित्वं फलम्। विष्णुधर्मोत्तरे 'यानं शय्यासनं छत्रं पादुके चाप्युपानहौ। वाहनं गाञ्च धर्मञ्च त्रिदशेभ्यो ददाति यः। एकैकस्मादवाप्नोति वह्निष्टोमफलं नरः'। यानादिप्रत्येकदानेनाग्निष्टोमयज्ञजन्यफलसमफलप्राप्तिः फलम्।

अथ विष्णुसंप्रदानकदानानि। विष्णुधर्मोत्तरे तृतीयकाण्डे 'विष्णोरायतने दत्त्वा तत्कथा पुस्तकं नरः। ब्रह्मलोकमवाप्नोति बहून् संवत्सरानपि'। विष्णुकथापुस्तकदानेन बहुसंवत्सरब्रह्मलोकप्राप्तिः फलम्। 'विष्णोः शङ्खप्रदानेन वारुणं लोकमाप्नुयात्'। शङ्खस्य वारुणलोकप्राप्त्यनन्तरमनुष्यलोकख्यातशब्दत्वं फलम्। 'घण्टाप्रदानेन तथा सहस्रशतमाप्नुयात्' घण्टायाः सहस्रशतसंख्यकघण्टाप्राप्तिः फलम्। 'सौभाग्यं महदाप्नोति किङ्किणीं प्रददद्धरेः'। सौभाग्यं पुष्टिः किङ्किणी क्षुद्रघण्टिका। तस्य महासौभाग्य प्राप्तिः फलम्। वितानकप्रदानेन सर्वपापैः प्रमुच्यते। पर निर्वृतिमाप्नोति यत्र यत्राभिजायते'। वितानकस्य सर्व पापविमुक्तिपूर्वकपरमनिर्वृतिप्राप्तिः फलम्। 'दत्त्वा तु देव कर्मार्थं नरो वेदीं दृढ़ां शुभाम्। पार्थिवत्वमवाप्नोति वेदि हि पृथिवी यतः'। वेदीदोलपिण्डिका। वेद्याः पार्थिवत्व प्राप्तिः फलम्। 'यः कुम्भं देवकार्यार्थं नरो दद्यात्रवं शुभम्

वारुणं लोकमाप्नोति सर्वपापैः प्रमुच्यते'। कुम्भस्य सर्वपापविमुक्तिपूर्वकवारुणलोकप्राप्तिः फलम्। 'कमण्डलुप्रदानेन गोदानफलमाप्नुयात्' कमण्डलोर्गोदानजन्यसमफलप्राप्तिः फलम्। 'पतद्ग्रहप्रदानेन सर्वपापमपोहति'। पतद्ग्रहस्य विततामूलादिद्रव्यप्रक्षेपविशेषः। पतद्ग्रहस्य सर्वपापहननं फलम्। 'पादुकानां प्रदानेन गतिमाप्नोत्यनुत्तमाम्'। पादुकाया अनुत्तमगति प्राप्तिः फलम्। 'दर्पणस्य प्रदानेन रूपवान् दर्पवान् भवेत्'। दर्पणस्य रूपवद्दर्पवद्भवनम्। 'दर्शयित्वा तथा तस्य सुभगस्त्वभिजायते' सुभगत्वकामो विष्णवे दर्पणमहं दर्शयिष्ये 'कुप्यदो रूपमाप्नोति विशेषाद् भुवि दुर्लभम्। कुप्यस्य दुर्लभविशेषरूपप्राप्तिः फलम्। 'नरः सुवर्णदानेन सर्वकामानुपाश्नुते'। सुवर्णस्य सर्वकामाशनं फलम्। 'नरदानेन लोकेऽस्मिन् प्रामाण्यमुपगच्छति'। नरस्य प्रामाण्योपगमनं फलम्। 'परलोकमवाप्नोति धेनुं दत्त्वा पयस्विनीम्'। धेनोः परलोकप्राप्तिः फलम्। 'अनुडुहः प्रदानेन दशधेनुफलं लभेत्'। अनडुद्दानस्य धेनुदशकदानजन्यसमफलप्राप्तिः फलम्। 'शय्यासनप्रदानेन स्थितिं विन्दति शाश्वतीम्'। शयनस्य शाश्वतस्थितिलाभः फलम्। एवमासनस्य। 'उत्तरच्छददानेन सर्वान् कामानवाप्नुयात्'। उत्तरच्छदं प्रावरणवस्त्रम्। उत्तरच्छदनस्य सर्वकामप्राप्तिः फलम्। 'देववेश्मोपयोग्यानि शिल्पभाण्डानि यो नरः। दद्याद्वा वाद्यभाण्डानि गणेशत्वमवाप्नुयात्'। चित्राद्युपयुक्तशिल्पभाण्डस्य गणेशत्वप्राप्तिः फलम्। एवं वीणादिवाद्यभाण्डस्य। 'प्रेक्षणीयप्रदानेन शक्रलोकमवाप्नुयात्'। प्रेक्षणीयं नृत्यं तत्प्रदानञ्च देवसम्मुखे श्रीरामसीताद्यभिनयोत्पादनं तेन शक्रलोकप्राप्तिकामो विष्णवे प्रेक्षणीयं प्रेक्षयिष्ये।

'यानवाहनदानेन सर्वकालं सुखं लभेत्'। यानस्य चतुर्दोलादेः सर्वकालसुखित्वभवनं फलं वाहनस्य उष्ट्रादेस्तथा। 'शिविकां ये प्रयच्छन्ति तेऽपि यान्त्यमरावतीम्'। शिविकाया दोलाया अमरावतीगमनं फलम्। 'राजा भवति लोकेऽस्मिन् छत्रं दत्त्वा द्विजोत्तमे। नाप्नोति रिपुजं दुःखं संग्रामे रिपुजिद्भवेत्'। छत्रस्य एतल्लोकराजत्वरिपुजदुःखाप्राप्तिसंग्रामरिपुजित्त्वं फलम्। 'तालवृन्तप्रदानेन निर्वृतिं प्राप्नुयात् पराम्'। तालवृन्तस्य परमनिर्वृतिप्राप्तिः फलम्। 'तथाचामरदानेन विमानमधिरोहति। यथेष्टं तेन लोकेऽस्मिन् विचरत्यमरप्रभुः'। चामरस्य विमानकरणकयथेष्टलोकविचरणामरप्रभुत्वम्। 'माल्याधारं तथा दत्त्वा धूपाधारं तथैव च। गन्धाधारं तथा दत्त्वा कामनां पात्रतां व्रजेत्'। माल्याधारस्य कामपात्रत्वम्। एवं धूपगन्धाधारयोश्च। 'समुद्रजातपात्राणि दत्त्वा वै तैजसानि च। पात्रीभवति कामानां विद्यानाञ्च धनस्य च'। समुद्रजातपात्रस्य कामविद्याधनपात्रत्वम्। एवं तैजसस्य च। 'गन्धतैलादिद्रव्याणि सुगन्धीनि शुचीनि च। केशवाय नरो दत्त्वा गन्धर्वैः सह मोदते'। गन्धतैलस्य गन्धर्वसहितमोदमानत्वं तत्प्रतिपत्तिमाह दानरत्नाकरे स्कन्दपुराणं 'यत्किञ्चिद्देयमीशानमुद्दिश्य ब्राह्मणे शुचौ। दीयते विष्णवे वाथ तदनन्तफलं स्मृतम्'। यत्किञ्चिद्देयं दानार्हं वस्तु ईशानमुद्दिश्य त्यक्तं विष्णवे वा त्यक्तं पश्चाद् ब्राह्मणाय प्रदीयते। प्रतिपाद्यते तदनन्तफलं तथाच मत्स्यसूक्तम्। 'देवे दत्त्वा तु दानानि देवे दद्याच्च दक्षिणाम्। तत्सर्वं ब्राह्मणे दद्यादन्यथा निष्फलं भवेत्'। दत्त्वेत्यत्र देयानीति वाराहीतन्त्रे पाठः एवञ्च प्रतिपत्तिश्रवणात्तदभाव एव शुभमूलं प्रायश्चित्तम्। तद् यथा देवद्विजद्रव्यापहर्त्ताऽग्ने

निमन्त्रोऽप्यामर्षणमावर्त्तयेत्। अवमर्षणमावर्त्तनञ्च द्रव्य-तारतम्यात् कल्प्यं योगिनीतन्त्रम्। 'देवोपभुज्यमाने तु मणिमुक्ता सुवर्णानां देवे दत्तानि यानि च। न निर्माल्यं द्वादशाब्दं ताम्रपात्रं तथैव च। पटी शाटी च षण्मासैर्नैवेद्यैर्दत्तमात्रतः। मोदकं कृशरञ्चैव मासार्द्धेन महेश्वरि। पट्टवस्त्रं त्रिमासञ्च यज्ञसूत्रं त्र्यहः स्मृतम्'। त्रिमासमित्यत्र त्रियाममिति पाठान्तरं 'यावदुष्णं भवेदन्नं परमान्नं तथैव च। विसर्जनीयं देवे तु विसर्जनमनन्तरं' विसर्जनं तदीय-द्रव्यप्रतिपत्तिव्यवहारः अत्र नीराजनविधिमाह पूजारत्ना-करे देवीपुराणम्। 'भक्त्या पिष्टप्रदीपाद्यैर्युताश्वत्थादिपल्लवैः। ओषधीभिश्च मेध्याभिः सर्व्ववीजैर्यवादिभिः। नवम्यां पूर्व-कालेषु यात्राकाले विशेषतः। यः कुर्य्यात् श्रद्धया वीर देव्या नीराजनं नरः। शङ्खभेर्य्यादिनिनदैर्जयशब्दैश्च पुष्कलैः। यावतो दिवसान् वीर देव्यै नीराजनं कृतम्। तावत्कल्पसहस्राणि स्वर्गलोके महीयते। यस्तु कुर्य्यात् प्रदीपेन सूर्य्यलोकं स गच्छति'। पर्व्वकाले उत्सवकाले देव्यास्तोत्समविवक्षितम्। तथाचारात् प्रतिष्ठायामाभ्युदयिकमाह राजमार्त्तण्डः। 'पुत्रोत्पत्तौ सुदा आश्रमत्रप्राशनिके तथा। चूड़ाकार्य्ये व्रते चैव नाम्नि पुंसवने तथा। पाणिग्रहे प्रतिष्ठायां प्रवेशे नव-वेश्मनः। एतत् वृद्धिकरं नाम गृहस्थस्य विधीयते'। वृद्धि-करं श्राद्धमित्यर्थः। गोभिलः 'वृद्धिपूर्त्तेषु युग्मानाशयेत्। प्रदक्षिणमुपचारः यवैस्तिलार्थं इति वृद्धिरास्यमानार्थलाभः पुरुषसंस्कारादिश्च। पूर्त्तमाह रत्नाकरे जातूकर्णः। 'वापी-कूपतड़ागादिदेवतायतनानि च। अन्नप्रदानमारामाः पूर्त्त-मित्यभिधीयते। अग्निहोत्रं तपः सत्यं वेदानाञ्चानुपालनम्। आतिथ्यं वैश्वदेवञ्च इष्टमित्यभिधीयते। ग्रहोपरागे यद्दानं

पूर्त्तमित्यभिधीयते। इष्टापूर्त्ते द्विजातीनां धर्मः सामान्य-मुच्यते। अधिकारी भवेच्छूद्रः पूर्त्तधर्मे न वैदिके'। वैदिके वेदाध्ययनसाध्येऽग्निहोत्रादाविति रत्नाकरः। यथा नारी-त्वनुवृत्तौ वृहस्पतिः 'पितृव्यगुरुदौहित्रान् भर्त्तुः स्वस्रीयमातु-लान्। पूजयेत् कव्यपूर्त्ताभ्यां वृद्धानाथातिथीन् स्त्रियः'। एकदिने प्रतिमामठप्रतिष्ठावास्तुयागानां करणे सकृदेव मातृ-पूजादिकं विधेयम्। न च 'एकस्मिन् कर्म्मणि तते कर्मान्य-त्तायते ततः'। इति छन्दोगपरिशिष्टेन एकस्मिन् कर्मणि आरब्धेऽन्यकर्मकरणनिषेधे इति वाच्यं तस्य प्रयोगविषयत्वात् अन्यथा 'गणशः क्रियमाणे तु मातृभ्यः पूजनं सकृत्। सकृदेव भवेच्छ्राद्धमादौ न पृथगादिषु' इति छन्दोगपरिशिष्टीयस्य निर्विषयतापत्तिः। अनेकाह साध्यकर्मण्यारब्धे तन्मध्ये कर्मान्तरानुष्ठानापत्तिः मातृपूजावृद्धिश्राद्धयोः सकृत्त्वादेत-दन्तरालपठितवसोर्धाराभिपातायुष्यमन्त्रजपयोरपि सकृत्त्व-मिति। आयुष्यमन्त्राज्ञाने तु गायत्रीजपः। 'जपहोमादि यत्किञ्चित् क्रच्छ्रोक्तं सम्भवेन्न चेत्। सर्वव्याहृतिभिः कुर्य्यात् गायत्र्या प्रणवेन च' इति मिताक्षराधृतषट्त्रिंशन्मतदर्शनात्। प्रतिमाप्रतिष्ठाविधानञ्च देवप्रतिष्ठातत्त्वेऽनुसन्धेयम्। योगि-याज्ञवल्क्यः 'ध्यायेन्नारायणं नित्यं स्नानादिषु च कर्मसु। तद्विष्णोरिति मन्त्रेण स्नायादप्सु पुनः पुनः। गायत्री वैष्णवी ह्येषा विष्णोः संस्मरणाय वै'। ध्यायेत् स्मरेदित्यर्थः स च मन्त्रः ओम् 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः। दिवीव चक्षुराततम्'। वामनपुराणे 'सर्वमङ्गलमङ्गल्यं वरेण्यं वरदं शुभम्। नारायणं नमस्कृत्य सर्वकर्माणि कारयेत्' इति। यमः 'पुण्याहवाचनं दैवे ब्राह्मणस्य विधीयते'। यमः 'संपूज्य गन्धपुष्पाद्यैर्ब्राह्मणान् स्वस्ति वाचयेत्। धर्म्ये

कर्मणि मात्स्ये संग्रामादद्भुतदर्शने'। धर्म्ये कर्मणीति सप्तमी-निर्देशान्निमित्तत्वे तत्तत्कर्माङ्गत्वः प्रतिष्ठानन्तरं मात्स्ये 'ततः सहस्रं विप्राणामथवाष्टोत्तरं शतम्। भोजयेच्च यथा शक्त्या पञ्चाशद्वाथ विंशतिम्'।

इति महामहोपाध्याय श्रीहरिहरभट्टाचार्य्यात्मज
श्रीरघुनन्दनभट्टाचार्य्यविरचिते स्मृतितत्त्वे
मठप्रतिष्ठादितत्त्वं समाप्तम्।

---

# शूद्रकृत्यविचारणतत्त्वम्।

प्रणम्य सच्चिदानन्दं शूद्राणां न्यायवर्त्तिनाम्।
श्राद्धाह्निकृत्ययोस्तत्त्वं वक्ति श्रीरघुनन्दनः॥

तत्र मत्स्यपुराणम् 'एवं शूद्रोऽपि सामान्यं वृद्धिश्राद्धन्तु सर्वदा। नमस्कारेण मन्त्रेण कुर्य्यादामान्नवद् बुधः। दानप्रधानः शूद्रः स्यादित्याह भगवान् प्रभुः। दानेन सर्वकामाप्तिरस्य संजायते यतः'। ततो दानमेवापेक्षितं न तु भोजनमपि। सामान्यं सर्वजनकर्त्तव्यत्वेन प्रतिमासकृष्णपक्षादिविहितश्राद्धम् आभ्युदयिकश्राद्धञ्च एवं द्विजातिवत् शूद्रोऽपि कुर्य्यादित्यन्वयः नमस्कारेण मन्त्रेण न तु स्वयं पठितमन्त्रेण आमान्नवदित्यनेन जलसेकसिद्धान्नव्यावृत्तिः 'छिन्नमकृतसुदाहृतम्' इति वशिष्ठेन छिन्नस्यैवामत्वाभिधानात् कन्दुपक्वस्य भ्रष्टत्वं न तु छिन्नत्वं हारीतेन स्वेदनभर्जनयोः पृथक्त्वमुक्तं यथा 'आदीपनतापनस्वेदनभर्जनपचनादिभिः पञ्चमीति' पञ्चार्थः आदीपनं काष्ठानां तापनं तोयादेः स्वेदनं धान्यादेः भर्जनं यवादेः पचनं तण्डुलादेः इति पञ्चमी सूना इति कल्पतरुः

अतएव स्निग्धान्येन व्यवह्रियते । 'कन्दुपक्वानि तैलेन पायसं दधिसक्तवः । द्विजैरेतानि भोज्यानि शूद्रगेहकृतान्यपि' । इति कूर्मपुराणवचने शूद्रकर्त्तृककन्दुपक्वादेर्ब्राह्मणभक्ष्यत्वेन श्राद्धे देयत्वं युक्तम् । कन्दुपक्वं जलोपसेकं विना केवलपात्रेण यद्वह्निना पक्वम् । पायसं पाकेन काठिन्यविकारापन्नं दुग्धं परमान्नपरत्वे पुंलिङ्गनिर्देशापत्तेः । तथा चामरः 'परमान्नन्तु पायसः' इति 'दिनक्षयोदये प्राप्ते पाकेन भोजयेद्द्विजान् । अयं विधिः प्रयोक्तव्यः शूद्राणां मन्त्रवर्जितः' । इति श्राद्धचिन्तामणिधृतवराहपुराणवचनमपि कन्दुपक्वपरम् एवन्तु एतद्वचनं सच्छूद्रपरं मैथिलोक्तं ज्ञेयम् । एवम् आममांसस्यापि श्राद्धे देयत्वं सामगश्राद्धतत्त्वेऽनुसन्धेयं तत्र द्रव्यदेवता प्रकाशार्थं ब्राह्मणेन मन्त्राः पाठ्याः 'अयमेव विधिः प्रोक्तः शूद्राणां मन्त्रवर्जितः । अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्यते' । इति वराहपुराणात् अयं श्राद्धेतिकर्त्तव्यताको विधिः शूद्रकर्त्तृक मन्त्रपाठरहितः शूद्रस्य मन्त्रपाठानधिकारसिद्धौ यदमन्त्रस्येति पुनर्वचनं तत् क्रियाग्रहणार्थं परिभाषार्थञ्च ततश्च तत् कर्मसम्बन्धिमन्त्रेण विप्रस्तदीयकर्मकारयिताब्राह्मणो गृह्यते तेन ब्राह्मणेन तत्र मन्त्रः पठनीय इति तात्पर्य्यं तत्र यजुर्वेदिको मन्त्रः तथा च स्मृतिः 'पार्वणक्रमेण सर्वत्र शूद्रा वाजसनेयिनः । अस्माच्छूद्रः स्वयं कर्म यजुर्वेदीव कारयेत्' । पार्वणक्रमेण मुख्यक्रमेण यजुर्वेदिसम्बन्धिगृह्यादिना । 'चतुर्णामपि वर्णानां यानि प्रोक्तानि वेधसा । धर्मशास्त्राणि राजेन्द्र ! शृणु तानि नृपोत्तम ! । विशेषतस्तु शूद्राणां पावनानि मनीषिभिः । अष्टादश पुराणानि चरितं राघवस्य च । रामस्य कुरुशार्दूल धर्मकामार्थसिद्धये । तथोक्तं भारतं वीर, पाराशर्य्येण धीमता । वेदार्थं सकलं

योज्य धर्मशास्त्राणि च प्रभो'। । इति भविष्यपुराणवचनात्तेषां पौराणिकादिविधिर्योज्यो योजयित्वा अत्र च 'श्राद्धवेदमन्त्र-वर्जं शूद्रस्य' इति वचने वेदेत्युपादानात् श्राद्धे पुराणमन्त्रः शूद्रेण पठनीय इति मैथिलोक्तं तन्न वराहपुराणे शूद्राणां मन्त्रवर्जितं इत्यनेन मन्त्रमात्रनिषेधात् मत्स्यपुराणेन नमस्कारेण मन्त्रेण इत्युपादानाच्च पौराणिकस्यापि श्राद्धे निषेधः प्रतीयते। एवं स्नानेऽपि 'ब्रह्मक्षत्रविशामेव मन्त्रवत् स्नानमिष्यते। तूष्णीमेव हि शूद्रस्य सनमस्कारकं मतम्। इत्यनेन नमस्कारविधानात् पञ्चयज्ञेऽपि 'शूद्रस्य द्विजशुश्रूषा तया जीवनवान् भवेत्। शिल्पैर्वा विविधै-र्जीवेत् द्विजातिहितमाचरन्। भार्य्यारतिः शुचिर्भृत्य-भर्त्ता श्राद्धक्रियारतः। नमस्कारेण मन्त्रेण पञ्चयज्ञान्न हापयेत्'। इति नमस्कारमात्रविधानात् श्राद्धादिषु पौरा-णिकमन्त्रनिषेधः। ततश्च स्नानश्राद्धतर्पणपञ्चयज्ञेतरत्र शूद्रस्य पौराणिकमन्त्रपाठः प्रतीयते। अत्र 'षष्ठेऽन्नप्राशनं मासि यद्वेष्टं मङ्गलं कुले'। इति मनुवचनात् 'चूडाकार्य्या यथा-कुलम्' इति याज्ञवल्क्यवचनाच्च संस्कारमात्रे कुलधर्मानुरोधेन कालान्तरस्य नामविशेषोच्चारणस्याभिधानाच्च शूद्रादीनां नामकरणे वसुघोषादिकपद्धतियुक्तनामकरणस्य च प्रतीते-र्वैदिककर्मणि शूद्राणां पद्धतियुक्तनामाभिधानं क्रियते इति। शूद्रस्याचमने देवतीर्थेन ओष्ठे जलं सकृत् क्षिपेत् न पिबेत् तथा च याज्ञवल्क्यः 'हृत्कण्ठतालुगाभिस्तु यथासंख्यं द्विजा-तयः। शुध्येरन् स्त्री च शूद्रश्च सकृत् स्पृष्टाभिरन्ततः'। अन्ततो हृदयादिसमीपेन ओष्ठेन उत्तरोत्तरमप्रकर्षात् अतएव स्पृष्टा-भिरित्युक्तं न तु भक्षिताभिरिति 'स्त्री शूद्रः शुध्यते नित्यं स्नानाच्च करोष्ठयोः' इति ब्रह्मपुराणवचनाच्च याज्ञवल्क्यः

'प्राप्य ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत्'। अत्र द्विज-स्येवाचमने ब्राह्मतीर्थोपादानात् स्त्रीशूद्रयोर्न तेनाचमनम् एवमेव मिताक्षरायां व्यक्तमुक्तं मरीचिना 'स्त्रियाश्चेदग्निवर्ं तीर्थं शूद्रजातेस्तथैव च। सकृदाचमनाच्छुद्धिरेतयोरेव चोभयोः' इति। एतदनन्तरम् इन्द्रियादिस्पर्शनन्तु ब्राह्मण-वदेव प्रमाणान्तरन्तु वाजसनेयिसामगब्राह्माह्निकतत्त्वयोरनु-सन्धेयम्।

इति वन्द्यघटीय श्रीहरिहरभट्टाचार्य्यात्मज श्रीरघुनन्दन-भट्टाचार्य्यविरचितं शूद्राह्निकाचारतत्त्वं समाप्तम्।

---

## यजुर्वेदिवृषोत्सर्गतत्त्वम्।

---

प्रणम्य सच्चिदानन्दं वृषोत्सर्गे यजुर्विदाम्।
प्रमाणकृत्ययोस्तत्त्वं वक्ति श्रीरघुनन्दनः॥

पारस्करः। 'अथ वृषोत्सर्गो गोयज्ञे व्याख्यात इति'। गोयज्ञे शूलगवमभिधाय एतेनैव गोयज्ञो व्याख्यातः पायसेन चरुणाऽयंनुमस्तस्य तुल्यवया गौर्दक्षिणा इति सूत्रोक्तः एतेन शूलगवोक्ताग्नेयादि अवनामकरुद्रदैवतहोमेन तथाच सूत्रं 'स्थालीपाकमिश्रान्यवदानानि जुहोत्यग्नये रुद्राय सर्वाय पशु-पतये उग्राय अशनये भवाय महादेवाय ईशानाय इति च' अत्र सर्वशब्दो दन्त्यादिः अशनिशब्दश्चेदन्तः शतपथश्रुतौ षष्ठ-काण्डे तथादर्शनात् वाचस्पतिमिश्रोऽप्येवम्। अवदानानि पयोहृदयमांसानि तत्र पायसेनेत्यभिधानात् शूलगवप्राप्त-मांसाद्यप्राप्तिः तदप्राप्ता च नवदेवतातिरिक्तानां शूलगव-

?वतानामप्राप्तिस्तदङ्गीकरोति अर्थलुप्त इत्यस्यार्थः पायसादि-
विधेरनुगतोऽर्थो यो विधिस्तेन लुप्तो विहीन इति अनर्थलुप्तपाठे
अस्मिन् पायसविधौ अनर्थो निष्प्रयोजनकोषः पायसादि-
विधिस्तेन विहीन इति स्विष्टिकृत् प्राप्तिस्तु सामान्यपरि-
भाषाबलात् एवमेव हरिशर्मप्रभृतयः। अत्र गोयज्ञे पायस-
चरुरिति गोभिलसूत्राच्चरुभाषोक्तग्रहणनिर्वापणप्रोक्षणादयः
स्युः। यद्यपि गोयज्ञे उपदिष्टपायसेन शूलगवातिदिष्टपशु-
निवृत्तौ तुल्यवया गौरित्यनुपपन्नस्तथापि तत्र तच्छब्देन
प्रक्रान्तशूलगवप्रक्रंस्यमानवृषोत्सर्गपशुः परामृश्यः अविशेषात्
अतस्तयोर्दक्षिणेयं गोयज्ञप्रकरणे पाठात् तत्रापि तुल्यवयस्का
गौर्दक्षिणा हरिशर्माप्येवं विशेषस्तु भविष्ये 'वृषतुल्य-
वयो वर्णो वृषः स्याद्दक्षिणा द्विजाः। वृषोत्सर्गे तथा पुंसां
स्त्रीणां स्त्री गौर्विशिष्यते'। वृषोत्सर्गविधौ पारस्करः 'मध्ये
गवां सुसमिद्धमग्निं कृत्वाज्यं संस्कृत्य इह रतिरिति
षड्जुहोति'। गवां मध्ये गोष्ठे गोशालायां वा शूलगवाति-
दिष्टगोयज्ञातिदेशादावसथ्याग्निलाभे सुसमिद्धमग्निं कृत्वेति
?दुपादानं तल्लौकिकाग्नेरपि प्राप्त्यर्थम् अतो निरग्नेरपि
?त्राधिकारः। एवं लक्षणेष्वप्ययमेव मन्त्रः एवं सङ्गच्छते।
?ाज्यं होमार्थं संस्कृत्य इह रतिरित्यादि षण्मन्त्रैः पायस-
होमात् पूर्वं षडाहुतीर्जुहोति न चाज्यं संस्कृत्य इह रति-
?ति तदभिधानस्य फलवत्त्वात् उत्तरे आग्नेयं दक्षिणे सौम्यं
?ध्ये अन्या आहुतयः इति सांख्यायनोक्ताज्यभागहोमदेशाभ्य-
न्तरदेशत्वाज्यहोमीयस्य च बाधापत्तेः। आज्यसंस्कारानन्तरं
?ोपयमनकुशादानसमिधादानपर्युक्षणानां षडाहुतेः पूर्वं
?ायत्वेन तानि च तेनापि पूर्वमुक्तानि ततश्चातिदेशप्राप्त-
?रिकदानधर्मं प्रागुक्तादिदेशपरम्पराप्राप्त्यस्यादिश्यौ षडाहु-

नय:। तत: प्रकरणोक्तपौष्णहोम:। यथा पारस्कर: 'पूषा गा अन्वेतु न: पूषा रक्षत्वर्वत:। पूषा वाजसनो न: स्वाहा इति' पौष्णस्य पूषदेवतस्यार्थीभूतपिष्टचरोरवदानधर्मेण उद्धृत्य पूषेत्यनेन मन्त्रेण जुहोति अत्र पूष्ण: पृथग्विधानात् पिष्टप्राप्ति: छन्दोगपरिशिष्टस्य तु सामान्यतो विधानान्न तदर्थतेति तथाच छन्दोगपरिशिष्टम्। 'यद्यप्यदन्तक: पूषा पैष्टमत्ति सदा चरुम्। अग्नीन्द्रेन्द्रसामान्यात्तण्डुलोऽत्र विधीयते'। अत्र चरुश्रुतेश्चरुभाषया पूष्णेत्वाजुष्टं निर्वपामीत्यादे: प्राप्तिरिति एतेन पौष्णस्य चरो: श्रपणानुपदेशात् सिद्धस्यैवासादनमिति निरस्तम्। 'अग्निं परिस्तीर्य्य चरुं श्रपयित्वा पूषा गा' इति विष्णुसूत्रेण स्पष्टमुक्तत्वात् न चैतत् काण्वशाखिमात्रपरम् अन्योक्तस्यान्यत्राकाङ्क्षितत्वेनान्वयात् तथाच छन्दोगपरिशिष्टं 'यन्नाम्ना तं स्वशाखायां परोक्तमविरोधि च। विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत्' इत्यत्र चकारादाकाङ्क्षितं समुच्चितम् अन्यथा 'वह्वल्पं वा स्वगृह्योक्तं यस्य यत् कर्म कीर्त्तितम्। तस्य तावति शास्त्रार्थे कृते सर्वं कृतो भवेत्' इति गृह्यपरिशिष्टीयेन विरुद्धेत एवमेव श्राद्धविवेकहरिशर्मप्रभृतय: अन्यथा विष्णूक्तस्यापि बाध: स्यात् यथा होमानन्तरं विष्णु: 'अयस्कारमाहूयैकस्मिन् पार्श्वे शूलेनाङ्कितं हिरण्यवर्णेति चतसृभि: शन्नोदेवीति स्नापयेत् स्नातालङ्कृताभिर्वित्सं चतसृभिर्वत्सतरीभि: सार्द्धं रुद्रान् पुरुषसूक्तान् कुष्माण्डीर्जपेत् पिता वत्सेति मन्त्रं वृषस्य दक्षिणे कर्णेऽन्यथैव। वृषो हि भगवान् धर्मश्चतुष्पाद: प्रकीर्त्तित:। वृणोमि तमहं भक्त्या स मां रक्षतु सर्वत:। एतं युवानं पतिं वो ददामीत्यादि' अत्र कुष्माण्डी: यद्देवादेवहेलनमिति माध्यन्दिनश्रुतिप्रसिद्धा: ऋचो ग्राह्या यद्देवाश्चिनोऽग्निवायुसूर्य्यदेवत्या:

क्रमेणानुष्टुपः कुशाण्डीरिति माध्यन्दिनशाखायां सर्वानुप-
क्रमण्यां कात्यायनवचनात् अत्र रुद्रजपात् पूर्वं गायत्रीमघ-
मर्षणसूक्तञ्च जपन्ति 'सावित्रीञ्च जपेत् पूर्वं तथा चैवाघमर्ष-
णम्' इति आदित्यपुराणात्। अघमर्षणसूक्तञ्च ऋग्वेदोक्त-
मिह ग्राह्यं सन्ध्यावन्दनवत् न तु यजुर्वेदिकमपि तैत्तिरीयं
याज्ञवल्क्योक्तीर्णत्वात् अत्र पौराणिकत्वात् गायत्र्यघमर्षण-
जपावविरुद्धौ विष्णूक्तानाह्नितमपि आचारानुरोधादत्रावश्यं-
मिति। होमे तु परिभाषासिद्धः स्विष्टिकृद्धोमः पायस-
पिष्टाभ्यां कर्त्तव्यः तथा महाव्याहृत्यादिप्रायश्चित्तान्त इति
एतत् सर्वं गृह्यस्थालीपाकसाध्यं ततस्तत्प्रमाणमभिधीयते
यथा पारस्करः 'गृह्यस्थालीपाकानां कर्म परिसमूह्य उपलेप्य
उद्धृत्याभ्युक्ष्याग्निमुपसमाधाय दक्षिणतो ब्रह्मासनमास्तीर्य्य
प्रणीय परिस्तीर्य्यार्थवदासाद्य पवित्रे कृत्वा प्रोक्षणीं संस्कृत्यार्थ-
वत् प्रोक्षणीरुपाज्यमधिश्रित्य पर्य्यग्निं कुर्य्यात् स्रुवं प्रतप्य
निदध्यात् आज्यमुद्वास्योत्पूयावेक्ष्य प्रोक्षणीं पूर्ववदुत्पूय
उपयमनकुशानादाय समिधमाधाय पर्य्युक्ष्य जुहुयात् एष एव
विधिः यत्र क्वचिद्धोम इति अथ श्रौतकर्मविधानानन्तरं यतो
'तो: श्रौतानि' कर्माणि विहितानि स्मार्त्तानि विधेयानि
तो होताः गृह्य अवसथ्याग्नौ ये स्थालीपाकास्तेषां कर्मानु-
ानं व्याख्यास्यते इति शेषः अत्र चतुष्कोणस्थानमाह
ात्यायनः 'चतुरस्रं स्थण्डिलं गोमयेनोपलिप्येति' प्राग-
ायाञ्च 'नित्यं नैमित्तिकं काम्यं स्थण्डिले वा समाचरेत्।
हस्तमात्रन्तु तत् कुर्य्यात् चतुरस्रं समन्ततः'। परिसमूह्य
भिर्दर्भैः पांशून् अपसार्य्य उपलिप्य गोमयोदकाभ्यां एत-
ायमपि उदकसंस्थमुल्लिख्य स्फ्येनरेखामुल्लिखेदिति कुशेन
ार्जनमिति वचनाभ्यां स्फ्येन खड्गाकारप्रमाणेन तदभावे

कुशैरुदकसंख्याः प्रादेशप्रमाणास्तिस्रो रेखाः कृत्वा उद्धृ
अनामिकाङ्गुष्ठाभ्यां यथा उल्लिखिताभ्यो रेखाभ्यश्च पांशूनुद्धृत्य
अभ्युक्ष्याद्भिरभिषिच्य अग्निमुपसमाधाय कांस्यपात्रस्थमग्नि
यात्माभिमुखं संस्थाप्य दक्षिणतो ब्रह्मासनमास्तीर्य्य यज्ञीय
दारुमयं ब्रह्मण आसनं प्रागग्रैः कुशैराच्छाद्य अत्र ब्रह्म
कर्मकरणाय ब्रह्माणमुपवेश्य प्रणीय वरुणकाष्ठमयं षडङ्गु
प्रस्तारं विंशत्यङ्गुलदीर्घं चतुरङ्गुलखातं चतुरङ्गुलमूलदण्ड
मात्रं मृण्मयपात्रं वा सव्यहस्तेन धृत्वा दक्षिणहस्तोपा
उद्धृतपात्रस्य उदकेन पूरयित्वा परिस्तरणकुशादुत्तरस्यां दि
कुशोपरि स्थापयेत् परिस्तीर्य्य वर्हिर्मुष्टिमादाय प्रागग्रैर्वर्हि
भिराग्नेयादीशानान्तं ब्रह्मणोऽग्निपर्य्यन्तं नैरृतादायव्यन्त
अग्नेः प्रणीतापर्य्यन्तं परिस्तरणं तथा सांख्यायनसूत्रं 'अत्र
स्थावृतो दक्षिणतः प्रवृत्तय उदकसंस्था भवन्तीति' एवम
हरिशर्मपशुपतिरामदत्ताचार्य्यचूडामणिप्रभृतयः एतेन वा
स्पतिमिश्रोक्त ईशानीतः सौम्यन्तक्रमो निरस्तः। यत्तु पित
भक्तितरङ्गिण्याम् आहुत्तः सामान्यप्रदक्षिणमिति शौनकाश्व
यनसूत्रं तत् स्मार्तकर्मणि स्मार्त्तोक्तविशेषात्तस्य विषयत्वात्
अर्थवदासाद्य यावद्भिः पदार्थैरर्थप्रयोजनं तावतः 'प्राञ्चं प्राञ्च
मुदगग्नेरुदगग्रसमीपतः। तत्तथा साधयेद्द्रव्यं यद्यथा विनि
युज्यते' इति छन्दोगपरिशिष्टादग्नेरुत्तरतः प्रतीच्यादिप्राच्यन्त
मुत्तराग्रकुशोपरि आसाद्य न तु उत्तरोत्तरत इति हरिशर्मा
तद् यथा पवित्रच्छेदनार्थं दर्भास्त्रयः पवित्रार्थमन्तर्गर्भशून्य
साग्रं कुशपत्रद्वयं प्रोक्षणीपात्रं द्वादशाङ्गुलदीर्घम् आज्य
स्थाली तैजसी मृण्मयी वा द्वादशाङ्गुलविस्तृता प्रादेशोच्चा
चरुस्थाली सम्मार्जनार्थं कुशास्त्रयः समिधस्तिस्रः पालाश्य
औदुम्बर्य्यो वा प्रादेशमात्राः स्रुवः खादिरो हस्तमात्रोऽङ्गु

माचष्टाताम्: । आज्यं गव्यं चर्वर्थं व्रीहितण्डुला: षट्पञ्चाश-दुत्तरमुष्टिशतप्रघातातपतण्डुला: वहुभोक्तृत्तृप्तिक्षमतण्डुला वा पूर्णपात्रं दक्षिणार्थं यथाशक्ति हिरण्यञ्चेति पवित्रे कृत्वा त्रिभि: कुशै: प्रादेशमात्रे पवित्रे छित्वा प्रोक्षणीं संस्कृत्य प्रोक्षणीपात्रं प्रणीतासन्निधौ निधाय तत्र पात्रान्तरेण हस्तेन वा प्रणीतोदकेनासिच्य पवित्राभ्यामुत्पूय पवित्रे प्रोक्षिण्यां निधाय दक्षिणहस्तेन प्रोक्षणीपात्रमुत्थाप्य सव्ये कृत्वा तदु-दकं दक्षिणहस्तेनाच्छाद्य अर्थवत् प्रोक्ष्य अर्थवन्ति प्रयोजन-वन्ति। आज्यस्थाल्यादीनि प्रक्षाल्याग्निरासादनक्रमेण एकै-कश: प्रोक्षणीरूपाज्यम् आसादितमाज्यमौपयिकम् आज्य-स्थाल्यां पश्चादग्नेर्निहितायां प्रक्षिप्य चरुपक्षे तु यवादि-ग्रहणासादनप्रोक्षणानि मन्त्रदेवताभ्य इति सांख्यायनसूत्रात् न तु तण्डुलस्यासादनं मिश्रोक्तं युक्तं व्रीहीन् यवान् वा हवींषि इति परिभाषासिद्धत्वात्। वृषोत्सर्गे व्रीहिणामेव ग्रहणादिति छन्दोगपरिशिष्टे सत्कृत्य व्रीहितण्डुलानि इत्युपदेशात् तदभावे शालीनामपि तत: प्रस्फोटनम् अशक्तौ तण्डुलस्यासादनं ततस्त्रि: प्रक्षाल्य चरुस्थाल्यां प्रोक्षणीत उदकमासिच्यासादिततण्डुलांस्तत्र प्रक्षिप्य अधिश्रित्याग्ने-रुत्तरतो दर्भान् विस्तीर्य्य तदुपरि आज्यस्थालीं निधाय तथाच आपस्तम्ब: 'आज्यस्थाल्यामाज्यं निरुप्य उदीच्याङ्गारे तन्निरुप्याधिश्रित्येति' स्थालीपाकेषु ग्रहणासादनप्रोक्षणादि-मन्त्रदेवतामुद्दिश्य कुर्य्यात् चरोरधिश्रयणञ्च मध्येऽग्नौ पाक-योग्यत्वात् पर्य्यग्निं कुर्य्यात् ज्वलदुल्मुकं प्रदक्षिणमाज्यचर्वो: समन्ततो भ्रमयेत्। स्रुवं प्रतप्य दक्षिणहस्तेन स्रुवमादाय प्राञ्चमधोमुखमग्नौ पुन: प्रतप्य दर्भै: संमृज्य सव्ये पाणौ कृत्वा दक्षिणहस्तेन सम्मार्जनकुशैर्मूलादग्रपर्य्यन्तं संमोच्या-

भ्युक्ष्य प्रणीतोदकेनेति शेषः। पुनः प्रतप्य पूर्ववत् प्रतप्य उत्तरतो निदध्यात् न तु वाचस्पतिमिश्रोक्तं दक्षिणत आसादनम्। आश्वलायनसांख्यायनापस्तम्बोक्ते बर्हिषि सर्वोत्तरतो निदध्यात् चर्वोश्च उदगुद्वासनम् आज्योत्तरतो निधानञ्च उत्पूयावेक्ष्येति पूर्ववत् गृहीतमाज्यं सवितुस्त्वेति वारत्रय मुत्पूयोत्तोल्य तदेव चावेक्ष्यालोच्य प्रोक्षणीश्च पूर्ववदिति प्रोक्षणीः स्थापिताः पश्चादानीय ओम् सवितुर्व इति मन्त्रेण ताभ्यां पवित्राभ्यां तदुत्पुनाति तथाच सांख्यायनः 'आज्य मुद्वास्य उदगग्रे पवित्रे धारयन् अङ्गुष्ठोपकनिष्ठाभ्यामुभयत प्रतिगृह्य ऊर्द्धाग्रे प्रह्वे कृत्वा आज्ये उद्वास्यति ओम् सवितुस्त्वा प्रसवम् उत्पुनात्वच्छिद्रेण वसोः सूर्य्यस्य रश्मिभिरित्याज्य संस्कारः। सर्वत्र नासंस्कृतेन जुहुयादिति श्रुतितः ओम् सवितुर्व इति प्रणीताः प्रोक्षणीश्चेति उपयमनकुशानादाय समिधोऽभ्याधाय पर्य्युक्ष्य जुहुयादिति। उपयमनं संयमनमित्यस्य समिधा मुद्बन्धनं यैः कुशैः क्रियते उपयमनकुशास्तानादाय दक्षिण पाणिना गृहीत्वा वामे पाणौ संस्थाप्य तथाच आश्वलायन गृह्यपरिशिष्टं 'समूलान् दर्भानादाय इध्मबन्धः कुशेन तु होमकाले तथा मुक्त्वा सव्ये पाणौ च वेष्टितान्। ताः समिधोऽभ्याधाय उत्तिष्ठन्नग्नौ तूष्णीं प्रक्षिप्य उपविशेत्। पर्य्युक्ष्य उदकेनाग्निं परिसर्वतो भावेन वेष्टयित्वा जुहुयात् अघारादीनिति शेषः। होमे देवतोद्देशमाह कठसंवादिनी स्मृतिः 'आदौ च देवतोद्देशस्तैत्तिरीकठशाखिनोः। काण्व माध्यन्दिनानाञ्च पश्चादुल्लेखयेत् सुरान्'। स्मृत्यर्थसारमदन पारिजातयोः 'सन्निधौ यजमानः स्यादुद्देशत्यागकारकः। असन्निधौ तु पत्नी स्यादुद्देशत्यागकारिका। 'असन्निधौ तु पत्न्याः स्यादध्वर्य्युस्तदनुज्ञया। उन्मादे प्रसवे चार्त्तौ कुर्वी

तानुज्ञया विना'। एष परिसमूहनादिपर्य्युक्षणान्तो विधिः यत्र क्वचित् गृह्यकर्मणि होमो विधीयते तत्र भवति तथा पारस्करः अन्वारब्धम् आघाराज्यभागौ महाव्याहृतयः सर्वप्रायश्चित्तं प्राजापत्यं स्विष्टकृच्चैतन्नित्यं सर्वत्रेति ब्रह्मा दक्षिणबाहुना दक्षिणबाह्वन्वारब्धहोतरि प्रजापतीन्द्रदेवताके आघारसंज्ञके चाहुती तत्र पूर्वाहुतिर्वायुकोणादारभ्याग्निकोणं यावत् अविच्छिन्नघृतधारया स्रुवेण परा नैरृतकोणादारभ्य ऐशानीं यावत् आघारेण सामर्थ्यात् तथाचोक्तं 'प्राञ्चावघारौ विदिशावेके' इति। विदिशावेव कर्त्तव्यौ सर्वैर्दृष्टत्वादिति हरिशर्मप्रभृतयः। अग्निसोमदेवताके आज्यभागसंज्ञके इति। तत्राहुतिरग्नेरुत्तरभागे परा दक्षिणभागे एते प्रागग्रे आज्यभागावधिकृत्ये अग्नये स्वाहेत्युत्तरतः सोमायेति दक्षिणतः प्रागग्रां जुहुयादिति सूत्रात्। एतयोर्मध्येऽन्याश्चाहुतयः तथाच सांख्यायनसूत्रम् 'उत्तराग्नेयं दक्षिणे सौम्यं मध्येऽन्या आहुतयः' इति। महाव्याहृतयो भूराद्या व्यस्तसमस्ताश्च तयोर्व्याहृतयः सर्वप्रायश्चित्तम् ओं त्वन्नोऽग्ने ओं सत्वं नोऽग्ने ओम् अयाश्चाग्ने ओं ये ते शतम् ओम् उदुत्तममितिमन्त्रैर्वरुणदेवताकाः पञ्चाहुतयः प्राजापत्यं प्रजापतये स्वाहेति स्विष्टकृदग्नये स्विष्टकृते स्वाहेति चकारात् जुहुयादित्यन्वयः एतदुक्तं दशाहुतिकं कर्म नित्यम् आवश्यकम् अवश्यभावि सर्वत्रैतद् गृह्योक्तहोममात्रे स्विष्टकृद्धोमस्य विशेषमाह स एव प्राङ्महाव्याहृतिभ्यः स्विष्टकृदन्यच्चेदाहुतिरिति स्थालीपाकहविश्चेत्तदा महाव्याहृतिहोमात् पूर्वं तेन हविषा स्विष्टकृद्धोमः। केवलाज्यहोमे तु सर्वाहुतिशेष महाव्याहृत्यादयस्तु सर्वत्राज्येनैव परिभाषासिद्धत्वात् इति तथा च छन्दोगपरिशिष्टम् 'आज्यं द्रव्यमना-

टेम्रे जुहोतिषु विधीयते'। इति महाव्याहृत्यादयस्तु प्रकृत-होमकर्मान्ते कर्त्तव्याः। ततः प्रकृतकर्माह पारस्करः 'रुद्रान् जपित्वा एकवर्णं द्विवर्णं वा यो वा यूथं छादयति लोहितो वा स्यात् सर्वाङ्गैरप्युपेतो जीववत्सायाः पयस्विन्याः पुत्रोऽथ रूपवान् स्यात् तमलङ्कृत्य यूथमुख्याश्चतस्रो वत्सतर्य्यश्चालंकृत्य एनं युवानं पतिं वो ददामि तेन क्रीडन्तीश्चरथ प्रियेण मान साम्रजनुषा सुभगा रायस्पोषेण समिषामदेम एतेनैवोत्सृजे-रन् इति' रुद्राध्यायं पठित्वा एकवर्णं शुक्लं कृष्णं वा द्विवर्णं शुक्लकृष्णं विहितो यस्तु वर्णेनेति परिभाषितो नीलवृषः तमलं-कृत्य सौवर्णवीरपट्टादिभिर्यथायोग्यं भूषयित्वा वत्सतरीचतु-ष्टयसहितं वृषम एनं युवानमित्यादिमन्त्रं पठित्वा निमित्ता-न्युद्दिश्य उत्सृजेत्। पारस्करः 'मध्यस्थमभिमन्त्रयेत् मयो-भूरित्यनुवाकशेषेणेति'। मध्यस्थं वत्सतरीणां मध्यस्थं वृषं पूर्वादिदिक्षु लोहितवत्सिकाः संस्थाप्य तन्मध्ये प्राङ्मुखं स्थाप्य ओं मयोभूरभिमयोहीत्यादि स्वर्णसूर्य्यः स्वाहेत्यन्तेन अनुवाक-शेषमन्त्रेणाभिमन्त्रणं करोति। एतदवशिष्टकृत्यप्रमाणं साम्रग-वृषोत्सर्गतत्त्वे द्रष्टव्यं विस्तरभयात् नेहाभिलिखितमिति संक्षेपः

इति वन्द्यघटीय श्रीहरिहरभट्टाचार्य्यात्मज श्रीरघुनन्दन-भट्टाचार्य्यविरचितं यजुर्वेदिवृषोत्सर्गतत्त्वं समाप्तम्।

---

# दीक्षातत्त्वम् ।

प्रणम्य सच्चिदानन्दं संसारध्वान्तभास्करम् ।
दीक्षातत्त्वञ्च तत्प्रीत्यै वक्ति श्रीरघुनन्दनः ॥
शारदातिलकाद्येषु बहुलाङ्गप्रदर्शनात् ।
इदानीमननुष्ठानाद्दीक्षा संक्षिप्य लिख्यते ॥

प्रयोगसारे। 'दीयते ज्ञानमत्यन्तं क्षीयते पापसञ्चयः। तेन दीक्षेति सा ज्ञेया पापच्छेदक्षमा क्रिया। गुरोर्भृगो-रस्तबाल्ये वार्द्धके सिंहगे गुरौ। गुर्वादित्ये दशाहे च वक्रि-जीवेष्टविंशके। दिने प्राशाश्वनायातातिचारिगुरुवत्सरे। प्राशाग्निगन्तृजीवस्यातिचारे त्रिपक्षके। कम्पाद्यद्भुतसप्ताहे नीचस्थेज्ये मलिम्लुचे। पौषादिकचतुर्मासे चरणाङ्कितवर्षणे। एकेनाङ्गा चैकदिने द्वितीयेन दिनत्रये। तृतीयेन च सप्ताहे मङ्गल्यानि जिजीविषुः। विद्यारम्भकर्णवेधौ चूड़ोपनयनो-द्वहान्। तीर्थस्नानमनावृत्तं तथानादिसुरेक्षणम्। परीक्षा-राममहृष्यांश्च पुरश्चरणदीक्षणे। व्रतारम्भप्रतिष्ठे च गृहारम्भ-प्रवेशने। प्रतिष्ठारम्भणे देव कूपादेः परिवर्जयेत्। द्वात्रिं-शद्दिवसाश्चास्ते जीवस्य भार्गवस्य च। द्वासप्ततिमहत्यस्ते पादास्ते द्वादशक्रमात्। अस्तात् प्राक्परयोः पक्षं गुरो-र्वार्द्धिकबालते। पादास्ते तु दशाहानि वृद्धे बाले दिनत्रयम्'। अगस्त्यसंहितायाम्। 'यदा ददाति सन्तुष्टः प्रसन्नवदनो मनुम्। स्वयमेव तथा चैवमिति कर्त्तव्यताक्रमः। विशुद्ध-देशकालेषु शुद्धात्मा नियतो गुरुः। मधुमासे भवेद् दुःखं माधवे रत्नसञ्चयः। मरणं भवति ज्यैष्ठे आषाढे बन्धुना-

धनम्। समृद्धिः श्रावणे नूनं भवेद्भाद्रपदे क्षयः। प्रजानामाश्विने मासि सर्वतः शुभमेव च। ज्ञानं स्यात् कार्त्तिके सौख्यं मार्गशीर्षे भवत्यपि। पौषे ज्ञानक्षयो माघे भवेन्मेधाविवर्द्धनम्। फाल्गुनेऽपि विहृद्धिः स्यान्मलमासं विवर्जयेत्। गुरौ रवौ शनौ सोमे कर्त्तव्यं बुधशुक्रयोः। अश्विनी भरणी स्वाती विशाखाहस्तभेषु च। ज्येष्ठोत्तराद्रयोश्चैवं कुर्य्यान्मन्त्राभिषेचनम्। शुक्लपक्षे च कृष्णे वा दीक्षा सर्वसुखावहा। पूर्णिमा पञ्चमी चैव द्वितीया सप्तमी तथा। त्रयोदशी च दशमी प्रशस्ता सर्वकामदा। पञ्चाङ्गशुद्धिदिवसे सोदये शशितारयोः। गुरुशुक्रोदये शुद्धलग्ने द्वादशशोधिते। चन्द्रतारानुकूले च शस्यते सर्वकर्म च। सूर्य्यग्रहणकालेन समानो नास्ति कश्चन। तत्र यद् यत् कृतं कर्म तदनन्तफलं भवेत्। वारादिशोधनं मासो न चैवं सूर्य्यपर्वणि। ददातीष्टग्रहीतं यत्तस्मिन् काले गुरुर्रजुः। सिद्धिर्भवति मन्त्रस्य विनायासेन वेगतः'। मनुर्मन्त्रः। विघ्नकालं दर्शयति मधुमास इत्यादि। पञ्चाङ्गशुद्धिदिवसे वारतिथिनक्षत्रकालयोगशुद्धिदिवसे। तथाच महाकपिलपञ्चरात्रे। 'एवं नक्षत्रतिथ्यादौ करणे योगवासरे। मन्त्रोपदेशो गुरुणा साधकानां सुखावहः'। शशितारयोरानुकूल्ययुक्ते गुरुशुक्रोदये इति प्रागुक्तसमयशुद्धिपरम्। द्वादशशोधिते द्वादशांशशोधिते। तन्त्रान्तरे। 'रविवारे भवेद्वित्तं सोमे शान्तिर्भवेत् किल। आयुरङ्गारके हन्ति तत्र दीक्षां विवर्जयेत्। बुधे सौन्दर्य्यमाप्नोति ज्ञानं स्यात्तु बृहस्पतौ। शुक्रे सौभाग्यमाप्नोति यशोहानिः शनैश्चरे। प्रतिपत्सु कृता दीक्षा ज्ञाननाशकरी मता। द्वितीयायां भवेज्ज्ञानं तृतीयायां शुचिर्भवेत्। दशम्यां सर्वसिद्धिः स्यात्त्रयोदश्यां दरिद्रता। तिर्य्यग्योनिश्चतुर्दश्यां हानिर्माषा-

चन्द्रानके। पक्षान्ते धर्मवृद्धिः स्यादस्वाध्यायं विवर्जयेत्। सन्ध्यागर्जितनिर्घोषभूकम्पोल्कानिपातनम्। एतानन्यांश्च दिवसान् श्रुत्युक्तान् परिवर्जयेत्'। त्रयोदश्यां कृष्णायाम्। 'अमा वै सोमवारे च भौमवारे चतुर्दशी। चतुर्थ्यर्कवारे च सूर्य्यपर्वशतैः समा'। वीरतन्त्रे। 'रोहिणी श्रवणार्द्रा च धनिष्ठा चोत्तरात्रयम्। पुष्या शतभिषार्क्षं च दीक्षानक्षत्रमुच्यते'। अर्क्षा हस्ता। रत्नावल्याम्। 'योगाश्च प्रीतिरायुष्मान् सौभाग्यः शोभनो धृतिः। वृद्धिर्ध्रुवः सुकर्मा च साध्यः शुक्लश्च हर्षणः। वरीयांश्च शिवः सिद्धो ब्रह्म इन्द्रश्च षोडश। एतानि करणानि स्युर्दीक्षायान्तु विशेषतः। शकुन्यादीनि विष्टिञ्च विशेषेण विवर्जयेत्'। शकुन्यादीनि शकुनिचतुष्पदनागकिन्तुघ्नानि। 'कृष्णाष्टम्यां चतुर्दश्यां पूर्वपक्षदिने तथा'। कृष्णपक्षे इति शेषः। कालोत्तरे। 'कृष्णपक्षे भूतिकामः सिद्धिकामः सिते सदा'। दीपिकायाम्। 'ध्रुवमृदुनक्षत्रगणे शुभवासरेषु सत्तिथौ दीक्षा। स्थिरलग्ने शुभे चन्द्रे केन्द्रे कोणे गुरौ धर्मे'। ध्रुवाणि त्रीण्युत्तराणि रोहिणी च। मृदूनि चित्रानुराधामृगशिरो रेवत्यः। ज्ञानमालायाम्। 'रविसंक्रमणेनैव सूर्य्यस्य ग्रहणे तथा। अत्र लग्नादिकं किञ्चिदविचार्य्यं कथञ्चन'। तत्त्वसागरे। 'यदैवेच्छा तदा दीक्षा गुरोराज्ञानुरूपतः। न तिथिर्न व्रतं होमो न स्नानं न जपक्रिया। दीक्षायां कारणं किन्तु स्वेच्छावाप्ते तु सद्गुरौ'। सारसंग्रहे। 'शिष्यजिजन्मदिवसे संप्राप्ते विषुवायने। सत्तीर्थेऽर्कविधुग्रासे तन्तुदामनपर्वणोः। मन्त्रदीक्षां प्रकुर्वाणो मासर्क्षादीन शोधयेत्'। तन्तुपर्वपरमेश्वरीपवीतदानतिथिः श्रावणी द्वादशी। दामनपर्वद्रुमनमञ्जनतिथिश्चैत्रशुक्लचतुर्दशी। योगिनीतन्त्रे। 'मयायां

भास्करक्षेत्रे विरजे चन्द्रपर्वते। चङ्गने च मतङ्गे च तथा कन्याश्रमेषु च। न गृह्णीयात्ततो दीक्षां तीर्थेष्वेतेषु पार्वति'। कूर्मपुराणे। 'यानि शास्त्राणि दृश्यन्ते लोकेऽस्मिन् विविधानि च। श्रुतिस्मृतिविरुद्धानि निष्ठा तेषां हि तामसी। करालभैरवञ्चापि आमलं वाममेव च। एवंविधानि चान्यानि मोहनार्थानि यानि च। मया सृष्टानि चान्यानि मोहायैषां भवार्णवे'। चार्य्यादिदुष्टमन्त्रप्रतीकारे तु राघवभट्टधृतम्। 'तेषु दोषेषु सर्वत्र मायां काममथापि वा। श्रियं वादौ श्रियं दद्याद् दूषणस्य विमुक्तये। तारसंपुटितो वापि दुष्टमन्त्रोऽपि सिद्ध्यपि'। नृसिंहतापनीये। सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्रीशूद्रयोर्नेच्छन्ति। सावित्रीं लक्ष्मीं यजुः प्रणवं स्त्रीशूद्रो यदि जानीयात् स मृतोऽधो गच्छति नेच्छन्तीत्यन्तं पराशरभाष्येऽपि लिखितम्। गोविन्दभट्टधृतम्। 'स्वाहाप्रणवसंयुक्तं शूद्रे मन्त्रं ददद्द्विजः। शूद्रो निरयगामी स्याद् ब्राह्मणः शूद्रतामियात्'। शारदायाम्। 'मन्त्रविद्याविभागेन द्विविधा तन्त्रशास्त्रतः। मन्त्राः पुंदेवता ज्ञेया विद्याः स्त्रीदेवता पुनः'। एतेन मन्त्रविद्ययोर्यथायथमुल्लेखः। मन्त्रतन्त्रप्रकाशे। 'आचार्य्यानुमतिप्राप्तः प्राप्तश्चादृत्तदक्षिणः। सततं जप्यमानोऽपि मन्त्रसिद्धिं न गच्छति'। नारदीये। 'अन्तर्लिखितोऽशुभं मन्त्रं छलेनाभिजनेन वा। पत्रेऽङ्कितं वा गाथावत्तथाप्राप्तस्त्वनर्थकृत्'। अन्यत्रापि 'गुर्वनुज्ञाः क्रियाः सर्वा निष्फलाः स्युर्यतो ध्रुवम्। गुरुं न मर्त्यंबुध्येत यदि बुध्येत कर्हिचित्। कदापि न भवेत् सिद्धिर्न मन्त्रैर्देवपूजनैः'। अतएव शारदायाम्। 'पुरुषार्थं सदा वाञ्छे सच्छिष्यो गुरुमाश्रयेत्'। तेन गुरुकर्मकरणाय तस्य वरणं प्रतीयते। गुरुशिष्यानाह। 'सर्वागमानां सारज्ञः सर्व-

शास्त्रार्थतत्त्ववित्। परोपकारनिरतो जपपूजादितत्परः।
इत्यादि गुणसम्पन्नो गुरुरागमपारगः। वाङ्मनःकायवसुभि-
र्गुरुशुश्रूषणे रतः। एतादृशगुणोपेतः शिष्यो भवति नापरः'।
होममूले। 'चीर्णाचारव्रतो मन्त्री ज्ञानवान् सुसमाहितः।
ब्रह्मनिष्ठोऽतिविख्यातो गुरुः स्याद्भौतिकोऽपि च'। भौति-
कोऽपि देवयोन्युपसेवकोऽपि। 'देवताचार्य्यशुश्रूषां मनो-
वाक्कायकर्म्मभिः। शुद्धभावो महोत्साहो बोद्धाशिष्य इति
स्थितः'। दैवं कर्म्म यजुः कुर्य्यात् स इति पूरणीयम्। 'न
नूपदेश्यः पुत्रश्च व्यत्ययी वस्तुदस्तथा'। व्यत्ययी परस्पर-
विद्यादायी। प्रयोगसारे। 'तत्रापि भक्तियुक्ताय पुत्राय
वस्तुदाय च'। एतानि राघवभट्टधृतानि। महाकपिलपञ्च-
रात्र नारदीययोः। 'मन्त्रं यः साधयेदेकं जपहोमार्चना-
दिभिः। क्रियाभिर्भूरिभिस्तस्य सिद्ध्यन्त्येऽप्यसाधनात्।
सम्यक्सिद्धैकमन्त्रस्य नासिद्धमिह किञ्चन। बहुमन्त्रवतः
पुंसः का कथा हरिरेव सः'। पिङ्गलामते। 'मननं विश्व-
विज्ञानं त्राणं संसारबन्धनात्। यतः करोति संसिद्धेः मन्त्र
इत्यभिधीयते'। अन्यत्रापि। 'प्राप्तोपदेशतो मन्त्रो मन-
नाज्जपमादपि।' सिद्धिप्रदः साधकानां पूजाहोमादिकं
वेना'। यमः। 'पुण्याहं वाचयेद्दैवे ब्राह्मणस्य विधीयते'।
व्यासः। 'संपूज्य गन्धपुष्पाद्यैर्ब्राह्मणान् स्वस्ति वाचयेत्।
धर्म्ये कर्म्मणि माङ्गल्ये संग्रामादद्भुतदर्शने'। पूजाधारमाह
ब्रह्मपुराणम्। 'शालग्रामशिलारूपी यत्र तिष्ठति केशवः।
तत्र देवाऽसुरा यक्षा भुवनानि चतुर्दश'। अत्र सर्वासांविध्या-
त्र तेषां पूजा प्रतीयते। तत्रावाहनविसर्जने नस्तः। 'शाल-
ग्रामे स्थावरे वा नावाहनविसर्जने'। इति राघवभट्टधृतात्।
बौधायनः। 'प्रतिमास्थानेष्वप्स्वग्नौ नावाहनविसर्जनमिति'।

पूजाप्रदीपे। 'मनुमत्कल्पे यन्त्रन्तु लिखेत् पद्म' दलाष्टकम्। षट्कोणकर्णितं तत्र वेदद्वारोपशोभितम्'। अत्रावाहनप्रतिष्ठाविसर्जनानीति शेषः। उपचारद्रव्याणि शारदायाम्। 'पाद्यं श्यामाकदूर्वाब्जविष्णुक्रान्ताभिरीरितम्'। विष्णुक्रान्ताऽपराजिता। श्यामाकादियुक्तं जलमिति शेषः। 'गन्धपुष्पाक्षतयवकुशाग्रतिलसर्षपैः। सदूर्वैः सर्वदेवानामर्घ्यमेतदुदीरितम्'। गन्धादियुक्तं जलमित्यर्थः। 'जातीलवङ्गकक्कोलैर्जलमाचमनीयकम्। दधिमध्वाज्यसंमिश्रं मधुपर्कं विनिर्दिशेत्। गन्धचन्दनकर्पूरकालागुरुभिरीरितः'। पुष्पाणि तान्येव देयानि शास्त्रान्तरेऽवगम्यानि। 'गुग्गुल्वगुरुकोशीरशर्करामधुचन्दनैः। धूपं गन्धाम्बुसंमिश्रैर्नीचैर्देवस्य साधकः'। उशीरं वीरणमूलम्। साधकः पूजाकर्त्ता। राघवभट्टधृतम्। 'सर्वोपचारवस्तूनामलाभे भावनैव हि। निर्मलेनोदकेनाथ पूर्णतेत्याह नारदः'। नारसिंहे। 'स्नाने वस्त्रे च नैवेद्ये दद्यादाचमनीयकम्'। देवीपुराणम्। 'यद्दीयते च देवेभ्यो गन्धपुष्पादिकं तथा। अर्घ्यपात्रस्थितैस्तोयैरभिषिच्य तदुत्सृजेत्'। शारदायाम्। 'मन्त्राणां दश कथ्यन्ते संस्काराः सिद्धिदायिनः। जननं जीवनं पश्चात्ताड़नं बोधनं तथा। अथाभिषेको विमलीकरणाप्यायने तथा। तर्पणं दीपनं गुप्तिर्दशैता मन्त्रसंक्रियाः। मन्त्राणां मातृका यन्त्रादुद्धारो जननं स्मृतम्। प्रणवान्तरितान् कृत्वा मन्त्रवर्णान् जपेत् सुधीः। एतज्जीवनमित्याहुर्मन्त्रतन्त्रविशारदाः। मन्त्रवर्णान् समालिख्य ताड़येच्चन्दनाम्भसा। प्रत्येकं वायुना मन्त्री ताड़नं तदुदाहृतम्'। लिखनविधिमाह दानसागरे। 'शुभे नक्षत्रदिवसे शुभे चापि दिनग्रहे। लेखयेत् पुण्य देवेशान् रुद्रब्रह्मजनार्दनान्। पूर्वदिङ्मुखनो भूत्वा लिपिज्ञो लेखको·

ख्यमः। शिरोवी वस्त्रवाग्नीय मसीपत्रविधारणे'। मत्स्य-पुराणे। 'शीर्षोपेतान् सुसम्पूर्णान् समभार्यांश्च तान् समान्। अक्षराणि लिखेद् यस्तु लेखकः स उदाहृतः'। वायुना वायुबीजेन। 'यमित्यनेन तं मन्त्री प्रसूनैः करवीरजैः। तन्मन्त्राक्षरसंख्यातैर्हन्याद् यान्तेन शोधनम्'। यान्तेन रमित्यनेन इति। 'स्वतन्त्रोक्तविधानेन मन्त्री मन्त्रार्णसंख्यया। अश्वत्थपल्लवैर्मन्त्रमभिषिञ्चेद्विशुद्धये। स्वतन्त्रोक्तविधानेन मूर्द्धि तोयेन देशिकः। नमोऽन्तं मन्त्रमुच्चार्य्य तदन्ते देवताभि-धाम्। द्वितीयान्तामहं पश्चादभिषिञ्चाम्यनेन तु। तोयै-रञ्जलिवद्भिश्चाप्यभिषिञ्चेत् स्वमूर्द्धनि'। स्वतन्त्रोक्तविधानेन पुरश्चर्य्याप्रकरणोक्तविहिताञ्जलिना इत्यभिहितेन। 'सञ्चिन्त्य मनसा मन्त्रं ज्योतिर्मन्त्रेण निर्दहेत्। मन्त्रे मलत्रयं मन्त्री विमलीकरणन्त्विदम्'। मलत्रयं मायिकं कार्मिणं मानव-रूपम्। 'तारं व्योमाग्निमनुयुग्दण्डी ज्योतिर्मनुर्मतः'। तारं प्रणवः व्योम हकारः अग्नीरेफः मनुरौकारः तद्युक्तोऽनु-स्वारः। तेन ओम् ह्रौं इति ज्योतिर्मन्त्रः। कुशोदकेन मन्त्रेण प्रत्यर्णं प्रोक्षणं मनोः'। प्रत्यर्णं प्रत्यक्षरम्। 'तेन मन्त्रेण विधिवदेतदाप्यायनं मतम्। मन्त्रेण वारिणा मन्त्र-तर्पणं तर्पणं मतम्'। मन्त्रेण मूलमन्त्रेण। 'मूलमन्त्रं समुच्चार्य्य तदन्ते देवताभिधाम्। द्वितीयान्तामहं पश्चात्तर्प-यामि नमोऽन्तकम्'। इति पुरश्चर्य्योक्तक्रमेण लिखितमन्त्रा-क्षररूपयन्त्रे। 'तारमायारमायोगो मनोर्दीपनमुच्यते'। तार ओम् माया ह्रीं रमा श्रीम्। 'जप्यमानस्य मन्त्रस्य गोपनन्त्वप्रकाशनम्। संस्कारा दशसंख्याताः सर्वतन्त्रेषु गोपिताः। यान् कृत्वा सम्प्रदायाश्च मन्त्री वाञ्छितमश्नुते'। शारदायाम्। 'तत्तन्मन्त्रोदिताशासान् कुर्य्याद्दे शिष्यो-

स्नात्वा। पञ्चोपचारैः कृत्वास्यां पूजयेदिष्टदेवताम्। दद्यात
मेवास्यां ततस्तस्मै विनीताय प्रयत्नतः'। पञ्चुरत्नमहातन्त्रे
'गुरुवक्त्रं' निजं वक्त्रं विभाव्य गुरुरादरात्। गुरुवक्त्रप्रणीतीय
दिव्यमन्त्रादिकं शिष्योः। मुद्राभ्यासादिभिः सार्द्धं दद्यात
सेयं हि वाचिकी'। गुरुः स्वीयं वक्त्रं गुरुवक्त्रत्वेन विभाव
शिष्याय दद्यादित्यर्थः। 'दीक्षापरा तथामन्त्रन्यासंसंयुक्त
विग्रहा। सेयं मन्त्रतनुर्भूत्वा संक्रमं मन्त्रमादरात्। दद्या
शिष्याय सा दीक्षा मन्त्री मनुविघातिनी'। दक्षिणामूर्ति
संहितायाम्। 'भूमौ लिखित्वा मन्त्रन्तु पूजयित्वा यथा
विधि। जपता मनसा देवि शिष्याय निर्मलात्मने। प्रक
म्यार्च्य जने दद्यात् ऋष्यादिसहितं गुरुः'। वशिष्ठसंहि
तायाम्। 'ततस्तत् शिष्यशिरसि हस्तं दत्त्वा शतं जपेत्
अष्टोत्तरशतं मन्त्रं दद्यादुदकपूर्वकम्'। क्रमदीपिकायाम्
'ऋष्यादियुक्तमथ मन्त्रवरं यथावद् ब्रूयात् शिष्योर्गुरुवरस्त्रि
वामकर्णे'। शारदायां 'गुरोर्लब्ध्वा पुनर्विद्यामष्टकृत्व
जपेत् सुधीः। गुरुविद्यादेवतानामैक्यं सम्भावयन् धिया
प्रणमेद्दण्डवद्भूमौ गुरुं तं देवतात्मकम्। तदा पादाम्बु
जद्वन्द्वं निजमूर्द्धनि योजयेत्'। वशिष्ठः 'पादयोस्तुल्यफलं
भवत्त्वेवमुदीरयेत्। वरं प्राणपरित्यागश्छेदनं शिरसोऽ
वा। न त्वनभ्यर्च्य भुञ्जीत भगवन्तं त्रिलोचनम्'। अन्यत्र
भोक्तव्यमित्यूचुः। नारायणीयमहाकपिलपञ्चरात्रे। 'मन
दत्त्वा सहस्रं वै स्वशिष्टैर देशिको जपेत्'। मन्त्रप्रकाशे
'स सर्वस्वं तदर्द्धं वा वित्तशाठ्यविवर्जितः। गुरवे दक्षि
दत्त्वा ततो मन्त्रधरो मतः'। अन्यत्रापि 'तां वित्तशाठ
परिहृत्य दक्षिणां दत्त्वा स्वकीयां तनुमर्पयेत् सुधीः'। नार
यणीयकपिलपञ्चरात्रयोः। 'त्वत्प्रसादादहं सुत्वः कृतकृत्यं

ऽस्मि सर्वतः। मायासत्त्वमहापाशादिमुक्तोऽस्मि शिवोऽस्मि च'। शारदायां 'ब्राह्मणांस्तर्पयेत् पश्चात् भक्ष्यभोज्य सदक्षिणाम्'। शैवे। 'यो गुरुः स शिवः प्रोक्तो यः शिवः स च शङ्करः। शिवविद्यागुरूणाञ्च भेदो नास्ति कथञ्चन। शिवे मन्त्रे गुरौ यस्य भावना सदृशी भवेत्। भोगो मोक्षश्च सिद्धिश्च शीघ्रं तस्य भवेत् ध्रुवम्। वस्त्राभरणमाल्यानि शयनान्यासनानि च। श्रेयांसि चात्मनो यानि तानि देयानि वै गुरौ। तोषयेच्च प्रयत्नेन कर्मणा मनसा गिरा'। योगिनीतन्त्रे। 'मन्त्रं दत्त्वा गुरुश्चैव उपवासं यदाचरेत्। मोहान्धकारनरके कृमिर्भवति नान्यथा। दीक्षां कृत्वा यदा मन्त्री उपवासं समाचरेत्। तस्य देवः सदा रुष्टः शापं दत्त्वा व्रजेत् पुरम्'। उद्योगपर्वणि 'गुरोरप्यवलिप्तस्य कार्य्याकार्य्यमजानतः। उत्पथप्रतिपन्नस्य परित्यागो विधीयते'।

तत्र प्रयोगः। पूर्वदिने कृतोपवासः कृतहविष्यादिको वा यथाशक्ति सहस्रादिकां सावित्रीं जप्त्वा परदिने कृतस्नानादिः पुण्याहं स्वस्ति ऋद्धिञ्च वाचयित्वा ओं तद्विष्णोरित्यनेन विष्णुं संस्मृत्य ताम्रपात्रे कुशत्रयतिलफलपुष्पजलान्यादाय ओं तत्सदद्य अमुके मासि अमुकराशिस्थे भास्करे अमुकपक्षे अमुकतिथावमुकगोत्रः श्री अमुकदेवशर्मा पापक्षयदिव्यज्ञानलाभकामः अमुकदेवताया अमुकमन्त्रग्रहणमहं करिष्ये इति सङ्कल्प्य गुरुं वृणुयात् तत्र क्रमः। उत्तरामुखो गुरोः समीपे आसनमानीय ओं साधु भवानास्तामिति वदेत् ओं साध्वहमासे इति प्रतिवाक्यं तदासने कृते गुरुस्तदासने उपविशेत्। ओम् अर्चयिष्यामो भवन्तम् ओम् अर्चय इति प्रतिवचनम्। ततः पाद्यार्घ्याचमनीयगन्धपुष्पवस्त्रालङ्कारादिभिर्गुरुमभ्यर्च्य दक्षिणं जानु स्पृष्ट्वा ओम् अद्येत्यादि मत्सङ्कल्पि-

त्यामुकदेवताया अमुकमन्त्रग्रहणकर्मणि अमुकगोत्रममुकप्रवरम् अमुकदेवशर्माणं गुरुत्वेन भवन्तमहं वृणे। ओं वृतोऽस्मीति प्रतिवचनं कृताञ्जलिः ओं यथाविहितं व्रतकर्म कुरु। ओं यथाज्ञानं करवाणीति प्रतिवचनम्। ततो गुरुः सामान्यार्घ्यं कृत्वा तज्जलेनास्त्राय फट् इति द्वारमभ्युक्ष्य ओं द्वारदेवताभ्यो नम इति संपूज्य वामाङ्गं स्पृशन् दक्षिणाङ्गं सङ्कोचयन् दक्षिणपादपुरःसरं मण्डपे प्रविश्य ओं वास्तुपुरुषाय नमः ओं ब्रह्मणे नम इति नैरृत्यां संपूज्य निर्निमेषदृष्ट्या देयमन्त्रेण दिव्यान् अस्त्राय फट् इति जलेनान्तरीक्षगान् फड़िति वामपार्ष्णिघातैस्त्रिभिर्भौमान् विघ्नान्निःसार्य फड़िति समभिमन्त्रितान् विकिरानादाय ओम् अपसर्पन्त्वित्यादिना चतुर्दिक्षु विघ्नानुत्सार्य ओं ह्रीं आधारशक्तिकमलासनाय नम इत्यासनं संपूज्य ओम् आसनमन्त्रस्य मेरुपृष्ठ ऋषिरित्यादिना प्राङ्मुख उदङ्मुखो वा बद्धपद्मासनो मौनी दक्षिणभागे पूजाद्रव्याणि वामभागे जलं स्थापयित्वा कृताञ्जलिपुटो भूत्वा वामदक्षिणमस्तकेषु यथाक्रमं गुरुत्रयगणपतिदेवता नत्वा फड़िति गन्धपुष्पाभ्यां करौ संशोध्य देयमन्त्रेण वामे क्षिप्रा ऊर्द्ध्वोर्द्ध्व तालत्रयं दत्त्वा छोटिकाभिर्दशदिग्बन्धनं कृत्वा रमिति जलधारया वह्निप्राकारं विचिन्त्य भूतशुद्धिं कुर्यात् यथा। सोऽहमिति मन्त्रेण सुषुम्ना वर्त्मना दीपकलिकाकारजीवात्मानं हृदयाम्भोजात् पृथिव्यप्तेजोवाय्वाकाशानि शब्दस्पर्शरूपरसगन्धेषु तन्मात्ररूपेषु लीनानि तन्मात्राण्यपि भौतिकान्यहङ्कारे वाक्पाणिपादपायूपस्थकर्मेन्द्रियाणि त्वक्चक्षुः श्रोत्रजिह्वानासिकाज्ञानेन्द्रियाणि उभयात्मकमनश्चाहङ्कारेऽहङ्कारं महत्तत्त्वे महत्तत्त्वञ्च प्रकृतौ कुण्डलिनीरूपायां तन्मूलाधारस्वाधिष्ठानमणिपूरकानाहतविशुद्धाज्ञाख्यानि

षट्चक्राणि भित्त्वा कुण्डलिन्या सह शिरोऽवस्थितसहस्रदलकमलोदरवर्त्तिचन्द्रमण्डलान्तर्गतपरमात्मनि संयोज्य नाभिस्थेन यमिति वायुबीजोत्थेन वायुना सकलं संशोष्य हृदयस्थेन रमिति वह्निबीजोत्थेन वह्निना पापपुरुषं संदह्य दोषान् दहेत्। लमिति वायुबीजोत्थेन वायुना भस्म प्रोत्साय्य वायुना वमिति वरुणबीजोत्थेन चन्द्रमण्डलविगलदमृतधारया सपादसमस्तं देवतारूपं देहसम्पाद्यात्मादीनि स्वस्वस्थाने संस्थाप्य जीवात्मानं हृदयाम्भोजे हंस इति मन्त्रेण नयेत्। ततो ऋष्यादिन्यासः। यथा गोपाले। शिरसि नारद ऋषये नमः मुखे गायत्रीछन्दसे नमः हृदि श्रीकृष्णाय देवतायै नमः एवमन्यत्र यथायथमूहनीयम्। ततः प्राणायामः। यथा तत्तन्मन्त्रेण षोड़शधा जपेन दक्षिणानासां धृत्वा वामनासया वायूत्तोलनरूपं नासिके धृत्वा चतुःषष्टिवारजपेन वायुधारणरूपं कुम्भकं कृत्वा वामनासां धृत्वा दक्षिणनासया द्वात्रिंशद्वारजपेन त्यागरूपं रेचकं कुर्य्यात्। पुनर्वामनासया पूरकम् उभाभ्यां कुम्भकं दक्षिणया रेचकमिति। ततो मातृकान्यासः यथा अं नम इति ललाटे इत्यादि तः करन्यासः। गोपाले यथा क्लीं अङ्गुष्ठाभ्यां नम इत्यादि। ततोऽङ्गन्यासः। गोपाले क्लीं हृदयाय नम इत्यादि अन्यत्र यथायथमूह्यम्। ततः पीठन्यासः। श्रीं धर्माय नम इति दक्षिणांशे एवं सर्वत्र ओङ्कारादि नमोऽन्तेन ज्ञानाय वामांशे। वैराग्याय ऐश्वर्य्याय ऊरुद्वये। मुखे अधर्माय वामपार्श्वे अज्ञानाय नाभौ अवैराग्याय दक्षिणपार्श्वे अनैश्वर्य्याय हृदि अनन्ताय पद्माय अं सूर्य्यमण्डलाय द्वादशकलात्मने उं सोममण्डलाय षोड़शकलात्मने मं वह्निमण्डलाय दशकलात्मने सं सत्त्वाय रं रजसे तं तमसे आं आत्मने अं अन्तरात्मने पं परमात्मने ह्रीं ज्ञानात्मने

तत्तद्देवतोक्तपीठमन्त्रं न्यसेत्। ततो मन्त्रस्य दशविधसंस्कारान् कुर्य्यात्। यथा चन्दनलिप्तताम्रादिपात्रे मातृकायन्त्रं विलिख्य तत्रस्थ मन्त्रवर्णान् मनसा समाहृत्य बीजादिरूपमन्त्रनिरूपणं जननम्। १। तत्तद्बीजाक्षरं प्रत्येकम् प्रोङ्काद्वयमध्यस्थं कृत्वा दशधा जपरूपं जीवनम्। २। चन्दनलिप्तताम्रादिपात्रे तान् बीजादिरूपमन्त्रवर्णान् समालिख्य यमिति वायुबीजेन चन्दनोदकप्रक्षेपरूपं ताड़नम्। ३। पुनस्तान् मन्त्रसंख्यककरवीरजैः पुष्पैः प्रत्येकं रमिति वह्निबीजेन दहनरूपं बोधनम्।४। नमोऽन्तं दातव्यमन्त्रमुच्चार्य्य तत्तद्देवतानाम उच्चार्य्याभिषिञ्चामीत्यनेन मन्त्रवर्णसंख्यया मन्त्रवर्णोपरि अश्वत्थपल्लवोदकप्रक्षेपरूपमभिषेकम्। ५। मनसा समस्तमन्त्रं सञ्चिन्त्य ओं क्रौं इति मन्त्रेण मलत्रयदहनरूपं विमलीकरणम्। ६। ओं क्रौं इति मन्त्रजपेन कुशोदकेन मन्त्रस्य प्रत्यक्षरप्रक्षालनरूपमाप्यायनम्। ७। दातव्यमन्त्रमुच्चार्य्य तमहं तर्पयामि नम इति मन्त्रेण देवतीर्थजलेन लिखितमन्त्राधाररूपयन्त्रे मन्त्रतर्पणम्। ८। ओं क्रौं श्रीं इत्युच्चार्य्य दातव्य मन्त्रोच्चारणरूपं दीपनम्। ९। जप्यमानमन्त्रस्यान्यत्राप्रकाशनरूपं गोपनम्। १०। गुरुशिष्योभयकर्त्तृकं कुर्य्यात्। ततोऽर्घ्यस्थापनं यथा स्ववामे त्रिकोणमण्डलं विलिख्य तत्र आधारशक्तये नम इति संपूज्य तत्र त्रिपदिकामारोप्य फड़िति शङ्खं प्रक्षाल्य तदुपरि संस्थाप्य विश्वस्रुतामृतस्वरूपैस्तोयैः सुगन्धिपुष्पाद्यैरापूर्य्य तीर्थमावाह्य आधारं दशकलात्मानं पावकं शङ्खं द्वादशकलात्मानं रविं जलं षोड़शकलात्मानं सोमम् अनुक्रमतः स्मृत्वा संपूज्य जलं स्पृष्ट्वा मूलं जपेत्। ह्रमित्यवगुण्ठ्य षड़ङ्गन्यासमन्त्रैः अग्नीशासुरवायुमध्ये दिक्षु च क्रमेण संपूज्य मत्स्यमुद्रया

पाद्यमाच्छाद्य वमिति धेनुमुद्रया स्रवीकृत्य वषड़िति मालिनीमुद्रां प्रदर्श्य वौ षड़िति वीक्ष्य मूलमष्टधा जप्त्वा फडिति संरक्ष्य यथायथमुद्राः प्रदर्श्य दक्षिणे प्रोक्षणीपात्रे तज्जलं किञ्चिद्दत्त्वा तेनोदकेनात्मानं पूजोपकरणञ्चाभ्युक्ष्य न्यासक्रमेण धर्मादीन् स्वीयदेहे पूजयित्वा शिरोहृदयाधारपादसर्व्वाङ्गेषु मूलेन पुष्पाञ्जलिपञ्चकं निःक्षिप्य मानसिकगन्धाद्यैर्नैवेद्यदक्षितैर्मानसपूजां कुर्य्यात् ततः शालग्रामे कुम्भजले वा ओम् आधारशक्तये नमः एवं कूर्म्माय अनन्ताय पृथिव्यै क्षीरसमुद्राय मणिमण्डपाय कल्पतरुभ्यः मणिवेदिकायै रत्नसिंहासनाय धर्म्माय ज्ञानाय वैराग्याय ऐश्वर्य्याय अधर्म्माय अज्ञानाय अवैराग्याय अनैश्वर्य्याय आनन्दाय कन्दाय सम्बिन्नाय प्रकृतिमयपत्रेभ्यः विकारमयकेशरेभ्यः कर्णिकायै अं सूर्य्यमण्डलाय द्वादशकलात्मने उं सोममण्डलाय षोड़शकलात्मने मं वह्निमण्डलाय दशकलात्मने सं सत्त्वाय रं रजसे तं तमसे आं आत्मने पं परमात्मने ओङ्कारादिनमोऽन्तेन सर्व्वत्र पूजयेत्। ततस्तत्तन्मन्त्रोक्तां नवशक्तिपूजां पीठपूजाञ्च कुर्य्यात्। आवाहनादिरहितां यन्त्रे तु तत्तद्देवतोक्तरूपं ध्यात्वा तत्तन्मन्त्रं समुच्चार्य्य सुसुम्ना वर्त्मना वामनासारन्ध्रनिर्गतं तेजः पुष्पाञ्जलिमादाय। गोपाले चेत् मन्त्रमुच्चार्य्य ओं श्रीकृष्ण इहागच्छ इत्यादिमुद्राभिः कुर्य्यात्। प्राणप्रतिष्ठामन्त्रस्तु। आं ह्रीं क्रों इत्यादि। विसर्जनमन्त्रस्तु क्षमस्वेति। एवमन्यदेवपक्षेऽप्यूह्यम्। एतन्मयरहितपूजास्थाने तत्तद्देवतोक्तरूपं ध्यात्वा देवताङ्गे षड़ङ्गन्यासं मन्त्रविशेषे नेत्रशून्यत्वेन पञ्चाङ्गन्यासं वा कवचेनावगुण्ठनम् इत्यादि धेन्वादिमुद्राः प्रदर्श्य मूलमुच्चार्य्य यथासम्भवमासनादि ताम्बूलान्तं दद्यात्। यथा गोपाले मूलमुच्चार्य्य इद-

मासनम् ओं श्रीकृष्णाय नम इत्यासनं दद्यात् एवं सर्वद्रव्य-दानरूपोपचारे सर्वत्रोपचारान्तरे जलं दद्यात्। पाद्यं श्यामाकदूर्वापराजितायुक्तजलं पादाम्बुजे दद्यात्। एवं जातीलवङ्गकक्कोलयुक्तजलमाचमनीयं मुखे स्वधान्तेन। गन्धपुष्पाक्षतयवकुशाग्रतिलसर्षपयुक्तजलमर्घ्यं स्वाहान्तेन मूर्द्धनि। दधिमधुघृतात्मकमधुपर्कः स्वधान्तेन मुखे। पूर्व-वदाचमनीयम्। लौकिकपञ्चाधिकशतत्रयतोलकपरिमिता-म्बूनं स्नानीयं निवेदयामीत्यन्तेन चन्दनकर्पूरागुरुमिलितो गन्धः। तत्तद्देवतादेयपुष्पं वौषडन्तेन। गुग्गुल्वगुरूशीर-वीरणमूलं शर्करामधुचन्दनघृताक्तो धूपः इत्यादि नमोऽन्तेन पूजयेत्। ततस्तत्तद्देवताङ्गमन्त्रैरङ्गपूजनम् आवरणपूजन-मित्यादि लोकपालास्त्रपूजान्तं विधाय मन्त्रं दद्यात्। तत्र क्रमः गुरुर्निजवक्त्रं स्वरक्तत्वेन चिन्तयित्वा भूमौ मन्त्रं विलिख्य अमुकमन्त्राय नम इति मन्त्रं संपूज्य तत्तद्देवतोक्त-धेन्वादिमुद्राप्रदर्शनपूर्वकम् ऋष्यादिकं ब्रूयात्। यथा दातव्य-गोपालमन्त्रस्य नारदर्षिर्गायत्रीछन्दः श्रीकृष्णोदेवता अमुक-मन्त्रदापने विनियोगः। एवमन्यत्रापि ततः शिष्यशिरसि हस्तं दत्त्वा अष्टोत्तरशतं जप्त्वा ओम् अद्येत्यादि अमुकगोत्राया-मुकदेवशर्मणे मन्त्रमुच्चार्य इमं मन्त्रं विष्णुदैवतं तुभ्यमहं सम्प्रददे इत्युक्तत्वा ददस्वेति प्रत्युक्ते शिष्यदक्षिणकर्णे त्रिर्व-देत्। विद्यादाने तु इमां विद्यां विष्णुदेवताम् इति विशेषः। शिष्यः मन्त्रोऽयं विष्णुदैवत इति वदेत्। विद्याग्रहणे इय विद्या विष्णुदेवता इति। ततोऽष्टवारं गुरुदेवतयोरैक्यं भाव-यन् जपेत्। भूमौ दण्डवत्पतित्वा प्रणम्य शिरसि गुरुपाद-द्वयं योजयेत्। गुरुस्तु 'उत्तिष्ठ वत्स मुक्तोऽसि सम्यगाचारवान् भव' इत्युक्त्वा एष मन्त्रः आवयोस्तुल्यफलदोऽस्तु इति वदेत्।

ततो मन्त्रमुच्चार्य्य एष मन्त्रः आवयोः सम्यक्फलदोऽस्तु इति गुरुं प्रणमेत्। ततो 'वरं प्राणपरित्यागश्छेदनं शिरसोऽपि वा। न त्वनभ्यर्च्य भुञ्जीत भगवन्तमधोक्षजम्'। इत्युच्चार्य्य पूजानियमं कुर्य्यात्। अन्यत्र तु तत्तदूहेत् ततो मन्त्रग्रहण-प्रतिष्ठार्थं दक्षिणां काञ्चनादिकां तस्मै निवेदयेत्। ततः प्रभृति गुरोः प्रियमेवाचरेत्। 'त्वत्प्रसादादहं देव कृतकृत्यो-ऽस्मि सर्वतः। मायामृत्युमहापाशाद्विमुक्तोऽस्मि शिवोऽस्मि च'। इति पठित्वाऽच्छिद्रावधारणं कृत्वा वैगुण्यसमाधा-नार्थम् ओं तद्विष्णोरित्यादिना विष्णुं स्मृत्वा विप्रान् भक्ष्य-भोज्यदक्षिणाभिः यथाशक्ति परितोषयेत्। गुरुस्तु मन्त्रदाना-नन्तरं स्वसिद्धये सहस्रकृत्वो मन्त्रं विद्यां वा प्रणिधानपूर्वकं जपेत्।

इति वन्द्यघटीय श्रीहरिहरभट्टाचार्य्यात्मज श्रीरघुनन्दन-भट्टाचार्य्यविरचितं दीक्षातत्त्वं समाप्तम्।

---

## श्रीदुर्गार्चनपद्धतिः।

ओं दुर्गायै नमः।

प्रणम्य सच्चिदानन्दरूपां दुर्गां जगन्मयीम्।
प्रयोगं शरदर्चाया वक्ति श्रीरघुनन्दनः॥

अथाश्विन दुर्गापूजा नित्या काम्या च। अथ नवम्यादि-कल्पः। पौर्णमास्यन्ताश्विनकृष्णपक्षे आर्द्रानक्षत्रयुत-नवम्या-न्तरौ केवलायां वा पूर्वाह्णे दिवार्द्धे वा उभयदिने तत्रा-।श्वत्थामि पूर्वदिने युग्मादरेव कृतम्। तत्र च पूर्वदिने

कृतनियमः परदिने कृतस्नानादिः गोमयोपलिप्तदेशे दर्भपाणि-
रायान्त उदङ्मुख उपविष्टः ओं स्वस्ति न इत्यादिना ब्राह्मणान्
स्वस्ति वाचयित्वा ओं सूर्य्यः सोम इति पठित्वा ओं तद्विष्णो-
रित्यादिना विष्णुं स्मृत्वा ओं तत्सदित्युच्चार्य्य ताम्रपात्रं
शुक्ति-शङ्ख-पाषाण-केवल-इस-कांस्य रूप्य-सीसक लोह स्वस्व-
येतरपात्रं वा दर्भत्रय पुष्प-फल-तिल-जलपूर्णं यथोपपन्नं
वा आदाय ओम् अद्य आश्विने मासि कृष्णे पक्षे नवम्यान्तिथा-
वारभ्य शुक्लदशमीं यावत् प्रत्यहम् अमुकगोत्रः श्री अमुक-
देवशर्मा अतुलविभूतिकामः संवत्सर-सुखप्राप्तिकामो दुर्गा-
प्रीतिकामो वा वार्षिक-शरत्कालीन-दुर्गा-महापूजामहं
करिष्ये। इति संकल्प्य तज्जलमैशान्यां क्षिपेत्। ततो देवो
व इति पठेत्। यद्यन्यद्वारा पूजां करोति तदा तं वरयेत्।
यथा यजमानः प्राङ्मुखः उदङ्मुखं ब्राह्मणम् ओं साधु भवा-
नास्ताम् इति वदेत्। ओं साध्वहमासे इति प्रतिवचनम्। ओम्
अर्चयिष्यामो भवन्तम् इति वदेत्। ओम् अर्चय इति प्रति-
वचनम्। ततो गन्ध-पुष्पवस्त्राङ्गुरीयकादिना अर्चयित्वा
दक्षिणं जानु स्पृष्ट्वा ओम् अद्येत्यादि वार्षिक-शरत्कालीन-
दुर्गा महापूजाकरणाय अमुकगोत्रममुकदेवशर्माणं भवन्तं
ब्राह्मणमहं वृणे इति वदेत्। ओं वृतोऽस्मीति प्रतिवचनम्।
यथाविहितं कर्म कुरु इति वदेत्। ओं यथाज्ञानं करवा-
णीति प्रतिवचनम्। यदि तद्दिने एकदा संकल्प्य शुक्लनवमी-
पर्य्यन्तं देवीमाहात्म्यं पठति तदा पूर्ववज्जलमादाय अद्ये-
त्यादि नवम्यान्तिथावारभ्य शुक्लनवमीपर्य्यन्तं प्रत्यहं वार्षिक-
शरत्कालीन-दुर्गा-महापूजायाम् अमुकगोत्रः श्री अमुकदेव-
शर्मा सर्वबाधाविनिर्मुक्तधनधान्यसुतान्वितत्वकामः सर्व-
कामसिद्धिकामो वा विविधवत्सोहं मे तु धनकामः पुत्रकाम

इत्यादिना वा श्रीदुर्गाप्रीतिकामो वा मार्कण्डेयपुराणीय ओं सावर्णिः सूर्य्यतनय इत्यादि सावर्णिर्भविता मनुरित्यन्तं देवीमाहात्म्यमहं पठिष्यामि श्रवणपक्षे श्रोष्यामि। प्रत्यहं संकल्पपक्षे आरभ्येत्यादि न वक्तव्यम्। अन्यद्वारा पाठपक्षे पाठयिष्ये इति विशेषः। ततः पूर्ववत् संपूज्य वरयेत्। ओम् अद्येत्यादि शतावृत्ति देवीमाहात्म्यपाठकर्मणि पञ्चदशावृत्ति देवीमाहात्म्यपाठाय वा अमुकगोत्रम् अमुकदेवशर्माणं ब्राह्मणं भवन्तमहं वृणे इति वरयेत्। एवमन्यसंख्यापाठेऽप्यूह्यम्। ततो देवीं संपूज्य ओं नारायणाय नमः ओं नराय नमः ओं नरोत्तमाय नमः ओं देव्यै नमः सरस्वत्यै नमः ओं व्यासाय नम इति नत्वा ऋष्यादिज्ञानाय इदं पठेत्। प्रथमचरितस्य ब्रह्मा ऋषिरित्यादि पठेत्। पुरस्तात् सूत्रं ततः मुक्त्वा पुनस्तत् सूत्रं बद्ध्वा पुस्तकमाधारे संस्थाप्य प्रणवाद्यन्तं देवीमाहात्म्य अर्थं भावयन् अद्रुतं स्पष्टाक्षरं पठेत्। अध्यायमध्ये विरामस्त्येत् पुनरध्यायादितः पठेत्। ततः पाठकाय दक्षिणां दद्यात्।

अथ बोधनम्। विल्ववृक्षसमीपं गत्वा आचान्तो दर्भयुक्तासने उपविश्य श्वेतसर्षपमादाय ओं वेतालाश्च पिशाचाश्च राक्षसाश्च सरीसृपाः। अपसर्पन्तु ते सर्वे ये चान्ये विघ्नकारकाः। ओं विनायका विघ्नकरा महोग्रा यज्ञद्विषो ये पिशिताशनाश्च। सिद्धार्थकैर्वज्रसमानकल्पैर्मया निरस्ता विदिशः प्रयान्तु इति मन्त्राभ्यां श्वेतसर्षपप्रक्षेपैः विघ्नकरान् अपसार्य्य गायत्र्या घटस्थापनं कृत्वा घटादिस्थजले ओं सूर्य्याय नम इत्यनेन पूजयेत् एवं सोमाय मङ्गलाय बुधाय वृहस्पतये शुक्राय शनैश्चराय राहवे केतुभ्यः इति ग्रहान् संपूज्य पञ्चदेवताः संपूजयेत्। एष गन्धः ओं सूर्य्याय नम इति पञ्चोपचारैः गन्धपुष्पाभ्यां वा पूजयेत् एवं गणेशं दुर्गां शिवं विष्णुञ्च संपूज्य

अर्घ्यस्थापनं कुर्य्यात् शङ्खादिपात्रे दूर्वाक्षतदधिपुष्पाणि दत्त्वा यथालाभं वा वम् इति धेनुमुद्रयाऽमृतीकृत्य ओं विल्ववृक्षाय नम इति अष्टधा जप्त्वा तेन उदकेन आत्मानं पूजोपकरणञ्चाभ्युक्ष्य विल्ववृक्षे एतत् पाद्यं ओं विल्ववृक्षाय नमः सामगानामिदमर्घ्यम्। अन्येषाम् एषोऽर्घः। एवमाचमनीयादि दद्यात्। पञ्चोपचारैर्गन्धपुष्पाभ्यां वा पूजयेत्। सम्भवे एतद्वस्त्रं वृहस्पतिदैवतम् ओं विल्ववृक्षाय नम इति दद्यात्। ततो विल्ववृक्षे दुर्गां पूजयेत्। यथा शङ्खादिपात्रं पुरतो निधाय त्रिभागं जलेनापूर्य्य तत्र अक्षतपुष्पाणि दत्त्वा यथालाभं वा वम् इति धेनुमुद्रया अमृतीकृत्य "ओं जयन्ती मङ्गला काली भद्रकाली कपालिनी दुर्गा शिवा क्षमा धात्री स्वाहा स्वधा नमोऽस्तु ते ओम् ह्रीं दुर्गायै नमः" इति अष्टधा जप्त्वा तेन उदकेन आत्मानं पूजोपकरणञ्च अभ्युक्ष्य ओम् जटाजूटेत्यादि ध्यात्वा स्वशिरसि पुष्पं दत्त्वा मानसोपचारैः संपूज्य अर्घ्यान्तरं स्थापयित्वा पुनर्ध्यात्वा ओम् भूर्भुवः स्वर्भगवति दुर्गे इहागच्छ इहागच्छ इह तिष्ठ इह तिष्ठ इति उक्त्वा एतत् पाद्यम् ओम् जयन्तीत्यादि उक्त्वा ओम् ह्रीं दुर्गायै नमः एवमर्घ्यादिभिः पञ्चोपचारैर्वा पूजयेत्। सम्भवे वस्त्रं पुनराचमनीयञ्च दद्यात्। ततो वाद्यपुरःसरमञ्जलिं बद्ध्वा पठेत्। ओम् इषे मास्यसिते पक्षे नवम्यामार्द्रयोगतः। श्रीवृक्षे बोधयामि त्वां यावत् पूजां करोम्यहम्। ऐं रावणस्य बधार्थाय रामस्यानुग्रहाय च। अकाले ब्रह्मणा बोधो देव्यास्त्वयि कृतः पुरा। इति मन्त्राभ्यां देवीं बोधयेत्। शूद्रस्तु प्रणवव्याहृतिस्थाने नम इत्युच्चार्य्य पूजयेत्। ततः शुक्लनवमीपर्य्यन्तं यथाशक्ति दुर्गां पूजयेत्। षष्ठ्यादौ देव्या आमन्त्रणादिकन्तु वक्ष्यमाणं बोध्यम्।

अथ प्रतिपदादिकल्पः। तत्र उभयदिने पूर्वाह्ने शुक्ल-प्रतिपत्प्राप्ते पूर्ववत् संकल्पपूर्वकालीनं कर्म कृत्वा ओम् अद्य आश्विने मासि शुक्ले पक्षे प्रतिपदि तिथावारभ्य शुक्लदशमीं यावत् प्रत्यहम् अमुकगोत्रोऽमुकदेवशर्मा स्कन्दवत् पालना-संख्यातपुत्रदारधनविमर्दैहिक-परमभोगलाभपूर्वकामुत्र देव-भवनकामो दुर्गाप्रीतिकामो वा वार्षिकशरत्कालीन श्रीदुर्गा महापूजामहं करिष्ये इति संकल्प्य "ओं देवीवो द्रविणोदा पूर्णां विवष्ट्वा सिचम्। उद्वा सिञ्चध्वमुप वा पृणध्व मा दिद्दो देव ओहते॥" इति सूक्तं पठित्वा घटं संस्थाप्य पूर्ववत् दुर्गां संपूज्य गन्धामलक्यादि केशसंस्कार-द्रव्यं कङ्कतिकाञ्च दद्यात्। एवं द्वितीयायां केशसंयमनहेतुकं पट्टडोरकं, तृतीयायां चरणरागार्थमलक्तकं, शिरसि धारणार्थं सिन्दूरं, मुखविलोकनार्थं दर्पणं, चतुर्थ्यां मधुपर्कं, तिलकाकारं रजतादिकं नेत्रमण्डनं कज्वलं, पञ्चम्यां चन्दनमनुलेपनं यथाशक्त्या अलङ्कारञ्च दद्यात्। षष्ठ्यादिषु देवीबोधनादिकं वक्ष्यमाणं बोध्यम्।

अथ षष्ठ्यादिकल्पः। तत्राश्विनशुक्लपक्षे पत्रीप्रवेशपूर्व-दिने ज्येष्ठानक्षत्रयुक्तायां षष्ठ्यां केवलायां वा सायं समये बोधनात्तु प्राक् प्रातरादिकाले वा विल्ववृक्षसमीपं गत्वा पूर्व-वत् संकल्पप्राक्कालीनं कर्म कृत्वा ओम् अद्य आश्विने मासि शुक्ले पक्षे षष्ठ्यान्तिथावारभ्य शुक्लदशमीं यावत् प्रत्यहम् अमुकगोत्रः अमुकदेवशर्मा अतुलभूतिकामः संवत्सरसुख-कामो श्रीदुर्गाप्रीतिकामो वा वार्षिकशरत्कालीनदुर्गापूजामहं करिष्ये इति संकल्प्य देवीव इति पठित्वा घटं संस्थाप्याचारात् पल्लवतः दुर्गां संपूज्य सायं ज्येष्ठायुक्तायां केवलायां वा षष्ठ्यां विल्वतरुसमीपं गत्वा पूर्ववत् दुर्गापूजान्तं कर्म कृत्वा

"ऐं रावणस्य वधार्थाय रामस्यानुग्रहाय च। अकाले ब्रह्मणा बोधो देव्यास्त्वयि कृतः पुरा। अहमप्याश्विने षष्ठ्यां सायाह्ने बोधयाम्यतः।" इति देवीं बोधयित्वा च विल्वतरुमामन्त्रयेत्। यदि तु पत्रीप्रवेशपूर्वदिने सायं षष्ठ्यलाभस्तदा पूर्वदिने सायं बोधयित्वा परदिने आमन्त्रयेत्। यदि उभयदिने सायं षष्ठ्य-लाभः तदा सायं विना षष्ठ्यां बोधयित्वा सायमामन्त्रयेत्। यथा "मेरुमन्दर कैलास हिमवच्छिखरे गिरौ। जातः श्रीफलवृक्ष त्वमम्बिकायाः सदा प्रियः। श्रीशैलशिखरे जातः श्रीफलः श्रीनिकेतनः। नेतव्योऽसि मया गच्छ पूज्यो दुर्गास्वरूपतः।" ततो गन्धं गृहीत्वा ओम् गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्। ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्। अनेन गन्धेन अमुष्या भगवत्या दुर्गादेव्याः शुभाधिवासनमस्तु। ततो मही गृहीत्वा तत्तन्मन्त्रं गायत्रीं वा पठित्वा अनया मह्या अमुष्या भगवत्या दुर्गादेव्याः शुभाधिवासनमस्तु इत्यादिना विल्ववृक्षेऽधिवासयेत्। पुनर्गन्धेन। तत्र द्रव्याणि मही गन्धः शिला धान्यं दूर्वा पुष्पं फलं दधि। घृतं स्वस्तिक सिन्दूरं शङ्ख कज्जल रोचनाः। सिद्धार्थः काञ्चनं रूप्यं ताम्र चामर दर्पणम्। दीपः प्रशस्तिपात्रञ्च विज्ञेयमधिवासने। ततः आचारात् पूजामण्डपं गत्वा आवस्य कदली दाड़िमी धान्यं हरिद्रा माणकं कचुः। विल्वोऽशोको जयन्ती च विज्ञेया नवपत्रिका। इत्युक्तनवपत्रिकां प्रतिमाञ्च संपूज्य गन्धा-दिना अधिवासयेत्।

अथ सप्तम्यादिकल्पः। तत्र सप्तम्यां मूलानक्षत्रयुक्तायां केवलायां वा कृतस्नानादिः पूर्ववत् संकल्पप्राक्कालीनं कर्म कृत्वा संकल्पं कुर्य्यात्। नवम्यादि कल्पकरणे तु संकल्पं विनैव सप्तम्यादि कृत्यं कुर्य्यात्।

अथ सप्तमीकृत्यम्। तत्र सप्तम्यां मूलानक्षत्रयुक्तायां वा कृतस्नानादिः कन्यालग्ने चरांशे वा स्थापनाय विल्वतरुसमीपं गत्वा तमभ्यर्च्च कृताञ्जलिः "ओम् विल्ववृक्ष महाभाग सदा त्वं शङ्करप्रियः। गृहीत्वा तव शाखाश्च दुर्गापूजां करोम्यहम्। शाखाच्छेदोद्भवं दुःखं न च कार्य्यं त्वया प्रभो। क्षम्यतां विल्ववृक्षेश वृक्षराज नमोऽस्तु ते।" इत्युक्त्वा विल्ववृक्षादायव्य-नैऋतेतरस्यां शाखां फलयुगलशालिनीं केवलां वा शाखाम् ओम् छिन्दि छिन्दि फट् फट् हुं फट् स्वाहा इत्यनेन छेदयेत्। ततस्तां शाखां गृहीत्वा पूजालयमागत्य पीठोपरि स्थापयेत्। ततः श्वेतसर्षपमादाय ओम् वेतालाश्च पिशाचाश्च राक्षसाश्च सरीसृपाः। अपसर्पन्तु ते सर्वे ये चान्ये विघ्नकारकाः। विनायका विघ्नकरा महोग्रा यज्ञद्विषो ये पिशिताशनाश्च। सिद्धार्थकैर्वज्रसमानकल्पैर्मया निरस्ता विदिशः प्रयान्तु। इत्याभ्यां श्वेतसर्षपप्रक्षेपैर्विघ्नकरान् अपसार्य्य माषभक्तबलिं गृहीत्वा एष माषभक्तबलिः ओम् जय त्वं कालि सर्वेशे सर्व-भूतगणावृते। रक्ष मां निजभूतेभ्यो बलिं गृह्ण नमोऽस्तु ते। ओम् काल्यै नमः। ओम् मातर्मातर्वरे दुर्गे सर्वकामार्थ-साधिनि। अनेन बलिदानेन सर्वान् कामान् प्रयच्छ मे। इति प्रार्थयेत्। तत आचारादपराजितालतावद्धां नवपत्रिकां विल्वशाखाञ्च स्थापयित्वा ओम् विल्वशाखायै नम इति संपूज्य विल्वशाखायां मृण्मयप्रतिमायाञ्च एतत् पाद्यम् ओम् चामुण्डायै नम इति चामुण्डां संपूज्य ओम् श्रीशैलशिखरे जातः श्रीफलः श्रीनिकेतनः। नेतव्योऽसि मया गच्छ पूज्यो दुर्गास्वरूपतः। चामुण्डे चल चल चालय चालय शीघ्रं मम मन्दिरं प्रविश पूजालयं गच्छ स्वाहा इति वदेत्। ततो घटं संस्थाप्य नवग्रहपञ्चदेवताः संपूज्य मृण्मयप्रतिमां

तद्द्विपे नवपत्रिकास्तु गीतवाद्यादिभिः पीठोपरि स्थाप यित्वा भूतशुद्ध्यादिकं विधाय सामान्यार्घ्यं स्थापयित्वा देवी समीपे ताम्रादिपात्रे बिल्वशाखां स्थापयित्वा ओम् आरो पितासि दुर्गे त्वं मृण्मये श्रीफलेऽपि च । स्थिरात्यन्तं हि नं भूत्वा गृहे कामप्रदा भव । ओम् स्थां स्थीं स्थिरा भवेति स्थिरीकृत्य प्राणप्रतिष्ठां कुर्य्यात् । यथा । प्रतिमायाश्चक्षुषि कज्जलं दत्त्वा कपोलौ स्पृष्ट्वा ओम् कालि कालि स्वाहा हृद याय नमः । ओम् कालि वज्रिणि शिरसि स्वाहा । ओम् कालि कालेश्वरि शिखायै वषट् । ओम् कालि कालि वज्रेश्वरि कवचाय हुम् । ओम् कालि वज्रेश्वरि लौहदण्डायै स्वाहा नेत्रत्रयाय वौषट् । ओम् कालि लौहदण्डायै अस्त्राय फट् ओम् जयन्तीत्यादि पठित्वा हृदयेऽङ्गुष्ठं दत्त्वा अस्यै प्राणा प्रतिष्ठन्तु अस्यै प्राणाः क्षरन्तु च । अस्यै देवत्व संख्यायै स्वाहा । पुनः कालि कालि स्वाहा हृदयाय नम इत्यादि सर्वम् ओम् जयन्तीत्यादि च पठित्वा ओम् मनो जूति र्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनो त्वरिष्टं यज्ञं समिमं दधातु विश्वेदेवास इह मादयन्तामोम् प्रतिष्ठ इत्येतैः कालि कापुराणोक्तमन्त्रैरिति । अथवा आगमोक्तमन्त्रैः प्राणप्रतिष्ठा यथा । हृदये हस्तं दत्त्वा ओम् आं ह्रीं क्रौं यं रं लं वं शं षं सं ह्रौं हं सः भगवत्या दुर्गायाः प्राणा इह प्राणाः । पुनरपि दुर्गाया इत्यन्तमुक्त्वा जीव इह स्थितः । पुनः दुर्गाया इत्यन्तमुक्त्वा इह सर्वेन्द्रियाणि वाङ्मनस्त्वक्चक्षुःश्रोत्रप्राण प्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा इति । एवमन्येषां गणेशादीनाम् । ततः सपुष्पाक्षतमादाय देवीं ध्यायेत् यथा । ओं जटाजूटसमायुक्तामर्द्धेन्दुकृतशेखराम् । लोचनत्रयसंयुक्तां पूर्णेन्दुसदृशाननाम् । अतसीपुष्पवर्णाभां सुप्रतिष्ठां सुलोचनाम् ।

नवयौवनसम्पन्नां सर्वाभरणभूषिताम्। सुचारुदशनां देवीं पीनोन्नतपयोधराम्। त्रिभङ्गस्थानसंस्थानां महिषासुरमर्दिनीम्। त्रिशूलं दक्षिणे हस्ते खड्गं चक्रं क्रमादधः। तीक्ष्णवाणं तथा शक्तिं वामतोऽपि निबोधत। खेटकं पूर्णचापञ्च पाशमङ्कुशमेव च। घण्टां वा परशुं वापि वामतः सन्निवेशयेत्। अधस्तान्महिषं तद्वद् विशिरस्कं प्रदर्शयेत्। शिरश्छेदोद्भवं तद्वद्दानवं खड्गपाणिनम्। हृदि शूलेन निर्भिन्नं निर्यदन्त्रविभूषितम्। रक्तारक्तीकृताङ्गञ्च रक्तविस्फुरितेक्षणम्। वेष्टितं नागपाशेन भ्रुकुटीभीषणाननम्। सपाशवामहस्तेन धृतकेशञ्च दुर्गया। वमद्रुधिरवक्त्रञ्च देव्याः सिंहं प्रदर्शयेत्। देव्यास्तु दक्षिणं पादं समं सिंहोपरि स्थितम्। किञ्चिदूर्द्ध्वं तथा वाममङ्गुष्ठं महिषोपरि। स्तूयमानञ्च तद्रूपममरैः सन्निवेशयेत्। इति अत्रातसीपुष्प-कनकोत्तम-कान्तिकान्तमिति मार्कण्डेयपुराणीयतप्तकाञ्चनवर्णाभामिति पुराणान्तरैकवाक्यत्वादिदं मत्स्यपुराणीयं ध्यात्वा स्वशिरसि पुष्पं दत्त्वा सोऽहमिति विचिन्त्य सपुष्पाक्षतमादाय आवाहयेत्। ओं सर्वभूतमयोद्भूते सर्वासुरविमर्दिनि। अनुकम्पय मां देवि पूजास्थानं व्रजस्व मे। ओं आवाहयाम्यहं देवीं मृण्मये श्रीफलेऽपि च। कैलासशिखराद्देवि विन्ध्याद्रेर्हिमपर्वतात्। आगत्य विल्वशाखायां चण्डिके कुरु सन्निधिम्। ओं भूर्भुवः स्वर्भगवति दुर्गे इहागच्छ इहागच्छ इति आवाह्य ओम् स्थापितासि मया देवि मृण्मये श्रीफलेऽपि च। आयुरारोग्यमैश्वर्यं देहि देवि नमोऽस्तु ते। ओम् भगवति दुर्गे इह तिष्ठ इह तिष्ठ इति स्थापयित्वा कृताञ्जलिः ओम् दुर्गे दुर्गस्वरूपासि सुरतेजोमहाबले। सदानन्दकरे देवि प्रसीद मम सिद्धये। ओम् एहि भगवत्यम्ब शत्रुक्षयजयप्रदे। भक्तितः पूजयामि त्वां

नवदुर्गे सुरार्चिते। पल्लवैश्च फलोपेतैः पुष्पैश्च सुमनोहरैः। पल्लवे संस्थिते देवि पूजये त्वां प्रसीद मे। ओम् दुर्गे देवि समागच्छ सान्निध्यमिह कल्पय। यज्ञभागान् गृहाण त्वं योगिनीकोटिभिः सह। एह्येहि परमेशानि सान्निध्यमिह कल्पय। पूजाभागं गृहाणेमं दुर्गे देवि नमोऽस्तु ते। दुर्गे देवि समागच्छ गणैः परिकरैः सह। पूजाभागं गृहाणेमं मखं रक्ष नमोऽस्तु ते। इति ततः शङ्खादिपात्रं पुरतो निधाय त्रिभागं जलेन आपूर्य दध्यक्षतपुष्पाणि यथालाभं वा दत्त्वा वमिति धेनुमुद्रया अमृतीकृत्य क्लीं ओम् दुर्गायै नम इति अष्टधा जप्त्वा तेनोदकेनात्मानं पूजोपकरणञ्चाभ्युक्ष्य पुनर्ध्यात्वा इदमासनम् ओम् जयन्तीत्यादि उच्चार्य्य क्लीं ओम् दुर्गायै नम इति दत्त्वा कृताञ्जलिः ओम् भूर्भुवः स्वर्भगवति दुर्गे देवि स्वागतासि इति उच्चार्य्य एतत् पाद्यम् इदमर्घ्यं सामगेतरस्तु एषोऽर्घं इति पूर्ववद्दद्यात्। इदमाचमनीयम् एष मधुपर्कः। इदमाचमनीयम्। इदं स्नानीयम्। इदं वस्त्रम् इदमाभरणम्। एष गन्धः। एतत् पुष्पम्। पुष्पाञ्जलित्रयं मालां गृहीत्वा ओम् कौसुमस्रजमेताञ्च चन्दनागुरुचर्चिताम् गृहाण त्वं महादेवि प्रसीद परमेश्वरि। एषा माला ओम् जयन्तीत्यादिना दद्यात्। कुमुदोत्पलपद्मानि कुन्दं शेफालिका जवा। वकुलं तगरञ्चैव पुष्पाष्टकमुदाहृतम्। इदं पुष्पाष्टकम्। विल्वपत्रं गृहीत्वा ओम् अमृतोद्भवं श्रीवृक्षं शङ्करस्य सदाप्रियम्। विल्वपत्रं प्रयच्छामि पवित्रं ते सुरेश्वरि। इदं विल्वपत्रम्। द्रोणपुष्पसत्त्वे ओम् ब्रह्म विष्णुशिवादीनां द्रोणपुष्पं सदाप्रियम्। तत्ते दुर्गे प्रयच्छामि धर्मकामार्थसिद्धये। इदं द्रोणपुष्पम्। एष धूपः। एष दीपः एतन्नैवेद्यम्। इदमाचमनीयम्। एतत्ताम्बूलम्। प्रत्यारि

द्रव्याणि यथालाभं दद्यात्। ततो नवपत्रिकासमीपं गत्वा ओम् एहि दुर्गे महाभागे पत्रिकारोहणं कुरु। तव स्थानमिदं मर्त्ये शरणं त्वां व्रजाम्यहम्। इत्युक्त्वा घटे ह्रीं ओम् कदलीस्थायै ब्रह्माण्यै नम इति क्रमेण दशोपचारैः पञ्चोपचारैर्गन्धपुष्पाभ्यां वा पूजयेत्। एवं दाड़िमस्थां रक्तदन्तिकां, धान्यस्थां लक्ष्मीं, हरिद्रास्थां दुर्गां मानस्थां चामुण्डां, कच्वस्थां कालिकां, विल्वस्थां शिवाम्, अशोकस्थां शोकरहितां, जयन्तीस्थां कार्त्तिकीञ्च पूजयेत्। एवं गणेशादीनामपि यथाशक्ति पूजा। ततो देवीं पाद्यादिभिः संपूज्य छागादिबलिं दद्यात्। यथा स्वयमुत्तरामुखः स्नातं पूर्वाभिमुखं बलिं कृत्वा ओम् अस्त्राय फट् इत्यवलोक्य "ओम् अग्निः पशुरासीत् तेनाजयन्त स एतल्लोकमजयत्तस्मिन्नग्निः स ते लोको भविष्यति तं जेष्यसि पिबेता अपः। ओं वायुः पशुरासीत्तेनाजयन्त स एतल्लोकमजयत्तस्मिन् वायुः स ते लोको भविष्यति तं जेष्यसि पिबेता अपः। ओं सूर्य्यः पशुरासीत्तेनाजयन्त स एतल्लोकमजयत्तस्मिन् सूर्य्यः स ते लोको भविष्यति तं जेष्यसि पिबेता आपः इति कुशोदकैः संप्रोक्ष्य ओं छागपशवे नम इति गन्धादिभिरभ्यर्च्य ओं छाग त्वं बलिरूपेण मम भाग्यादुपस्थितः। प्रणमामि ततः सर्व-रूपिणं बलिरूपिणम्। चण्डिकाप्रीतिदानेन दातुराप-द्विनाशनम्। चामुण्डाबलिरूपाय बले तुभ्यं नमोऽस्तु ते। यज्ञार्थे पशवः सृष्टाः स्वयमेव स्वयम्भुवा। अतस्त्वां घातया-म्यद्य तस्माद् यज्ञे वधोऽवधः। इत्युच्चार्य्य ऐं ह्रीं श्रीं इति मन्त्रेण बलिं शिवरूपिणं ध्यात्वा तस्य मूर्द्ध्नि पुष्पं न्यसेत्। ओम् अद्येत्यादि महाबलभवनकामो दुर्गाप्रीतिकामो वा इमं छागपशुं वह्निदैवतं भगवत्यै दुर्गादेव्यै तुभ्यमहं घात-

शिवे इति जलं दद्यात्। ततः कृष्णं पिनाकपाणिञ्च कालरात्रिस्वरूपिणम्। उग्रं रक्तास्यनयनं रक्तमाल्यानुलेपनम्। रक्ताम्बरधरञ्चैव पाशहस्तं कुटुम्बिनम्। पिबमानञ्च रुधिरं भुञ्जानं क्रव्यसंहतिम्। एवं खड्गं ध्यात्वा ओं रसना त्वं चण्डिकायाः सुरलोकप्रसाधक। इत्यभिमन्त्र्य ह्रीं श्रीं ओम् खड्गाय नम इति गन्धादिभिः संपूज्य ओम् असिर्विशसनः खड्गस्तीक्ष्णधारो दुरासदः। श्रीगर्भो विजयश्चैव धर्मपाल नमोऽस्तु ते। इत्यष्टौ तव नामानि स्वयमुक्तानि वेधसा। नक्षत्रं कृत्तिका तुभ्यं गुरुर्देवो महेश्वरः। हिरण्यञ्च शरीरं ते धाता देवो जनार्दनः। पितापितामहो देवस्त्वं मां पालय सर्वदा। नीलजीमूतसङ्काशस्तीक्ष्णदंष्ट्रः कृशोदरः। भावशुद्धोऽमर्षणश्च अतितेजास्तथैव च। इयं येन धृता क्षौणी हतश्च महिषासुरः। तीक्ष्णधाराय शुद्धाय तस्मै खड्गाय ते नमः। इति पुष्पं दद्यात्। आं ह्रीं फट् खड्गमादाय कालि कालि वज्रेश्वरि लौहदण्डायै नम इति जप्त्वा पूर्वाभिमुखं बलिं स्वयम् उत्तराभिमुख उत्तराभिमुखं बलिं स्वयं पूर्वाभिमुखो वा सकृच्छिन्द्यात्। ततो मृण्मयादिपात्रे रुधिरमादाय देवीसम्मुखे स्थापयित्वा ओम् अद्येत्यादि दशवर्षावच्छिन्न दुर्गाप्रीतिकाम इमं छागपशुरुधिरबलिं दास्यामीति संकल्प्य एष छागपशुरुधिरबलिः ओम् जयन्तीत्याद्युच्चार्य्य दद्यात्। ततः ओम् कालि कालि महाकालि कालिके पापनाशिनि। शोणितञ्च बलिं गृह्ण वरदे वामलोचने। ऐं ह्रीं श्रीं कौशिकि रुधिरेणाप्यायताम् इति वदेत्। ततश्छागशिरसि ज्वलद्दीपं दत्त्वा ओम् अद्येत्यादि दशवर्षावच्छिन्न दुर्गा प्रीतिकाम इमं सप्रदीपच्छागशीर्षबलिं दास्यामीति संकल्प्य एष सप्रदीपच्छागपशुशीर्षबलिः ओम् जयन्तीत्याद्युच्चार्य्य दद्यात्। ततः

ओम् जय त्वं सर्वभूतेशे सर्वभूतसमाहृते। रक्ष मां निज-भूतेभ्यो बलिं भुङ्क्ष्व नमोऽस्तु ते। इत्युक्त्वा खड्गस्थरुधिरमादाय ओम् यं यं स्पृशामि पादेन यं यं पश्यामि चक्षुषा। स स मे वश्यतां यातु यदि शक्रसमो भवेत्। ओम् ऐं क्लीं श्रीं नित्यक्लिन्ने मदद्रवे स्वाहा इति सर्ववश्यमन्त्रेण स्वीयललाटे तिलकं कुर्य्यात्। महिषोत्सर्गे तु महिषाख्यपशुत्वेनागमस्य-प्रोक्षितत्वात्तद्दाने अग्निः पशुरासीदित्यादि मन्त्रैः प्रोक्षणं नास्ति ततश्च एतत् पाठ्यम्। ओम् यथा वाहं भवान् देष्टि यथा वहसि चण्डिकाम्। तथा मम रिपून् हिंस शुभं वह लुलाप·ह। यमस्य वाहनस्त्वं वै वररूपधराव्यय। आयुर्वित्तं यशो देहि कासराय नमोऽस्तु ते। ओम् महिषपशवे नम इति गन्धादिभिः संपूज्य छाग इत्यत्र पशो इत्यूहेन वदेत्। रुधिरदाने तु फलं शतवर्षावच्छिन्न दुर्गाप्रीतिः। पूर्ववदन्यत् सर्वम्। मेषघाते तु मेष इत्यूहेन प्रयोज्यम्। रुधिरदाने तु एकवर्षाव-च्छिन्न दुर्गाप्रीतिः फलम्। अन्यत् सर्वं पूर्ववत्। स्वदेहरुधिरदाने तु एष स्वगात्ररुधिरबलिः ओम् महा-माये जगन्मातः सर्वकामप्रदायिनि। ददामि देहरुधिरं प्रसीद वरदा भव। इत्युक्त्वा जयन्तीत्यादिना दद्यात्। प्रभू-तबलिदाने द्वौ वा त्रीन् वाग्रतः कृत्वा संप्रोक्ष्य तत्तत्पशुभ्यो नम इति संपूज्य छाग त्वमिति बहुवचनानूहेन प्रयोगः। पक्षान्तरेऽप्येवं वाक्ये तु महाबलभवनकामोऽतुलविभूतिकामो दुर्गाप्रीतिकामो वा एतान् पशून् घातयिष्ये इति रुधिरदाने तु एष पशुरुधिरबलिः ओं जयन्तीत्याद्युच्चार्य्य ह्रीं ओं दुर्गायै नमः पशुशीर्षदाने एष सप्रदीपपशुशीर्षबलिः पूर्ववत्। कुष्माण्डेक्षुबलिं दद्यात्। तत ओं जयन्तीति मन्त्रं यथा-शक्ति जप्त्वा ओं गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपं

सिद्धिर्भवतु मे देवि त्वत्प्रसादात् त्वयि स्थिते। इति जपं समर्पयेत्। ततः स्तवं पठेद्यथा। ओं दुर्गां शिवां शान्तिकरीं ब्रह्माणीं ब्रह्मणः प्रियाम्। सर्वलोकप्रणेत्रीञ्च प्रणमामि सदाशिवाम्। मङ्गलां शोभनां शुद्धां निष्कलां परमां कलाम्। विश्वेश्वरीं विश्वमातां चण्डिकां प्रणमाम्यहम्। सर्वदेवमयीं देवीं सर्वलोकभयापहाम्। ब्रह्मेशविष्णुनमिताम् प्रणमामि सदाशिवाम्। विन्ध्यस्थां विन्ध्यनिलयां दिव्यस्थाननिवासिनीम्। योगिनीं योगमातां च चण्डिकां प्रणमाम्यहम्। ईशानमातरं देवीमीश्वरीमीश्वरप्रियाम्। प्रणतोऽस्मि सदा दुर्गां संसारार्णवतारिणीम्। य इदं पठति स्तोत्रं शृणुयाद्वापि यो नरः। स मुक्तः सर्वपापेभ्यो मोदते दुर्गया सह।

अथ वरप्रार्थनम्। ओं महिषघ्नि महामाये चामुण्डे मुण्डमालिनि। आयुरारोग्यविजयं देहि देवि नमोऽस्तु ते। भूतप्रेतपिशाचेभ्यो रक्षोभ्यः परमेश्वरि। भयेभ्यः मानुषेभ्यश्च देवेभ्यो रक्ष मां सदा। सर्वमङ्गलमङ्गल्ये शिवे सर्वार्थसाधिके। उमे ब्रह्माणि कौमारि विश्वरूपे प्रसीद मे। रूपं देहि यशो देहि भाग्यं भगवति देहि मे। पुत्रान् देहि धनं देहि सर्वान् कामांश्च देहि मे। चन्दनेन समालब्धे कुङ्कुमेन विलेपिते। विल्वपत्रकृतापीड़े दुर्गे त्वां शरणं गतः। इत्युच्चार्य्य मूलमन्त्रेण पुष्पाञ्जलित्रयं दद्यात्। ततो यथाकालमन्नव्यञ्जनपूपपायसादिकमुपानीय पूर्वोक्तमन्त्रेण दत्त्वा पानार्थं वासितजलम् आचमनीयं ताम्बूलञ्च दद्यात्। गीतवाद्यादिभिः शेषकालं नयेत्। इति सप्तमीपूजा।

अथ महाष्टमीपूजा। तत्र पूर्वाषाढ़ायुताष्टम्यां केवलायां वा कृतस्नानादिरापान्तः पूर्वमुख उदङ्मुखो वा दर्भासने उपविश्य भूतशुद्धिं कुर्य्याद् यथा। सोऽहमिति मन्त्रेण जीवात्मानं

नाभितो हृदिस्थे परमात्मनि संयोज्य पृथिवीं जले जलं तेजसि तेजो वायौ वायुमाकाशे प्रविश्य दक्षिणाङ्गुष्ठेन दक्षिणनासापुटं धृत्वा यम् इति वायुबीजेन षोड़शधा जप्तेन वायूत्कर्षणरूपपूरकसंज्ञया वायव्या धारणया देहं शोषयित्वा नासापुटावङ्गुष्ठानामिकाभ्यां धृत्वा रम् इति वह्निबीजेन चतुःषष्टिधा जप्तेन वायुस्तम्भनरूपकुम्भकसंज्ञया अग्निचिन्तनरूपया आग्नेय्या धारणया देहं दाहयित्वा लम् इति इन्दुबीजेन द्वात्रिंशज्जप्तेन दक्षिणनासापुटेन वायुनिःसरणरूपया रेचकसंज्ञया ऐन्द्र्या धारणया स्थिरीकृत्य वं इति वरुणबीजेन वायुादिभूतानि व्योमादिभ्यो बहिःकृत्वा हंस इति मन्त्रेण परमात्मतो जीवं नाभिपद्मे न्यसेत्। ततः प्राणायामः। दक्षिणनासापुटं धृत्वा ओं जयन्तीत्यादि मन्त्रेण शनैरेकधा जप्तेन वामनासया वायूत्तोलनरूपं पूरकं नासिके धृत्वा चतुर्धा जप्तेन वायुधारणं कुम्भकं वामनासां धृत्वा दक्षिणनासया त्रिधा जप्तेन वायुत्यजनं रेचकं पुनर्दक्षिणनासया पूरकं पूर्ववत्ताभ्यां कुम्भकं वामया रेचकं पुनर्वामया पूरकम् उभाभ्यां कुम्भकं दक्षिणया रेचकमिति। ततोऽङ्गन्यासः। अनङ्गुष्ठहस्ताङ्गुलिभिः ओं कालि कालि स्वाहा हृदयाय नम इति हृदि। तर्जनीमध्यमाभ्याम् ओं कालि कालि वज्रिणि शिरसि स्वाहा इति शिरसि। अधोऽङ्गुष्ठमुष्टिकया ओं कालि कालेश्वरि शिखायै वषट् इति शिखायाम्। विपरीतपर्य्यन्तकरतलाभ्याम् ओम् कालि कालि वज्रेश्वरि कवचाय हुं इति आशिरः पादपर्य्यन्तम्। तर्जनी मध्यमानामिकाभिः ओम् कालि वज्रेश्वरि लौहदण्डायै नेत्रत्रयाय वौषट् इति नेत्रयोः। ओम् कालि लौहदण्डायै अस्त्राय फट् इति एवं करन्यासं न्यस्य ऊर्द्धाध ऊर्द्धाङ्गुष्ठतालत्रयं दत्त्वा छोटिकादिभिः दशदिशो बध्नीयात्। ततः

मध्यादिपात्रं पुरतो निधाय त्रिभागजलेन आपूर्य्य तत्र दध्य-
क्षतपुष्पाणि यथालाभं दत्त्वा वं इति धेनुमुद्रया अमृतीकृत्य
ह्रीं ओम् दुर्गायै नम इति अष्टधा जप्त्वा तेन उदकेन आत्मानं
पूजोपकरणञ्च अभ्युक्ष्य जटाजूटेत्यादिना ध्यात्वा स्वशिरसि
पुष्पं दत्त्वा सोऽहमिति विचिन्त्य मानसोपचारैः संपूज्य पुन-
र्ध्यात्वा इदम् आसनम् ओम् जयन्तीत्यादि उच्चार्य्य ह्रीं
ओम् दुर्गायै नम इति दत्त्वा कृताञ्जलिः ओम् भूर्भुवः
स्वर्भगवति दुर्गे स्वागतासि इति पृच्छेत् एवं पाद्यम्
अर्घ्यादि दधि मधु घृतात्मको मधुपर्कः पुनराचमनीयं
ततो दर्पणप्रतिविम्बस्थां देवीं लौकिक षष्ठ्यधिक शत-
त्रयतोलकान्यूनं जलमादाय इदं स्नानीयं जलम्। ओम्
नारायण्यै विद्महे चण्डिकायै धीमहि तन्नश्चण्डी प्रचोद-
यात्। जयन्तीत्यादि उच्चार्य्य ह्रीं ओम् दुर्गायै नम इति
स्नापयेत्। फलभूमार्थी तु दर्पणप्रतिविम्बस्थां घृताभ्यङ्गो-
द्वर्त्तनोष्णोदकप्रक्षालनपूर्वकम् अन्यस्नानीयेन तथैव स्नाप-
यित्वा जलेन स्नापयेत्। तत्र अष्टरत्तिकाधिक लौकिक
माषद्वयाधिकद्व्यशीतिसंख्यक तोलकान्यूनं घृतमानीय इदम्
अभ्यञ्जनीयं घृतम् ओम् जयन्तीत्यादिना अभ्यञ्जयेत्। यव-
गोधूमयोश्चूर्णमादाय इदम् उद्वर्त्तनीयं चूर्णं पूर्वोक्तमन्त्रेण
उद्वर्त्तयेत्। घृतस्नाने तु पूर्वपरिमितं घृतमानीय इदं स्नानीयं
घृतम् एवं दुग्धेन दध्ना मधुना ततः पूर्ववत् उद्वर्त्तनं ततस्तत्-
संख्यकैश्चन्दनजलैर्मिलितं प्रत्येकं वा द्रोणपुष्पजलेन वा रत्न-
जलेन वा अगुरुजलेन वा स्नापयेत्। ततो नूतनवाससा जल-
मपनीय इदम् आचमनीयम् इदं वस्त्रम् ओम् तन्तुसन्तान-
संयुक्तं रञ्जितं रागवस्तुना। दुर्गे देवि भज प्रीतिं वासस्ते (
परिधीयताम्। पूर्ववत् आचमनीयं यथालाभम् इदं हेमभूष-

णम् इदं रजतभूषणं इदं शङ्खभूषणं मणिमुक्तादिना विचित्र-भूषणं सिन्दूरभूषणं दर्पणं पट्टसूत्रं विचित्रभूषणं यथालाभम् अन्नपात्रोपभूषणं जलपात्रोपभूषणं रैत्यपात्रोपभूषणं ताम्र-पात्रोपभूषणं हेमपात्रोपभूषणं रजतपात्रोपभूषणं छत्रोपभूषणं चामरोपभूषणं ध्वजोपभूषणं तालवृन्तोपभूषणं घण्टोपभूषणं शय्योपभूषणम् इदं चन्दनानुलेपनम् अङ्गुष्ठयुक्तया कनिष्ठा-रूपया गन्धमुद्रया एवं कृष्णागुरुकालेयकं कर्पूरं कुङ्कुम-कस्तूरीप्रभृतीनि प्रत्येकमेकत्र वा यथालाभं वा दद्यात्। एषां पञ्चरजसां चूर्णानि मन्त्रेण देयानि। पद्मचम्पक-कुमुदोत्पलमालतीमल्लिकाजवाबन्धुकापराजिता कुन्दाशोका-दीनि पुष्पाणि आदाय यथालाभम् एतानि पुष्पाणि एतत् पुष्पं वा दद्यात् अङ्गुष्ठयुक्ततर्जनीरूपया पुष्पमुद्रया अपामार्ग-भृङ्गराजामलकीतुलसीविल्वपत्राणि यथालाभं वा आदाय एतानि पत्राणि एतत्पत्रं वा दद्यात्। एषा माला ओम् कौसुमस्रजम् एताश्चन्दनागुरुचर्चिताम्। गृहाण त्वं महादेवि प्रसीद परमेश्वरि। जयन्तीत्यादिना दद्यात्। द्रोणपुष्पम् आदाय ब्रह्मविष्णुशिवादीनां द्रोणपुष्पं सदा प्रियम्। तत्ते दुर्गे प्रयच्छामि सर्वकामार्थसिद्धये। ओं जयन्तीत्यादिना दद्यात्। विल्वपत्रम् आदाय ओम् अमृतो-द्भवं श्रीवृक्षं शङ्करस्य सदा प्रियम्। तत्ते दुर्गे प्रयच्छामि पवित्रं ते सुरेश्वरि। पूर्ववद्दद्यात्। दह्यमानं घृतं गुग्गुलुम् आनीय एष धूपः ओं धूपोऽयं देवदेवेशि घृतगुग्गुलुयोजितः। गृहाण वरदे मातः दुर्गे देवि नमोऽस्तु ते। ओं जयन्तीत्या-दिना दद्यात्। सर्ज्जं मधुमुस्तं घृतं गन्धो गुग्गुल्वगुरु-शैलजम्। सरलं सिंहसिद्धार्थं दशाङ्गो धूप उच्यते। दशाङ्ग-धूपमादाय पूर्वोक्तं मन्त्रं विना मूलेन दद्यात्। एष दीपः।

अग्निर्ज्योतीरविर्ज्योतिश्चन्द्रज्योतिस्तथैव च ज्योतिषामुत्तमं दुर्गे दीपोऽयं प्रतिगृह्यताम्। सर्वत्र एतादृशपाठेऽपि जयन्ती त्यादिना दद्यात्। विशेष मन्त्राभावे सुतरां तथा घृततिल तैल सर्षपतैलाद्यन्यतमोपस्कृतां यथालाभं वा दत्त्वा जयध्वनि मन्त्रमातः स्वाहा इति घण्टां संपूज्य वादयन् देवीं नीरा जयेत्। यथालाभं नैवेद्यानि दद्यात्। विशेष नाम्ना चैतद एतद्घृतम् इदं दधि इदं दुग्धम् एते चिपिटका एते लड्डुका एते लाजा एतानि कदलकानि नारिकेलफलानि एतानि जम्बीराणि एते इक्षुदण्डाः एतानि कुष्माण्डानि एतानि सुखाद्यकानि एते मोदकाः इदमाचमनीयम् एतानि ताम्बूलानि जयन्तीत्यादिना दद्यात् ततो यथालाभं द्रव्यं दत्त्वा यथा शक्ति जयन्तीति मन्त्रं जप्त्वा जपं समर्प्य स्तुत्वा प्रणमेत् ततो महिषासुरसिंहगणेशादीनां यथाशक्ति पूजा कार्य्या।

अथ आवरणपूजा। देव्या दक्षिणपार्श्वे पञ्चोपचारैः गन्ध पुष्पाभ्यां वा ह्रीं श्रीं जयन्त्यै नमः एवं मङ्गलायै काल्यै भद्र काल्यै कपालिन्यै दुर्गायै शिवायै क्षमायै धात्र्यै स्वाहायै स्वधायै। देव्याः पूर्वभागे ह्रीं उग्रचण्डायै नमः एवं प्रच ण्डायै चण्डनायिकायै चण्डायै चण्डवत्यै चण्डरूपायै अति चण्डिकायै। ततो देव्या वामदिशि तथैव ह्रीं श्रीम् उग्रदं ष्ट्रायै नमः एवं महादंष्ट्रायै शुभदंष्ट्रायै करालिन्यै भीमनेत्रायै विशालाक्ष्यै मङ्गलायै विजयायै जयायै। ततो देवी पुरत स्तथैव ह्रीं श्रीं मङ्गलायै नमः एवं नन्दिन्यै भद्रायै लक्ष्म्यै कीर्त्यै यशस्विन्यै पुष्ट्यै शिवायै माध्व्यै यशायै शोभायै जयायै धृत्यै आनन्दायै सुनन्दायै। ततो देव्या दक्षिणे चतुःषष्टि मातरः अशक्तौ द्वात्रिंशत् षोडश अष्टौ वा पञ्चोपचारैर्गन्ध पुष्पाभ्यां वा पूजयेत्। यथा ह्रीं श्रीं विजयायै नमः एवं

मङ्गलायै भद्रायै धृत्यै शान्त्यै शिवायै क्षमायै सिद्ध्यै तुष्ट्यै उमायै पुष्ट्यै श्रियै ऋद्ध्यै रत्यै दीप्तायै कान्त्यै । यशायै लक्ष्म्यै ईश्वर्य्यै वृद्ध्यै शक्त्यै जयावत्यै ब्राह्म्यै जयन्त्यै अपराजितायै अजितायै मानस्यै श्वेतायै दित्यै मायायै महामायायै मोहिन्यै ११ । लालसायै तीव्रायै विमलायै गौर्य्यै मत्यै दुर्गायै क्रियायै अरुन्धत्यै घण्टायै कर्णायै सकर्णायै कपालिन्यै रौद्र्यै काल्यै मायूर्य्यै त्रिनेत्रायै सुरूपायै वहुरूपायै रिपुहायै अम्बिकायै चर्चिकायै सुरपूजितायै वैवस्वत्यै कौमार्य्यै माहेश्वर्य्यै वैष्णव्यै महालक्ष्म्यै कार्त्तिक्यै कौशिक्यै शिवदूत्यै शिवायै चामुण्डायै ६४ । अथ मातरः । ह्रीं श्रीं ब्राह्म्यै नमः एवं माहेश्वर्य्यै कौमार्य्यै वैष्णव्यै वाराह्यै इन्द्राण्यै चामुण्डायै महालक्ष्म्यै । पूर्वादि दिक्षु श्रीं शिवदूत्यै मध्ये चण्डिकायै मातॄणां पुरोभागे ओम् भैरवाय नम इति पञ्चोपारैः पूजयेत् । ओम् महिषासुराय नमः । ततोऽङ्गपूजा । ओम् कालि कालि स्वाहा हृदयाय नम इति गन्धपुष्पाभ्यां पूजयेत् । एवं कालि कालि वज्रिणि शिरसे स्वाहा नमः । ओम् कालि कालेश्वरि शिखायै वषट् नमः । कालि वज्रेश्वरि कवचाय हुं नमः । आग्नेय्यादिविदिक्षु ओम् कालि कालि वज्रेश्वरि लोहदण्डायै स्वाहा नेत्रत्रयाय वौषट् नमः । देव्यग्रे ओम् कालि लोहदण्डायै अस्त्राय फट् नमः इति पूर्वादिदिक्षु पूजयेत् । देव्याः शिखां भावयन् ओम् ईशानाय नमः इति संपूज्य मुखं भावयन् ओम् कालि कालि तत्पुरुषाय नमः हृदयं भावयन् ओम् वज्रेश्वरि अघोराय नम अधो भावयन् ओम् लोहदण्डायै वामदेवाय नमः सर्वाङ्गं भावयन् ओम् स्वाहा सद्योजाताय नमः । ततोऽस्त्राणि पूजयेत् । देव्या दक्षिणभागे ओम् त्रिशूलाय नमः एवं खड्गाय चक्राय तीक्ष्णबाणाय

शक्तये। वामभागे खेटकाय पूर्णचापाय पाशाय अङ्कुशा
घण्टायै। ततः सिंहासनपूजा। ओम् वज्रनखदंष्ट्रायुधा
सिंहासनाय हुं फट् नमः। ततो देव्याः पुरतः पद्मं निर्मा
प्रागादिदलेषु कर्णिकायां जले वा एतत् पाद्यम् ओम् क
चण्डायै नमः अभावे पञ्चोपचारैर्गन्धपुष्पाभ्यां वा पूजयेत्
एवं प्रचण्डायै चण्डोग्रायै चण्डनायिकायै चण्डायै चण्डव
चण्डरूपायै अतिचण्डिकायै मध्ये उग्रचण्डायै। तत्र ओ
दक्षयज्ञविनाशिन्यै महाघोरायै योगिनीकोटिपरिवृता
भद्रकाल्यै ह्रीं दुर्गायै नम इति पुष्पाञ्जलित्रयेण पूजयेत्

अथ शस्त्रपूजा। तत्रादौ खड्गपूजा। ओम् असिर्विश
सनः खड्ग इति पूर्वोक्तं पठन् ओम् खड्गाय नम इति संपूज
छुरिकां पूजयेत्। ओम् सर्वायुधानां प्रथमं निर्मिता
पिनाकिना। शूलायुधाद्विनिष्कृष्य कृत्वा मुष्टिग्रहं शुभम्
चण्डिकायाः प्रदत्तासि सर्वदुष्टनिवर्हिणी। तया निस्सारित
चासि देवानां प्रतिदेवता। सर्वसत्त्वाङ्गभूतासि सर्वाशुभ
निवर्हिणी। छुरिके रक्ष मां नित्यं शान्तिं यच्छ नमोऽस्तु ते
ओम् छुरिकायै नमः। ततः कट्टारकपूजा। ओम् रक्षा
ङ्गानि गजान् रक्ष रक्ष वाजिबलानि च। मम देहं सद
रक्ष कट्टारक नमोऽस्तु ते। ओम् कट्टारकाय नमः।

अथ धनुःपूजा। ओम् सर्वायुधमहामात्र सर्वदेवारि
सूदन। चाप मां समरे रक्ष साकं शरगणैरिह। धृत
लक्षणेन रक्षार्थं संहाराय हरेण च। त्रयीमूर्त्तिगतं देव
धनुरस्त्रं नमाम्यहम्। ओम् धनुषे नमः।

अथ कुन्तपूजा। प्रास पातय शत्रूं स्त्वमनया लोकमा-
यया। गृहाण जीवितं तेषां मम सैन्यञ्च रक्षताम्। ओम्
कुन्ताय नमः।

अथ वर्मपूजा। शर्मप्रदस्त्वं समरे वर्मन् सैन्य यशोऽव्यमे। रक्ष मां रक्षणीयोऽहं तापनेय नमोऽस्तु ते। ओम् वर्मणे नमः।

अथ चामरपूजा। शशाङ्ककरसङ्काश हिमहिण्डीर-पाण्डर। प्रोत्सारय त्वं दुरितं चामरामरवल्लभ। ओम् चामराय नमः।

अथ छत्रपूजा। यथाम्बुदश्छादयते शिवायैनां वसुन्ध-राम्। तथा मां छादय छत्र युद्धाध्वनिगतं सदा। ओम् छत्राय नमः।

अथ ध्वजपूजा। शक्रकेतो महावीर्य्यः सुपर्णस्त्वां समा-श्रितः। पक्षिराजो वैनतेयस्तथानारायणध्वजः। काश्य-पेयोऽमृताहर्त्ता नागारिर्विष्णुवाहनः। अप्रमेयो दुराधर्षो रणे देवारिसूदनः। गरुत्मान् मारुतगतिस्त्वयि सन्निहितः स्थितः। साश्ववर्मायुधानाञ्च रक्षास्माकं रिपून् दह। ओम् ध्वजाय नमः।

अथ पताकापूजा। हुतभुग् वसवो रुद्रा वायुः सोमो महर्षयः। नागकिन्नरगन्धर्वा यक्षभूतमहोरमाः। प्रमथाश्च सहादित्यैर्भूतेशो मातृभिः सह। शक्रसेनापतिःस्कन्दो वरुणश्चाश्रितः त्वयि। प्रतिहन्तु रिपून् सर्वान् राजा विजय-मृच्छतु। यानि प्रयुक्तान्यरिभिर्दूषणानि समन्ततः। निह-तानि सदा तानि भवन्तु तव तेजसा। कालनेमिवधे युद्धे युद्धे त्रिपुरघातने। हिरण्यकशिपोर्युद्धे युद्धे देवासुरे तथा। शोभितासि तथैवाद्य शोभस्व समरं स्मर। नीलां वक्त्रां सितां दृष्ट्वा नश्यन्त्वाशु ममारयः। ओं पताकायै नमः।

अथ दुन्दुभिपूजा। दुन्दुभे त्वं सपत्नानां घोषाद् हृदय-कम्पनः। भव भूमिपसैन्यानां तथा विजयवर्द्धनः। यथा जीमूतशब्देन हृष्यन्ति वरवारणाः। तथास्तु तव शब्देन

सर्वोऽस्माकं जयावहः। यथा जीमूतशब्देन स्त्रीणां त्रासोऽभिजायते। तथात्र तव शब्देन ममास्त्वसमद्विषो रणे। ओं दुन्दुभये नमः।

अथ शङ्खपूजा। ओं पुण्य त्वं शङ्ख पुण्यानां मङ्गलानाञ्च मङ्गलम्। विष्णुना विधृतो नित्यमतः शान्तिं प्रयच्छ मे। ओं शङ्खाय नमः।

अथ सिंहासनपूजा। विजयो जयदो जेता रिपुघाती प्रियङ्करः। दुःखहा शर्मदः शान्तः सर्वारिष्टविनाशनः। इत्यष्टौ तव नामानि यस्मात् सिंहपराक्रमः। तेन सिंहासनेति त्वं नाम्ना देवेषु गीयते। त्वयि स्थितः शिवःसाक्षात् त्वयि शक्रः सुरेश्वरः। त्वयि स्थितो हरिर्देवस्त्वदर्थं तप्यते तपः। नमस्ते सर्वतोभद्र शिवो भव महीपतौ। त्रैलोक्यजयसर्वस्व सिंहासन नमोऽस्तु ते। ओं सिंहासनाय नमः।

ततो नवपत्रिकासमीपं गत्वा पञ्चोपचारैर्गन्धपुष्पाभ्यां वा पूजयेत्। एष गन्धः ह्रीं ओं ब्राह्म्यै नमः एवं रक्तदन्तिकादयः प्रत्येकं पूज्याः। ततो देवीसमीपं गत्वा पूर्ववत् जयन्तीत्यादिना देवीं पूजयित्वा च छागादिबलिं दद्यात्। ततो जपं जपं समर्प्य स्तुत्वा प्रणमेत्। ततो माषभक्तबलिं दद्यात् यथा। गोमयेनोपलिप्तायां भूमौ माषभक्तबलिमुपानीय एष माषभक्तबलिः ओं जयन्त्यै नमः एवं मङ्गलायै काल्यै भद्रकाल्यै कपालिन्यै दुर्गायै शिवायै क्षमायै धात्र्यै स्वाहायै स्वधायै इति दत्त्वा ओम् उग्रचण्डायै नम इत्याद्यष्टाभ्यः ह्रीं ओम् उग्रदंष्ट्रायैः नमः इत्यादि चतुःषष्टि मातृभ्यः एवं ह्रीं ओं ब्राह्म्यै नम इत्यादि मातृभ्यः। ततो माषाम्नमांसाद्यैर्देयो दिक्षु बलिर्निशि। तत्र एष माषभक्तबलि ओं लोकपालग्रहगणचरसुरासुरगन्धर्वयक्षराक्षसविद्याधरगरुड़-

महोरगकिन्नरगजेन्द्र देवतासुरो भूत पिशाच क्रव्याद मनुष्य मातृगण योगिनी डाकिनी शाकिनीगणा इमं नानाद्रव्य-सहितबलिं गृह्णन्तु हुं फट् स्वाहा। ओं लोकपालादिभ्यो नम इति दत्त्वा ओम् शिवाः कङ्कालवेतालाः पूतना जम्भकादयः। सर्वे ते तृप्तिमायान्तु बलिदानेन तोषिताः। एष माषभक्तबलिः ओम् शिवादिभ्यो नमः। ततो यथाकालं यथालाभमन्नव्यञ्जनपूपपायसादिकमानीय गन्धादिना संपूज्य दद्यात्। पानार्थं वासितजलम् आचमनीयं ताम्बूलञ्च शेषे कुमारीर्भोजयेत् ब्राह्मणानपि। शेषं नृत्यगीतवाद्यादिभिः नयेत्। इति महाष्टमीपूजा।

अथ सन्धिपूजा। तत्र महाष्टमी शेषदण्ड महानवमी प्रथमदण्डात्मको यः कालः तत्र महाष्टमीपूजावत् यथालाभं पूजां कुर्य्यात्। महानवमीक्षण एव छागादि बलिदानं न तु महाष्टमीक्षणे। अथ अर्द्धरात्रपूजा यद्दिनेऽर्द्धरात्रे महाष्टमी लाभस्तद्दिने फलभूमार्थिना पूर्ववत् यथालाभं पूजा कर्त्तव्या यदि तु उभयदिनेऽर्द्धरात्रे महाष्टमीलाभस्तदा पूर्वदिने एव पूजा।

अथ नवमीकृत्यम्। तत्र उत्तराषाढ़ायुक्तायां केवलायां वा महानवम्यां महाष्टमीपूजावत् (कालाल्पे तु सप्तमी पूजावच्च) यथालाभं कृत्यं विधाय पिष्टप्रदीपयवधान्यसर्षपैर्यथालाभोपपन्नैः आचारात् व्यस्तपाणिभ्यां शिरः प्रभृतिपादपर्य्यन्तं निर्मञ्छयन् देवीं नीराजयेत्। ततो होमं कुर्य्यात्। तद्दिने होमासामर्थ्ये महाष्टम्यां होमं कुर्य्यात्। शक्तस्तु उभयदिन एव कुर्य्यात्। तत्र स्वगृह्योक्तविधिना वलदनामाग्निं संस्थाप्य बिल्वपत्रसहितैस्तिलैर्वादशपर्वपूरिकया आद्रामलकमालया वा उत्तानकरेण देवतीर्थेन ओम् जयन्तीत्यादि स्वाहान्त-

मन्त्रेण अष्टोत्तरशतकृत्वो जुहुयात्। स्वगृह्योक्तविधिना दक्षिणासहितं होमशेषं समापयेत्। असामर्थ्ये होमकरणाय ब्राह्मणं वृणुयात्। शूद्रस्तु सदैव होमाय ब्राह्मणं वृणुयात्। ततः प्रार्थयेत। ओम् यच्छिद्रं तपश्छिद्रं यच्छिद्रं पूजने मम। सर्वं तदच्छिद्रमस्तु भास्करस्य प्रसादतः। यद्दत्तं भक्तिभावेन पत्रं पुष्पं फलं जलम्। आवेदितञ्च नैवेद्यं तद् गृहाणानुकम्पया। ओम् यदक्षरं परिभ्रष्टं मात्राहीनञ्च यद्भवेत्। क्षन्तुमर्हसि मे देवि कस्य न स्खलितं मनः। ततस्ताम्रादिपात्रे कुशत्रयतिलजलानि आदाय ओम् अद्य आश्विने मासि शुक्ले पक्षे महानवम्यां तिथौ अमुकगोत्रः श्री अमुकदेवशर्मा कृतैतद्वार्षिक शरत्कालीन दुर्गामहापूजाकर्मणः प्रतिष्ठार्थं दक्षिणामिदं काञ्चनं तन्मूल्यं वा विष्णुदैवतम् अमुकगोत्राय अमुकदेवशर्मणे ब्राह्मणाय तुभ्यमहं ददे। अन्यार्थकरणे तु ददे इत्यत्र ददानीति विशेषः। ब्राह्मणासन्निधाने तुभ्यं विना यथानामगोत्रनाम्ने इति विशेषः। ततो ब्राह्मण कुमारीं पादप्रक्षालनपूर्वकं यथेष्टं द्रव्यं भोजयित्वा तत्पादोदकादिकं शिरसि विधाय भक्त्या अनुव्रजेत्। ब्राह्मणान् भोजयेत शेषकालं गीतवाद्यादिभिर्नयेत्।

अथ दशमीकृत्यम्। कृतस्नानादिराचान्तः पूर्ववद्देवीं पाद्यादिभिर्यथालाभं वा संपूज्य ओम् दुर्गां शिवाम् [६७२ पृ० २पं] इत्यादिना स्तुत्वा प्रणम्य महिषघ्नीति आदिना सर्वमङ्गल मङ्गल्ये शिवे सर्वार्थसाधिके। शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते। इत्यन्तेन संप्रार्थ्य ओम् विधिहीनं क्रियाहीनं भक्तिहीनं यदर्चितम्। पूर्णं भवतु तत् सर्वं त्वत् प्रसादात् महेश्वरि। इति संप्रसाद्य संहारमुद्रया पुष्पं गृहीत्वा क्षमस्वेति विसृज्य निर्माल्यं गृहीत्वा अद्येमर्म्मे नम इति ऐशान्यां दिशि पूज-

येत्। ओम् उत्तिष्ठ देवि चामुण्डे शुभां पूजां प्रगृह्य च। कुरुष्व मम कल्याणमष्टाभिः शक्तिभिः सह। गच्छ गच्छ परं स्थानं स्वस्थानं देवि चण्डिके। व्रज स्रोतो जले वृद्धैर तिष्ठ गेहे च भूतये। इत्याभ्यां प्रतिमां बिल्वशाखाञ्च नवपत्रिकाञ्च उत्थाप्य स्थानान्तरे नीत्वा पूर्ववत् पिष्टकप्रदीपादिभिर्नीराजयेत्। ततो नृत्यगीतवाद्यब्रह्मघोष क्रीड़ा-कौतुकमङ्गलपुरःसरं स्रोतोजलसमीपं गत्वा ओम् दुर्गे देवि जगन्मातः स्वस्थानं गच्छ पूजिते। संवत्सरव्यतीते तु पुनरागमनाय च। इमां पूजां महादेवि यथाशक्ति निवेदिताम्। रक्षार्थन्तु समादाय व्रजस्व स्थानमुत्तमम्। इत्याभ्यां स्रोतसि मज्जयेत्। ततो धूलिकर्दमविक्षेपक्रीड़ाकौतुकमङ्गलभगलिङ्गाभिधानं भगलिङ्गप्रगीतपराक्षिप्तपराक्षेपकरूपं शावरोत्सवं कुर्यात्। ततो देव्या अलङ्कारादिकं ब्राह्मणेभ्यो दद्यात्। ततः शान्त्याशिषो ब्राह्मणेभ्यो गृह्णीयात् इति।

इति वन्द्यघटीय श्रीमन्महामहोपाध्याय रघुनन्दनभट्टाचार्य-विरचिता शारदीया महापूजापद्धतिः समाप्ता।

---



